॥ अथ श्रीमहाभारते सटीकं आदिपर्व प्रारभ्यते ॥




श्रीगणेशायनमः ॥ ॥ श्रीवेदव्यासायनमः ॥ ॥ श्रीगुरुभ्योनमः ॥ ॥ यंवक्रमुकुराहवैद्वियमनोमायाःपराग्दृश्यतांनिर्युत्तत्स्थविमादिनापिचविराट्सत्रेशभावंगतम् ॥ तंप्रत्यग्दृगदृश्यमक्षरमणुंत्यक्तोपनेत्रत्रपाःश्रीगोपालमुपास्महेश्रुतिशिरोवंशीरवैर्दर्शितम् ॥ १ ॥ वाद्यःस्तेनाभिभार्षावहिरुदवसितंपातितर्कौऽप्रतिष्ठोमी मांसाप्रातिहार्यंभजतिगुणगणंयस्यपसंख्यातिसांख्यः ॥ हत्पीठे योगशद्वे निहितमुपनिषद्वाहवृंदैःपरंमेभाग्यंश्रीलक्ष्मणार्यांजगतिविजयतेयस्यलेशाःशिवायाः ॥ २ ॥ हरिविधिविवसिष्ठशक्तिपराशरव्यासशुकदेवान् ॥ वैशंपायनसूतश्रवसंचनुमःपुराणगुरुमुख्यान् ॥ ३ ॥ कणभक्षमक्षचरणंजैमिनिकपिलौपतंजलिंचनुमः ॥ श्रीमद्व्यासवचोंबुधिनयसीकरवर्षिणोमुदिरान् ॥ ४ ॥ सर्वविद्येशतामाविश्रिकौ पूर्वपूरुषौ ॥ श्रीनारायणधीरेशरूपौहारिहरौनुमः ॥ ५ ॥ बहून्समाहृत्यविभिन्नदेश्यान्कोशाग्विनिश्चित्यचपाठमग्र्यम ॥ प्राचांगुरूणामनुसृत्यवाचमारभ्यतेभारतभावदीपः ॥ ६ ॥ टीकांतराणींदुरविप्रभाणिबाह्यार्थरत्नानिचकासयंतु ॥ अंतर्निगूढार्थचयप्रकाशेदीपःक्षमोभारतमंदिरेऽस्मिन् ॥ ७ ॥ ईशप्रसादाद्विर्तुस्ववंश्यान्भगीरथेनेवमयामणीता ॥ एषामहाभारततीर्थगंगालोकत्रयींजाड्यमलंधुनोतु ॥ ८ ॥ उत्तानेष्विहकोशविग्रहवलेष्वप्येपुनैवाश्रितंगंभीरेषुनसेतवोनविहिताःकूटाननस्फोटिताः ॥ नच्छिन्नानतमश्चराननतिभिर्भक्तानमाच्छादितानोदीनानविभीषणाश्चविहिताःश्रीलक्ष्मणार्यंश्रितैः ॥ ९ ॥ इहखलुभगवान् पाराशर्यःपरमकारुणिकोमंदमध्यममतीननुग्रहीतुंचतुर्दशविद्यास्थानरहस्यान्येकत्रप्रदिदर्शयिषुर्महाभारताख्यमितिहासंप्रणेष्यन्प्रारिप्सितस्यग्रंथस्यनिष्प्रत्यूहपरिपूरणायप्रचयगमनायचकृतं मंगलंशिष्यशिक्षायैश्लोकरूपेणनिबध्नन्नर्थात्तत्रप्रेक्षावत्प्रवृत्त्यंगमभिधेयादिदर्शयति नारायणमिति । नरोऽविद्यावच्छिन्नंचैतन्यंजीवःतेनविषयीकृतेऽनवच्छिन्नचैतन्यरूपेब्रह्मणिशुक्तौरजतवत्कल्पि

॥श्रीवेदव्यासायनमः॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत ॥ १ ॥

तंचराचरप्रपंचशब्दवाच्यंनारंतदेवायनंशुक्तौदमंशस्यरजतमिवप्रवेशस्थानंयस्यसनारायणः । स्वस्मिन्जीवकल्पितस्यप्रपंचस्यसत्तास्फूर्तिप्रदत्वेनकारणीभूतइत्यर्थः । यथोक्तं । 'आपोनाराइतिप्रोक्ताआपोवैनरसूनवः ॥ अयनंतस्यताःपूर्वंतेननारायणःस्मृतः'इति । तंनारायणंनमस्कृत्यतथानरभुक्तरूपंनमस्कृत्य एनंविशिनष्टि नरोत्तममिति । जीवोहिचेतनत्वेनजडवर्गादुत्कृष्टस्ततउत्कृष्टतरः कारणात्मानारायणस्ततोप्युत्कृष्टतमंनिरुपाधिचैतन्यं'सत्यंज्ञानमनंतंब्रह्म विज्ञानमानंदंब्रह्म'इत्यादिश्रुतिप्रसिद्धंतदेवनरोत्तमस्यनिरस्ताविद्यस्यजीवस्यनिष्प्रपंचंपारमार्थिकंरूपमितियुक्तंतत्रोत्तमत्वविशेषणं । यथोक्तं । 'पिंडब्रह्मांडनेतृत्वान्नरोजीवेश्वरावुभौ । तयोश्चनयनाच्छुद्धंब्रह्मापिनरउच्यते ॥ नरजानामपांकार्यंनारंब्रह्मांडमिष्यते ॥ तद्यस्यवसतिस्थानंतेननारायणोविभुः ॥ स्वाविद्यासृष्टपिंडेनतादात्म्यंयोगतोनरः ॥ सजीवःसपरंब्रह्मनरोत्तमपदाभिधं ॥ तद्द्योतिकांगिरंनत्वाततोव्यासस्तयेवसन् ॥ संसारजयिनंग्रंथंजयनामानमीरयेत्'इति । एवंचजीवाविद्याकल्पितत्वाज्जगतोमिथ्यात्वंब्रह्मणश्चतत्रसत्तास्फूर्तिप्रदत्वेनसत्यत्वंजीवस्यतदभिन्नत्वंचेतिविषयोदर्शितः । अविद्यानिवृत्तौतत्कृतस्यप्रपंचस्यत्रैकालिकबाधादात्यंतिक्यनर्थनिवृत्तिःप्रयोजनं । अर्थात्तत्कामोऽधिकारी । ग्रंथस्योक्तविषयस्यचज्ञाप्यज्ञापकभावःसंबंधइतिचदर्शितं । देवींनरनारायणनरोत्तमतत्त्वप्रद्योतनींसरस्वतींचनमस्कृत्यैवततोव्यासस्तयेवसरस्वत्यापरमकारुणिकपाजनबोधायाविद्याजयेजयोनामेतिहासोयमितिवक्ष्यमाणत्वाज्जयसंज्ञंभारताख्यमितिहासंवा । 'अष्टादशपुराणानिरामस्यचरितंतथा ॥ कार्ष्णंवेदंपंचमंचयन्महाभारतंविदुः ॥ तथैवविष्णुधर्माश्चशिवधर्माश्चशाश्वताः ॥ जयेतिनामतेषांचप्रवदंतिमनीषिणः'इतिभविष्यवचनात्पुराणादिकंवा । 'चतुर्णांपुरुषार्थानामपिहेतौजयोस्त्रियां'इतिकोशाद्व्यासर्वपुरुषार्थप्रतिपादकंग्रंथंशारीरकसूत्रभाष्यादिरूपमुदीरयेद्-

चारयेत् । अत्रलिङ्गामंगलाचरणस्यग्रंथपठिष्यावश्यकत्वंदर्शयतारचनारंभेपुतरांतदर्शितं । नन्वेतन्नपठनीयंनव्याख्येयंचपौरुषेयत्वात्पुरुषेषुचभ्रमविप्रलंभकत्वयोःसंभवादितिचेन्न । सर्वेष्वपुवेदैक
प्रमाणेषुमन्वादिषुतदसंभवात् । पूर्वतंत्रेचस्मृत्यादिधर्मप्रामाण्यस्यसिद्धत्वात् । यस्यांतुस्मृतौलोभमूलकत्वंप्रत्यक्षंदृश्यतेयथाविसर्जनहोमीयंवासोऽध्वर्युःपरिगृह्णातिइतितत्रास्त्वप्रामाण्यं । नत्वद्व
काःकर्तव्याःप्रपाःकर्तव्याऊर्ध्वपुंड्रंमृदाकुर्यादित्यादीनां तासांलोभमूलकत्वादर्शनात् । यांजनाःप्रतिनंदंति 'धन्वन्निवप्रपाअसि त्वमग्ने श्रोणामेकउदकंगामवाजति'इतिमंत्रलिंगानुमितविधिमूलक
त्वाच्च । धन्वन्धन्वनिनिरुदकप्रदेशे । किमुश्रेष्ठःपञ्चानाआभैवंत्रिष्टुबन्तमित्यनुक्रमणिकायांकिमुश्रेष्ठइतिसूक्तस्यचतुर्दशर्चस्यऋभुदैवत्यस्यनवमदशम्यावेतेऋचौ । 'आपोभूयिष्ठाइत्येको
अब्रवीदग्निर्भूयिष्ठइत्यन्योअब्रवीत् । वधर्यंतींबहुभ्यःप्रैकोअब्रवीदृतावदंतश्चमसाँअपिंशत १ श्रोणामेकउदकंगामवाजतिमांसमेकःपिंशतिसूनयाभृतं ॥ आनिम्रुचःशकृदेकोअपाभरत्किंस्वित्पुत्रे
भ्यःपितरावुपावतुः' २ अत्रऋभ्वाख्यदेवतास्तुतिव्याजेनश्रेयःसाधनानिविधीयंते । हेऋभवःभवतांमध्येएकःकश्चित्तीर्थाश्रयेणैवप्राप्तदेवताभावआपएवभूयिष्ठाउत्कृष्टतमाइत्यब्रवीदेवंयज्ञादिनाप्रा
प्तदेवताभावोऽन्योऽग्निर्भूयिष्ठइत्यब्रवीत् । वधर्यंतीं अवपूर्वाद्धृञोविच्प्रत्ययेभागुरिमतेनाकारलोपेचेदंरूपं । स्वरादिपाठादव्ययत्वंनिपातत्वादाद्युदात्तत्वंच । वधरित्यव्ययंपालनार्थे अवगत्यधारयती
तियोगात् । तदर्थंयंतींगच्छंतींचेतोवृत्तिंदयांबहुभ्यःप्रमाणेभ्योनिश्चित्यैकोदययैवप्राप्तदेवताभावःप्रकर्षेणाब्रवीत् । तेयूयंऋताऋतानिसत्यान्येवैतान्यवादीनिदेवताभावप्राप्तिसाधनानिवदंतउपदिशंतो
यज्ञेषुचमसान्सोमयुक्तान्अपिंशतव्यभजंत । अत्रत्वेवमुपाख्यायते । ऋभवोनामत्रयोदेवाएकंत्वमसमासेदुस्तत्रवह्निरपितद्रूपंगृहीत्वाआगतस्तेतमतिसारूप्यात्पृथग्ज्ञातुमशक्ताएकंचमसं
चतुर्धाव्यभजंतेति । यद्वा सत्यवादिनामेवतीर्थादिफलदमिति ऋतावदंतइत्यस्यार्थः । श्रोणामेकः हेऋभवःभवतांमध्येएकःश्रोणांश्लक्ष्णांगांमृदंगोपीचंदनादिरूपांतीर्थनिकटस्थांमुख्यकर्मभूतां
प्रत्युदकंजलंगौणंकर्मअवाजत्यवगमयति अंतर्भावितण्यर्थोयं श्रोणांगामुदकेनमिश्रयतीत्यर्थः । श्रोणांगांरक्तचंदनादिरूपांवा । तथाएकःसूनयाहिंसयातत्कर्त्राआभृतमाहृतंमांसंगोरोचना
रव्यंपिंशतिपिनष्टिउदकेनसहेतिशेषः । निम्रुचःनितरामस्तंगच्छतोदग्धेंधनस्याग्नेःसंबंधिशकृद्गोमयं शुष्कगोमयोत्थंभस्मेतियावत् । अपाभरदपाहृतवान् । अत्राप्युदकेनसहेति
शेषः । व्यवहिताश्चेतिछंदसिव्यवहितेनाप्युपसर्गेणक्रियायाःसंबंधः । हृग्रहोर्भश्छंदसीतिहस्यभः । एतानिमंत्रपदान्यसंपूर्णार्थत्वात्स्वार्थलाभायब्राह्मणमपेक्षंते । इषेत्वोर्जेत्वेत्यादिमं
त्रवत् । तत्रयथा । इषेत्वेतिशाखामाच्छिनत्तिउर्जेत्वेत्यनुमार्ष्टीतिब्राह्मणानुसारात्छेशाखेत्वात्वामिषेअन्नायच्छिनद्मीतिऊर्जेपशुभ्यःअनुमार्ज्मीतिव्याख्यातं । एवमिहापिवासुदेवोपनि
षद्ब्राह्मणतंत्रपुराणोपबृंहणानुसारादूर्ध्वपुंड्रार्थंश्लक्ष्णांमृदंजलेनमिश्रयेदितिव्याख्येयं । तथाकालाग्निरुद्रबृहज्जाबालाद्युपनिषद्ब्राह्मणतंत्रपुराणोपबृंहणानुसारात्त्रिपुंड्रंकर्तुंनिम्रुचःशकृदपाभरदिति
व्याख्येयं । एवमितरस्यापिपादस्यब्राह्मणमंत्रलिंगादुपबृंहणस्मृतिभ्यश्चाष्टकाप्रपाविधिवदनुमेयं । तथाचश्रोणामितिपदस्यरक्तामितिव्याख्यानेसौरशाक्तगाणेशानांरक्तमेवपार्थिवंद्रव्यं
पुंड्रार्थंतत्तत्तंत्रेविधीयते । वैष्णवानांपीतंशैवानांभस्मेति । अनेनतत्तत्पुंड्रविशेषोपलक्षिततत्तद्देवताभजनेनापिदेवताभावंप्राप्नुवंतीतिविधीयते केवलवैदिकानांतुश्रोणांश्लक्ष्णामितिव्याख्या
नेनत्रितयस्यापिसमुच्चयः । 'स्नात्वापुंड्रंमृदाकुर्याद्धुत्वाचैवतुभस्मना । देवान्पितॄन्समभ्यर्च्यचंदनेनसमाचरेत्'इतिस्मृतिभ्यः । अत्रगोरोचनाग्रहणंचंदनाद्यष्टगंधोपलक्षणार्थं । एतेषांविकल्प
समुच्चयपक्षाणांपितृपैतामहपरंपराक्रमेणव्यवस्थामाह । किंस्वित्पुत्रेभ्यःपितरावुपावतुरितिपुत्रहितार्थंयत्किंचिद्व्रतंपितरौमातापितरौपितृपितामहौवाउपेत्यस्वीकृत्यअवतुःव्रतंसम्यक्परिपालया
मासतुः तदेवतस्यपुत्रस्यश्रेयःसाधनमित्यर्थः । एवंसत्यवादिनांतीर्थोनियज्ञादयस्तंत्रमार्गेणसूर्याद्यन्यतमोपास्तिःकेवलवैदिकताचेतिदेवताभावप्राप्तिसाधनानीतिमंत्रद्वयतात्पर्यंसिद्धं । तस्माद
स्मदादिभिरल्पज्ञैर्दृष्टमूलमदृष्टमूलंवामनुव्यासादिसर्वज्ञप्रणीतंस्मृतिजातंवेदवद्वेदविदांवचनमितिन्यायेनागमपितत्पठनीयंव्याख्येयंचेतिसर्वमनवद्यम् १

महतःशास्त्रस्यारंभेबहुविघ्नसंभावनयास्वोपास्यंवासुदेवंद्वादशाक्षरेणप्रणम्य'यस्यदेवे पराभक्तिर्यथादेवेतथागुरौ ॥ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः'इत्युक्तेरीश्वरवत्परात्परगुरुंपितामहंपरमगु
रुन्वसिष्ठमरीच्यादीन्प्रजापतींश्चप्रणम्याहंमनुरभवंसूर्यश्चेत्यादिनावामदेववत्स्वकीयंब्रह्मभावमपमात्माब्रह्मेतिशास्त्रमनुसंदधानःप्रत्यगात्मानमेवनमस्करोति ओंनमःकृष्णद्वैपायनायेति । त
तोविघ्नविनायकान्नमस्कृत्यसुखासीनानितिभारतारंभश्लोकेऽपेक्षितंपूरयतिगद्येन । लोमहर्षणपुत्रइति । 'लोमानिहर्षयांचक्रेश्रोतॄणांयःस्वभाषितैः ॥ कर्मणाप्रथितस्तेनलोमहर्षणसंज्ञया'इतिकौर्मेनिरु
क्तार्थनाम्नःपुत्रउग्रश्रवाः उग्रस्यनृसिंहतापनीयोपनिषत्प्रतिपाद्यस्यवस्तुनःश्रवःश्रवणंयस्यसः अधिगतोपनिषद्रहस्यइत्यर्थः । सौतिः सूतजातेरुत्पत्तिरुक्तावायुपुराणे । 'वैन्यस्यतुपृथोर्यज्ञे
वर्तमानेमहात्मनः ॥ सुत्यायामभवत्सूतःप्रथमंवर्णवैकृतं ॥ ऐंद्रेणहविषातत्रहविःपृक्तंबृहस्पतेः ॥ जुहावेंद्रायदैवेनततःसूतोव्यजायत ॥ शिष्यहव्येनसंपृक्तमभिभूतंगुरोर्हविः ॥ अधरो
त्तरचारेणजज्ञेतद्वर्णवैकृतं'इति । वर्णवैकृतमितिब्राह्मण्यांक्षत्रियात्सूतइतियाज्ञवल्क्योक्तंविलोमजत्वं । तस्यसूतस्यापत्यंसौतिःपौराणिकःपुराणेकृतश्रमः । नैमिषारण्ये । वाराहे 'एवंकृत्वाततो
देवोमुनिंगौरमुखंतदा ॥ उवाचनिमिषेणेदंनिहतंदानवंबलं ॥ अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितम्'इत्युक्तरूपे । नैमिशेतिपाठेतुवायवीये । 'एतन्मनोमयंचक्रंमयासृष्टंविसृज्यते ॥ यत्रा
स्यशीर्यतेनेमिःसदेशस्तपसःशुभः ॥ इत्युक्त्वासूर्यसंकाशंचक्रंसृष्ट्वामनोमयं ॥ प्रणिपत्यमहादेवंविससर्जपितामहः ॥ तेऽपिहृष्टतराविप्राःप्रणम्यजगतांप्रभुं ॥ प्रययुस्तस्यचक्रस्ययत्रनेमिर्व्यशी

ओंनमोभगवतेवासुदेवाय ॥ ओंनमःपितामहाय ॥ ओंनमःप्रजापतिभ्यः ॥ ओंनमःकृष्णद्वैपायनाय ॥ ओंनमःसर्वविघ्नविनायकेभ्यः ॥ लोमहर्षणपुत्रउग्रश्र
वाःसौतिःपौराणिकोनैमिषारण्येशौनकस्यकुलपतेर्द्वादशवार्षिकेसत्रे १ सुखासीनानभ्यगच्छद्ब्रह्मर्षीन्संशितव्रतान् ॥ विनयावनतोभूत्वाकदाचित्सूतनंदनः २
तमाश्रममनुप्राप्तंनैमिषारण्यवासिनाम् ॥ चित्राःश्रोतुंकथास्तत्रपरिवव्रुस्तपस्विनः ३ अभिवाद्यमुनींस्तांस्तुसर्वानेवकृतांजलिः ॥ अपृच्छत्सतपोवृद्धिंसद्भिश्चैवाभि
पूजितः ४ अथतेषूपविष्टेषुसर्वेष्वेवतपस्विषु ॥ निर्दिष्टमासनंभेजेविनयाल्लौमहर्षणिः ५ सुखासीनंततस्तंतुविश्रांतमुपलक्ष्यच ॥ अथापृच्छदृषिस्तत्रकश्चित्प्रस्तावयन्क
थाः ६ कुतआगम्यतेसौतेकचायंविहृतस्त्वया ॥ कालःकमलपत्राक्षशंसैतत्पृच्छतोमम ७ एवंपृष्टोऽब्रवीत्सम्यग्यथावल्लौमहर्षणिः ॥ वाक्यंवचनसंपन्नस्तेषांचचरिताश्रयं ८

र्यत ॥ तद्वनंतेनविख्यातंनैमिशंमुनिपूजितं'इतितन्निर्वचनंद्रष्टव्यं । शौनकस्य शौनःसर्वविवेकदृगितिलीलावत्यां शौनएवशौनकस्तस्य कुलपतेः । 'एकोदशसहस्राणियोन्नदानादिनाभरेत् ॥
सवैकुलपतिः'इत्युक्तलक्षणस्यसत्रेयेयजमानास्तएवऋत्विजोयस्मिन्बहुकर्तृकेक्रतौससत्रसंज्ञः । यथोक्तं । 'बहुभ्योदीयतेयत्रतृप्यंतिप्राणिनोबहु ॥ कर्तारोबहवोयत्रतत्सत्रमभिधीयते'इति १ सु
खासीनानिति कर्मच्छिद्रेषुसुखंस्वरूपानंदंविचारयितुमासीनान् अभ्यगच्छत्आभिमुख्येनस्वयमेवतेषांपुरःकथांवक्तुंकौतूहलितयागतवान् । 'नानाहूतोऽध्वरंगच्छेदन्यत्रतुकुतूहलात्'इत्युक्तेः । सं
शितव्रतान्सम्यक्शितंतीक्ष्णंखड्गधारावदनास्कंदनीयंव्रतंब्रह्मचर्यादिकंयेषांतान् २ नैमिषारण्यवासिनामाश्रममनुप्राप्तंतंतपस्विनःपरिवव्रुरितिसंबंधः । अनुप्राप्तइतिपाठेतूत्तरार्धेतमित्यध्याहार्यं ३
तपोधनानांतपोवृद्धिरेवप्रष्टव्याऽतस्तांस्तपोवृद्धिमपृच्छत् पृच्छेर्द्विकर्मकत्वात् । तपोवृद्धानितिपाठेतपोऽपृच्छदित्यन्वयः ४ निर्दिष्टमिहोपविश्यतामितिदर्शितं ५ प्रस्तावयन्नुपोद्धातयन् ।
प्राप्तवयाइतिपाठेवृद्धइत्यर्थः ६ उपोद्घातमेवाह कुतइति विहृतोनीतः ७ एवमिति सम्यक्शब्दतःशुद्धं यथावदर्थतःशुद्धं वचनसंपन्नःशब्दप्रयोगकौशलयुक्तः तेषांचरिताश्रयं
तेषांमुनीनांवाद्धन्येषांराजादीनांचसंबंधीनियानिचरितानितेषामाश्रयभूतंवचनम् ८

भावितात्मनांविशोधितचित्तानां । सौतिरुवाच जनमेजयस्यराजर्षेरित्यक्षराधिक्यमार्षं यत्तुजन्मनैवातिशुद्धेनशत्रूनेजितवान्यतः । एजृकंपनेधातुर्हिजन्मेजयइतिश्रुतइतिनिरुच्यचतुरक्षरंनामेत्याहुस्तन्निर्मूलं जनमेजयःपारिक्षितइतिश्रौताक्षरसंख्याविरोधात् जन्मशब्दस्यानुपसर्गत्वाचेडिपररूपंदुर्लभंच । युक्तंतुजनशब्दपूर्वादेजृश्रेजृभ्राजृदीप्तावितिदीप्त्यर्थाण्ण्यंतादेजेःखशितिखशिमुमागमेजनमेजयइति ९ पार्थिवेंद्रस्यसमीपेकृष्णद्वैपायनप्रोक्तावैशंपायनेनकथिताश्चेतिसंबंधः १० विशंप्रजांपातीतिविशंपोजनमेजयस्तस्यायनंगुरुत्वेनाश्रयभूतोवैशंपायनःसएववैशंपायनःस्वार्थेतद्धितः यद्वाविरिवविर्जीवः पक्षिवदेहांतरसंक्रमणात् शंपःसुखस्यपालकईशः तयोरयनमधिष्ठानंशुद्धंब्रह्म तदधीतेतद्वेदेतिवावैशंपायनस्तेनवैशंपायनेन ताःश्रुत्वातंदेशंगतवानस्मीतिसंबंधः । महाभारतं । 'चत्वारएकतोवेदामहाभारतमेकतः ॥ महर्षिभिःसमागत्यतुलामारोपितंपुरा ॥ महत्त्वाद्भारवत्त्वाच्चमहाभारतमुच्यते'इत्युक्तलक्षणं तत्रसंश्रिताःसम्यक्श्रिताः सर्ववेदार्थगर्भाइत्यर्थः तप्पर्वमरुद्भ्यामित्यन्यत्रस्मृतोमत्वर्थीयस्तप्रत्ययोबाहुलकाद्भारशब्दादपीतिज्ञेयं ११ तीर्थानिजलप्राधान्यात्पुष्करादीनि आयतनानिस्थलप्राधान्यान्नैमिषादीनि १२ । १३

तस्मिन्सदसिविस्तीर्णेमुनीनांभावितात्मनाम् ॥ सौतिरुवाच ॥ जनमेजयस्यराजर्षेःसर्पसत्रेमहात्मनः ९ समीपेपार्थिवेंद्रस्यसम्यक्पारिक्षितस्यच ॥ कृष्णद्वैपायनप्रोक्ताःसुपुण्याविविधाःकथाः १० कथिताश्चापिविधिवद्यावैशंपायनेनवै ॥ श्रुत्वाऽहंताविचित्रार्थामहाभारतसंश्रिताः ११ बहूनिसंपरिक्रम्यतीर्थान्यायतनानिच ॥ समंतपंचकंनामपुण्यंद्विजनिषेवितम् १२ गतवानस्मितंदेशंयुद्धंयत्राभवत्पुरा ॥ कुरूणांपांडवानांचसर्वेषांचमहीक्षिताम् १३ दिदृक्षुरागतस्तस्मात्समीपंभवतामिह ॥ आयुष्मंतःसर्वएवब्रह्मभूताहिमेमताः ॥ अस्मिन्यज्ञेमहाभागाःसूर्यपावकवर्चसः १४ कृताभिषेकाःशुचयःकृतजप्याहुताग्नयः ॥ भवंतआसनेस्वस्थाब्रवीमिकिमहंद्विजाः १५ पुराणसंहिताःपुण्याःकथाधर्मार्थसंश्रिताः ॥ इतिवृत्तंनरेंद्राणामृषीणांचमहात्मनाम् १६ ॥ ऋषयऊचुः ॥ द्वैपायनेनयत्प्रोक्तंपुराणंपरमर्षिणा ॥ सुरैर्ब्रह्मर्षिभिश्चैवश्रुत्वायदभिपूजितम् १७ तस्याख्यानवरिष्ठस्यविचित्रपदपर्वणः ॥ सूक्ष्मार्थन्याययुक्तस्यवेदार्थैर्भूषितस्यच १८ भारतस्येतिहासस्यपुण्यांग्रंथार्थसंयुताम् ॥ संस्कारोपगतांब्राह्मींनानाशास्त्रोपबृंहिताम् १९

१४ कृतेति । आसनेस्वस्थाभवंतोभवंत्वितिशेषः । आसतेइतिपाठेस्वास्थ्यंपृच्छतिकथांप्रस्तोतुमित्यर्थः अहंचपुराणादिष्वन्यनमंकिंब्रवीमीत्याज्ञापयतेतिशेषः १५ पुराणेति । 'सर्गश्चप्रतिसर्गश्चवंशोमन्वंतराणिच ॥ वंशानुचरितंचेतिपुराणंपंचलक्षणं'इतिस्मृत्युक्तंपुराणंपुरापिनवं वर्णपदानुपूर्वीविभ्रंशेपिप्रतिकल्पंतदर्थानांसर्गादीनांसमानानामरूपत्वात् । 'सूर्याचंद्रमसौधातायथापूर्वमकल्पयत्'इतिश्रुतेःपुराणस्यसंहिताःधर्माश्रिताःकथादानमोक्षधर्माद्याः अर्थाश्रिताराजधर्माद्याः नरेंद्राणांनलरामादीनामितिवृत्तमाचारप्रकारं ऋषीणांभृग्वादीनांचात्पतिव्रतादीनां १६ सुरैर्ब्रह्मर्षिभिश्चयदभिपूजितंस्वस्वलोकेइतिशेषः १७ विचित्राणिस्वरूपतोऽर्थतश्चरम्याणिपदानि वाक्यादेरुपलक्षणं पर्वाणिपौष्यपौलोमादीन्यादिसभादीनिवायत्रतस्य । सूक्ष्माअतर्क्याअर्थाआत्मतत्त्वादयः । 'अचिंत्याःखलुयेभावानतांस्तर्केणयोजयेत् ॥ नाप्रतिष्ठिततर्केणगंभीरार्थस्यनिश्चयः ॥ नैषातर्केणमतिरापनेया'इतिस्मृतिभ्यां । न्यायस्तत्प्रतीत्यनुकूलायुक्तिःवेदार्थैर्वेदतात्पर्यविषयभूतैरर्थैश्चभूषितस्य १८ संस्कारोपगतांपदादिव्युत्पत्तिमतीं ब्राह्मींवाचं । 'ब्राह्मीगौर्भारतीभाषा'इत्यमरः । नानाशास्त्रैरुपबृंहितामुद्दीपितां शास्त्रांतराविरुद्धामित्यर्थः १९ 

राज्ञोऽग्रेइतिशेषः २० वेदैश्चतुर्भिःसंयुक्तांचतुर्वेदार्थवतीं संमितामितिपाठेतुल्यामित्यर्थः पुण्यांश्रेयोवर्धिनीं पापभयापहांचित्तशोधिकां २१ मंगलाचरणपूर्वकंमुनिभिःप्रार्थितमर्थंवक्तुंप्रतिजानीते आद्यमित्यादिचतुर्भिः । हरिंनमस्कृत्यमहर्षेर्मतंप्रवक्ष्यामीतितृतीयचतुर्थयोरन्वयः अत्रभूबीजांकुरतरुफलोपमाःपंचईश्वरपुरुषाःशुद्धशबलसूत्रविराड्विष्णुसंज्ञाःनिरुपाधिमायोपाधिमायाकार्यापंचीकृतमहाभूतोपाधिपंचीकृतमहाभूतोपाधिपुरुषाकारमूर्त्युपाधिविशिष्टचैतन्यरूपाः । तत्रनिरुपाधिचैतन्यमीशानंमायिनंतुमहेश्वरमितिश्रुतिप्रसिद्धं पुरुहूतंयज्ञेषुपुरुभिर्बहुभिर्होतृभिर्हूतमाहूतं पुरुभिःसामगैःस्तुतं अध्वर्युभिरिष्टंचेत्यपिद्रष्टव्यं 'एतंह्येवबह्वृचामहत्युक्थेमीमांसंतएतमग्नावध्वर्यवएतंमहाव्रतेछंदोगाः'इतिश्रुतेः 'यदेनमृग्भिःशंसंतियजुर्भिर्यजंतिसामभिःस्तुवंति'इतिस्मृतेश्च । 'पुरुहंपुरुभूयिष्ठं'इत्यमरः । एतदेवव्युत्क्रमेणविशिनष्टि व्यक्ताव्यक्तंसनातनमिति व्यक्तंसूत्रात्माहविर्भोक्तृत्वफलप्रदातृत्वादियोगात् अव्यक्तंईशानःसुप्तिप्रलययोःसर्वलयात्मत्वात् सनातनमखंडदंडायमानं एतेनतस्मादव्यक्तमुत्पन्नमितिस्मृतेश्चैवरयोरुत्पत्तिमत्त्वेनलयोदर्शितः ऋतंयथाभूतं यथास्फटिकेस्वतःशुद्धेहिंगुलाश्रयत्वेरक्तत्वंतत्रैवस्फटिकांशप्रमोपेपद्मरागत्वंतत्रैवचंद्रिकायामिंद्रनीलत्वंचाध्यस्यते तथाचैतन्येमायायोगादीशत्वमीशेऽप्यविद्यायोगात्सूत्रत्वंसूत्रेऽप्यविद्यादार्ढ्याद्विराट्त्वंचाध्यस्यते तत्रोत्तरोत्तरापेक्षयापूर्वपूर्वमृतंपरमर्तत्वाद्यःपुरुषएव एकमितिमायाद्युपाधिकृतभेदनिरासः । अक्षरं अशःसरन् व्यापकंतेनआकाशात्पृथिव्यादेरिवनास्मात्पृथगुपाधेरपिसत्वमस्तीतिदर्शितं अतएवब्रह्मनिरवधिकबृहत्त्वादेशतः

जनमेजयस्ययांराज्ञोवैशंपायनउक्तवान् ॥ यथावत्सऋषिस्तुष्ट्यासत्रेद्वैपायनाज्ञया २०
वेदैश्चतुर्भिःसंयुक्तांव्यासस्याद्भुतकर्मणः ॥ संहितांश्रोतुमिच्छामःपुण्यांपापभयापहाम् २१
॥ सौतिरुवाच ॥ आद्यंपुरुषमीशानंपुरुहूतंपुरुष्टुतम् ॥ ऋतमेकाक्षरंब्रह्मव्यक्ताव्यक्तंसना
तनम् २२ असच्चसदसच्चैवयद्विश्वंसदसत्परम् ॥ परावराणांस्रष्टारंपुराणंपरमव्ययम् २३

कालतोवस्तुतश्चपरिच्छेदशून्यम् २२ चतुर्थंविराजमाह असच्चेति यत्सदसत्परंसदसद्भ्यांकार्यकारणाभ्यांसूत्रेशाभ्यांपरमन्यत्सनातनाख्यंतदेववस्तुविश्वंविराड्रूपमित्यर्थः । ब्रह्मैवेदंसर्वमित्यादिश्रुतेः । किंभूतंविश्वं सत्दृश्यमानत्वात् असच्च नेहनानास्तिकिंचनेतितत्त्वज्ञानबाध्यत्वश्रुतेः । नन्वाद्यंतयोरसत्वमध्येचसत्घटादिकंदृष्टंनेत्याह असच्चेति रज्जूरगवत्प्रतिभासमानमपिकालत्रयेऽपिनास्तीत्यर्थः फलोपमंपंचमंविष्णुमाह परेति परेसूत्रात्मानःअवरेविराडादिघटांताः बहुत्वमनंतशक्तित्वसूचनार्थं तेषांस्रष्टारं नन्वंडांतरुत्पन्नस्यकथंपरादिस्रष्टृत्वमतआह पुराणमिति पुराऽपिनवं अनादिरेवसन्ब्रह्मांडांतश्चतुर्भुजेनरूपेणाविर्भूतोऽनंतशक्तिःपरिणतबीजगर्भफलमंकुरादीनामिवपरावराणांस्रष्टाभवतीत्यर्थः अतएवपरमव्ययमत्यंतंव्ययशून्यं संसारस्यानंत्यात्तत्कारणीभूतस्यतस्यव्ययोनयुज्यतइत्यर्थः । ननुसोयमात्माचतुष्पादित्यादिनानिरुपाधितुर्यमतिपत्तयेपरमात्मनस्त्रीण्येवसोपाधिकानिरूपाणिविश्वतैजसप्राज्ञसंज्ञानिमांडूक्यादिषुश्रूयंतेनतुचतुर्थमितिचेत् सत्यं । तथापि । 'यएषोंतरादित्येहिरण्मयःपुरुषोदृश्यतेहिरण्यश्मश्रुर्हिरण्यकेशः । अरश्चण्यश्चार्णवौतृतीयस्यामितोदिवीत्यादिप्रभुमितंवेश्म'इतिच्छांदोग्येपुरुषाकृतेर्ब्रह्मणस्तल्लोकादेश्चश्रवणात् । कौषीतकिब्राह्मणेचपर्यंकस्थस्यब्रह्मणस्तेनसहसंवादादेश्चश्रवणाच्चतदप्यस्तीतिगम्यते । आरण्यकेऽपिगंधमादनप्रवेशेरौम्यवाक्येमहामेरुर्महाभागेत्यादिनामेरुपृष्ठेब्रह्मलोकादन्यंविष्णुलोकं'प्राच्यांनारायणस्थानंमेरावतिविराजते'इत्यादिनास्था'नमेतन्महाभागध्रुवमक्षयमव्ययं'इत्यंतेनग्रंथेनोक्तविशेषणमामनंति तत्रैवचतत्प्राप्तानामनावृत्तिःस्मृता । 'तत्रगत्वापुनर्नेमंलोकमायांतिभारत'इति । स्थानांतरेभ्यश्चावृत्तिर्गीतासुक्ता । 'आब्रह्मभुवनाल्लोकाःपुनरावर्तिनोऽर्जुन'इति । इमावेवब्रह्मविष्णुलोकावभिप्रेत्यर्चितितंचतुर्थंकार्यंबादरिरित्यत्रछांदोग्येह्यार्चिरादिमार्गंप्रकृत्यश्रूयतेसएतान्ब्रह्मगमयती–

—त्यत्रमानवःपुरुषउपासकान्कार्यंब्रह्मप्रापयत्युतविष्ण्वाख्यंपरमिति । प्राणोब्रह्मकंब्रह्मखंब्रह्मेतिप्रकृत्ययद्वावकंतदेवखंयदेवखंतदेवकमिति कखयोरभेदमुक्त्वाप्राणंचहास्मैतदाकाशंचोचुरितिप्राणाकाशा
ख्ययोःकार्यकारणब्रह्मणोरुपास्यत्वेनोपसंहारात्संशयःतत्रपरस्मिन्ब्रह्मणि'नतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंते' इतिश्रुतिप्रसिद्धंपारमार्थिकंगत्यभावमभिप्रेत्यकार्यब्रह्मैवगतिप्राप्यमितिपूर्वःपक्षः
दृश्यतेपरमितिसिद्धांतः अस्मिन्पक्षेश्रुतिसूत्रयोःस्वारस्यंकतकेऽवगंतव्यं ईक्षतिकर्माधिकरणेभाष्येऽपिहिएवंविधौपूर्वोत्तरपक्षौसर्वत्रदृश्येते यत्तूक्तंपरमेश्वरेहिरण्यश्मश्रुत्वादिरूपश्रवणंनोपपद्यतेइति
तत्रब्रूमः स्यात्परमेश्वरस्यापीच्छावशान्मायामयंरूपंसाधकानुग्रहार्थमित्यादिनातद्वदिहापिज्ञेयं तत्रपूर्वपक्षेफलंइमंमानवमावर्तंनावर्ततइत्यंतेइममितिविशेषणान्मानवांतरेआवृत्तिरिति सिद्धांते
तुनचपुनरावर्ततइतिश्रुत्यंतरात् यतोवाइमानिभूतानिजायंतइत्तिवदिदंशब्दउपप्रदर्शनार्थंइत्यनावृत्तिरिति । कथंतर्हिभाष्येसूत्रक्रममुल्लंघ्यपरंगतिप्राप्यमितिप्रापय्यकार्यमेवगतिप्राप्यमितिसिद्धांतितं ।
शृणु । नोव्योमापरोऽयदितिपरव्योमाख्यस्याव्याकृताकाशस्यसर्वजगत्कारणस्यापिसृष्टेःप्राङ्निषेधश्रवणात्तस्मादव्यक्तमुत्पन्नमिति तदुत्पत्तिश्रुतेर्हिरण्यश्मश्रुत्वादिमतोऽपिकारणब्रह्मणःशुद्धापे
क्षयाकार्यत्वंविवक्षित्वातद्विषयत्वंगतिश्रुतीनांवर्णितं परशब्देनचशुद्धंविवक्षित्वातत्रगत्ययोगश्चदर्शितइति । नचहिरण्यश्मश्रुत्वादिश्रवणंकार्यब्रह्मविषयमेवेतिवाच्यं अंतस्तद्धर्मोपदेशातद
हरउत्तरेभ्यइत्यादिन्यायैस्तस्यजगत्कारणत्वसिद्धेः । इयमेवर्गग्निःसामवागेवर्क्प्राणःसामेत्यादिनाक्सामात्मकत्वेननिरूपितस्यकृत्स्नस्याधिदैविकाध्यात्मिकप्रपंचरूपतस्यर्क्सामचगेष्णा
वितितदंगुलिपर्वमात्रत्वोक्तेश्चतस्माच्छास्त्रांत्यन्यायेनयदधीनंजगद्व्यापारवर्जमितरेषामुपासनासिद्धानांहिरण्यगर्भादीनामैश्वर्यंयेनसहतेषांभोगसाम्यंयथैतांदेवतांसर्वाणिभूतान्यवंत्येवंहैवंविदंसर्वाणिभू
तान्यवंतीतिलिंगाद्गम्यते यस्यसभूमिंसर्वतोवृत्वाऽत्यतिष्ठद्दशांगुलमितिघटादिभ्योमृदइवइंद्रजालादिंद्रजालिकस्येवचविकारवर्तितदवर्तिचरूपंस्थितिश्चश्रूयते यल्लोकंप्राप्तानामनावृत्तिस्तद्रूत्यभूतचतु
र्वेक्रेणसहमुक्तिराधिकारिकाणामभुक्तविद्याफलानांतल्लोकगतानामपियावदधिकारंकल्पांतरेऽप्यवस्थितिश्चेतिश्रूयते तस्यविग्रहादिकंसर्वशास्त्रप्रामाण्यादभ्युपेयं अयमेवभगवत्पादीयेवेदांतसा
रेवनवृक्षदृष्टांतेनस्थूलसूक्ष्मकारणोपाधिभेदेनत्रिविधेसमष्टिव्यष्टीप्रतिपाद्यसमष्टिर्वनदृष्टांतेनप्रतिपादितः । किंचशुद्धेब्रह्मणिप्रणिधीयमानंचित्तंस्थूलसूक्ष्मक्रमात्सर्वंचिदात्मनिप्रविलापयेदितिपं
चीकरणोक्तक्रमेणस्वाभाविकपरिच्छेदाभिमानंत्यक्त्वाऽहमेवेदंसर्वोऽस्मीतिमन्यते । सोऽस्यपरमोलोकइतिशास्त्रीयसार्वात्म्याभिमानयुक्तंव्यक्तभावनामंतरेणसहसाकर्तुमशक्यं । 'अव्यक्ता
हिगतिर्दुःखंदेहवद्भिरवाप्यते'इत्युक्तेः । देहवद्भिर्देहाभिमानवद्भिः तस्मात्भावनामयंप्रणिधानमयंचेतिद्विविधमपिध्यानंशुद्धंवस्तुमपित्सोरावश्यकं तत्राद्यंनएवनितावदसन्निहितविषयंपुरुष
व्यापारतंत्रं तेनवशीकृतंचित्तंक्रमशोमूर्त्याकारतःप्रच्याव्याव्यक्तमात्रालंबनोभूत्वाविराडादौकारणेब्रह्मणिचित्तंप्रणिदध्यात् अयमेवध्यानक्रमःश्रीमद्भागवतादिसर्वपुराणेषूक्तः । प्रणिधानं
चवस्तुतत्त्वविषयंपूर्वोक्तस्फटिकदृष्टांतेनआत्मन्यध्यस्तस्यविराडादित्रयस्यरज्जुसर्पस्येवचित्तस्थिरीकरणेनाधिष्ठानभूतशुद्धवस्तुदर्शनेनप्रविलापनकरणं तच्चदर्शनंदग्धेंधनानलवत्स्वयमुपशांतंचे
त्सुषुप्तिसरूपाकाचिदानंदावस्थाविर्भवति । साचश्रूयते 'यथाग्निरिंधनोवह्निःस्वयोनावुपशाम्यति' । एवंवृत्तिक्षयाच्चित्तंस्वयोनावुपशाम्यति'इति । तत्रमांडूक्यादौयद्यपिप्रणिधानगोचरमेव
रूपत्रयमुक्तंतथापिमंदाधिकारिणांभावनागोचरमपिचतुर्थंसोपाधिकमैश्वरंरूपंश्रुत्युक्तंमत्याख्येयं । नन्वस्यनित्यत्वेतल्लोकादिकमपिनित्यंवाच्यंतथाचसृष्टेःप्राक्सदेवसोम्येदमग्रआसीदेकमेवा
द्वितीयमितित्रिविधभेदशून्यसन्मात्रसद्भावावधारणंविरुध्येतेतिचेन्न व्यवहारपरमार्थदृष्टिभ्यामुभयोपपत्तेः । तथाहि । 'नरूपमस्येहतथोपलभ्यतेनांतोनचादिर्नचसंप्रतिष्ठा । अश्वत्थ ॥ ३ ॥
मेनंसुविरूढमूलमसंगशस्त्रेणदृढेनच्छित्त्वा' । अस्यार्थः ' नरूपमस्यनांतोस्यच्छित्त्वेनमितिचेश्वरः । इंद्रजालोपमत्वेनभवाश्वत्थंम्यरूपयत् १ सम्यग्दशार्वाक्ष्यमाणंरूपंनास्योपलभ्यते ।

एतत्प्रयोक्तानित्यत्वादयमाद्यंतवर्जितः ॥ २ ॥ रज्जुसर्पसमस्यास्यतुच्छाज्ञानोद्भवत्वतः ॥ प्रतिष्ठाख्यंलयस्थानेनास्तिकुंभस्यमृद्यथा ॥ ३ ॥ अस्यद्वैतेंद्रजालस्ययदुपादानकारणम् ॥ अज्ञानंतदुपा
श्रित्यब्रह्मकारणमुच्यते ॥ ४ ॥ इत्येवंवार्तिकाचार्यैरुपचारात्परात्मनः ॥ उक्तोपादानतातस्मादप्रतिष्ठोभवद्रुमः ॥ ५ ॥ दुःस्वप्नवत्संसारःसंगमात्रेणदुःखदः ॥ तमसंगासिनाच्छित्त्वाप्रयाहिपरमं
पदम् ॥ ६ ॥ नित्यंवद्धदृशामिंद्रजालंशुद्धदृशांत्विदम् ॥ कालत्रयेऽपिनास्तीतिन्यायमत्रापियोजयेत् ॥ ७ ॥ प्रवाहनित्यंजगदित्याहुर्मीमांसकाःस्फुटम् ॥ व्यवहारेभाट्टनयोव्यस्माकमपिसंमतः
॥ ८ ॥ नकार्यत्वादनित्योऽयंनंदनंदनविग्रहः ॥ उपचाराद्धिकार्यत्वंतत्रपौराणिकाजगुः ॥ ९ ॥ देवानांकार्यसिद्ध्यर्थमाविर्भवतिसायदा ॥ उत्पन्नेतितदालोकेसानित्याप्यभिधीयते ॥ १० ॥
दुर्गाविनायकोविष्णुर्भवोभानुरितीहहि ॥ नामरूपांतराण्यस्यशृणुमःपार्थसारथेः ॥ ११ ॥ वेदान्तेष्वपिनित्यत्वंखादीनांव्यावहारिकम् ॥ सिद्धवत्कृत्यदृष्टांतेकीर्त्यतेहिपरिस्फुटम्' ॥ १२ ॥
तथाह्याकाशवत्सर्वगतश्चनित्यइत्याकाशात्मनोर्दृष्टांतदार्ष्टांतिकयोःसर्वगतत्वनित्यत्वेसंगच्छेते अन्यथाद्वयोरपिसत्यत्वेसर्वगतत्वस्यैवासंभवइत्यास्तांतावत । ततश्चयथाऽस्मदादिसुषुप्तिकालेसयदास्व
पितितदैवंवाक्सर्वैर्नामभिःसहाप्येतिचक्षुःसर्वैरूपैःसहाप्येतीत्यादिनाश्रूयमाणेऽपिसर्वनामरूपप्रलयेइतरेषांव्यवहारोनविच्छिद्यते । एवंब्राह्मप्रलयकालेऽपिवैकुंठवासिनामिति । सदेवसोम्येत्यादि
कमपि'आदावंतेचयन्नास्तिवर्तमानेपितत्तथा'इतिन्यायेननेहनानास्तिकिंचनेतिश्रूयमाणस्यव्यवहारकालेऽपिप्रपंचासत्त्वस्यप्रदर्शनार्थंनतुकादाचित्कस्यतदसत्त्वस्यज्ञापनार्थं । नासतोविद्यतेभावइत्यस
दुत्पत्तिनिषेधात् । नांतोनचादिरितिगीताविरोधाच्च । तस्मादखंडदंडायमानेंद्रजालतुल्यस्यजगतोदर्शनादर्शनेएवोदयलयावित्यभिप्रायेणसृष्टिश्रुतयइत्याकाशवद्व्यावहारिकंविष्णुमूर्त्यादेरपिनित्य
त्वमितिसिद्धं । परमार्थतस्तुननिर्विशेषचिन्मात्रादन्यत्कालत्रयेऽप्यस्तीतिदिक् । 'रज्ज्वज्ञानात्सर्पभीतिपातक्षतमिवक्रमात् ॥ आत्माज्ञानादहंसंगक्रियादेहंसमुत्थितम् ॥ १ ॥ घृतवल्लीयते
सुप्तौवासनामात्रदेहकः ॥ बोधेसहन्यतेचैवपुनःपुनरहंभ्रमः ॥ २ ॥ अहंतद्वासनाधारानाज्ञानेसतिशाम्यति ॥ संगक्रियादेहचक्रंनानष्टेऽहंविनश्यति ॥ ३ ॥ रज्जुज्ञानाद्भयंनश्ये
न्नतुपातोद्भवंक्षतम् ॥ आत्मज्ञानात्तथासंगोनतुकर्मोद्भवंवपुः ॥ ४ ॥ यावत्कर्मवपुस्तावद्यावद्देहश्चतिष्ठति ॥ तावत्कर्माहंभ्रमश्चवर्ततेदग्धवस्त्रवत् ॥ ५ ॥ तत्रैवंसतिकर्मोत्थंकर्म
नाशात्प्रणश्यति ॥ अकर्मजंतुबोधेनबाध्यतेनतुनश्यति ॥ ६ ॥ एवंश्रीकृष्णदेहोऽयमकर्मोत्थोननश्यति ॥ बोधेनबाध्यतेचैवस्वप्नेदृष्टइवेश्वरः ॥ ७ ॥ अन्योन्यबाधकौजाग्रत्स्व
प्नावात्मनिकल्पितौ ॥ नोत्पद्येतेननश्येतेरज्ज्वांसर्पस्रजाविव ॥ ८ ॥ आत्मैवहीश्वरोऽस्माकंधीदर्पणपृथक्कृतः ॥ धीनाशएवतद्बाधःकार्यत्वाद्धीश्चनश्यति ॥ ९ ॥ नन्वैश्वर्यम
कार्यत्वान्ननश्येत्प्रत्यगात्मनः ॥ बाढंबाधस्तुतस्यस्यान्मायाबाधेनसर्वथा' ॥ १० ॥ अत्रोक्तंवार्तिकसारे ॥ 'ब्रह्मत्वादेवजीवस्यभ्रांतजीवत्ववारणात् ॥ वशित्वाद्याब्रह्मधर्माःशिष्यंते
ऽतोऽयमीश्वरः ॥ ११ ॥ निवृत्तत्वाज्जीवधर्माभासंतेनैवकस्यचित् ॥ अनिवृत्ताईशधर्माअकर्मोपादितत्त्वतः ॥ १२ ॥ भांतितेत्वीश्वरस्यापिबुद्धानांचस्वबुद्धितः । ईश्वरस्यततो
धर्माःसंतुनत्विहविस्मयः ॥ १३ ॥ तिष्ठंत्स्वपीशधर्मेषुधर्माणांमायिकत्वतः । ईशोनिर्धर्मकोबोध्योविमुक्त्यर्थंमुमुक्षुभिः'इति । प्रपंचस्तुतत्रैवद्रष्टव्यः कस्यचिद्विदेहमुक्तादेः अयंचेश्वरोऽयम
धर्मवत्स्वस्वबुद्धिभेदाद्वर्णइवलिपिभेदादाकारभेदेनविष्णुरितिसांबइतिचशास्त्राद्गम्यतेएवंतल्लोकोऽपिवैकुंठइतिकैलासइतिच । 'एकंसंतंबहुधाकल्पयन्तियोदेवानांनामधाएकएव'इत्यादिश्रुतिभ्यः ।
'तंयथायथोपासतेतथैतःप्रेत्यभवंति'इतिश्रुतेस्तद्भावनावतांतत्सारूप्यप्राप्तिःकीटभृंगन्यायेनभवतिनतुतदैक्यप्राप्तिरितिव्युत्पादितंवेदांतकतके । केचित्तुपूर्वोक्तमनःप्रणिधानात्मकध्यानसंप्रदायानभि
ज्ञाएतल्लोकप्राप्तिरेवमुक्तिरयमेवेश्वरोनसमष्ट्याख्योऽन्यईश्वरोऽस्तीतिवदंति तेसर्वशास्त्रप्रसिद्धंमुक्तौद्वैतादर्शनंबाधमानाःस्वाप्ययसंपत्त्योरित्यादिन्यायेननहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतु
तद्द्वितीयमस्तिततोऽन्यद्विभक्तंपश्येदितिसुप्तिकैवल्ययोरविशेषाद्वैतादर्शनश्रवणेनचविरुध्यंते । अनयैवचश्रुत्याद्वितीयाभावादेवद्वैतादर्शनंनतुदृग्लोपादितिवदंत्याद्वैतस्येंद्रजालतुल्यत्वंदर्शितं तेन—

ईदृशंहरिंनमस्कृत्यव्यासस्यमतमथातोब्रह्मजिज्ञासेत्यादिसूत्रैर्निर्णीतंयद्ब्रह्माद्वैतंतत्प्रकर्षेणनानोपाख्यानोपबृंहणेनवक्ष्यामि । तत्रश्रद्धोत्पादनार्थंमहर्षेरित्यादिव्यासविशेषणं ऋषीणांमंत्रद्रष्टृणांमहत इतितन्मतस्यश्रौतत्वमुक्तं अद्भुतकर्मणइतिब्रह्माद्वैतप्रतिपत्त्युपायभूतेननानाख्यानदृष्टांतप्रणयनेनविचित्रग्रंथकारित्वमुक्तं २५ आचख्युरिति कवयःक्रांतदर्शिनः २६ त्रैकालिकानामपिकवी नामेतदाख्यानेगुणमाह इदमिति ज्ञानंज्ञानसाधनंत्रयीरूपंद्विजातिभिस्त्रैवर्णिकैर्यद्धार्यतेतदिदमितिहासरूपेणत्रिपुलोकेषुजातितउत्तममध्यमाधमजनेषुप्रतिष्ठितंज्ञानकरत्वेनेत्यर्थः २७ समयैःसंके तैः । 'समयाःशपथाचारकालसिद्धांतसंविदः'इत्यमरः । दिव्यमानुषैर्वैदिकलौकिकैःसंस्कृतप्राकृतैर्वा तथाह्यमृतमंथनादौजलदिषुवृत्तादिपदप्रयोगोवेदनिघंटुप्रसिद्धोदृश्यते तथाजतुगृहदाहेपार्श्वचरादि पुकक्षघ्नादिशब्दाम्लेच्छप्रसिद्धादृश्यंते छंदोवृत्तैस्त्रिष्टुबादिच्छंदांतर्गतैरिंद्रवज्रादिभिर्वृत्तैः २८ निष्प्रभेइति यत्प्रजानांबीजंजगदुपादानमेकंनिमित्तांतरानपेक्षमव्ययमपरिणामिकूटस्थंवस्तुतद्बृहदंडंब्रह्मां डरूपमभूत् । 'तदात्मानꣳस्वयमकुरुत । सच्चत्यच्चाभवत्'इत्यादिश्रुतिभ्योब्रह्मणएवसर्वभावावगमात्कदांडमभूदित्याकांक्षायामस्मिन्प्रजानांबीजेनिष्प्रभेप्रकर्षेणभानंविशेषविज्ञानंरूपाद्याकारंतद्र हितेसति प्रलयकालेबुद्धिबोद्धव्ययोरभावात् निरालोकेआलोक्यतेऽनेनेत्यालोकःसत्वमीश्वरोपाधिभूतंविक्षेपशक्तिमन्मायाख्यंतद्रहिते मायायाअप्यभावेकुतोंऽडोत्पत्तिरतआह सर्वतस्तमसावृत

महर्षेःपूजितस्येहसर्वलोकैर्महात्मनः ॥ प्रवक्ष्यामिमतंपुण्यंव्यासस्याद्भुतकर्मणः २५ आचख्युःकवयःकेचित्संप्रत्याचक्षतेपरे ॥ आख्यास्यंतितथैवान्येइति हासमिमंभुवि २६ इदंतुत्रिषुलोकेषुमहज्ज्ञानंप्रतिष्ठितम् ॥ विस्तरैश्चसमासैश्चधार्यतेयद्द्विजातिभिः २७ अलंकृतंशुभैःशब्दैःसमयैर्दिव्यमानुषैः ॥ छंदोवृत्तै श्चविविधैरन्वितंविदुषांप्रियम् २८ निष्प्रभेऽस्मिन्निरालोकेसर्वतस्तमसावृते ॥ बृहदंडमभूदेकंप्रजानांबीजमव्ययम् २९ युगस्यादौनिमित्तंतन्महद्दिव्यंप्रचक्ष ते ॥ यस्मिन्संश्रूयतेसत्यंज्योतिर्ब्रह्मसनातनम् ३० अद्भुतंचाप्यचिंत्यंचसर्वत्रसमतांगतम् ॥ अव्यक्तंकारणंसूक्ष्मंयत्तत्सदसदात्मकम् ३१ यस्मात्पितामहो जज्ञेप्रभुरेकःप्रजापतिः ॥ ब्रह्मासुरगुरुःस्थाणुर्मनुःकःपरमेष्ठ्यथ ३२ प्राचेतसस्तथादक्षोदक्षपुत्राश्चसप्त वै ॥ ततःप्रजानांपतयःप्राभवन्नेकविंशतिः ३३

इति मायायाआवरणशक्तिरूपात्तुच्छात्तमसएवस्वप्रपंचवदंडमुत्पन्नमित्यर्थः । तथाचश्रुतिः । नोव्योमापरोयदितिमृष्टेःप्रागव्याकृताख्यमायायाअपिसत्त्वंनिषिध्य'तुच्छ्येनाभ्वपिहितंयदासीत् तमसस्तन्महिनाजायतैकं'इतितमोमात्रात्सृष्टिंदर्शयति २९ युगस्यब्रह्मकल्पस्यादौजातंतन्निमित्तंचतुर्विधभूतग्रामोपादानं यस्मिन्नंडेब्रह्मप्रविष्टमितिशेषः । 'तत्सृष्ट्वातदेवानुप्राविशत्'इतिश्रुतेः । किंतत्सत्यंविकारत्वहीनं । वाचारंभणंविकारइतिविकारस्यानृतत्वश्रुतेः । किंजडप्रकृतिरूपं न ज्योतिश्चिद्रूपं सनातनंसततैकरूपं ३० अद्भुतं प्रत्यगात्मत्वेपिदुर्ज्ञेयत्वात् अचिंत्यंवाङ्म नसातीतत्वात् सर्वत्रदेशेकालेवस्तुनिचसमतांसाम्यंऐक्यमितियावत् गतंप्राप्तं अव्यक्तमव्याकृतं । कारणंहेतुः सूक्ष्मंवाह्येंद्रियाविषयत्वात् सदसदात्मकंतुच्छातुच्छव्यावृत्तस्वरूपं अनिर्वचनी यमित्यर्थः ३१ यस्मादंडात्पितामहः सर्वशरीरीप्रथमः 'हिरण्यगर्भःसमवर्तताग्रे'इत्यादिश्रुतिप्रसिद्धः अस्यरजःसत्त्वतमोगुणप्रधानानित्रीणिरूपाण्याह ब्रह्मा सुरगुरुर्विष्णुः स्थाणूरुद्रः ब्रह्मणो विभूतीःसृष्टिकर्मप्रधानाआह मनुरित्यादिना ३२ दक्षपुत्राःसप्त । 'क्रोधस्तमोदमश्चैवविक्रीतोथांगिरास्तथा ॥ कर्दमोश्वश्चसप्तैतेदक्षपुत्राःप्रकीर्तिताः'इत्यन्यत्रोक्ताः । एकविंशतिर्मरीच्यादयः सप्त मनवश्चतुर्दशेति यथोक्तंब्रह्मांडपुराणे । 'ऋषयःसप्तपूर्वेयेमनवश्चचतुर्दश ॥ एतेप्रजानांपतयएभिःकल्पःसमाप्यते'इति ३३ ॥ ९ ॥

विष्णोर्विभूतिंपालनकर्मप्रधानामभ्यर्हितामाह पुरुषश्चेति यंमत्स्यकूर्मप्रमेरालादिविग्रहं ३४ स्थाणोर्विभूतीःसंहारकर्मप्रधानाआह यक्षाइति । ततोब्रह्मांडाद्ब्रह्मर्ष्याद्याःकृत्स्नसंसारसंहारकज्ञान प्रधानाः ३५ आपइत्यादिकंषट्कंवह्निपुरुषयोरप्युपलक्षणं दिशःद्यौरित्येताभ्यांतदभिमानिनौचंद्रसूर्यौगृह्येते अंतरिक्षमाकाशः एतच्चमूर्त्यष्टकंस्थाणोरेवविभूतिः ३६ संवत्सरादिःकालोऽपि संहारकत्वात्स्थाणोरेवविभूतिः यच्चान्यदपिदृष्टंश्रुतंवातत्सर्वंततएवांडात्संभूतमितिपूर्वेणसंबंधः ३७ यदिदंदृश्यते बाह्यंरूपादि आंतरंचाहंकारतद्धर्मसुखदुःखादिसाक्षिदृश्यं तत्सर्वंयुगक्षयेकल्पांतेपुनः संक्षिप्यतेकूर्मांगवत्तिरोभवतिस्वाधिष्ठानेब्रह्मण्येवशुक्ताविवरजतं ३८ प्रतिकल्पंसृष्टेःसमाननामरूपत्वमाह यथेति ३९ कल्पानामप्रानंत्यमाह एवमिति अनाद्यंतंपरमात्मावगत्यवसानं ४० एवंपिंडब्र ह्मांडात्मिकांजडसृष्टिमुक्त्वातदभिमानिचेतनसृष्टिमाह त्रयस्त्रिंशदिति । शाकल्यब्राह्मणेत्रयश्चत्रीचशतात्रयश्चत्रीचसहस्रेत्याद्युपक्रम्यमहिमानएवैषामेतेत्रयस्त्रिंशद्देवदेवाइत्युक्तेस्त्रयस्त्रिंशद्देवदेवास्तावंति शतानिसहस्राणिवातेषामेवविभूतिरित्यर्थः तेचाष्टौवसवएकादशरुद्राद्वादशादित्याः इंद्रःप्रजापतिश्चतत्रवसवःपृथिव्यग्नीअंतरिक्षवायू आदित्यदिवौ चंद्रोनक्षत्राणिच रुद्राएकादशेंद्रियाणि आदित्याद्वादशमासाः इंद्रःपर्जन्यः प्रजापतिर्यज्ञः एतेषामभिमानिनश्चेतनाअत्रविवक्षिताः शरीरसृष्टेःप्रागुक्तत्वात् सोयंसृष्टिसंक्षेपः विस्तरस्त्वन्यत्रोक्तः । 'तिस्रःकोट्यस्तुरुद्राणामादित्या

पुरुषश्चाप्रमेयात्मायंसर्वऋषयोविदुः ॥ विश्वेदेवास्तथादित्यावसवोऽथाश्विनावपि ३४ यक्षाःसाध्याःपिशाचाश्चगुह्यकाःपितरस्तथा ॥ ततःप्रसूताविद्वां सःशिष्टाब्रह्मर्षिसत्तमाः ३५ राजर्षयश्चबहवःसर्वैःसमुदितागुणैः ॥ आपोद्यौःपृथिवीवायुरंतरिक्षंदिशस्तथा ३६ संवत्सरर्तवोमासाःपक्षाहोरात्रयःक्रमात् ॥ यच्चान्यदपितत्सर्वंसंभूतंलोकसाक्षिकम् ३७ यदिदंदृश्यतेकिंचिद्भूतंस्थावरजंगमम् ॥ पुनःसंक्षिप्यतेसर्वंजगत्प्राप्तेयुगक्षये ३८ यथर्तावृतुलिंगानि नानारूपाणिपर्यये ॥ दृश्यंतेतानितान्येवतथाभावायुगादिषु ३९ एवमेतदनाद्यंतंभूतसंहारकारकम् ॥ अनादिनिधनंलोकेचक्रंसंपरिवर्तते ४० त्रय स्त्रिंशत्सहस्राणित्रयस्त्रिंशच्छतानिच ॥ त्रयस्त्रिंशच्चदेवानांसृष्टिःसंक्षेपलक्षणा ४१ दिवःपुत्रोबृहद्भानुश्चक्षुरात्माविभावसुः ॥ सवितासऋचीकोऽर्कोभानु राशावहोरविः ४२ पुत्राविवस्वतःसर्वेमह्यस्तेषांतथावरः ॥ देवभ्राट्तनयस्तस्यसुभ्राडितिततःस्मृतः ४३

नांदशस्मृताः ॥ अग्नीनांपुत्रपौत्रंतुसंख्यातुंनैवशक्यते'इति ४१ कतमएकादेवतेतिप्राणइतिसब्रह्मेत्युपसंहरितत्रैवोक्तमेकंसूत्रात्मानंचेतनंविवक्षित्वातद्विभूतयोऽन्येचेतनाइत्याह दिवःपुत्रइत्यादि नासुविस्तराइत्यंतेन दिवोनानारूपेणद्योतमानायामायायाःपुत्रइवपुत्रोगर्भस्थत्वात् मायायांचित्प्रतिबिंबःसूत्रात्मेत्यर्थः तस्यैवावयवाबृहद्भाग्वादयएकादशसमनस्केंद्रियाधिष्ठातृदेवताः । दि ग्वातार्कप्रचेतोश्विवह्नींद्रोपेंद्रमित्रप्रजापतिबृहस्पतिसंज्ञाअप्यत्रसूर्यपर्यायैरेवाभिधीयंते सूर्यआत्माजगतस्तस्थुषश्चेतिश्रुतेस्तद्विभूतयोऽप्यादेवताइतिस्मृतेश्चदिगादीनांसूर्यविभूतित्वात् । सबृहत्सभानुः सचक्षुरितिप्रत्येकंतच्छब्दःसंबध्यते अत्रबृहदादिपदार्थस्तु । 'बृहद्व्योममयत्वेनश्रोत्रमिंद्रियमुच्यते ॥ द्रव्याणांभासनाद्भानुशब्देनोक्तंत्वगिंद्रियं ॥ १ ॥ चक्षुःप्रसिद्धमात्मातुप्रेयस्त्वाद्रसनेंद्रियं ॥ वागग्निदैवतत्वेनविभावसुपदोदिता ॥ २ ॥ कर्मणांप्रसवात्पाणीमतौसवितृशब्दितौ ॥ विशिष्टगतिमत्त्वादप्यर्कःपादेंद्रियंमतं ॥ ३ ॥ उपस्थःस्यादृचीकाख्यऋत्वांसर्वांगतेजसां ॥ संगमेर तिकालेत्रेत्येवमेवमरीचिकः ॥ ४ ॥ वायुराशावहःप्रोक्तोभासनादवनाद्यसः ॥ भानूरविश्चोच्यतेतौघ्राणपायुपदोदितौ'इति ॥ ५ ॥ ४२ पुत्राःप्रतिबिंबाः विवस्वतःसूर्यवत्सर्वावभासकचै तन्यस्य । यद्वाविशेषेणवस्तेआच्छादयतिसर्वंज्ञेयंव्याप्नोतीतिविवोज्ञानंतद्वान् आजानसिद्धज्ञानवान्ब्रह्मा । 'ज्ञानमप्रतिमंयस्यवैराग्यंचजगत्पतेः ॥ ऐश्वर्यंचैवधर्मश्चसहसिद्धंचतुष्टयं'इतिस्मृतेः ।—

तस्यपुत्र्यपिभार्याभूताद्यौः । 'प्रजापतिर्वैस्वांदुहितरमभ्यध्यायद्दिवमित्यन्यआहुः'इतिश्रुतेस्तस्यामुत्पन्नाबृहद्भान्वादयइतिज्ञेयं । पुराविवस्वतइतिपाठेविवस्वतःसंबंधीदिवःपुत्रइतियोज्यं । महान्मैवमत्योमनुःस्वार्थेडचत् तेषांमध्येवरःश्रेष्ठोबुद्धितत्त्वाभिमानीत्यर्थः तस्यतनयोदेवभ्राट्देवैरिंद्रियैर्भ्राजतेदीप्यतेइत्यहंकारोदेवभ्राट् । अहमिदंपश्यामहमिदंशृणोमीत्याद्यनुभवात् । तस्यपुत्रःसुभ्राट्भौतिकंमनस्तद्धिसंकल्पविकल्पात्मकंसत्सर्वविषयप्रकल्पकंतत्तद्विषयरूपेणसुतरांस्पष्टंभ्राजतेइतिसुभ्राट्पदवाच्यं यथोक्तमक्षपादैः रूपादयोविषयाःसंकल्पकृताइति । रत्नगर्भस्तुतत्रसृज्यसंहार्ययोरतिबाहुल्यंवक्तुंतन्मध्येसंक्षेपतोदेवानांसृष्टिमाह त्रयस्त्रिंशदिति त्रयस्त्रिंशयानितान्येवशतानिबिंदुत्रययुक्तानिपुनस्तान्येवत्रयस्त्रिंशत्सहस्राणिचबिंदुचतुष्टययुतानितदात्रयस्त्रिंशत्कोटयइत्यर्थःदेवानांसृष्टिःसृज्यमानादेवाः । कृदभिहितोभावोद्रव्यवत्प्रकाशतइतिन्यायात् । यद्वात्रयस्त्रिंशाधिकशतत्रययुक्तषट्त्रिंशत्सहस्राणिदेवानांसंक्षेपतः । तत्रतावद्ब्रह्मणोजन्मसमनंतरमेवमथमकल्पेसृष्टिक्रममाहदिवःपुत्रइत्यादिना अतएवैतत्कल्पीयसूर्यवंशसृष्टिक्रमविरोधोनाशंकनीयः । दिवःपुत्रइत्येकंनाम दिवःपुत्रादयोद्वादशविवस्वंतःसूर्याजाताः नकारलोपश्छांदसः तेषांसत्योऽवरःकनिष्ठः मह्यइतिचपाठः तस्यपृथङ्निर्देशोवंशकरत्वात् तेभ्यःसह्यवंश्येभ्यएवायमेतत्कल्पीयकुरुवंशादिसहशस्तस्मिन्कल्पेऽप्येषांवंशानांसंभवात् अतएवयदुभरतययातिवंशानांपृथगुपादानं यद्वातेभ्यएवेदानीमिहोत्पन्नेभ्यःकुरुवंशादयइत्यर्थः । विमलबोधव्याख्याऽत्रदिवःपुत्रइत्यारभ्यसंभूताबहवोवंशाइत्यंतेन । ननुद्वौवंशौराज्ञामिहोक्तौसूर्यवंशश्चंद्रवंशश्च तत्रादित्यवंशस्तावत्ब्रह्मणोमरीचिर्मरीचेःकश्यपःकश्यपाद्विवस्वान्विवस्वतोमनुर्मनोरिक्ष्वाकुरिक्ष्वाकोर्विकुक्षिःसएवशशादस्ततःकाकुत्स्थस्तस्मादनेनास्ततःपृथुःपृथोराद्रिस्ततोबृहदश्वस्तस्माद्धुंधुमारादयोयावन्मरुत्तइतितावदादित्यवंशः । सोमवंशस्तावत् ब्रह्मणोऽत्रिरत्रेःसोमःसोमाद्बुधस्ततःपुरूरवाःपुरूरवसआयुरायोर्नहुषस्ततोययातिर्ययातेःपुरुप्रभृतयोयावदेवव्रजपुत्रइति । एतौद्वौराजवंशौ ततःकेमीदिवःपुत्रादयोराजानः तथापुराविवस्वतश्चेतिनसंगतं विवस्वतःपूर्वंकश्यपस्ततःपूर्वंब्रह्मातस्तश्चकथमुच्यतेपुराविवस्वतश्चेति तथासुभ्राजश्चत्रयःपुत्रादशज्योतिरादयइत्यपिनसंगतं तेहिदशज्योतिरादयःपार्थिवाउभयोरपिवंशयोःपुराणेतिहासादिषुनश्रूयंते अत्रोच्यतेकाचिदसंगतिर्नात्र तत्रदिवःपुत्रस्तावदादित्यएवस्वरश्मिभिर्दिवःपूरणात् बृहद्भानुरपिसएव बृहंतोविश्वव्यापकाभानवोऽस्येति चक्षुर्विश्वप्रकाशकत्वादात्मापिसएव । सहिब्रह्मजोतिरित्यागमप्रामाण्याद्भिभावसुश्चसएव ऋतुषुविविधप्रकाररश्मयोयस्य सविताचसएवऋतुक्रमेणलोकोपकारार्थंसलिलगर्भप्रसवात् मरीचिकःसएव लोकोपकारार्थंमरीचीन्कायतिकीर्तयतिप्रकाशयतीतियावत् मरीचिभिःसहस्ररश्मिभिःकीर्त्यतइतिवा अर्कःऋगतौस्मृतोधातुरस्यकप्रत्ययेगुणः । आहच । 'ऋगतौस्मृतोधातुस्तस्मात्कप्रत्ययःस्मृतः । गतौयस्मात्परोनास्तितस्मादर्कःसउच्यते' । भानुःसएव लोकोपकारार्थंभाःनौतिप्रस्तौतीति आशावहइतिलोकानामाशामावहत्याराध्यमानःसफलीकरोति । रविरिति । 'अवेतिरक्षणेधातुःप्रत्ययेऽस्यरुडागमः । अवतित्रीनिमाँल्लोकांस्तेनासौरविरुच्यते'इति । पुरेतिपुराकल्पेएतेदिवःपुत्रादयःपुंशब्दाविवस्वतोवाचकाःपठ्यंतेपुराकल्पविद्भिः तेषांशब्दानांमध्येऽवरोजघन्योमह्यशब्दःमह्यशब्दोऽपिगर्भधारकवाचकतयापावनाद्वाअनघतयापठ्यते मह्योमहीगर्भधायकत्वात् । उक्तंच । 'पौषस्यकृष्णसप्तम्यांमह्यासहभवेद्रविः । देवभ्राट्तनयस्तस्य'इति तस्यमह्यानंतरंदेवान्भ्राजयतिरश्मिभिः तनयोविस्तारकःतस्मादनंतरंसुभ्राडितिसुष्ठुशीलःपुत्रः सुभ्राजसोऽनंतरंत्रयःपुत्रादशज्योतिरादयोग्रहनक्षत्रतारकाप्रकाशकारश्मयःप्रादुरासन् तेचपूराणाजगतस्त्राणाद्वापावनाद्वाऽनघयोनित्वात्पुत्राउच्यंते बहुशश्चास्यवामीयेसूक्तेपुत्रशब्दोरश्मिपुष्टोविस्तरातिशयात्प्रपठ्यते अत्रदशशतसहस्रशब्दारश्मिबहुत्ववाचकास्तेभ्योऽयंकुरुवंशश्चेत्याद्युक्तावचोभयवंशप्रभवराजाभिधानमस्तुसूर्यस्यैवोभयवंशहेतुत्वकथनपरं । तथाहि आदित्यान्मनुर्मनोरिक्ष्वाकुरित्यादिपौत्रःसूर्यवंशः तथाऽऽदित्यान्मनुर्मनोरिडाइडातःपुरूरवाइत्यादिर्दौहित्रःसोमवंशइति । अतएभिःश्लोकैरादित्यस्तुतिभिस्तन्मूलकत्वंकथितं । उक्तंच 'आदित्यमूलमखिलंत्रैलोक्यंयदुनंदन । भवत्यस्माज्जगत्सर्वंसदेवासुरमानुषं'इत्यादिसर्वमवदातम् ४३

दशज्योतींषि 'धूम्राऽर्चिरूष्माज्वलिनीज्वालिनीविस्फुलिंगिनी । सुश्रीःसुरूपाकपिलाहव्यकव्यवहातथा'इतिदशकलारूपाणियस्यसदशज्योतिरग्निः । शतज्योतिश्चंद्रःसहिहृदयायतनः । 'चंद्रमामनसोभूत्वाहृदयंप्राविशत्'इतिश्रुतेः । हृदयस्यचशतंचैकाचनाड्यस्तासांमूर्धन्यासौरीक्रममुक्तिस्थानप्रापिकाइतराःशतंजन्मांतरहेतुगतिप्रदास्तासांप्रकाशकत्वाच्चंद्रःशतज्योतिः । सहस्रज्योतिःसूर्यः । ज्योतेरितीदंतत्वमार्षं ४५ तेभ्यःसमष्टिमनःकल्पितेभ्योऽग्निचंद्रसूर्येभ्यःक्रमादयंपुरोवर्तीब्राह्मणवंशःकुर्वादिवंशइक्ष्वाकुवंशश्चसंभूताइतियोज्यं ताहशाद्ब्रह्मणाद्ब्राह्मणउत्पन्नइतिचकाराद्वालभ्यते । आग्नेयोवैब्राह्मणश्रुतेर्ब्राह्मणस्याग्निवंश्यत्वं इतरेषांचंद्रसूर्यवंश्यत्वंप्रसिद्धमेव ४६ राजर्षीणां राज्ञामृषीणांचेतिद्वंद्वः भूतसर्गाःजरायुजांडजस्वेदजोद्भिज्जसृष्टयः ४७ भूतस्थानानीतिनृणांवासस्थानानिराजकृतानिदुर्गनगरादीनि ब्राह्मणकृतानितीर्थक्षेत्रादीनि त्रिविधंरहस्यंधर्मरहस्यं कृष्णद्रोहिणोऽपिशिशुपालस्यकृष्णैकत्वप्राप्तिस्तत्ररहस्यं यथाकथंचित्तीव्राभिनिवेशेनध्यानमेवश्रेयइतिसोऽधर्माभासोऽपिधर्मएव तथाहिंसाफलोधर्मोऽप्यधर्मएव यथासत्यवादिनश्चोरेभ्यःकार्पटिकमार्गतत्त्वेनोपदिशतइति । एवमर्थकामयोरपिरहस्यमूह्यं । वेदाःकर्मकांडः योगउपासनाकांडः सविज्ञानो

सुभ्राजस्तुत्रयःपुत्राःप्रजावंतोबहुश्रुताः ॥ दशज्योतिःशतज्योतिःसहस्रज्योतिरेवच ४४ दशपुत्रसहस्राणिदशज्योतेर्महात्मनः ॥ ततोदशगुणाश्चान्येशतज्योतेरिहात्मजाः ४५ भूयस्ततोदशगुणाःसहस्रज्योतिषःसुताः ॥ तेभ्योऽयंकुरुवंशश्चयदूनांभरतस्यच ४६ ययातीक्ष्वाकुवंशश्चराजर्षीणांचसर्वशः ॥ संभूतावहवोवंशाभूतसर्गाःसुविस्तराः ४७ भूतस्थानानिसर्वाणिरहस्यंत्रिविधंचयत् ॥ वेदायोगःसविज्ञानोधर्मोऽर्थःकामएवच ४८ धर्मकामार्थयुक्तानिशास्त्राणिविविधानिच ॥ लोकयात्राविधानंचसर्वंतद्दृष्टवानृषिः ४९ इतिहासाःसवैयाख्याविविधाःश्रुतयोऽपिच ॥ इहसर्वमनुक्रांतमुक्तंग्रंथस्यलक्षणम् ५० विस्तीर्यैतन्महज्ज्ञानमृषिःसंक्षिप्यचाब्रवीत् ॥ इष्टंहिविदुषांलोकेसमासव्यासधारणम् ५१ मन्वादिभारतंकेचिदास्तीकादितथापरे ॥ तथोपरिचराद्यन्येविप्राःसम्यगधीयते ५२ विविधंसंहिताज्ञानंदीपयंतिमनीषिणः ॥ व्याख्यातुंकुशलाःकेचिद्ग्रंथान्धारयितुंपरे ५३ तपसाब्रह्मचर्येणव्यस्यवेदंसनातनम् ॥ इतिहासमिमंचक्रेपुण्यंसत्यवतीसुतः ५४

ज्ञानकांडसहितः । धर्मःस्मार्तः अर्थकामौलोकप्रसिद्धौ ४८ धर्मेति एतत्त्रयप्रतिपादकानिशास्त्राणिमीमांसाकोककामंदकानि । लोकयात्राविधानंचलोकयात्रायेननिर्वहतितस्याऽऽयुर्वेदधनुर्वेदगांधर्ववेदादेर्विधानंज्ञापनंच एतत्सर्वंतेभ्यःसंभूतमितिपूर्वेणसंबंधः सर्वंतद्दृष्टवान्योगबलेनऋषिर्व्यासः ४९ सवैयाख्याःव्याख्यामधिकृत्यकृतोग्रंथोवैयाख्यस्तद्युक्ताः यथाब्रह्मविदाप्नोतिपरमितिसूत्रस्यव्याख्यासत्यंज्ञानमितिमंत्रः अनुव्याख्यानंतस्माद्वाएतस्मादितिब्राह्मणं । एवमत्रापिप्रथमेऽध्यायेसूत्रितस्यार्थस्यद्वितीयतृतीयाभ्यांव्याख्यानमुत्तरग्रंथेनानुव्याख्यानंच विविधाःलिंगादिनार्थप्रत्यायकाःप्रपाःकर्तव्याइत्यादिस्मृतिमूलभूताःधन्वन्निवप्रपाअसित्वमग्नइत्यादयः । हेअग्नेत्वंधन्वन्निरुदकेप्रदेशेप्रपेवलोकतृप्तिकरोऽसीतितदर्थः प्रपाअसीत्यत्रासंधिश्छांदसः । इहेतिअनुक्रांतमनुक्रमेणोक्तमिदमेवयथोक्तंग्रंथस्यलक्षणं विषयःप्रतिपाद्योर्थः ५० समासःसंक्षेपःव्यासोविस्तरः ५१ वर्णानुपूर्वीभेदेऽपिप्रतिकल्पमर्थानांसमाननामरूपक्रमत्वाद्भारतारंभेमतभेदमाहमन्वादीति मनुर्मंत्रोनारायणंनमस्कृत्येति ओंनमोभगवतेवासुदेवायेतिवा तदादिइतिमाधः । दिवःपुत्रोवैवस्वतमह्यसंज्ञोमनुस्तदादीतितत्त्वं आस्तीकमास्तीकचरितंतदादि उपरिचरोवसुस्तच्चरितादिवा ५२ बह्वर्थत्वाद्विविधंज्ञानंदीपयंतिप्रकाशयंति ५३ व्यस्यवेदमाध्वर्यवादिकांडशोविभज्य तेनवेदार्थोऽत्रसंगृहीतइतिदर्शितं ५४

तदाख्यानवरिष्ठंसइत्यादिअच्छेद्यममरैरपीत्यंतोग्रंथःस्पष्टार्थः ५५ । ५६ । ५७ । ५८ अभ्याशेसमिपे वसुरुपरिचरस्तस्यकन्यावासवसित्यवतीतस्याःपुत्रोवासवेयोव्यासः ५९ कृष्णो
व्यासः ६० । ६१ । ६२ उन्मेषमुपबृंहणं ६३ । ६४ । ६५ । ६६ पाशुपतंपशूनांजीवानांपत्युरंतर्यामिणइदंमाहात्म्यंपाशुपतं हेतुनासात्विकादिकर्मणासमंतुल्यं ६७ । ६८ कल्पानां

पराशरात्मजोविद्वान्ब्रह्मर्षिःसंशितव्रतः ॥ तदाख्यानवरिष्ठंसकृत्वाद्वैपायनःप्रभुः ५५ कथमध्यापयानीहशिष्यानित्यन्वचिंतयत् ॥ तस्यतच्चिंतितंज्ञात्वाऋ
षेर्द्वैपायनस्यच ५६ तत्राजगामभगवान्ब्रह्मालोकगुरुःस्वयम् ॥ प्रीत्यर्थंतस्यचैवर्षेर्लोकानांहितकाम्यया ५७ तंदृष्ट्वाविस्मितोभूत्वाप्रांजलिःप्रणतःस्थितः ॥
आसनंकल्पयामाससर्वैर्मुनिगणैर्वृतः ५८ हिरण्यगर्भमासीनंतस्मिंस्तुपरमासने ॥ परिवृत्यासनाभ्याशेवासवेयःस्थितोऽभवत् ५९ अनुज्ञातोऽथकृष्णस्तुब्रह्म
णापरमेष्ठिना ॥ निषसादासनाभ्याशेप्रीयमाणःशुचिस्मितः ६० उवाचसमहातेजाब्रह्माणंपरमेष्ठिनम् ॥ कृतंमयेदंभगवन्काव्यंपरमपूजितम् ६१ ब्रह्मन्वेद
रहस्यंचयच्चान्यत्स्थापितंमया ॥ सांगोपनिषदांचैववेदानांविस्तरक्रिया ६२ इतिहासपुराणानामुन्मेषंनिर्मितंचयत् ॥ भूतंभव्यंभविष्यंचत्रिविधंकालसंज्ञितम्
६३ जरामृत्युभयव्याधिभावाभावविनिश्चयः ॥ विविधस्यचधर्मस्यह्याश्रमाणांचलक्षणम् ६४ चातुर्वर्ण्यविधानंचपुराणानांचकृत्स्नशः ॥ तपसोब्रह्मचर्य
स्यपृथिव्याश्चंद्रसूर्ययोः ६५ ग्रहनक्षत्रताराणांप्रमाणंचयुगैःसह ॥ ऋचोयजूंषिसामानिवेदाध्यात्मंतथैवच ६६ न्यायशिक्षाचिकित्साचदानंपाशुपतंतथा ॥
हेतुनैवसमंजन्मदिव्यमानुषसंज्ञितम् ६७ तीर्थानांचैवपुण्यानांदेशानांचैवकीर्तनम् ॥ नदीनांपर्वतानांचवनानांसागरस्यच ६८ पुराणांचैवदिव्यानांकल्पानां
युद्धकौशलम् ॥ वाक्यजातिविशेषाश्चलोकयात्राक्रमश्चयः ६९ यच्चापिसर्वगंवस्तुतच्चैवप्रतिपादितम् ॥ परंनलेखकःकश्चिदेतस्यभुविविद्यते ७० ॥ ब्रह्मोवाच ॥
तपोविशिष्टादपिवैविशिष्टान्मुनिसंचयात् ॥ मन्येश्रेष्ठतरंत्वांवैरहस्यज्ञानवेदनात् ७१ जन्मप्रभृतिसत्यांतेवेद्मिगांब्रह्मवादिनीम् ॥ त्वयाचकाव्यमित्युक्तंतस्मा
त्काव्यंभविष्यति ७२ अस्यकाव्यस्यकवयोनसमर्थाविशेषणे ॥ विशेषणेगृहस्थस्यशेषास्त्रयइवाश्रमाः ७३ काव्यस्यलेखनार्थायगणेशःस्मर्यतांमुने ॥
॥ सौतिरुवाच ॥ एवमाभाष्यतंब्रह्माजगामस्वंनिवेशनम् ७४ ततःसस्मारहेरंबंव्यासःसत्यवतीसुतः ॥ स्मृतमात्रोगणेशानोभक्तचिंतितपूरकः ७५ तत्राजगा
मविघ्नेशोवेदव्यासोयतःस्थितः ॥ पूजितश्चोपविष्टश्चव्यासेनोक्तस्तदाऽनघ ७६ लेखकोभारतस्यास्यभवत्वंगणनायक ॥ मयैवप्रोच्यमानस्यमनसाकल्पित
स्यच ७७ श्रुत्वैतत्प्राहविघ्नेशोयदिमेलेखनीक्षणम् ॥ लिखतोनावतिष्ठेततदास्यांलेखकोह्यहम् ७८

धनुर्वेदोक्तशस्त्रादिविधीनांदुर्गसेनाव्यूहरचनादिविधीनांवा । 'कल्पःशास्त्रेविधौन्यायेसंवर्तेब्रह्मणोदिने'इतिमेदिनी वाक्यजातिविशेषाःराजामात्यचेटादिवक्तृविशेषप्रयुक्तवैलक्षण्यानिस्तुतिनिंदा
न्यापदेशादयोवापरकृत्यादिरूपार्थवादभेदावा लोकयात्राक्रमोनीतिशास्त्रं ६९ । ७० मुनिसंचयान्मुनिसमूहात् विशिष्टात्कुलेन ७१ गांवाचं ब्रह्मवादिनींवेदवादिनीं ७२ विशेषणेअतिशायने
७३ । ७४ । ७५ यतोयत्रदेशे ७६ । ७७ । ७८



अबुध्वाअर्थमितिशेषः ओमित्यंगीकारे ७९ ग्रंथग्रंथिंग्रंथेदुर्भेद्यस्थानं ८० । ८१ श्लोककूटंश्लोकेषुगूढार्थं अन्यार्थत्वेसत्यर्थांतरप्रत्यायकत्वमित्यर्थः अर्थस्यप्रमेयस्यगूढत्वात् प्रश्रितस्यप्रमेयेण
स्वप्रकाशार्थंश्रितंशब्दप्रमाणंतस्यापिगौण्यादिवृत्तिभेदेनगूढत्वं यथामत्स्यःस्वप्रकृनिमिषतीति ८२ यथदायावत् ८३ कारकमिति तुमुन्ण्वुलौक्रियायांक्रियार्थायामितिण्वुलानेत्रोन्मीलनंकर्तुमि
त्यर्थः एतत्प्रकाशनंकृतमितितृतीयेनान्वयः ८४ । ८५ प्रकाशनंविकसनं ८६ । ८७ विटंकाःपक्ष्युपवेशनस्थानानि'कपोतपालिकायांतुविटंकंपुंनपुंसकं'इत्यमरः ८८ सारोमज्जा ८९

व्यासोऽप्युवाचतंदेवमबुद्ध्वामालिखक्वचित् ॥ ओमित्युक्त्वागणेशोऽपिबभूवकिललेखकः ७९ ग्रंथग्रंथिंतदाचक्रेमुनिर्गूढंकुतूहलात् ॥ यस्मिन्प्रतिज्ञयाप्राहमुनिर्द्वै
पायनस्त्विदम् ८० अष्टौश्लोकसहस्राणिअष्टौश्लोकशतानिच ॥ अहंवेद्मिशुकोवेत्तिसंजयोवेत्तिवानवा ८१ तच्छ्लोककूटमद्यापिग्रथितंसुदृढंमुने ॥ भेत्तुंनशक्यतेऽर्थस्य
गूढत्वात्प्रश्रितस्यच ८२ सर्वज्ञोऽपिगणेशोयत्क्षणमास्तेविचारयन् ॥ तावच्चकारव्यासोऽपिश्लोकानन्यान्बहूनपि ८३ अज्ञानतिमिरांधस्यलोकस्यतुविचेष्ट
तः ॥ ज्ञानांजनशलाकाभिर्नेत्रोन्मीलनकारकम् ८४ धर्मार्थकाममोक्षार्थैःसमासव्यासकीर्तनैः ॥ तथाभारतसूर्येणनृणांविनिहतंतमः ८५ पुराणपूर्णचंद्रेणश्रु
तिज्योत्स्नाःप्रकाशिताः ॥ नृबुद्धिकैरवाणांचकृतमेतत्प्रकाशनम् ८६ इतिहासप्रदीपेनमोहावरणघातिना ॥ लोकगर्भगृहंकृत्स्नंयथावत्संप्रकाशितम् ८७ सं
ग्रहाध्यायबीजोवैपौलोमास्तीकमूलवान् ॥ संभवस्कंधविस्तारःसभारण्यविटंकवान् ८८ अरणीपर्वरूपाढ्योविराटोद्योगसारवान् ॥ भीष्मपर्वमहाशाखोद्रोणपर्व
पलाशवान् ८९ कर्णपर्वसितैःपुष्पैःशल्यपर्वसुगंधिभिः ॥ स्त्रीपर्वैषीकविश्रामःशांतिपर्वमहाफलः ९० अश्वमेधामृतरसस्त्वाश्रमस्थानसंश्रयः ॥ मौसलःश्रुति
संक्षेपःशिष्टद्विजनिषेवितः ९१ सर्वेषांकविमुख्यानामुपजीव्योभविष्यति ॥ पर्जन्यइवभूतानामक्षयोभारतद्रुमः ९२ ॥ सौतिरुवाच ॥ तस्यवृक्षस्यवक्ष्या
मिशश्वत्पुष्पफलोदयम् ॥ स्वादुमेध्यरसोपेतमच्छेद्यममरैरपि ९३ मातुर्नियोगाद्धर्मात्मागांगेयस्यचधीमतः ॥ क्षेत्रेविचित्रवीर्यस्यकृष्णद्वैपायनःपुरा ९४
त्रीनग्नीनिवकौरव्याञ्जनयामासवीर्यवान् ॥ उत्पाद्यधृतराष्ट्रंचपांडुंविदुरमेवच ९५ जगामतपसेधीमान्पुनरेवाश्रमंप्रति ॥ तेषुजातेषुवृद्धेषुगतेषुपरमांगतिम्
९६ अब्रवीद्भारतंलोकेमानुषेऽस्मिन्महानृषिः ॥ जनमेजयेनपृष्टःसन्ब्राह्मणैश्चसहस्रशः ९७ शशासशिष्यमासीनंवैशंपायनमंतिके ॥ ससदस्यैःसहासीनःश्रा
वयामासभारतम् ९८ कर्मांतरेषुयज्ञस्यचोद्यमानःपुनःपुनः ॥ विस्तरंकुरुवंशस्यगांधार्याधर्मशीलताम् ९९

विश्रमंत्यस्यामितिविश्रामश्छाया ९० आश्रमेति आश्रमवासिकस्थंडिलः मौसलादिग्रंथःश्रुतिस्थानीयदीर्घशाखांतः ९१ । ९२ पुष्पंधर्मःफलंमोक्षस्तदुभयंसत्याख्यं । 'पुष्पंहिफलंवाचः
सत्यं'इतिश्रुतेः अतएवक्रमात्स्वादुचाच्छेद्यंच ९३ भारतसूत्रभूतश्लोकत्रयमाह मातुरिति मातुःसत्यवत्यागांगेयस्यभीष्मस्यचनियोगात्तुकामतःक्षेत्रेअंबिकादिषुक्रमेणधृतराष्ट्रादीन्जनया
मास ९४ । ९५ तेषुधृतराष्ट्रादिषुजातेषुपुत्रपौत्रादिरूपेणमादुर्भूतेषु प्रवृद्धेषुराज्यभागिषु पुत्रपौत्रादीनांराज्यार्थिनांपरमांगतिंमृत्युंगतेषु ९६ । ९७ शशासत्वमेतान्भारतंश्राव
येत्याज्ञापितवान् ९८ कर्मांतरेषुकर्मच्छिद्रेषु ९९

क्षत्तुर्विदुरस्य १०० धार्तराष्ट्राणांदुर्योधनादीनां १०१ । १०२ तावत्तावत्संख्याकं अध्यर्धशतंसार्धशतम् ३ शुकग्रहणंतत्सदृशाधेयवदेयमितिज्ञापनार्थं ४ षष्टिंशतसहस्राणिषष्टिलक्षाणिश्लोकाः ५ । ६ । ७ । ८ मयोच्यमानंवैशंपायनेनोक्तंनिबोधत्तअर्थतोबुध्यध्वं ९ इदानींभारततात्पर्यसंग्राहकौद्वौश्लोकौपठति दुर्योधनइति मन्युःक्रोधःतेनद्वेषेर्ष्यासूयादिकमपिग्राह्यं तन्मयोमहान्वृक्षस्तेनसहात्यंतमैक्यंप्राप्ताःकर्णशकुनिदुःशासनास्तस्यस्कंधशाखापुष्पादितुल्यास्तादृशाएव तस्यमूलंराजाधृतराष्ट्रः सचाप्यमनीषीमनोनिग्रहासमर्थः तेनैवाहिपुत्रस्नेहांधेनदत्तावसरोदुर्योधनोदृढमूलोऽभवत् अन्यथाबाल्यएवविदुरादिवचसातस्यत्यागेकृतेसतिगराग्निदानद्रौपदीकचग्रहणादिमूलःकुलक्षयोनजातःस्यात् । एतेनदृढाज्ञानमूलोदैन्यतरुःक्रोधलोभादिस्कंधोहिंसास्तेयादिशाखोवधबंधनरकादिफलपुष्पःपुरुषार्थकामैर्मूलाज्ञानच्छेदेननाशनीयइतिसूचितं । 'मन्युःपुमान्क्रुधि दैन्येशोकेयज्ञेच'इतिमेदिनीकोशः ११० युधिष्ठिरइति धर्मःपुण्यं तेनतत्कारणीभूतश

क्षत्तुःप्रज्ञांधृतिंकुंत्याःसम्यग्द्वैपायनोऽब्रवीत ॥ वासुदेवस्यमाहात्म्यंपांडवानांचसत्यताम् १०० दुर्वृत्तंधार्तराष्ट्राणामुक्तवान्भगवानृषिः ॥ इदंशतसहस्रंतुलोकानांपुण्यकर्मणाम् १०१ उपाख्यानैःसहज्ञेयमाद्यंभारतमुत्तमम् ॥ चतुर्विंशतिसाहस्रींचक्रेभारतसंहिताम् १०२ उपाख्यानैर्विनातावद्भारतंप्रोच्यतेबुधैः ॥ ततोऽध्यर्धशतंभूयःसंक्षेपंकृतवानृषिः ३ अनुक्रमणिकाध्यायंवृत्तांतानांसपर्वणाम् ॥ इदंद्वैपायनःपूर्वंपुत्रमध्यापयच्छुकम् ४ ततोऽन्येभ्योऽनुरूपेभ्यःशिष्येभ्यःप्रददौविभुः ॥ षष्टिंशतसहस्राणिचकारान्यांससंहिताम् ५ त्रिंशच्छतसहस्रंचदेवलोकेप्रतिष्ठितम् ॥ पित्र्येपंचदशप्रोक्तंगंधर्वेषुचतुर्दश ६ एकंशतसहस्रंतुमानुषेषुप्रतिष्ठितम् ॥ नारदोऽश्रावयद्देवानसितोदेवलःपितॄन् ७ गंधर्वयक्षरक्षांसिश्रावयामासवैशुकः ॥ अस्मिंस्तुमानुषेलोकेवैशंपायनउक्तवान् ८ शिष्योव्यासस्यधर्मात्मासर्ववेदविदांवरः ॥ एकंशतसहस्रंतुमयोक्तंवैनिबोधत ९ दुर्योधनोमन्युमयोमहाद्रुमःस्कंधःकर्णःशकुनिस्तस्यशाखाः ॥ दुःशासनःफलपुष्पेसमृद्धेमूलंराजाधृतराष्ट्रोऽमनीषी ११० युधिष्ठिरोधर्ममयोमहाद्रुमःस्कंधोऽर्जुनोभीमसेनोऽस्यशाखाः ॥ माद्रीसुतौपुष्पफलेसमृद्धेमूलंकृष्णोब्रह्मचब्राह्मणाश्च ११ पांडुर्जित्वाबहून्देशान्युद्धाविक्रमणेनच ॥ अरण्येमृगयाशीलोन्यवसन्मुनिभिःसह ११२

मदमसत्याहिंसादिकंग्राह्यं तन्मयोमहाद्रुमोयुधिष्ठिरः तदेकात्मानोऽर्जुनभीममाद्रेयास्तस्यस्कंधादितुल्यास्तादृशाएव तस्यमूलंकृष्णःशुद्धसत्वमयज्ञानविग्रहःपरमात्मा तेनहिदृढंज्ञातेनधर्मोदृढमूलोभवेदन्यथाकामादिभिरुपहतःस्यात् । 'योवाएतदक्षरंगार्ग्यविदित्वाऽस्मिँल्लोकेयजतिददातितपस्तप्यतेऽपिबहूनिवर्षसहस्राण्यंतवदेवास्यतद्भवति'इतिश्रुतेः । ज्ञानस्यमूलंब्रह्मवेदः । वेदाद्धियोगकृत्वाल्यपरापरधर्मज्ञानंजायते धर्मस्यशब्दमूलत्वादितिन्यायात् । वेदस्यापिमूलंब्राह्मणास्तत्संप्रदायप्रवर्तकत्वात् एवंचब्राह्मणानामुपदेष्टृत्वेनवेदस्यप्रमाणत्वेनपरमात्मनोऽनुग्राहकत्वेनचधर्ममूलत्वं । एतेनवेदब्राह्मणभक्तेनसंपाद्यमानोवेदोक्तोयोगादिधर्मवृक्षोऽहिंसासत्यादिस्कंधोधारणाध्यानादिशाखस्तत्त्वसाक्षात्कारफलःपुरुषार्थकामैर्भगवदाराधनबलेनसंपादनीयइतिसूचितं ११ मातुर्नियोगादितिपूर्वोक्तस्यैवसूत्रभूतस्यश्लोकत्रयस्यवृत्तिरूपोऽध्यायशेषस्तत्रदुर्योधनस्यमन्युमयत्वादिकंयुधिष्ठिरस्यधर्ममयत्वादिकंचव्याख्यायते पांडुर्जित्वेत्यादि ११२



मृगव्यवायनिधनान्मृगरूपिणोऋषेर्व्यवायनिधनंमैथुनकालेमारणंतस्माद्धेतोः कृच्छ्रामतिकष्टामापदंप्रजोत्पत्तिप्रतिबंधकत्वमपिव्यवायकालेमरिष्यसीतिशापंप्राप तत्रापदिएवंसत्यामपिपार्थानांपांडवानांजन्मप्रभृति जातकर्मादिसंस्कारःप्रभृतिशब्दार्थः तथाऽऽचारविधेःक्रमश्चशीलरक्षाख्योऽभूदितिशेषः ११३ नचैतद्द्वयंविरुद्धमित्याह मात्रोरिति चशब्दोहेतौ यस्माद्धर्मोपनिषदंप्रतिधर्मःकुलस्त्रीभिरापद्यपत्यार्थेविशिष्टःपुमान्प्रार्थनीयइत्येवंरूपोव्यासवसिष्ठादिभ्योऽपत्यवत्सुविचित्रवीर्यकल्माषपादादिराजदारेषुदृष्टस्तस्यसंरक्षणार्थंउपनिषद्दुर्वाससादत्ताविद्यातामावर्तितां प्रतिप्रतित्य धर्मादीनांमात्रोःमातरौमति अभ्युपपत्तिःरेतःसेकार्थंगमनमुपपन्नं तस्मात्सत्यामप्यापदिपांडोःपुत्रजन्मादिकंनविरुद्धमेतदित्यर्थः ११४ अत्रमातृभ्यामित्यनेनपितुर्मरणंसूच्यते १५ ऋषिभिरिति यत्यदासंवृद्धाइतिपूर्वेणान्वयः तदाधार्तराष्ट्रान्धृतराष्ट्रसंबंधिगृहान्प्रत्यानीताइत्यर्थः १६ पुत्राश्चेत्यादिधृतराष्ट्रादीन्प्रतियथायोग्यंयोज्यं पांडवाःपांडोःपुत्राएते १७ तानिति शिष्टाःश्रावयः १८ नत

मृगव्यवायनिधनात्कृच्छ्रांप्रापसआपदम् ॥ जन्मप्रभृतिपार्थानांतत्राचारविधिक्रमः ११३ मात्रोरभ्युपपत्तिश्चधर्मोपनिषदंप्रति ॥ धर्मस्यवायोःशक्रस्यदेवयोश्चतथाश्विनोः ११४ तापसैःसहसंवृद्धामातृभ्यांपरिरक्षिताः ॥ मेध्यारण्येषुपुण्येषुमहतामाश्रमेषुच १५ ऋषिभिर्यत्तदानीताधार्तराष्ट्रान्प्रतिस्वयम् ॥ शिशवश्चाभिरूपाश्चजटिलाब्रह्मचारिणः १६ पुत्राश्चभ्रातरश्चेमेशिष्याश्चसुहृदश्चवः ॥ पांडवाएतइत्युक्त्वामुनयोंऽतर्हितास्ततः १७ तांस्तैर्निवेदितान्दृष्ट्वापांडवान्कौरवास्तदा ॥ शिष्टाश्चवर्णाःपौरायेतेहर्षाच्चुक्रुशुर्भृशम् १८ आहुःकेचिन्नतस्यैतेतस्यैतइतिचापरे ॥ यदाचिरमृतःपांडुःकथंतस्येतिचापरे १९ स्वागतंसर्वथादिष्ट्यापांडोःपश्यामसंततिम् ॥ उच्यतांस्वागतमितिवाचोऽश्रूयंतसर्वशः १२० तस्मिन्नुपरतेशब्देदिशःसर्वानिनादयन् ॥ अंतर्हितानांभूतानांनिःस्वनस्तुमुलोऽभवत् २१ पुष्पवृष्टिःशुभागंधाःशंखदुंदुभिनिःस्वनाः ॥ आसन्प्रवेशेपार्थानांतदद्भुतमिवाभवत् २२ तत्प्रीत्याचैवसर्वेषांपौराणांहर्षसंभवः ॥ शब्दआसीन्महांस्तत्रदिवस्पृक्कीर्तिवर्धनः २३ तेऽधीत्यनिखिलान्वेदान्शास्त्राणिविविधानिच ॥ न्यवसन्पांडवास्तत्रपूजिताअकुतोभयाः २४ युधिष्ठिरस्यशौचेनप्रीताःप्रकृतयोऽभवन् ॥ धृत्याचभीमसेनस्यविक्रमेणार्जुनस्यच १२५

स्यैतइतिपित्रपेक्षयाअत्युदारमूर्तित्वात् तस्यैतइतिमात्रोःसतीत्वात् अतिदुष्टानामुक्तिर्यदेति चिरमृतश्चिरंशापदग्धोऽल्पकालाश्चशिशवइतिसंदेहबीजं । यद्वाचिरंक्षतोदीप्तःकामेनेतिशेषः विप्रशापात् 'क्षतमुंछशिलेजले सत्येदीप्तेपूजितेस्यात्'इतिमेदिनी । यद्वा क्षतात्सत्यमुपैमीतिव्रतोपायनीयमंत्रलिंगात्तंब्रह्मचर्याख्यंसत्यंतद्वान् १९ स्वागतंशोभनमागमनंयुष्माकंयतोवयंदिष्ट्याभाग्येनपांडोःसंततिंपश्यामेतिपौरैरुक्तेस्वागतंसम्यगागतमस्माभिर्युष्मान्प्रतीतिउच्यतांवदतांपांडवानामपिवाचोऽश्रूयंत सर्वशःसर्वैः १२० संदिग्धानांसंदेहापनोदकंतदादैववेष्टितमाह द्वाभ्यां तस्मिन्निति निःस्वनोनिश्चितस्वनःपांडवाएतइत्येवंरूपःशब्दः २१ अद्भुतंदिव्यपुष्पवृष्ट्यादिअत्याश्चर्यं २२ तत्प्रीत्यातेषुपांडवेषुप्रेम्णा हर्षसंभवःसाधुशब्दः दिवस्पृक्स्वर्गस्पृष्टा २३ अकुतोभयानिर्भयाः १२४ शौचेनेति । 'आचारापरिहारश्चसंसर्गश्चाप्यनिंदितैः ॥ आचारेचव्यवस्थानंशौचमित्यभिधीयते'। शीलेनेतिपाठेशीलमप्येतदेव । 'इष्टानिष्टार्थसंपत्तौचित्तस्याविकृतिर्धृतिः ॥ सर्वातिशयसामर्थ्यंविक्रमंपरिचक्षते' १२५

'वृत्तानुवृत्तिःशुश्रूषाक्षांतिरामस्यविक्रिया ॥ जितेंद्रियत्वंविनयोऽथवाऽनुद्धतशीलता ॥ शौर्यमध्यवसायःस्याद्बलिनोऽपिपराभवे' १२६ समावयेसमाजे भर्त्तारंस्वयमेववृणुतइतिभर्तृस्वयंवरां कर्म
अधोमुखेनोपरिस्थस्यभ्रमतोमत्स्यस्यवेधनं २७ पूज्यःसमरेषुदुष्प्रेक्ष्योऽपिचाभवदित्यन्वयः २८ पार्थिवानेकैकशः गणान्संघीभूतांश्चजित्वा आजहारसंपादितवान् २९ गुणैःऋत्विगात्मयनजा
याबुद्ध्यादिभिः १३० जरासंधंभीमेनचैद्यंशिशुपालंकृष्णेनचघातयित्वायुधिष्ठिरेणराजसूयःप्राप्तइतिपूर्वेणसंबंधः ३१ अर्हणान्युपायनानि मणयोविषरोगादिहरादिव्योपलाः रत्नानिवज्रवैदूर्यादी
नि ३२ प्रावाराण्युपरिवस्त्राणि आवरणानिपरिधानीयानि यद्वा वासःशब्देनैवतेषांग्रहणात्प्रावाराणिशिबिराणि आवरणानिजवनिकाः कंबलरत्नान्यजिनरत्नानिचकंबलादिष्वत्युत्कृष्टानि

गुरुशुश्रूषयाक्षांत्यायमयोर्विनयेनच ॥ तुतोषलोकःसकलस्तेषांशौर्यगुणेनच १२६ समवायेततोराज्ञांकन्यांभर्तृस्वयंवराम् ॥ प्राप्तवानर्जुनःकृष्णांकृत्वाकर्मसुदु
ष्करम् २७ ततःप्रभृतिलोकेऽस्मिन्पूज्यःसर्वधनुष्मताम् ॥ आदित्यइवदुष्प्रेक्ष्यःसमरेष्वपिचाभवत् २८ ससर्वान्पार्थिवान्जित्वासर्वांश्चमहतोगणान् ॥ आज
हारार्जुनोराज्ञोराजसूयंमहाक्रतुम् २९ अन्नवान्दक्षिणावांश्चसर्वैःसमुदितोगुणैः॥ युधिष्ठिरेणसंप्राप्तोराजसूयोमहाक्रतुः १३० सुनयाद्वासुदेवस्यभीमार्जुनबलेनच ॥
घातयित्वाजरासंधंचैद्यंचबलगर्वितम् ३१ दुर्योधनंसमागच्छन्नर्हणानिततस्ततः ॥ मणिकांचनरत्नानिगोहस्त्यश्वधनानिच ३२ विचित्राणिचवासांसिप्रावारा
वरणानिच ॥ कंबलाजिनरत्नानिरांकवास्तरणानिच ३३ समृद्धांतांतथादृष्ट्वापांडवानांतदाश्रियम् ॥ ईर्ष्यासमुत्थःसुमहांस्तस्यमन्युरजायत ३४ विमानप्रति
मांतत्रमयेनसुकृतांसभाम् ॥ पांडवानामुपहृतांसदृष्ट्वापर्यतप्यत ३५ तत्रावहसितश्चासीत्प्रस्कंदन्निवसंभ्रमात् ॥ प्रत्यक्षंवासुदेवस्यभीमेनानभिजातवत् ३६ स
भोगान्विविधान्भुंजन्रत्नानिविविधानिच ॥ कथितोधृतराष्ट्रस्यविवर्णोहरिणःकृशः ३७ अन्वजानात्ततोद्यूतंधृतराष्ट्रःसुतप्रियः ॥ तच्छ्रुत्वावासुदेवस्यकोपः
समभवन्महान् ३८ नातिप्रीतमनाश्चासीद्विवादांश्चान्वमोदत ॥ द्यूतादीननयान्घोरान्विविधांश्चाप्युपैक्षत ३९ निरस्यविदुरंभीष्मंद्रोणंशारद्वतंकृपम् ॥
विग्रहेतुमुलेतस्मिन्दहन्क्षत्रंपरस्परम् ४० जयत्सुपांडुपुत्रेषुश्रुत्वासुमहदप्रियम् ॥ दुर्योधनमतंज्ञात्वाकर्णस्यशकुनेस्तथा ४१ धृतराष्ट्रश्चिरंध्यात्वासंजयंवाक्यम
ब्रवीत् ॥ शृणुसंजयसर्वंमेनचासूयितुमर्हसि १४२

जातोजातौयदुत्कृष्टंतद्रत्नमितिकोशात् रांकवास्तरणानि रंकुःपशुविशेषस्तल्लोमजानिपक्ष्मलान्यास्तरणानि ३३ ईर्ष्यापरोत्कर्षासहिष्णुत्वंतदुत्थोमन्युःक्रोधः सुमहान्यावद्देहभावी ३४ सुकृ
तांपुण्यकृतां ३५ अनभिजातवद्ग्रामीणवदवहसितः जलेस्थलभ्रमात्स्थलेजलभ्रमाद्द्वारेद्वारभ्रमाच्चप्रस्कंदन्स्खलन् किंकृत्वेव संभ्रमादिवसंभ्रमंभ्रमियंत्रंप्राप्येव ३६ हरिणःपांडुरः । 'हरिणःपांडुरः
पांडुः'इत्यमरः ३७ ततःपुत्रकार्श्यादिज्ञानानंतरंसुतप्रियोनतुधर्मप्रियः ३८ नातीति यद्विवादानन्वमोदतयच्चानयानुपैक्षत तत्रहेतुःदहन्क्षत्रंपरस्परमित्युत्तरेणसंबंधः हेतौशतृप्रत्ययः क्षत्रस्यदा
हायेत्यर्थः दुष्टसंहारार्थत्वात्तदवतारस्य ३९ निरस्याऽवगणय्य प्रवृत्तेसतीतिशेषः ४० दुर्योधनमतंजयोमृत्युर्वाऽस्तुनतुराज्यार्धंदेयामिति ४१ ध्यात्वावृत्तमर्थमनुस्मृत्यअसूयितुंमदीयंप्रज्ञाच
क्षुष्ट्वंदूषयितुंनार्हसि १४२

तत्रहेतुः श्रुतवानसीति। श्रुतवानधीती मेधावीपाठतोऽर्थतश्चग्रंथधारकः बुद्धिमानूहापोहकुशलः अतएवप्राज्ञानांपंडितानांसंमतः नचप्रीयेनैवप्रीतिमानस्मि ४३ । ४४ अचक्षुःकार्पण्यादांध्येनदीन
त्वात्पुत्रप्रीत्याचतत्सहामिसहे अचेतनमल्पबुद्धिं ४५ सभायामारोहणेदर्शनेच ४६ अमर्षणःअशांतःनिरुत्साहोऽभूदितिशेषः सुश्रियंशोभनाश्रीर्यस्यतंयुधिष्ठिरंसंप्राप्तुंवशीकर्तुं श्रियमक्षत्रियो
यथेतिपाठांतरेस्पष्टोर्थः ४७ गांधारराजःशकुनिः तत्रतस्मिन्द्यूतेमंत्रितेसतिपूर्वंपश्चाच्चयद्यज्जातंजयाशाप्रतिरोधकंतत्सर्वंमयानिगद्यमानंशृणु ४८ लोकद्वयहितज्ञानाभावेपिमूढालौकिकवृत्ता
र्थस्मृतिमात्रेणस्वात्मानंस्तुवंतीतिधृतराष्ट्रोक्तिव्याजेनदर्शयति श्रुत्वेति केचित्तुप्रज्ञाचक्षुषमितिविशेषणादनागतार्थकथनंधृतराष्ट्रेणक्रियतेयदाऽश्रौषमित्यादिनेत्याहुस्तन्न अश्रौषमितिभूतार्थे

श्रुतवानसिमेधावीबुद्धिमान्प्राज्ञसंमतः ॥ नविग्रहेममप्रतिर्नचप्रीयेकुलक्षये १४३ नमेविशेषःपुत्रेषुस्वेषुपांडुसुतेषुवा ॥ वृद्धंमामभ्यसूयंतिपुत्रामन्युपरायणाः
४४ अहंत्वचक्षुःकार्पण्यात्पुत्रप्रीत्यासहामितत् ॥ मुह्यंतंचानुमुह्यामिदुर्योधनमचेतनम् ४५ राजसूयेश्रियंदृष्ट्वापांडवस्यमहौजसः ॥ तच्चावहसनंप्राप्य
सभारोहणदर्शने ४६ अमर्षणःस्वयंजेतुमशक्तःपांडवान्रणे ॥ निरुत्साहश्चसंप्राप्तुंसुश्रियंक्षत्रियोऽपिसन् ४७ गांधारराजसहितश्छद्मद्यूतममंत्रयत् ॥ त
त्रयद्यद्यथाज्ञातंमयासंजयतच्छृणु ४८ श्रुत्वातुममवाक्यानिबुद्धियुक्तानितत्त्वतः ॥ ततोज्ञास्यसिमांसौतेप्रज्ञाचक्षुषमित्युत ४९ यदाऽश्रौषंधनुरायम्य
चित्रंविद्धंलक्ष्यंपातितंवैपृथिव्याम् ॥ कृष्णांहृतांप्रेक्षतांसर्वराज्ञांतदानाशंसेविजयायसंजय १५० यदाऽश्रौषंद्वारकायांसुभद्रांप्रसह्योढांमाधवीमर्जुनेन ॥
इंद्रप्रस्थंवृष्णिवीरौचयातौतदानाशंसेविजयायसंजय ५१ यदाऽश्रौषंदेवराजंप्रवृष्टंशरैर्दिव्यैर्वारितंचार्जुनेन ॥ अग्निंतथातर्पितंखांडवेचतदानाशंसेविजयाय
संजय ५२ यदाऽश्रौषंजातुषाद्वेश्मनस्तान्मुक्तान्पार्थान्पंचकुंत्यासमेतान् ॥ युक्तंचैषांविदुरंस्वार्थसिद्धौतदानाशंसेविजयायसंजय ५३ यदाऽश्रौषंद्रौपदींरंगम
ध्येलक्ष्यंभित्त्वानिर्जितामर्जुनेन ॥ शूरान्पंचालान्पांडवेयांश्चयुक्तांस्तदानाशंसेविजयायसंजय ५४ यदाऽश्रौषंमागधानांवरिष्ठंजरासंधंक्षत्रमध्येज्वलंतम् ॥
दोर्भ्यांहतंभीमसेनेनगत्वातदानाशंसेविजयायसंजय ५५ यदाऽश्रौषंदिग्जयेपांडुपुत्रैर्वशीकृतान्भूमिपालान्प्रसह्य ॥ महाक्रतुंराजसूयंकृतंचतदानाशंसे
विजयायसंजय १५६

लुङ्प्रयोगानुपपत्तेः ४९ सकृदपिकेनचिन्निमित्तेनस्थालीपुलाकन्यायेनपरप्राबल्येनिश्चितेप्राकृताअपिबलवतासहप्रसंगंनकुर्वंतिधृतराष्ट्रपुत्रस्तुजयाशाविच्छेदकेष्वनेकेषुनिमित्तेषुदृष्टेष्वपितांनजहो अ

होमोहस्यमाहात्म्यमितिवर्णयन्अर्थाद्भारतार्थंचसंगृह्णाति यदाऽश्रौषंधनुरित्यादिभिःसप्तषष्ट्याश्लोकैः । प्रेक्षतांप्रेक्षमाणानां ताननादृत्यलक्ष्यंपातितं तथैवद्रुपदेनप्रतिज्ञातत्वात् विजयायविज
यार्थं तदातदारभ्यनाशंसेआशांनकरोमि १५० माधवींमधुवंशजां प्रसह्ययदूनप्यभिभाव्य वृष्णिवीरौरामकृष्णौ महत्यप्यपराधेयेनसौहार्दंगतौतत्रकाऽस्माकंजयाशेतिभावः ५१
प्रवृष्टंवर्षणेप्रवृत्तं कर्तरिक्तः ५२ जातुषाल्लाक्षामयात् विदुरंचैषांपांडवानांस्वार्थसिद्धौयुक्तंयदाऽश्रौषं ५३ केवलाअप्यस्माकमजेयाःपांडवाःकिमुतपंचालैरतिशूरैःसमेताइतिभावः ५४
ज्वलंतंभासमानं दोर्भ्यामेवनशस्त्रेण ५५ प्रसह्यदंडेनैवनतुभेदादिना १५६

यदाऽश्रौषंद्रौपदीमिति पतिव्रताक्षेपात्पांडवानांक्षोभाच्चनष्टाजयाशेत्यर्थः ५७ यदावाससामितिअचिंत्यमहिमत्वाद्द्रौपद्यानास्माकंजयः कितवः आक्षिकोधूर्तः ५८ अक्षवत्यांपाशवत्यांद्यूतक्रीडायां सौबलेनशकुनिनाअन्वागतंअनुगतं ५९ चेष्टाःबाहुवीक्षणाद्याः ६० ब्राह्मणानुग्रहादपितेषामेवजयइत्याह यदाऽश्रौषंस्नातकानामितिद्वाभ्यां स्नातकाःसमापितविद्याव्रताः ६१ यदाऽश्रौषमर्जुनमित्यादिचतुर्भिरर्जुनस्यामानुषीशक्तिर्दर्शिता ६२ शंसितंप्रशस्यं सत्यसंधमवितथप्रतिज्ञं ६३ । ६४ । ६५ । ६६ यदाऽश्रौषंघोषेति वल्कलधारिभ्यःपांडवेभ्यःस्वैश्वर्यंप्रकाशयितुंवत्सांक

यदाऽश्रौषंद्रौपदीमश्रुकंठींसभांनीतांदुःखितामेकवस्त्राम् ॥ रजस्वलांनाथवतीमनाथवत्तदानाशंसेविजयायसंजय १५७ यदाऽश्रौषंवाससांतत्रराशिंसमाक्षिपत्कित
वोमंदबुद्धिः ॥ दुःशासनोगतवान्नैवचांतंतदानाशंसेविजयायसंजय ५८ यदाऽश्रौषंहृतराज्यंयुधिष्ठिरंपराजितंसौबलेनाक्षवत्याम् ॥ अन्वागतंभ्रातृभिरप्रमेयैरत
दानाशंसेविजयायसंजय ५९ यदाऽश्रौषंविविधास्तत्रचेष्टाधर्मात्मनांप्रस्थितानांवनाय ॥ ज्येष्ठप्रीत्याक्लिश्यतांपांडवानांतदानाशंसेविजयायसंजय १६० यदाऽ
श्रौषंस्नातकानांसहस्रैरन्वागतंधर्मराजंवनस्थम् ॥ भिक्षाभुजांब्राह्मणानांमहात्मनांतदानाशंसेविजयायसंजय ६१ यदाऽश्रौषमर्जुनंदेवदेवंकिरातरूपंत्र्यंबकंतोष्य यु
द्धे ॥ अवाप्तवंतंपाशुपतंमहास्त्रंतदानाशंसेविजयायसंजय ६२ यदाऽश्रौषंत्रिदिवस्थंधनंजयंशक्रात्साक्षाद्दिव्यमस्त्रंयथावत् ॥ अधीयानंशंसितंसत्यसंधंतदानाशंसेवि
जयायसंजय ६३ यदाऽश्रौषंकालकेयास्ततस्तेपौलोमानोवरदानाच्चदृप्ताः ॥ देवैरजेयानिर्जिताश्चार्जुनेनतदानाशंसेविजयायसंजय ६४ यदाऽश्रौषमसुराणांवधा
र्थेकिरीटिनंयांतममित्रकर्शनम् ॥ कृतार्थंचाप्यागतंशक्रलोकात्तदानाशंसेविजयायसंजय ६५ यदाऽश्रौषंवैश्रवणेनसार्धंसमागतंभीममन्यांश्चपार्थान् ॥ तस्मि
न्देशेमानुषाणामगम्येतदानाशंसेविजयायसंजय ६६ यदाऽश्रौषंघोषयात्रागतानांबंधंगंधर्वैर्मोक्षणंचार्जुनेन ॥ स्वेषांसुतानांकर्णबुद्धौरतानांतदानाशंसेविजयाय
संजय ६७ यदाऽश्रौषंयक्षरूपेणधर्मंसमागतंधर्मराजेनसूत ॥ प्रश्नान्कांश्चिद्विब्रुवाणंचसम्यक्तदानाशंसेविजयायसंजय १६८ यदाऽश्रौषंनविदुर्मामकास्तान्प्र
च्छन्नरूपान्वसतःपांडवेयान् ॥ विराटराष्ट्रेसहकृष्णयाचतदानाशंसेविजयायसंजय ६९ यदाऽश्रौषंमामकानांवरिष्ठान्धनंजयेनैकरथेनभग्नान् ॥ विराटराष्ट्रेवसता
महात्मनातदानाशंसेविजयायसंजय ७० यदाऽश्रौषंसत्कृतांमत्स्यराज्ञासुतांदत्तामुत्तरामर्जुनाय ॥ तांचार्जुनःप्रत्यगृह्णात्सुतार्थेतदानाशंसेविजयायसंजय ७१
यदाऽश्रौषंनिर्जितस्याधनस्यप्रव्राजितस्यस्वजनात्प्रच्युतस्य ॥ अक्षौहिणीःसप्तयुधिष्ठिरस्यतदानाशंसेविजयायसंजय १७२

न्व्याजेनघोषयात्रागतानांधार्त्तराष्ट्राणां येर्मत्सुतावद्धास्तेषामपिजेतृत्वमत्सुनाजेतुंशक्ताइत्यर्थः ६७ धर्मानुग्रहादपितेषामेवजयइत्याह यदाऽश्रौषंयक्षेति १६८ कृष्णायाद्रौपद्यावेदनेपुनर्द्वादशवर्षाणिवनवासस्त्रयोदशेप्रच्छन्नचर्येतिप्रतिज्ञानात् ६९ विराटराष्ट्रेगोग्रहे ७० मत्स्यराज्ञाविराटेन समासांतविधेरनित्यत्वान्नटच् ७१ निर्जितत्वादिनात्यंतपराभूतस्यापिसप्ताक्षौहिणीसंपत्तेर्दैवानुकूल्यात्तेषामजय्यत्वंदृढमित्यर्थः ७२



इमांगांपृथिवींयस्यएकंविक्रमंपदमात्रमाहुः यस्येंद्राद्याइतिपाठेविक्रमंपराक्रमं एकमसाधारणं ७३ वदतोनारदस्यमुखादितिशेषः ७४ । ७५ बहुधाविश्वरूप्येण ७६ पृथांकुंतीं ७७ तेषांपांडवानां ७८ स्वयूथ्यकलहोऽपिपराजयावहइत्याह यदाऽश्रौषंकर्णइति ७९ गंडोऽस्यास्तीतिगंडीखड्गमृगः'गंडःस्यात्पुंसिखड्गिनि'इतिमेदिनी तेनसहवातिगच्छतीतिगंडिवंतस्यपृष्ठवंशंतद्वि

यदाऽश्रौषंमाधवंवासुदेवंसर्वात्मनापांडवार्थेनिविष्टम् ॥ यस्येमांगांविक्रममेकमाहुस्तदानाशंसेविजयायसंजय ७३ यदाऽश्रौषंनरनारायणौतौकृष्णार्जुनौवद
तोनारदस्य ॥ अहंद्रष्टाब्रह्मलोकेचसम्यक्तदानाशंसेविजयायसंजय ७४ यदाऽश्रौषंलोकहितायकृष्णंशमार्थिनमुपयांतंकुरूणाम् ॥ शमंकुर्वाणमकृतार्थं
चयातंतदानाशंसेविजयायसंजय ७५ यदाऽश्रौषंकर्णदुर्योधनाभ्यांबुद्धिंकृतांनिग्रहेकेशवस्य ॥ तंचात्मानंबहुधादर्शयानंतदानाशंसेविजयायसंजय ७६ य
दाऽश्रौषंवासुदेवेप्रयातेरथस्यैकामग्रतस्तिष्ठमानाम् ॥ आर्तांपृथांसांत्वितांकेशवेनतदानाशंसेविजयायसंजय ७७ यदाऽश्रौषंमंत्रिणंवासुदेवंतथाभीष्मंशांतनवंच
तेषाम् ॥ भारद्वाजंचाशिषोऽनुब्रुवाणंतदानाशंसेविजयायसंजय ७८ यदाऽश्रौषंकर्णउवाचवाक्यंनाहंयोत्स्येयुध्यमानेत्वयीति ॥ हित्वासेनामपचक्रामचा
पितदानाशंसेविजयायसंजय ७९ यदाऽश्रौषंवासुदेवार्जुनौतौतथाधनुर्गांडिवमप्रमेयम् ॥ त्रीण्युग्रवीर्याणिसमागतानितदानाशंसेविजयायसंजय १८० य
दाऽश्रौषंकश्मलेनाभिपन्नेरथोपस्थेसीदमानेऽर्जुनेवै ॥ कृष्णंलोकान्दर्शयानंशरीरेतदानाशंसेविजयायसंजय ८१ यदाऽश्रौषंभीष्मममित्रकर्शनंनिघ्नंतमाजावयु
तंरथानाम् ॥ नैषांकश्चिद्वध्यतेख्यातरूपस्तदानाशंसेविजयायसंजय ८२ यदाऽश्रौषंचापगेयेनसंख्येस्वयंमृत्युंविहितंधार्मिकेण ॥ तच्चाकार्षुःपांडवेयाःप्र
हृष्टास्तदानाशंसेविजयायसंजय ८३ यदाऽश्रौषंभीष्ममत्यंतशूरंहतंपार्थेनाहवेष्वप्रधृष्यम् ॥ शिखंडिनंपुरतःस्थापयित्वातदानाशंसेविजयायसंजय ८४
यदाऽश्रौषंशरतल्पेशयानंवृद्धंवीरंसादितंचित्रपुंखैः ॥ भीष्मंकृत्वासोमकानल्पशेषांस्तदानाशंसेविजयायसंजय ८५ यदाऽश्रौषंशांतनवेशयानेपानीयार्थे
चोदितेनार्जुनेन ॥ भूमिंभित्त्वातर्पितंतत्रभीष्मंतदानाशंसेविजयायसंजय ८६ यदावायुश्चंद्रसूर्यौचयुक्तौकौंतेयानामनुलोमाजयाय ॥ नित्यंचास्मान्श्वा
पदाभीषयंतितदानाशंसेविजयायसंजय ८७ यदाद्रोणोविविधानस्त्रमार्गान्निदर्शयन्समरेचित्रयोधी ॥ नपांडवान्श्रेष्ठतरान्निहंतितदानाशंसेविजयायसंजय
८८ यदाऽश्रौषंचास्मदीयान्महारथान्व्यवस्थितानर्जुनस्यांतकाय ॥ संशप्तकान्निहतानर्जुनेनतदानाशंसेविजयायसंजय ८९ यदाऽश्रौषंव्यूहमभेद्यमन्यैर्भारद्वा
जेनात्तशस्त्रेणगुप्तम् ॥ भित्त्वासौभद्रंवीरमेकंप्रविष्टंतदानाशंसेविजयायसंजय १९०

कारोगांडिवं दीर्घमध्योऽप्ययंशब्दःक्वचिदस्तितदार्षं १८० कश्मलेनमोहेन ८१ अयुतंदशसहस्राणि ८२ आपगेयेनभीष्मेणविहितंप्रकाशितं तद्वधमृत्युप्रापकंद्वारं ८३ तदेवाह यदाऽश्रौषंभीष्ममिति ८४ सोमकानेवाल्पशेषानकृत्वानत्वन्यान् ८५ भूमिंभित्त्वेत्यलौकिकंकर्म ८६ वायोरानुलोम्यंदक्षिणपृष्ठवाहित्वंचंद्रसूर्ययोर्लाभस्थानस्थत्वेन । शक्रसूर्यावितिपाठेशक्रस्यानुकूल्यंपरेषांसैन्येऽशनिपातादिना श्वापदाःश्वकपिक्रोष्ट्रादयः ८७ । ८८ । ८९ । १९०

पार्थमशक्नुवंतोहंतुमितिशेषः तेनअर्जुनकोपाग्नेरत्यंतंप्रदीपनात्रास्माकंजयाशेत्यर्थः ९१ मूढाननेनस्वेषांक्षयएवभविष्यतीतिजयोऽप्ययंपराजयएवेत्यजानतः सैंधवेजयद्रथेउक्तमद्यैनंनहनिष्या
मिचेदग्निंप्रवेक्ष्यामीतिप्रतिज्ञातं ९२ । ९३ । ९४ । ९५ युयुधानंयुध्यमानंवार्ष्णेयंसात्यकिं ९६ कर्णमासाद्यापिवधान्मुक्तमप्राप्तमृत्युंभीमंयदाऽश्रौषमित्यन्वयः आतुद्यसर्वतोव्यथयित्वा
वचोभिर्नतुमनसाकुत्सयित्वामूढऔदरिकेत्यादिशब्दैर्निंदित्वोपेक्षितमितिशेषः ९७ अमर्षयन्मर्षणंसहनंकृतवंतःअशक्तया ९८ व्यंसितांव्यर्थीकृतां माधवेनकर्णस्यापिधियःप्रवर्त्तकेन घोररूपेइति

यदाऽभिमन्युंपरिवार्यबालंसर्वेहत्वाहृष्टरूपावभूवुः ॥ महारथाःपार्थमशक्नुवंतस्तदानाशंसेविजयायसंजय १९१ यदाऽश्रौषमभिमन्युंनिहत्यहर्षान्मूढान्क्रोश
तोधार्त्तराष्ट्रान् ॥ क्रोधादुक्तंसैंधवेचार्जुनेनतदानाशंसेविजयायसंजय ९२ यदाऽश्रौषंसैंधवार्थेप्रतिज्ञांप्रतिज्ञातांतद्वधायार्जुनेन ॥ सत्यांतीर्णांशत्रुमध्येचतेन
तदानाशंसेविजयायसंजय ९३ यदाऽश्रौषंश्रांतहयेधनंजयेमुक्त्वाहयान्पाययित्वोपवृत्तान् ॥ पुनर्युक्त्वावासुदेवंप्रयातंतदानाशंसेविजयायसंजय ९४ य
दाऽश्रौषंवाहनेष्वक्षमेषुरथोपस्थेतिष्ठतापांडवेन ॥ सर्वान्योधान्वारितानर्जुनेनतदानाशंसेविजयायसंजय ९५ यदाऽश्रौषंनागबलैःसुदुःसहंद्रोणानीकंयुयु
धानंप्रमथ्य ॥ यातंवार्ष्णेयंयत्रतौकृष्णपार्थौतदानाशंसेविजयायसंजय ९६ यदाऽश्रौषंकर्णमासाद्यमुक्तंवधाद्भीमंकुत्सयित्वावचोभिः ॥ धनुष्कोट्यातु
द्यकर्णेनवीरंतदानाशंसेविजयायसंजय ९७ यदाद्रोणःकृतवर्माकृपश्चकर्णोद्रौणिर्मद्रराजश्चशूरः ॥ अमर्षयन्सैंधवंवध्यमानंतदानाशंसेविजयायसंजय ९८
यदाऽश्रौषंदेवराजेनदत्तांदिव्यांशक्तिंव्यंसितांमाधवेन ॥ घटोत्कचेराक्षसेघोररूपेतदानाशंसेविजयायसंजय ९९ यदाऽश्रौषंकर्णघटोत्कचाभ्यांयुद्धेमुक्तांसू
तपुत्रेणशक्तिम् ॥ ययावध्यःसमरेसव्यसाचीतदानाशंसेविजयायसंजय २०० यदाऽश्रौषंद्रोणमाचार्यमेकंधृष्टद्युम्नेनाभ्यतिक्रम्यधर्मम् ॥ रथोपस्थेप्रायग
तंविशस्तंतदानाशंसेविजयायसंजय २०१ यदाऽश्रौषंद्रौणिनाद्वैरथस्थंमाद्रीसुतंनकुलंलोकमध्ये ॥ समंयुद्धेमंडलेभ्यश्चरंतंतदानाशंसेविजयायसंजय २०२ यदा
द्रोणेनिहतेद्रोणपुत्रोनारायणंदिव्यमस्त्रंविकुर्वन् ॥ नैषामंतंगतवान्पांडवानांतदानाशंसेविजयायसंजय २०३ यदाऽश्रौषंभीमसेनेनपीतंरक्तंभ्रातुर्युधिदुःशा
सनस्य ॥ निवारितंनान्यतमेनभीमंतदानाशंसेविजयायसंजय २०४ यदाऽश्रौषंकर्णमत्यंतशूरंहतंपार्थेनाहवेष्वप्रधृष्यम् ॥ तस्मिन्भ्रातॄणांविग्रहेदेवगुह्येत
दानाशंसेविजयायसंजय २०५ यदाऽश्रौषंद्रोणपुत्रंचशूरंदुःशासनंकृतवर्माणमुग्रम् ॥ युधिष्ठिरंधर्मराजंजयंतंतदानाशंसेविजयायसंजय २०६ यदाऽश्रौषंनि
हतंमद्रराजंरणेशूरंधर्मराजेनसूत ॥ सदासंग्रामेस्पर्धतेयस्तुकृष्णंतदानाशंसेविजयायसंजय २०७

घटोत्कचस्यापिवध्यत्वेनतद्वधेनापिकृष्णस्यहर्षएवनक्षतिरितिभावः ९९ यदाकर्णघटोत्कचाभ्यांयुद्धेक्रियमाणेइतिशेषः अर्जुनस्यावध्यत्वेसिद्धेकाजयाशेतिभावः २०० प्रायगतंमरणार्थमनश
नंप्रायस्तत्रगतंतदर्थंनिश्चलंस्थितं विशस्तंछिन्नं १ द्रौणिनानकुलमितिद्रौणेर्निकृष्टत्वमुक्तं २ । ३ । ४ देवगुह्येपार्थानांकर्णसोदर्यत्वाज्ञानात्प्रवृत्तेविग्रहेयुद्धे ५ युधिष्ठिरंद्रोणपुत्रादीन्जयं
तमित्यन्वयः ६ मद्रराजंशल्यंस्पर्धतेजेतुमिच्छतीत्यर्थः २०७



यदाऽश्रौषंकलहेति एवंद्यूतप्रसंजनेनापिजयाशानास्तीतिभावः २०८ भग्नाशक्तिर्मंत्रोत्साहादिजंसामर्थ्यंयस्य ९ प्रच्छन्नोऽपिपरैरदृष्टश्चेद्दैवात्कालांतरेऽपिजयाशास्यात्सापिनास्तीत्याह यदाऽश्रौषंपां
डवानिति अमर्षणं अशक्तस्यातितिक्षोर्मरणमवश्यंभावीतिभावः २१० मिथ्याहतंनाभेरधःप्रहारात्कपटेनहतंतस्मिन्हतेजयाशानास्तिमूलोच्छेदादितिभावः २११ यदाऽश्रौषंद्रोणेति दुष्कर्मकारिणोदु
र्योधनस्यदारेषुकश्चिन्महानुभावःपुत्रमपिनोत्पादयिष्यत्यतस्तद्द्वारापिजयाशानास्तीतिभावः १२ अनुयातेनहंतुमनुद्रुतेन अग्रिमश्लोकत्रयेणस्वीयस्याप्यश्वत्थाम्नोऽतिजुगुप्सितकर्मत्वाग्न्मणिहीनत्वा

यदाऽश्रौषंकलहद्यूतमूलंमायाबलंसौबलंपांडवेन ॥ हतंसंग्रामेसहदेवेनपापंतदानाशंसेविजयायसंजय २०८ यदाऽश्रौषंश्रांतमेकंशयानंह्रदंगत्वास्तंभयित्वातदंभः ॥
दुर्योधनंविरथंभग्नशक्तिंतदानाशंसेविजयायसंजय ९ यदाऽश्रौषंपांडवांस्तिष्ठमानान्गत्वाह्रदेवासुदेवेनसार्धम् ॥ अमर्षणंधर्षयतःसुतंमेतदानाशंसेविजयायसंज
य २१० यदाऽश्रौषंविविधांश्चित्रमार्गान्गदायुद्धेमंडलशश्चरंतम् ॥ मिथ्याहतंवासुदेवस्यबुद्ध्यातदानाशंसेविजयायसंजय ११ यदाऽश्रौषंद्रोणपुत्रादिभिस्तै
र्हतान्पंचालान्द्रौपदेयांश्चसुप्तान् ॥ कृतंबीभत्समयशस्यंचकर्मतदानाशंसेविजयायसंजय १२ यदाऽश्रौषंभीमसेनानुयातेनाश्वत्थाम्नापरमास्त्रंप्रयुक्तम् ॥ क्रुद्धे
नैषीकमवधीद्येनगर्भंतदानाशंसेविजयायसंजय १३ यदाऽश्रौषंब्रह्मशिरोऽर्जुनेनस्वस्तीत्युक्त्वाऽस्त्रमस्त्रेणशांतम् ॥ अश्वत्थाम्नामणिरत्नंचदत्तंतदानाशंसेविजयाय
संजय १४ यदाऽश्रौषंद्रोणपुत्रेणगर्भेवैराट्याविपात्यमानेमहास्त्रैः ॥ द्वैपायनःकेशवोद्रोणपुत्रंपरस्परेणाभिशापैःशशाप १५ शोच्यागांधारीपुत्रपौत्रैर्विही
नातथाबंधुभिःपितृभिर्भ्रातृभिश्च ॥ कृतंकार्यंदुष्करंपांडवेयैःप्राप्तंराज्यमसपत्नंपुनस्तैः १६ कष्टंयुद्धेदशशेषाःश्रुतामेत्रयोऽस्माकंपांडवानांचसप्त ॥ द्व्यूना
विंशतिराहताऽक्षौहिणीनांतस्मिन्संग्रामेभैरवेक्षत्रियाणाम् १७ तमस्त्वतीवविस्तीर्णंमोहआविशतीवमाम् ॥ संज्ञांनोपलभेसूतमनोविह्वलतीवमे १८ ॥ सौ
तिरुवाच ॥ इत्युक्त्वाधृतराष्ट्रोऽथविलप्यबहुदुःखितः ॥ मूर्छितःपुनराश्वस्तःसंजयंवाक्यमब्रवीत् १९ ॥ धृतराष्ट्रउवाच ॥ संजयेवंगतेप्राणांस्त्यक्तुमिच्छामि
माचिरम् ॥ स्तोकंह्यपिनपश्यामिफलंजीवितधारणे २२० ॥ सौतिरुवाच ॥ तंतथावादिनंदीनंविलपंतंमहीपतिम् ॥ निःश्वसंतंयथानागंमुह्यमानंपुनःपुनः
२१ गावल्गणिरिदंधीमान्महार्थंवाक्यमब्रवीत् ॥ संजयउवाच ॥ श्रुतवानसिवैराजन्महोत्साहान्महाबलान् २२ द्वैपायनस्यवदतोनारदस्यचधीमतः ॥ मह
त्सुराजवंशेषुगुणैःसमुदितेषुच २३ जातान्दिव्यास्त्रविदुषःशक्रप्रतिमतेजसः ॥ धर्मेणपृथिवींजित्वायज्ञैरिष्ट्वाऽऽप्तदक्षिणैः २२४

द्ब्रह्मशापग्रस्तत्वाचदुर्योधनक्षेत्रेपुपुत्रजननद्वाराराज्यलाभरूपजयाशंसापिनास्तीतिसूच्यते यदाशशापतदानाशंसेविजयायेत्यंतिमश्लोकेपूर्वानुकर्षेणान्वयः १३ । १४ । १५ शोच्यागांधारी अहंतु
तामपिशोचन्शोच्यतरइतिभावः । यद्वागांधार्य्येवशोच्यानत्वहमुदासीनत्वात् नमेविशेषइतिप्रागुक्तेः अतःपांडवानांजयोऽपिममैवजयइतिभावः १६ त्रयःकृपोऽश्वत्थामाकृतवर्माच सप्तकृष्ण
सात्यकीपंचपांडवाश्च १७ तमःशोकाविशाचक्षुरावरणंवाल्यं मोहःकार्याकार्ययोरप्रतिपत्तिः अतएवसंज्ञाविशेषविज्ञानंनोपलभे विह्वलतिशोकेनाकुलीभवति १८ अतएवमूर्छितोऽतःसंज्ञाशून्यः
१९ । २२० । २१ गवल्गणस्यापत्यंगावल्गणिःसंजयः २२ । २३ । २२४

२५ । २६ । २७ । २८ चित्येचयनवतिक्रतौविहिताश्चैत्यास्तेचतेयूपाश्चतैरंकिता २९ चतुर्विंशदितीकारलोपस्त्वार्षः २३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ तवपुत्रा इवेतिनिधनेदृष्टांतःअतएवतवपुत्रादुरात्मानइत्युच्यते ४० त्यागोदानं आस्तिक्यंगुरुवेदवाक्यादिषुफलावश्यंभावनिश्चयः सत्यंभूतद्रोहवर्जितंयथार्थभाषणं दयापरदुःखप्रहाणेच्छा आर्जवमकौ

अस्मिँलोकेयशःप्राप्यततःकालवशंगतान् ॥ शैब्यंमहारथंवीरंसृंजयंजयतांवरम् २२५ सुहोत्रंरंतिदेवंचकाक्षीवंतमथौशिजम् ॥ बाल्हीकंदमनंचैद्यंश र्यातिमजितंनलम् २२६ विश्वामित्रममित्रघ्नमंबरीषंमहाबलम् ॥ मरुत्तंमनुमिक्ष्वाकुंगयंभरतमेवच २७ रामंदाशरथिंचैवशशबिंदुंभगीरथम् ॥ कृतवीर्यंमहाभागंतथैवजनमेजयम् २८ ययातिंशुभकर्माणंदेवैर्योयाजितःस्वयम् ॥ चैत्ययूपांकिताभूमिर्यस्येयंसवनाकरा २९ इतिराज्ञांचतुर्विंशन्नार देनसुरर्षिणा ॥ पुत्रशोकाभितप्तायपुराश्वैत्यायकीर्तितम् २३० तेभ्यश्चान्येगताःपूर्वराजानोबलवत्तराः ॥ महारथामहात्मानःसर्वैःसमुदितागुणैः ३१ पूरुःकुरुर्यदुःशूरोविष्वगश्वोमहाद्युतिः ॥ अणुहोयुवनाश्वश्चककुत्स्थोविक्रमीरघुः ३२ विजयोवीतिहोत्रोऽंगोभवःश्वेतोबृहद्गुरुः ॥ उशीनरःशतरथःकं कोदुलिदुहोद्रुमः ३३ दंभोद्भवःपरोवेनःसगरःसंकृतिर्निमिः ॥ अजेयःपरशुःपुंड्रःशंभुर्देवावृधोऽनघः ३४ देवाह्वयःसुप्रतिमःसुप्रतीकोबृहद्रथः ॥ महोत्सा होविनीतात्मासुक्रतुर्नैषधोनलः ३५ सत्यव्रतःशांतभयःसुमित्रःसुबलःप्रभुः ॥ जानुजंघोऽनरण्योऽर्कःप्रियभृत्यःशुचिव्रतः ३६ बलबंधुर्निरामर्दःकेतुशृं गोबृहद्बलः ॥ धृष्टकेतुर्बृहत्केतुर्दीप्तकेतुर्निरामयः ३७ अविक्षिच्चपलोधूर्तःकृतबंधुर्दृढेषुधिः ॥ महापुराणसंभाव्यःप्रत्यंगःपरहाश्रुतिः ३८ एतेचान्ये चराजानःशतशोऽथसहस्रशः ॥ श्रूयंतेशतशश्चान्येसंख्याताश्चैवपद्मशः ३९ हित्वासुविपुलान्भोगान्बुद्धिमंतोमहाबलाः ॥ राजानोनिधनंप्राप्तास्त वपुत्राइवप्रभो २४० येषांदिव्यानिकर्माणिविक्रमस्त्यागएवच ॥ माहात्म्यमपिचास्तिक्यंसत्यंशौचंदयार्जवम् ४१ विद्वद्भिःकथ्यतेलोकेपुराणेकविसत्तमैः ॥ सर्वर्द्धिगुणसंपन्नास्तेचापिनिधनंगताः ४२ तवपुत्रादुरात्मानःप्रतप्ताश्चैवमन्युना ॥ लुब्धादुर्वृत्तभूयिष्ठानताञ्छोचितुमर्हसि ४३ श्रुतवान सिमेधावीबुद्धिमान्प्राज्ञसंमतः ॥ येषांशास्त्रानुगाबुद्धिर्नतेमुह्यंतिभारत ४४ निग्रहानुग्रहौचापिविदितौतेनराधिप ॥ नात्यंतमेवानुवृत्तिःकार्यातेपुत्रर क्षणे ४५ भवितव्यंतथातच्चनानुशोचितुमर्हसि ॥ दैवंप्रज्ञाविशेषेणकोनिवर्तितुमर्हति २४६

टिल्यं ४१ तेचापितथाविधाअपि ४२ दुरात्मानोदुष्टचित्ताः प्रतप्तास्तीक्ष्णाः दुर्वृत्तमेवभूयिष्ठंयेषांतेतथा ४३ स्वयंकृतेऽनर्थेकिंशोकेनेत्याह श्रुतवानसीत्यादिना ४४ निग्रहःपांडवेषु अनुग्रहःस्वपुत्रेषु तौत्वत्कृतौतवैवविदितावतःस्वपुत्राणांरक्षणेत्वयाऽनुवृत्तिर्ध्यानंनकार्यं श्रूयतइतिपाठेअन्यैःकृतेतिनश्रूयतेऽतस्त्वयापिनकार्या गराग्निदानादिपापकृतांनाशस्यावश्यंभावित्वादितिभा वः ४५ बुद्धिःकर्मानुसारिणीतिन्यायेनप्राकृतस्यकर्मणोदुर्निवारत्वात्स्वकृतेऽपिनात्यंतंपश्चात्तापेनशोकःकर्तव्यइत्याह भवितव्यमिति २४६

मार्गमवश्यमेवभोक्तव्यंकृतंकर्मशुभाशुभमित्येवंरूपांपद्धतिं । ननुप्राकृतमेवशोचामीतिचेन्नेत्याह कालेति यथातरुषुफलपुष्पाद्युद्गमःकालैकहेतुस्तथापुरुषेषुसदसद्बुद्ध्युद्गमोऽपीत्यर्थः भावाभा वौवस्तूनामुद्भवानुद्भवावैश्वर्यानैश्वर्येवा २४७ कालोनिमेषादिर्वत्सरांतोभूतानिजरायुजादीनिसृजतिसंहरतेचप्रजास्ताएव । एवंशोचंतंधृतराष्ट्रंतरतिशोकमात्मविदितिश्रुतेरात्मज्ञानप्रदानेननिःशोकं कर्तुंप्रथमंजीवानांकालादृष्टादिपारतंत्र्यप्रदर्शनेनाकिंचित्करत्वप्रबोधनेनचतस्यवैराग्यमुत्पाद्यात्मानमुपदिशति । संहरंतंप्रजाःकालंकालःशमयतेपुनरिति । मृत्युर्मृत्युंनमाम्यहमितिश्रुतेःकालस्यापिका लःपरमात्मास्तीत्यर्थः निर्दहतिप्रजाःकालइतिपाठेतुयोनिर्दहतिकालस्तमपिकालःशमयतइतियत्तच्छब्दाध्याहारेणयोज्यं ४८ कालोहीति अयंमहाकालोह्यतिप्रसिद्धोवेदे । 'एषह्येवसाधुकर्मकारय तितंयमेभ्योलोकेभ्यउन्निनीषतएषह्येवासाधुकर्मकारयतितंयमधोनिनीषते'इत्यादौ कुरुतेभावानर्थान्कचित्प्रयोजकत्वेनकचित्प्रयोज्यत्वेन ईशानीशरूपोऽयमेवेत्यर्थः प्रजाअव्यक्तमहदादयः ४९ सुप्तेषुतेष्वेवलीनेषुजागर्ति सुप्तौप्रलयेमोक्षेचालुप्तदृक्शक्तिरास्ते । 'नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतेऽविनाशित्वात्'इतिश्रुतेः कालोहिप्रसिद्धंदुरतिक्रमोऽलंघनीयः । 'पुरुषान्नपरंकिंचित्साकाष्ठासा परागतिः'इतिश्रुतेः चरतिशास्यशास्तृभावेन । 'अंतःप्रविष्टःशास्ताजनानां सर्वात्मा'इतिश्रुतेः अविधृतोनकेनचित्विधृतः सर्वाधिष्ठानत्वात् अतएवसमआत्मा । समआत्मेतिविद्यात् निर्दोषंहि

विधात्रविहितंमार्गंनकश्चिदतिवर्तते ॥ कालमूलमिदंसर्वंभावाभावौसुखासुखे २४७ कालःसृजतिभूतानिकालःसंहरतेप्रजाः ॥ संहरंतंप्रजाःकालंकालःशमयते पुनः ४८ कालोहिकुरुतेभावान्सर्वलोकेशुभाशुभान् ॥ कालःसंक्षिपतेसर्वाःप्रजाविसृजतेपुनः ४९ कालःसुप्तेषुजागर्तिकालोहिदुरतिक्रमः ॥ कालःसर्वेषुभूतेषु चरत्यविधृतःसमः २५० अतीतानागताभावायेचवर्ततिसांप्रतम् ॥ तान्कालनिर्मितान्बुद्ध्वानसंज्ञांहातुमर्हसि ५१ ॥ सौतिरुवाच ॥ इत्येवंपुत्रशोकार्तंधृतराष्ट्रं जनेश्वरम् ॥ आश्वास्यस्वस्थमकरोत्सूतोगावल्गणिस्तदा ५२ अत्रोपनिषदंपुण्यांकृष्णद्वैपायनोऽब्रवीत् ॥ विद्वद्भिःकथ्यतेलोकेपुराणेकविसत्तमैः २५३ भारताध्ययनंपुण्यमपिपादमधीयतः ॥ श्रद्दधानस्यपूयंतेसर्वपापान्यशेषतः २५४

समंब्रह्मेतिप्रत्यगभिन्नेब्रह्मणिसमशब्दप्रयोगात् २५० सर्वमात्मप्रभवमितिबुद्ध्वासंज्ञांज्ञाननिष्ठांनत्यक्तुमर्हसि इतोऽन्यस्यशोकतरणोपायस्याभावादित्यर्थः ५१ स्वस्थंशोकहेतुंदेहाद्यभिमानंत्या जयित्वानिरुपाधौस्वस्वरूपेप्रतिष्ठितमकरोदित्यर्थः ५२ अत्रशोकार्तानांस्वास्थ्यकरणेविषयेउपनिषदं । 'उपनीयेममात्मानंब्रह्मापास्तद्वयंयतः । निहंत्यविद्यांतज्जंचतस्मादुपनिषद्भवेत्'इति । 'यथोक्त विद्याहेतुत्वाद्ग्रंथोऽप्युपनिषद्भवेत्'इतिचवचनात् ब्रह्मात्मैकत्वविद्याप्रतिपादकंग्रंथंसूत्रवृत्त्योःप्रागुक्तयोर्वार्तिकस्थानीयमुपनिषच्छब्दवाच्यमब्रवीत् यद्यप्यत्रपुरुषार्थचतुष्टयप्रतिपादनंदृश्यतेतथाप्यर्थ कामयोर्लोकप्रसिद्धयोरेवस्वरूपव्याक्रियैवपराक्रियेतिन्यायेनहानार्थमनुवादाद्धर्मस्यचविविदिषंतियज्ञेनेत्यादिश्रुत्याविद्याशेषत्वस्यदर्शितत्वात्परमतात्पर्यंविद्यायामेवेतिध्येयं अस्याःसांप्रदायिकत्व माह विद्वद्भिरिति कथ्यते अनादिसिद्धमेवकीर्त्यतेनतुकादंबर्यादिवदभिनवकथाकल्प्यते कविसत्तमैःपूर्वपूर्वकल्पीयैर्व्यासादिभिः एवंचव्यासादिशब्दानांसेनापत्यादिशब्दवदधिका रिवचनत्वेनव्यक्त्यनित्यत्वेऽपितदर्थानांनित्यत्वात्पुराणानांसकर्तृकत्वमात्रादनित्यत्वं अतएवसुमंतुजैमिनिवैशंपायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्याइतिमंत्रस्यपुराणादिप्रणेत्राचार्यसं ग्रहवतोनित्येनतर्पणविधिनासंयोगःसंगच्छते अन्यथानित्यानित्यसंयोगविरोधोदुर्वारःस्यात् अतएवपुराणेपुरापिनवे ५३ भारतेति नित्येब्रह्मयज्ञेऋचोऽधीतेपयआहुतिभिरेवदेवतास्तर्पयतीत्यृगादीना



मिवइतिहासपुराणानीत्यमृताहुतिभिरितितदध्ययनफलश्रुतिरपियुज्यतइत्वभिप्रेत्याह पुण्यमिति पूयंतेनश्यंति अस्यश्लोकस्यचतुर्थांशोच्चारणमात्रादपिसर्वपापनाशःकिंवाच्यंकृत्स्नाध्ययनात्तदर्थ स्यज्ञानात्साक्षात्काराद्वेतिभावः २५४

एवंग्रंथस्यस्वास्थ्यंमुख्यंफलंपापक्षयंगुणफलंचोक्त्वाऽत्रप्रतिपाद्यंविषयमाह देवाइति। देवादीनांशुभकर्मणइतिविशेषणेनतेषांशुभंकर्मैवोपादेयंविवक्षितं तस्यैवपरंपरयापरमपुरुषार्थहेतुत्वात् ९५ मुख्यं विषयमाह भगवानिति। 'ऐश्वर्यस्यसमग्रस्यज्ञानस्ययशसःश्रियः । वैराग्यस्यचधर्मस्यषण्णांभगइतींगना'इत्युक्तरूपषड्गुणैश्वर्यवान्परमात्मावासुदेवोवसुदेवोत्पन्नशरीरोपाधिःसर्वशरीरोपाधिर पितेनशरीरेणातिमानुषाणिवह्निपानादीनिकर्माणिकृतवानितितदुपादानं । तथाहि ब्रह्माणंप्रतिभगवद्वाक्यं 'विधेऽहंसर्वोऽस्मिव्रजपृथुकगोवत्सवदहंविभर्मिब्रह्मांडंगिरिवदहमभिज्वलनवत्। सृजा मिद्वीपधावसनवदहंप्राणभृदहंयदत्राहंतृप्तोमुनिरितिमदन्यन्नकिं मपि'इति । तस्यवास्तवंरूपमाह सनातनइति आकाशादिवत्प्रवाहनित्यतयावामायायाआर्यंतशून्यत्वाद्वातन्मयस्यभगवच्छरीरस्य नित्यत्वापरपर्यायंसनातनत्वंयुज्यतइत्यर्थः सवासुदेवोहिप्रसिद्धं सत्यमनुष्ठीयमानंकर्म ऋतंतदेववेदात्ज्ञायमानं पवित्रंपापनाशकं पुण्यंअभ्युदयहेतुः सर्वकर्मफलभूतंब्रह्मांडंसएवेतिभावः ९६ अस्यैवनिर्विशेषत्वमाह शाश्वतंशश्वन्निरंतरंभवंशाश्वतंतेनवस्तुतोदेशतश्चापरिच्छिन्नं अतएवब्रह्मबृहत् परमंकार्यकारणातीतं ध्रुवंकूटस्थं ज्योतिश्चिन्मात्रं सनातनंकालतोऽपरिच्छिन्नं यस्यैदृशस्या पिमायया विग्रहवतः ९७ ईदृशादपियस्मादसदनिर्वचनीयंसदसद्वाकार्यंकारणंचतदुभयात्मकंविश्वंजातं संततिर्यज्ञादिः प्रवृत्तिर्यज्ञादिः ९८ आत्मनीत्यध्यात्मंदेहे यत्पंचभूतकार्यरूपागुणाः

देवादेवर्षयोह्यत्रतथाब्रह्मर्षयोऽमलाः ॥ कीर्त्यंतेशुभकर्माणस्तथायक्षामहोरगाः ९५ भगवान्वासुदेवश्चकीर्त्यतेऽत्रसनातनः ॥ सहिसत्यमृ तंचैवपवित्रंपुण्यमेवच ९६ शाश्वतंब्रह्मपरमंध्रुवंज्योतिःसनातनम् ॥ यस्यदिव्यानिकर्माणिकथयंतिमनीषिणः ९७ असच्चसदसच्चैवयस्मा द्विश्वंप्रवर्तते ॥ संततिश्चप्रवृत्तिश्चजन्ममृत्युपुनर्भवाः ९८ अध्यात्मंश्रूयतेयच्चपंचभूतगुणात्मकम् ॥ अव्यक्तादिपरंयच्चसएवपरिगीयते ९९ यत्तद्यतिवरामुक्ताध्यानयोगबलान्विताः ॥ प्रतिबिंबमिवादर्शेपश्यंत्यात्मन्यवस्थितम् २६० श्रद्दधानःसदायुक्तःसदाधर्मपरायणः ॥ आसे वन्निममध्यायंनरःपापात्प्रमुच्यते ६१ अनुक्रमणिकाध्यायंभारतस्येममादितः ॥ आस्तिकःसततंशृण्वन्नकृच्छ्रेष्ववसीदति ६२ उभेसंध्येजप न्किंचित्सद्योमुच्येतकिल्बिषात् ॥ अनुक्रमण्यायावत्स्यादन्हारात्र्याचसंचितम् ६३

श्रोत्रादयस्तदात्मकं 'सप्राणन्नेवप्राणोनामभवतिवदन्वाक्पश्यन्चक्षुःशृण्वन्श्रोत्रंमन्वानोमनः'इत्यादिश्रुतौयच्छ्रूयतेजीवरूपमितित्वंपदार्थमनूद्यतत्पदार्थमाह अव्यक्तादि अव्यक्तस्याऽऽदिभूतं यत्परंनिर्विशेषंच तयोरभेदमाह सएवेति परिगीयतेवेदेअयमात्माब्रह्मअहंब्रह्मास्मीत्यादौ । नन्वंतःप्रविष्टःशास्ताजनानामितिशास्तृशास्यभावेनश्रुतयोरीशजीवयोराजभृत्यवदभेदऔपचारिको नतुतात्त्विकइतिचेन्न अंतःप्रविष्टइतिश्रुतेःकिंजीवोऽणुर्विभुर्वा नाद्यः अणूदरेशास्तुःप्रवेशायोगात् प्रवेशेचसांतरालस्याणुत्वायोगात् मध्यमस्यचसावयवत्वेनघटादिवदनित्यत्वावश्यंभावात्। नद्वि तीयः विभुनोश्चतयोःकालाकाशादेरिवतुल्यत्वेनमिथःशास्यशास्तृत्वायोगात् तस्मादुपादानोपादेयभावेनवाधिष्ठानाध्यस्तभावेनवाईशजीवयोःप्रवेष्टृप्रवेश्यभावेनशास्तृशास्यभावस्तेनेशस्यांतःप्रति ष्ठत्वंसंगच्छते तथाचतयोरभेदोऽपितात्त्विकएव ९९ अत्रविद्वदनुभवंप्रमाणयति यत्तदिति आत्मनिहार्दाकाशेपश्यंतिप्रत्यगभेदेन प्रतिबिंबमिवआदर्शइत्यसंदिग्धःवेदृष्टांतोनतुदृश्यत्वे अन्यथा दृश्यस्यजडत्वापत्त्यावाङ्मनसातीतत्वश्रुतिव्याकोपएव ६० युक्तोनियमवान् आसेवन्जपन् ६१ आदितःनारायणंनमस्कृत्येत्यारभ्यानेनभारतकथांशमात्रंपराशरात्मजोविद्वानित्यतएवारभ्यसह कृत्यमितिनादर्तव्यमितिभावः ६२ जपन्किंचिदनुक्रमण्याःकांश्चिदपिश्लोकान् ६३

एतद्भारतस्यवपुःशरीरं सत्यंब्रह्मअमृतंदेवभावश्चात्रैवास्तीत्यर्थः उत्तरग्रंथस्त्वस्य राज्ञइवपरिवारस्थानीयःतत्त्वंत्वत्रैवसूत्रितमित्यर्थः ६४ आरण्यकमुपनिषत् ओषधिभ्योयवादिभ्यः अमृतंयज्ञशे षं ६५ इतिहासानांशिवरहस्यादीनांमध्ये ६६ इतिहासेति । 'यद्रक्त्यंमायिनंमृगंतमुत्वंमाययावधीति'इतिमंत्रावयवोहिरामायणीयमारीचवधज्ञेनैवोपबृंहितुंशक्योनत्वन्येनातस्तस्मादल्पश्रुताद्वेद स्यभयमुचितमेववेदार्थजिज्ञासुनेदमवश्यमध्येतव्यमित्यर्थः ६७ कार्ष्णंकृष्णेनव्यासेनप्रोक्तं वेदंपुरुषार्थचतुष्कंवेदयंतं ६८। ६९। ७० ७१ तुलयाधृतंन्यूनाधिकभावेनपरीक्षितं सरहस्येभ्यःसोप निषत्केभ्यः अधिकमर्थगौरवयुक्तं ७२ महत्वेग्रंथतआधिक्ये गुरुत्वेअर्थतआधिक्ये ७३ । २७४ नन्वत्रानर्थकोयुद्धादिप्रलापोभूयान्दृश्यतेकणिकनीत्यादिश्चाधर्मप्रवर्तकोऽपिग्रंथोऽस्ति त तश्चकचिद्धर्मादिकथनेसत्यपिविषसंपृक्तान्नवत्कृत्स्नमप्येतद्धेयमेवस्यादित्याशंक्याह तपइति तपःकृच्छ्रचांद्रायणादि कल्कःपापंतदभावोनकल्कः'कल्कोऽस्त्रीशमलैनसोः'इत्यमरः नभ्राडादिवन्नञः प्रकृतिभावः तपोनिर्मलंनैर्मल्यसाधनमित्यर्थः विरोधित्वंवानञर्थःतेनतपःपापनाशकमित्यर्थः अध्ययनंवेदस्यस्वाभाविकःस्वस्ववर्णाश्रमादिपुरस्कारेणविहितःशमोदमस्तपःशौचमित्यादिर्वेदविधिर्वे

भारतस्यवपुर्ह्येतत्सत्यंचामृतमेवच ॥ नवनीतंयथादध्नोद्विपदांब्राह्मणोयथा २६४ आरण्यकंचवेदेभ्यओषधिभ्योऽमृतंयथा ॥ ह्रदानामुदधिःश्रेष्ठोगौर्वरिष्ठाचतुष्प दाम् ६५ यथैतानीतिहासानांतथाभारतमुच्यते ॥ यश्चैनंश्रावयेच्छ्राद्धेब्राह्मणान्पादमंततः ६६ अक्षय्यमन्नपानंवैपितॄंस्तस्योपतिष्ठते ॥ इतिहासपुराणाभ्यांवे दंसमुपबृंहयेत् ६७ बिभेत्यल्पश्रुताद्वेदोमामयंप्रहरिष्यति ॥ कार्ष्णंवेदमिमंविद्वान्श्रावयित्वार्थमश्नुते ६८ भ्रूणहत्यादिकंचापिपापंजह्यादसंशयम् ॥ यइमंशु चिरध्यायंपठेत्पर्वणिपर्वणि ६९ अधीतंभारतंतेनकृत्स्नंस्यादितिमेमतिः ॥ यश्चैनंशृणुयान्नित्यमार्षंश्रद्धासमन्वितः २७० सदीर्घमायुःकीर्तिंचस्वर्गतिंचाप्नुया न्नरः ॥ एकतश्चतुरोवेदाभारतंचैतदेकतः ७१ पुराकिलसुरैःसर्वैःसमेत्यतुलयाधृतम् ॥ चतुर्भ्यःसरहस्येभ्योवेदेभ्योह्यधिकंयदा ७२ तदाप्रभृतिलोकेऽस्मिन्म हाभारतमुच्यते ॥ महत्त्वेचगुरुत्वेचध्रियमाणंयतोऽधिकम् ७३ महत्त्वाद्भारवत्त्वाच्चमहाभारतमुच्यते ॥ निरुक्तमस्ययोवेदसर्वपापैःप्रमुच्यते ७४ तपोनकल्को ऽध्ययनंनकल्कःस्वाभाविकोवेदविधिर्नकल्कः ॥ प्रसह्यवित्ताहरणंनकल्कस्तान्येवभावोपहतानिकल्कः २७५ ॥ इतिश्रीमन्महाभारतेआदिपर्वणिअनुक्रमणिका पर्वणिप्रथमोऽध्यायः ॥ १ ॥ ॥ ध ॥ ॥ ध ॥ ॥ ध ॥ अनुक्रमणीपर्वसमाप्तम् ॥

दोक्तोविधिरग्निहोत्रसंध्योपासनादिः प्रसह्यप्रकर्षेणसोढ्वाक्षुधादिदुःखमपिसोढ्वावित्तस्यआहरणंशिलोंछादिनाअर्जनंतदपिनकल्कोनैर्मल्यसाधनं तान्येवतपआदीनिभावेनचित्ताभिप्रायेणोपहतानि कल्कःपापंःपापहेतुर्भवंति यथाशीतादिसहनंवानप्रस्थैःकटकस्थैश्चतुल्यवत्क्रियतेतथापिभावभेदात्तदेकस्यस्वर्गायान्यस्यनरकायभवति वक्ष्यतिच । 'चत्वारिकर्माण्यभयंकराणिभयंप्रयच्छंत्ययथा कृतानि ॥ मानाग्निहोत्रमुतमानमौनंमानेनाधीतमुतमानयज्ञः'इति एवंशिलोंछादिकमपिदंभेनकृतंपापायान्यथाश्रेयसेभवति एवंभारतेऽपिधर्मब्रह्मप्रतिपादनेएवपरमतात्पर्यं अर्थवादजातमपियुधि ष्ठिरादिवद्ग्राह्यहर्तव्यंनदुर्योधनादिवदित्याशयेनोक्तं तत्रहीनंपक्षमुपाददानःस्वार्थाद्भ्रश्यतितेनाधीतमपिभारतंपापायैवभवतीत्यर्थः तथाचसर्वस्मादपिग्रंथात्सारमेवादेयमितरत्त्याज्यमितिश्रूयते । 'ग्रंथमभ्यस्यमेधावीज्ञानविज्ञानतत्परः ॥ पलालमिवधान्यार्थीत्यजेद्ग्रंथमशेषतः'इति २७५ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे प्रथमोऽध्यायः ॥ १ ॥ ॥ ध ॥

एवंप्रथमेऽध्यायेसूत्रितानामर्थानांप्रकरणशोविभागंशिष्याणामवधानायप्रदर्शयिष्यन्वैराग्यमुत्पादयितुंकुरुपुपरशुरामकृतंक्षत्रक्षयंप्रसंगात्प्रदर्शयति समंतेति । 'समंतपंचकंनामपुण्यंद्विजनिषेवितं ॥ गतवानस्मितंदेशंयुद्धंयत्राभवत्पुरा'इत्यादिनायदुक्तमेतत्सर्वंतंदेशंतद्युद्धंचश्रोतुमिच्छामहेवयं १ ममभवतः कथाअन्याः २ क्षत्रंक्षत्रियजातिं अमर्षःस्वपितुःक्षत्रियेणहतत्वाज्जातस्यक्रोधस्यासहनंतेनचोदितःप्रेरितः ३ रौधिरान्रुधिरपूर्णान् ४ नोऽस्माभिः रुधिरेणपितॄणांतर्पणात्सर्वाहिंसापितृतृप्त्युद्देशेनैवकर्तव्यानकामकारेणेतिसूचितं ५ । ६ । ७ यदितिसार्धेनक्रोधकृतंसर्वंपापायेवहीनबलेषुशस्त्रनिक्षेपादितिभावः ८ । ९ निषिषिधुर्निषिद्धवंतः अक्षराधिक्यमार्षं अभ्यासलोपोवाआर्षः सिषिधुरितिपाठेशशासुः हिंसातोविरमस्वेतिशिक्षितवंतइत्यर्थः १० । ११ । १२ १३ भूदोषाःनिम्नोन्नतकंटकित्वादयस्तद्रहिते १४ समंतेन्हदानांपंचकं समंतपंचकं तत्परिसरवर्त्तीदेशोऽपितन्नामेत्युक्तं तत्रसमंतशब्दस्यावयवार्थंदर्शयति समेत्येति समेतानामंतोनाशोयस्मिन्निति समंतइत्यर्थः अभिनिर्वृत्तंनिर्व्यूढं १५ । १६ । १७ । १८ पदातयइतिरथादिगतन्नानंनराणांव्युदासः १९ । २० । २१ । २२

॥ अथपर्वसंग्रहपर्व ॥ ॥ ऋषयऊचुः ॥ ॥ समंतपंचकमितियदुक्तंसूतनंदन ॥ एतत्सर्वंयथातत्त्वंश्रोतुमिच्छामहेवयम् १ ॥ सौतिरुवाच ॥ शृणुध्वंममभोविप्राब्रुवतश्चकथाःशुभाः ॥ समंतपंचकाख्यंचश्रोतुमर्हथसत्तमाः २ त्रेताद्वापरयोःसंधौरामःशस्त्रभृतांवरः ॥ असकृत्पार्थिवंक्षत्रंजघानामर्षचोदितः ३ सस्वर्वंक्षत्रमुत्साद्यस्ववीर्येणानलद्युतिः ॥ समंतपंचकेपंचचकाररौधिरान्ह्रदान् ४ सतेषुरुधिरांभःसुह्रदेषुक्रोधमूर्च्छितः ॥ पितॄन्संतर्पयामासरुधिरेणेतिनःश्रुतम् ५ अथर्चीकादयोऽभ्येत्यपितरोराममब्रुवन् ॥ रामराममहाभागप्रीताःस्मतवभार्गव ६ अनयापितृभक्त्याचविक्रमेणतवप्रभो ॥ वरंवृणीष्वभद्रंतेयमिच्छसिमहाद्युते ७ ॥ रामउवाच ॥ यदिमेपितरःप्रीतायद्यनुग्राह्यतामयि ॥ यच्चरोषाभिभूतेनक्षत्रमुत्सादितंमया ८ अतश्चपापान्मुच्येऽहमेषमेप्रार्थितोवरः ॥ ह्रदाश्चतीर्थभूतामेभवेयुर्भुविविश्रुताः ९ एवंभविष्यतीत्येवंपितरस्तमथाब्रुवन् ॥ तंक्षमस्वेतिनिषिषिधुस्ततःसविरराम ह १० तेषांसमीपेयोदेशोह्रदानांरुधिरांभसाम् ॥ समंतपंचकमितिपुण्यंतत्परिकीर्तितम् ११ येनलिंगेनयोदेशोयुक्तःसमुपलक्ष्यते ॥ तेनैवनाम्नातंदेशंवाच्यमाहुर्मनीषिणः १२ अंतरेचैवसंप्राप्तेकलिद्वापरयोरभूत ॥ समंतपंचकेयुद्धंकुरुपांडवसेनयोः १३ तस्मिन्परमधर्मिष्ठेदेशेभूदोषवर्जिते ॥ अष्टादशसमाजग्मुरक्षौहिण्योयुयुत्सया १४ समेत्यतंद्विजास्ताश्चतत्रैवनिधनंगताः ॥ एतन्नामाभिनिर्वृत्तंतस्यदेशस्यवैद्विजाः १५ पुण्यश्चरमणीयश्चसदेशोवःप्रकीर्तितः ॥ तदेतत्कथितंसर्वंमयाब्राह्मणसत्तमाः ॥ यथादेशःसविख्यातस्त्रिषुलोकेषुसुव्रताः १६ ॥ ऋषयऊचुः ॥ अक्षौहिण्यइतिप्रोक्तंयत्त्वयासूतनंदन ॥ एतदिच्छामहेश्रोतुंसर्वमेवयथातथम् १७ अक्षौहिण्याःपरीमाणंनराश्वरथदंतिनाम् ॥ यथावच्चैवनोब्रूहिसर्वंहिविदितंतव १८ ॥ सौतिरुवाच ॥ एकोरथोगजश्चैकोनराःपंचपदातयः ॥ त्रयश्चतुरगास्तज्ज्ञैःपत्तिरित्यभिधीयते १९ पत्तिंतुत्रिगुणामेतामाहुःसेनामुखंबुधाः ॥ त्रीणिसेनामुखान्येकोगुल्मइत्यभिधीयते २० त्रयोगुल्मागणोनामवाहिनीतुगणास्त्रयः ॥ स्मृतास्तिस्रस्तुवाहिन्यःपृतनेतिविचक्षणैः २१ चमूस्तुपृतनास्तिस्रस्तिस्रश्चम्वस्त्वनीकिनी ॥ अनीकिनींदशगुणांप्राहुरक्षौहिणींबुधाः २२



२३ । २४ । २५ । २६ 'अक्षौहिण्याःपरीमाणंखाद्विधृत्यक्षिभिर्गजैः २१८७० ॥ रथैरेतै २१८७० र्हयैस्त्रिघ्नैः ६५६१० पंचघ्नैः १०९३५० श्चपदातिभिः'इतिसंग्रहः २७ पिंडिताएकीभूताः संख्यार्थाः २८ । २९ । ३० । ३१ द्रौणिरश्वत्थामा हार्दिक्यःकृतवर्मा गौतमःकृपाचार्यः ३२ पर्वसंग्रहंवक्तुंप्रस्तौतियत्तुशौनकेत्यादिना हेशौनकहेवृद्धतम श्चयतेवृद्धचर्याश्रित्वाप्रायांशूनावृद्धास्तेषुवृद्धतरत्वेनविदितःशौनकः वुञ्छणादिसूत्रेणारोहणादिर्वुञ् । तेतवसत्रेयद्भारताख्यानंमत्तःप्रवृत्तंतज्जनमेजयस्यसत्रेव्यासशिष्येणकथितमित्युत्तरेणसंबंधः ३३ ननुसर्पसत्रेजनमेजयंप्रतियद्वैशंपायनेनोक्तंतदेवशौनकंप्रतिसूतेनवक्तुंप्रतिज्ञातं तत्रपौष्यंपौलोममास्तीकंचकिमित्यप्रतिज्ञातमप्युच्यतेसूतेनेतिचेत्तत्राह कथितमिति सत्रेव्यासशिष्येणयत्कथितंतत्रभारतेपौष्यंपौलोममास्तीकंचमहीक्षितांयशोवीर्यंचवक्तुमितिशेषः आदितःस्मृतमितियोजना स्मरणंतुविस्तरार्थं । अयंभावः तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियंब्रह्मनिष्ठं अविद्ययामृत्युंतीर्त्वेत्यादिश्रुतेर्गुरुसेवामाहात्म्यंगुरूणांचमाहात्म्यंयज्ञादीनांविद्यार्थत्वंचनिरूपणीयंतेष्वन्यतमाभावेऽपिविद्यानैवोदेतुमर्हतीतितदर्थमत्राचार्येणाख्यायिकामुखेनैवपौष्येगुरुशुश्रूषामाहात्म्यंपौलोमेभार्गवाणां गुरूणांमहाभाग्यमुक्तं आस्तीकेजरत्कारोरप्रतिपन्नगार्हस्थ्यस्याकृतार्थत्वदर्शनेनयज्ञादीनामाविद्यकानामपिविद्यांगत्वमुक्तं । विविदिषंतियज्ञेनेत्यादिश्रुतेः । तस्मान्महोपनिषदारंभेएतत्त्रयकथनमावश्यकमित्याख्यायिकामुखेनकथ्यमानगहनोऽप्यर्थःसुग्रहोभवतीत्यभिप्रेत्यमहीभृतांयशोवीर्यंचोक्तमिति ३४ मोक्षिभिर्मोक्षार्थिभिर्नरैः प्रतिपन्नंशरणीकृतंवैराग्यमिव यथापरवैराग्यस्यनांतरीयकंफलंकैवल्यमेवमेतच्छ्रवणस्यापीतिभावः ३५ आत्मेतिआत्मज्ञानमेवस्वतःपुरुषार्थइत्यात्मैवमुख्यंवेदितव्यं तस्यप्रमाणस्यतत्त्वावेदकत्वात् अन्यत्ज्ञानंतुसर्वंपुरुषसंस्कारद्वाराकर्मांगं । यथोक्तंभट्टपादैः । 'सर्वत्रैवहिविज्ञानंसंस्कारत्वेनगम्यते ॥ परांगंचात्मविज्ञानादन्यत्रेत्यवधार्यतां'इति । प्रधानार्थोब्रह्मावाप्तिप्रयोजनः ३६ । ३७ कविभिःकाव्यकर्तृभिः व्यासोच्छिष्टंजगत्सर्वमितिप्रसिद्धेस्तेषामद्भुतकाव्यरचनेइदमेवालंबनमित्यर्थः अभिजातःकुलीनः ३८

अक्षौहिण्याःप्रसंख्यातारथानांद्विजसत्तमाः ॥ संख्यागणिततत्त्वज्ञैःसहस्राण्येकविंशतिः २३ शतान्युपरिचैवाष्टौतथाभूयश्चसप्ततिः ॥ गजानांचपरिमाणमेतदेवविनिर्दिशेत् २४ ज्ञेयंशतसहस्रंतुसहस्राणिनवैवतु ॥ नराणामपिपंचाशच्छतानित्रीणिचानघाः २५ पंचषष्टिसहस्राणितथाश्वानांशतानिच ॥ दशोत्तराणिषट्प्राहुर्यथावदिहसंख्यया २६ एतामक्षौहिणींप्राहुःसंख्यातत्त्वविदोजनाः ॥ यांवःकथितवानस्मिविस्तरेणतपोधनाः २७ एतयासंख्ययाह्यासन्कुरुपांडवसेनयोः ॥ अक्षौहिण्योद्विजश्रेष्ठाःपिंडिताष्टादशैवतु २८ समेतास्तत्रवैदेशेतत्रैवनिधनंगताः ॥ कौरवान्कारणंकृत्वाकालेनाद्भुतकर्मणा २९ अहानियुयुधेभीष्मोदशैवपरमास्त्रवित् ॥ अहानिपंचद्रोणस्तुररक्षकुरुवाहिनीम् ३० अहनीयुयुधेद्वेतुकर्णःपरबलार्दनः ॥ शल्योऽर्धदिवसंचैवगदायुद्धमतःपरम् ३१ तस्यैवदिवसस्यांतेद्रौणिहार्दिक्यगौतमाः ॥ प्रसुप्तंनिशिविश्वस्तंजघ्नुर्यौधिष्ठिरंबलम् ३२ यत्तुशौनकसत्रेतेभारताख्यानमुत्तमम् ॥ जनमेजयस्यतत्सत्रेव्यासशिष्येणधीमता ३३ कथितंविस्तरार्थंचयशोवीर्यंमहीक्षिताम् ॥ पौष्यंतत्रचपौलोममास्तीकंचादितःस्मृतम् ३४ विचित्रार्थपदाख्यानमनेकसमयान्वितम् ॥ प्रतिपन्नंनरैःप्राज्ञैर्वैराग्यमिवमोक्षिभिः ३५ आत्मेववेदितव्येषुप्रियेष्विवहिजीवितम् ॥ इतिहासःप्रधानार्थःश्रेष्ठःसर्वागमेष्वयम् ३६ अनाश्रित्येदमाख्यानंकथाभुविनविद्यते ॥ आहारमनपाश्रित्यशरीरस्येवधारणम् ३७ तदेतद्भारतंनामकविभिस्तूपजीव्यते ॥ उदयप्रेप्सुभिर्भृत्यैरभिजातइवेश्वरः ३८

उत्तमाचरमाबुद्धिर्ब्रह्मविद्याख्यांतःकरणवृत्तिः ३९ प्रज्ञयाऽभिपन्नेप्राप्तंतस्य ४० पर्वणामुपक्रमोपसंहारैकरूप्यादिनाएकमर्थंपूरयांतिकात्स्न्येनप्रतिपादयंतितानिपर्वाणिप्रकरणानितेषांसंग्रहःसम्यक्वि विच्यग्रहोयस्मिन्सपर्वसंग्रहोद्वितीयंपर्व ४१ अत्रकेवलस्यसोपाख्यानस्यचभारतस्यस्मरणेआद्ययोःपर्वणोस्तात्पर्यंपौष्यादित्रयस्यतूक्तमेवेतिपर्वपंचकतात्पर्यमुक्तं तत्रास्तीकेकर्मप्राधान्यमुक्तंतत्कर्मि णोदेवभावंप्राप्यापीहजन्मलभंतेइत्यादावंशावतरणमुक्तंषष्ठे अंशावतारणंदेवानांभूमौभागशोऽवतरणमादिःप्रथमंपर्वेत्यर्थः तेनपूर्वोक्तासूतप्रतिज्ञासंगच्छते संभवेअत्रलब्धजन्मनामपिनतेषांनिय मेनस्वर्गतिःकिंतुसर्पनागादितामसयोनिप्राप्तिरपिकर्मवशाद्भवतीत्युक्तंसप्तमे तत्राप्यर्थार्थिनोबंधूनप्यन्यायेनघ्नंतीतिजातुषेदर्शितमष्टमे तथाकामुकाःस्त्रियोबंधूनपिघातयंतीत्यविश्वसनीयास्ताइ

इतिहासोत्तमेयस्मिन्नर्पिताबुद्धिरुत्तमा ॥ स्वरव्यंजनयोःकृत्स्नालोकवेदाश्रयेववाक् ३९ तस्यप्रज्ञाभिपन्नस्यविचित्रपदपर्वणः ॥ सूक्ष्मार्थन्याययुक्तस्यवेदार्थैर्भूषितस्यच ४० भारतस्येतिहासस्यश्रूयतांपर्वसंग्रहः ॥ पर्वानुक्रमणीपूर्वंद्वितीयःपर्वसंग्रहः ४१ पौष्यंपौलोममास्तीकमादिरंशावतारणम् ॥ ततःसंभवपर्वोक्तमद्भुतंरोमहर्षणम् ४२ दाहोजतुग्रहस्यात्रहैडिंबंपर्वचोच्यते ॥ ततोबकवधःपर्वपर्वचैत्ररथंततः ४३ ततःस्वयंवरोदेव्याःपांचाल्याःपर्वचोच्यते ॥ क्षात्रधर्मेणनिर्जित्यततोवैवाहिकंस्मृतम् ४४ विदुरागमनंपर्वराज्यलंभस्तथैवच ॥ अर्जुनस्यवनेवासःसुभद्राहरणंततः ४५ सुभद्राहरणाद्रूर्ध्वंज्ञेयाहरणहारिका ॥ ततःखांडवदाहाख्यंतत्रैवमयदर्शनम् ४६ सभापर्वततःप्रोक्तंमंत्रपर्वततःपरम् ॥ जरासंधवधःपर्वपर्वदिग्विजयंतथा ४७ पर्वदिग्विजयादूर्ध्वंराजसूयिकमुच्यते ॥ ततश्चार्घाभिहरणंशिशुपालवधस्ततः ४८ द्यूतपर्वततःप्रोक्तमनुद्यूतमतःपरम् ॥ ततआरण्यकंपर्वकिर्मीरवधउच्यते ४९ अर्जुनस्याभिगमनंपर्वज्ञेयमतःपरम् ॥ ईश्वरार्जुनयोर्युद्धंपर्वकैरातसंज्ञितम् ५० इंद्रलोकाभिगमनंपर्वज्ञेयमतःपरम् ॥ नलोपाख्यानमपिचधार्मिकंकरुणोदयम् ५१ तीर्थयात्राततःपर्वकुरुराजस्यधीमतः ॥ जटासुरवधःपर्वयक्षयुद्धमतःपरम् ५२ निवातकवचैर्युद्धंपर्वचाजगरंततः ॥ मार्कंडेयसमास्याचपर्वानंतरमुच्यते ५३ संवादश्चततःपर्वद्रौपदीसत्यभामयोः ॥ घोषयात्राततःपर्वमृगस्वप्नोद्भवंततः ५४ व्रीहिद्रौणिकमाख्यानमैंद्रद्युम्नंतथैवच ॥ द्रौपदीहरणंपर्वजयद्रथविमोक्षणम् ५५

तिर्हिडिंबेनवमेदर्शितं श्वशूकरभक्ष्यस्यापिशरीरस्यार्थेपरप्राणानपिपामराःमत्यहमाददतइतिबकवधेदशमेसूचितं ततःकष्टतरांगतिंतमःप्रधानाःप्राणिनःप्राप्नुवंतीतिप्रबंधेन परीक्ष्यलोकान्कर्मचि तान्ब्राह्मणोनिर्वेदमायान्नास्त्यकृतःकृतेनेतिश्रुत्यर्थउपबृंहितः एवमग्रेऽपितत्तदाख्यानतात्पर्योन्नयनेनराजसानांसात्विकानांचगतिःपरीक्षणीया अग्रेप्रतिप्रकरणंवक्ष्यमाणत्वादिहग्रंथविस्तरभयान्न प्रपंच्यते ४२ चैत्ररथमंगारपर्णचरितंपर्व ४३ । ४४ विदुरागमनंराज्यलंभश्चेकंपर्व लंभोलाभः ४५ हरणंदायःपारिबर्हमितियावत् तस्यहारिकासमानयनं खांडवदाहोमयदर्शनंचैकैकं पर्व ४६ सभापर्वसभारचनंपर्व मंत्रोराजसूयार्थंमंत्रणं ४७ । ४८ अनुद्यूतंपुनर्द्यूतं ४९ अभिगमनंतपसेगमनं ५० यक्षयुद्धंभीमेन ५१ । ५२ समास्यासहावस्थानं ५३ घोषयात्रा कौरवाणां मृगस्वप्नोधर्मराजस्य ५४ ऐंद्रद्युम्नमित्यत्रक्रमोनविवक्षितःसंख्यापंतात्पर्यात् समास्यांतर्गतंचेदंपर्व ५५



५६ कुंडलाहरणंकर्णस्य आरणेयमरणीहरणंब्राह्मणस्य धर्मेणप्रवेशोविराटनगरे समयस्यप्रतिज्ञातस्यप्राक्प्रवेशाद्यर्थस्य ५७ अभिमन्योरर्जुनपुत्रस्य ५८ संजययानंपांडवान्प्रति ५९ ६० भगवद्यानंकौरवान्प्रति ६१ । ६२ । ६३ विवादपर्वकृष्णकर्णसंवादरूपंपर्व ६४ संख्याभीष्मकृता उलूकदूतस्यपांडवान्प्रत्यागमनं ६५ अभिषेचनंसैनापत्ये ६६ जंबूखंड

पतिव्रतायामाहात्म्यंसावित्र्याश्चैवमद्भुतम् ॥ रामोपाख्यानमत्रैवपर्वज्ञेयमतःपरम् ५६ कुंडलाहरणंपर्वततःपरमिहोच्यते ॥ आरणेयंततःपर्ववैराटंतदनंतरम् ॥ पांडवानांप्रवेशश्चसमयस्यचपालनम् ५७ कीचकानांवधःपर्वपर्वगोग्रहणंततः ॥ अभिमन्योश्चवैराट्याःपर्ववैवाहिकंस्मृतम् ५८ उद्योगपर्वविज्ञेयमतऊर्ध्वंमहाद्भुतम् ॥ ततःसंजययानाख्यंपर्वज्ञेयमतःपरम् ५९ प्रजागरंतथापर्वधृतराष्ट्रस्यचिंतया ॥ पर्वसानत्सुजातंवैगुह्यमध्यात्मदर्शनम् ६० यानसंधिस्ततःपर्वभगवद्यानमेवच ॥ मातलीयमुपाख्यानंचरितंगालवस्यच ६१ सावित्रंवामदेव्यंचवैन्योपाख्यानमेवच ॥ जामदग्न्यमुपाख्यानंपर्वषोडशराजकम् ६२ सभाप्रवेशःकृष्णस्यविदुलापुत्रशासनम् ॥ उद्योगःसैन्यनिर्याणंविश्वोपाख्यानमेवच ६३ ज्ञेयंविवादपर्वात्रकर्णस्यापिमहात्मनः ॥ निर्याणंचततःपर्वकुरुपांडवसेनयोः ६४ रथातिरथसंख्याचपर्वोक्तंतदनंतरम् ॥ उलूकदूतागमनंपर्वामर्षविवर्धनम् ६५ अंबोपाख्यानमत्रैवपर्वज्ञेयमतःपरम् ॥ भीष्माभिषेचनंपर्वततश्चाद्भुतमुच्यते ६६ जंबूखंडविनिर्माणंपूर्वोक्तंतदनंतरम् ॥ भूमिपर्वततःप्रोक्तंद्वीपविस्तारकीर्तनम् ६७ पूर्वोक्तंभगवद्गीतापर्वभीष्मवधस्ततः ॥ द्रोणाभिषेचनंपर्वसंशप्तकवधस्ततः ६८ अभिमन्युवधःपर्वप्रतिज्ञापर्वचोच्यते ॥ जयद्रथवधःपर्वघटोत्कचवधस्ततः ६९ ततोद्रोणवधःपर्वविज्ञेयंलोमहर्षणम् ॥ मोक्षोनारायणास्त्रस्यपर्वानंतरमुच्यते ७० कर्णपर्वततोज्ञेयंशल्यपर्वततःपरम् ॥ ह्रदप्रवेशनंपर्वगदायुद्धमतःपरम् ७१ सारस्वतंततःपर्वतीर्थवंशानुकीर्तनम् ॥ अतऊर्ध्वंसुबीभत्संपर्वसौप्तिकमुच्यते ७२ ऐषीकंपर्वचोद्दिष्टमतऊर्ध्वंसुदारुणम् ॥ जलप्रदानिकंपर्वस्त्रीविलापस्ततःपरम् ७३ श्राद्धपर्वततोज्ञेयंकुरूणामौर्ध्वदेहिकम् ॥ चार्वाकनिग्रहःपर्वरक्षसोब्रह्मरूपिणः ७४ आभिषेचनिकंपर्वधर्मराजस्यधीमतः ॥ प्रविभागोगृहाणांचपर्वोक्तंतदनंतरम् ७५ शांतिपर्वततोयत्रराजधर्मानुशासनम् ॥ आपद्धर्मश्चपर्वोक्तंमोक्षधर्मस्ततःपरम् ७६ शुकप्रश्नाभिगमनंब्रह्मप्रश्नानुशासनम् ॥ प्रादुर्भावश्चदुर्वाससःसंवादश्चैवमायया ७७ ततःपर्वपरिज्ञेयमानुशासनिकंपरम् ॥ स्वर्गारोहणिकंचैवततोभीष्मस्यधीमतः ७८ ततोऽश्वमेधिकंपर्वसर्वपापप्रणाशनम् ॥ अनुगीताततःपर्वज्ञेयमध्यात्मवाचकम् ७९ पर्वचाश्रमवासाख्यंपुत्रदर्शनमेवच ॥ नारदागमनंपर्वततःपरमिहोच्यते ८० मौसलंपर्वचोद्दिष्टंततोघोरंसुदारुणम् ॥ महाप्रस्थानिकंपर्वस्वर्गारोहणिकंततः ८१

विनिर्माणंजंबुद्वीपसन्निवेशः भूमिपर्वण्येवद्वीपविस्तारकीर्तनं ६७ । ६८ प्रतिज्ञाजयद्रथवधार्थं ६९ । ७० ह्रदप्रवेशनंदुर्योधनस्य गदायुद्धंतस्यैवभीमेन ७१ । ७२ जलप्रदानिके.एवस्त्रीविलापनं ७३ कुरूणामौर्ध्वदेहिकंश्राद्धंपर्व चार्वाकस्यब्रह्मरूपिणोराक्षसस्यविप्रक्षोभान्निग्रहःपर्व ७४ । ७५ शांतिपर्वाहृद्वाभ्यां शांतीति ७६ भामयेतिपाठांतरं उभयत्रापि सुलभयेत्यर्थः ७७ अनुशासनंधर्माधर्मोपदेशस्तत्संबद्धमानुशासनिकं ७८ । ७९ । ८० । ८१

हरिवंशः पुराणंप्राक्प्रवृत्तंपर्वेखिलसंज्ञितं शाखांतरस्थंशाखांतरेयदपेक्षावशात्पठ्यतेतत्खिलमितिवैदिकीप्रसिद्धिः । यथाबह्वृचानांश्रीसूक्तमेधासूक्तादीनांसंहिताकालेपाठोदृश्यते एवमस्मिन्नितिहासेयत्पुराणांतरस्थमाकांक्षावशात्पठ्यतेतत्खिलंहरिवंशाख्यमित्याह हरिवंशइति अतएवास्यखिलस्यपुराणमितिविशेषणं तथाहि अत्रविष्णुचर्याविष्णुपुराणोक्तासाकल्येनदृश्यते ८२ एवंभविष्यपुराणकथाचखिलेष्वेवाद्भुतंमहदितिपृथग्वाक्यं अद्भुतंपुष्करवाराहनारसिंहवामनप्रादुर्भावादिकैलासयात्रात्रिपुरवधांतं एतदेवपर्वशतं एकैकस्मिन्महाप्रकरणेअवांतरप्रकरणानामंतर्भावविवक्षयाऽष्टादशसंख्यात्वेनलोमहर्षणिनोक्तं ८३।८४ तत्रकस्मिन्महापर्वणिकत्यवांतरपर्वाणितेषुचकेकेऽर्थाःप्रतिपाद्याएकैकस्मिन्महापर्वणिश्लोकसंख्याचकाइत्येतद्वक्तुमुपक्रमते समासइति अयंबुद्धिस्थोऽनुक्रमण्यध्यायःसचभारतस्यसमासःसंक्षेपपर्वेत्यर्थः अत्रप्रस्तुतेद्वितीयेऽध्यायेपर्वसंग्रहः एवंपौष्यादिभिश्चप्रयदर्शनांतैःसप्तदशभिश्चैवमेकोनविंशत्यापर्वभिरादिपर्व आदित्वंचास्यनप्राथम्यात्किंतुसर्वेषामादिरुत्पत्तिरिहकीर्त्यतइति एवंसभादीनामपिसंज्ञातत्तदेकैकार्थप्राधान्याद्बोध्या अत्रार्यसंग्रहः ।'आदौसभारण्यविराट्उद्यमेभीष्मेगुरौसूर्यजशल्यसौप्तिके । स्त्रीशांतिदानाश्वमखाश्रमस्थितौमौसल्ययान्युगमेखिलेषुच ॥ पर्वाणिधृ १८ त्यंक ९ नृप १६ वार्धी ४ द् ११ धी ५ भे ८ क १ केद् ४ त्रि ३ धीः ५॥ वार्द्धी ४ द्व १ द्वि २ त्रि ३ भू १ भू १ भू १ प्रामा ३ श्चेतिशतंक्रमात्'इति ८५ ८६ । ८७ । ८८ अत्रप्राधान्यतस्तत्तदाख्यानतात्पर्याणिगाणेश्यांसंगृहीतानि कुब्धवद्वृषवद्भूत्वाव्यन्नोयःसेवतेगुरुं । तंविद्यादेवताश्चानुगृह्णंतीत्याहपौष्यकृत् । खलोनप्रार्थनासाध्यःसचदैवेनताडितः । अभ्येतिमृदुतांपश्चादुत्तंकेतक्षकोयथा ८९ शास्त्रोल्लंघनतोवह्निपुलोमानाववापतुः । शापमृत्यूइतिपुनःपौलोमेतुर्यईरितं । लोकान्मंत्रान्महद्राचब्राह्मणेवीर्यमद्भुतं । तक्षकोयेनखेतस्थावित्यास्तीकेऽनुवर्णितं । अन्यायमपिमात्रोक्तंसद्योयोनानुतिष्ठति । तंभस्मीकुर्वतेविप्रावेदाश्चाद्विगर्णयथा । मिथ्यावादेनयेदासीकृतास्तत्संततिःस्वकां । संततिंनाशयत्येवगरुत्मानिवपन्नगान् । आयुर्हानिर्महान्शोकोहिंसायांचातिसंभ्रमः । हरेरिवभवंत्येवदारसक्तस्यदुर्मतेः । प्रजयापैतृकमृणंछेत्तुंदारान्करोतिचेत् । तदाजरत्कारुरिवकार्यंतिप्रव्रजेद्गृहात् '९० तत्त्वामृतंशास्त्रसिंधोःसमंलब्धंसुरासुरैः । आस्वादितंविष्णुभक्तैःसुरैर्नान्यैःस्त्रियाजितैः । देवपंक्तौसुधांलेभेदैत्योदेहच्छिदासमं । क्षुधितश्चित्तचक्षुर्भ्यांकाश्यामिवमहेश्वरात्' ९१ । ९२

हरिवंशस्ततःपर्वपुराणंखिलसंज्ञितम् ॥ विष्णुपर्वशिशोश्चर्याविष्णोःकंसवधस्तथा ८२ भविष्यपर्वचाप्युक्तंखिलेष्वेवाद्भुतंमहत् ॥
एतत्पर्वशतंपूर्णंव्यासेनोक्तंमहात्मना ८३ यथावत्सूतपुत्रेणलोमहर्षणिनाततः ॥ उक्तानिनैमिषारण्येपर्वाण्यष्टादशैवतु ८४
समासोभारतस्यायमत्रोक्तःपर्वसंग्रहः ॥ पौष्यंपौलोममास्तीकमादिरंशावतारणम् ८५ संभवोजतुवेश्माख्यंहिडिंबवधएवच ॥
तथाचैत्ररथंदेव्याःपांचाल्याश्चस्वयंवरः ८६ क्षात्रधर्मेणनिर्जित्यततोवैवाहिकंस्मृतम् ॥ विदुरागमनंचैवराज्यलंभस्तथैवच ८७
वनवासोऽर्जुनस्यापिसुभद्राहरणंततः ॥ हरणाहरणंचैवदहनंखांडवस्यच ८८ मयस्यदर्शनंचैवआदिपर्वणिकथ्यते ॥
पौष्येपर्वणिमाहात्म्यमुत्तंकस्योपवर्णितम् ८९ पौलोमेभृगुवंशस्यविस्तारःपरिकीर्तितः ॥ आस्तीकेसर्वनागानांगरुडस्यचसंभवः
९० क्षीरोदमथनंचैवजन्मोच्चैःश्रवसस्तथा ॥ यजतःसर्पसत्रेणराज्ञःपारिक्षितस्यच ९१ कथयमभिनिर्वृत्ताभरतानांमहात्मनाम् ॥
विविधाःसंभवाराज्ञामुक्ताःसंभवपर्वणि ९२



'स्त्रियामार्चतिसंतोऽपीऽत्युक्तंव्यासस्यजन्मनि ॥' देवासुरनरेष्वेवंसंतीत्यंशावतारणे ९३ अत्यल्पस्यापिपापस्यविपाकमतिदारुणं । अन्वभूतांचिरंब्रह्मन्नणीमांडव्यद्दुंदुभौ ९४ । ९५ शिष्टानांचेतसस्तुष्टिर्धर्मेप्रामाण्यमश्नुते ॥ शकुंतलामीहमानंदुष्यंतस्य मनोयथा ९६ पितुर्दुःखंहरन्पुत्रःश्रेयोलक्ष्मींचविंदति ॥ भीष्मवत्पूरुवन्मानात्पतंतिचययातिवत् ९७ । ९८ । ९९ १०० क्षेत्रबीजेविनाद्रोणधृष्टद्युम्नवपुर्जनिः ॥ केवलात्कर्मणइतिप्रोक्तंसंभवपर्वणि १ विषवार्यग्निभिर्लुब्धाघातयंतिस्मबांधवान् ॥ ईश्वरस्तानवत्येवेत्युक्तंजातुषपर्वणि २ । ३ । ४ । ५

अन्येषांचैवशूराणामृषेर्द्वैपायनस्यच ॥ अंशावतरणंचात्रदेवानांपरिकीर्तितम् ९३ दैत्यानांदानवानांचयक्षाणांचमहौजसाम् ॥ नागानामथसर्पाणांगंधर्वाणां
पतत्रिणाम् ९४ अन्येषांचैवभूतानांविविधानांसमुद्भवः ॥ महर्षेराश्रमपदेकण्वस्यचतपस्विनः ९५ शकुंतलायांदुष्यंताद्भरतश्चापिजज्ञिवान् ॥ यस्यलोकेषुना
म्नेदंप्रथितंभारतंकुलम् ९६ वसूनांपुनरुत्पत्तिर्भागीरथ्यांमहात्मनाम् ॥ शांतनोर्वेश्मनिपुनस्तेषांचारोहणंदिवि ९७ तेजोंशानांचसंपातोभीष्मस्याप्यत्रसंभवः॥
राज्यान्निवर्तनंतस्यब्रह्मचर्यव्रतेस्थितिः ९८ प्रतिज्ञापालनंचैवरक्षाचित्रांगदस्यच ॥ हतेचित्रांगदेचैवरक्षाभ्रातुर्यवीयसः ९९ विचित्रवीर्यस्यतथाराज्येसंप्रतिपा
दनम् ॥ धर्मस्यनृषुसंभूतिरणीमांडव्यशापजा १०० कृष्णद्वैपायनाच्चैवप्रसूतिर्वरदानजा ॥ धृतराष्ट्रस्यपांडोश्चपांडवानांचसंभवः १ वारणावतयात्रायांमंत्रो
दुर्योधनस्यच ॥ कूटस्यधार्तराष्ट्रेणप्रेषणंपांडवान्प्रति २ हितोपदेशश्चपथिधर्मराजस्यधीमतः ॥ विदुरेणकृतोयत्रहितार्थंम्लेच्छभाषया ३ विदुरस्यचवाक्येन
सुरुंगोपक्रमक्रिया ॥ निषाद्याःपंचपुत्रायाःसुप्तायाजतुवेश्मनि ४ पुरोचनस्यचात्रैवदहनंसंप्रकीर्तितम् ॥ पांडवानांवनेघोरेहिडिंबायाश्चदर्शनम् ५ तत्रैवचहि
डिंबस्यवधोभीमान्महाबलात् ॥ घटोत्कचस्यचोत्पत्तिरत्रैवपरिकीर्तिता ६ महर्षेर्दर्शनंचैवव्यासस्यामिततेजसः ॥ तदाज्ञयैकचक्रायांब्राह्मणस्यनिवेशने ७ अ
ज्ञातचर्ययावासोयत्रतेषांप्रकीर्तितः ॥ बकस्यनिधनंचैवनागराणांचविस्मयः ८ संभवश्चैवकृष्णायाधृष्टद्युम्नस्यचैवह ॥ ब्राह्मणात्समुपश्रुत्यव्यासवाक्यप्रचोदि
ताः ९ द्रौपदींप्रार्थयंतस्तेस्वयंवरदिदृक्षया ॥ पंचालानभितोजग्मुर्यत्रकौतूहलान्विताः १० अंगारपर्णंनिर्जित्यगंगाकूलेऽर्जुनस्तदा ॥ सख्यंकृत्वाततस्तेनत
स्मादेवचशुश्रुवे ११ तापत्यमथवासिष्ठमौर्वंचाख्यानमुत्तमम् ॥ भ्रातृभिःसहितःसर्वैःपंचालानभितोययौ १२

अविश्वास्याःस्त्रियःकामाद्घातयंत्यपिबांधवान् ॥ इतिदर्शितवान्व्यासोहिडिंबवधपर्वणि ६ । ७ यस्मिन्गेहेपुरेवापिवसेत्पुण्यतमोजनः ॥ उपकुर्यात्तमित्येवमुक्तंबकवधेऽपिच ८ । ९ । १० ब्राह्मणानुग्रहादेवक्षत्रंजयतिनान्यथा ॥ इतितापसदृष्टांतादाहचैत्ररथेमुनिः १२ सूर्यस्यकन्यांतपतींनष्टंराज्यंचलब्धवान् ॥ वसिष्ठस्यप्रसादेनराजासंवरणोयथा ॥ वसिष्ठस्यशतंपुत्रान्नाशयामासकौशिकः ॥ नैनंबबाधिरेब्रह्महत्यास्तास्तपसोबलात् ॥ प्राज्ञःखलार्दितोदेहंसंत्यक्ष्यतिनतुक्षमां ॥ नशशापवसिष्ठोहिपुत्रघ्नमपिकौशिकं ॥ कौशिकेकौर्यंतपसिराधेयेशौर्यंभीरुते ॥ स्त्रैष्ववाचिप्रायुर्यैबीजसंस्कारसंकरात् ॥ ब्राह्मणोगर्भसंस्थोऽपिमाननीयोमनीषिणां ॥ औवोंहिमातुरूरुस्थःक्षत्रसंघमचीकरत्' १२

'लोकवेदविरोधेऽपिमातुर्वाक्यंनलंघयेत् ॥ इत्येकस्यांरेमिरेऽमीपंचेत्युक्तंस्वयंवरे ॥ ननुवेदविरुद्धेयमेकस्याबहुभर्तृता ॥ नैकस्यैबहवोनैकाद्बोपतीइतिचश्रुती ॥ नैकस्यैबहवःसहपतयइति
तस्मान्नैकाद्बोपतीविंदतेइतिचश्रुतिविशेषः 'अग्नीन्पंचक्रमात्प्राप्यहव्यमेतिमनुष्वतां ॥ अग्नयस्त्वभिरर्कःक्ष्मापुरुषोयोषिदित्यपि ॥ अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायतेवृष्टि
र्वृष्टेरन्नंततःप्रजाः ॥ द्रोणोवह्निचतुष्कोत्थोयोषिदग्नेरभावतः ॥ अग्नित्रयोत्थितासीताभूत्थापित्रोरभावतः ॥ अग्निद्वयोत्थितादेवानस्पृशंतिक्षितिंहिते ॥ देवजाःपार्थमाद्रेयाभूप्रमग्निविवर्जिताः ॥
क्षिप्तमात्रेहविर्वह्नौमिथुनत्वमुपागतं ॥ एकाग्निजावतःपुत्रौद्रूपदस्यसुराधिकौ ॥ सर्वेसर्वात्मकादेवाविरजोवयवायतः ॥ सर्वेएवसमाःसर्वेऽनंताइतिहिवेदगीः ॥ नतेषांव्यभिचारोऽस्तिनचेत्सु
र्ययमौकथं ॥ पितापुत्रौसतींकुंतीमुपेयातांसुरोत्तमौ ॥ द्रौपदींदेवजांपार्थादेवजायदिभुंजते ॥ नतेषामत्रदोषोऽस्तिदेवाएवहितेस्वयं ॥ श्रूयतेनहिवैदेवान्पापंगच्छतिसर्वथा ॥ तस्माद्यज्ञे
देवभावंप्रार्थयीतनिरेनसं ॥ एतद्वैवाहिकेव्यासोनानाख्यानोपबृंहणैः ॥ दर्शयामासलोकानांसंशयस्यापनुत्तये १३ । १४ । १५ । १६ । १७ प्रणमंतिजिघांसंतोऽप्यनुकूलेविधात

पांचालनगरेचापिलक्ष्यंभित्त्वाधनंजयः ॥ द्रौपदींलब्धवानत्रमध्येसर्वमहीक्षिताम् १३ भीमसेनार्जुनौयत्रसंरब्धान्पृथिवीपतीन् ॥ शल्यकर्णौचतरसाजि
तवंतौमहामृधे १४ दृष्ट्वातयोश्चतद्वीर्यमप्रमेयममानुषम् ॥ शंकमानौपांडवांस्तान्रामकृष्णौमहामती १५ जग्मतुस्तैःसमागंतुंशालांभार्गववेश्मनि ॥
पंचानामेकपत्नीत्वेविमर्शोद्रुपदस्यच १६ पंचेंद्राणामुपाख्यानमत्रैवाद्भुतमुच्यते ॥ द्रौपद्यादेवविहितोविवाहश्चाप्यमानुषः १७ क्षत्तुश्चधार्तराष्ट्रैर्णप्रे
षणंपांडवान्प्रति ॥ विदुरस्यचसंप्राप्तिर्दर्शनंकेशवस्यच १८ खांडवप्रस्थवासश्चतथाराज्यार्धसर्जनम् ॥ नारदस्याज्ञयाचैवद्रौपद्याःसमयक्रिया १९ सुंदो
पसुंदयोस्तद्वदाख्यानंपरिकीर्तितम् ॥ अनंतरंचद्रौपद्यासहासीनंयुधिष्ठिरम् २० अनुप्रविश्यविप्रार्थेफाल्गुनोगृह्यचायुधम् ॥ मोक्षयित्वागृहंगत्वाविप्रार्थे
कृतनिश्चयः २१ समयंपालयन्वीरोवनंयत्रजगामह ॥ पार्थस्यवनवासेचउलूप्यापथिसंगमः २२ पुण्यतीर्थानुसंयानंबभ्रुवाहनजन्मच ॥ तत्रैवमोक्षया
मासपंचसोऽप्सरसःशुभाः २३ शापाद्ग्राहत्वमापन्नाब्राह्मणस्यतपस्विनः ॥ प्रभासतीर्थेपार्थेनकृष्णस्यचसमागमः २४ द्वारकायांसुभद्राचकाम
यानेनभामिनी ॥ वासुदेवस्यानुमतेप्राप्ताचैवकिरीटिना २५

रि ॥ पांडुपुत्रान्धार्तराष्ट्राइत्युक्तंविदुरागमे ॥ यान्खलादग्धुमिच्छंतितान्वर्धयतिकेशवः ॥ निरस्ताःपांडवादारान्राज्यंकीर्तिंचलेभिरे १८ । १९ एकात्मानोऽपिभिद्यंतेस्त्रीभिःसुंदोपसुं
दवत् ॥ तस्मात्सख्युरपिस्त्रीभिर्नसंभाषेतबुद्धिमान् ॥ विप्रार्थान्पालयेज्ज्ञात्वाप्यापदंद्वादशाब्दिकीं ॥ इतिदर्शितवान्व्यासआर्जुन्यातीर्थयात्रया २० । २१ । २२ । २३ । २४
नज्ञातीनांवचःप्रेक्ष्यंवरेश्रेयस्युपागते ॥ इतीवकृष्णोविजयंस्वस्वसारमहारयत् ॥ मातुलस्यसुतांपार्थौधर्मंत्तोभगिनींसतीं ॥ कथंजहारधर्मात्माऽपीतिचेत्तच्छृणुष्वमे ॥ भ्रातृस्वस्रोःसुतौभ्रातृ
स्वसारौयदिशौनक ॥ सप्तमादूर्ध्वमप्येषसंबंधश्छिद्यतांकथं ॥ तस्मात्तयोःस्वसृभ्रातृभावोभाक्तोविगोत्रयोः ॥ दांपत्यभावस्तुतयोर्मंत्रलिंगात्परिस्फुटः ॥ आयाहींद्रपथिभिरीळितेभिर्यज्ञ
मिमंनोभागधेयंजुषस्व ॥ तृप्तांजहुर्मातुलस्येवयोषाभागस्तेपैतृष्वसेयीवपामिव । योषापत्यंमातुलीयंवथाभागःपितृष्वसुः ॥ पुत्रस्यैवंवपांतेऽशंजुषस्वेंद्रेत्यृषिर्जगौ' २५ ॥ १७ ॥

'मानघ्नस्यापिजामातुर्मानंसंवर्द्धयेद्बुधः । स्वसुर्हेत्रेऽर्जुनायाधिदद्रुर्वित्तानिवृष्णयः २६ । २७ अग्निमप्यग्निमांद्याार्तंनरनारायणावृषी ॥ खांडवौषधिदानेननीरोगंचक्रतुर्यथा ॥ देवोऽपिदैत्यदुःखार्तोमानु
षादेस्तुकाकथा ॥ शरणीकरणीयोऽतःसर्वदुःखापहोहरिः' ॥ भुजंगस्याश्वसेनस्य २८ 'पित्र्याद्दृणादमुक्तस्यसकलंसुकृतंवृथा ॥ वियोनावप्यतःपुत्रान्जनयेन्मंदपालवत् ॥ शार्ङ्गकान्स्वतपोरक्ष
त्यागमाताऽर्जुनोमयं ॥ भवाग्निंतर्तुकामोऽतस्त्वीनितान्शरणंव्रजेत्' २९ । ३० चतुराशीतीतिदैर्घ्यमार्षम् । 'इत्यादिपर्वतात्पर्यंसंक्षेपेणोपवर्णितं' ३१ 'सभापर्वादितात्पर्यमुख्यतःकथ्यतेऽधुना ॥
दानवेंद्रेणतुष्टेनसभादत्ताऽद्भुताभुवि ॥ दिविदैवीसभायज्ञमाप्यातस्याःशताधिका ३२ ततःशतगुणाब्राह्मीलभ्याविष्णोःसमर्चनात् ॥ इत्युक्त्वानारदःपार्थंयज्ञेशार्चामचीकरत् ॥ बहूनांयो
वधयत्तस्तंछलेनापिनिर्दहेत् ॥ जरासंधवधेनेतद्दर्शितंमुनिनामुने ३३ वित्तार्जनंमखायैवमहतामितिदर्शयन् ॥ कृत्वेदिग्विजयादूर्ध्वंराजसूयक्रतुक्रियां ३४ तत्रैवार्घाभिहरणेविष्णुर्देवनर

गृहीत्वाहरणंप्राप्तेकृष्णेदेवाकीनंदने ॥ अभिमन्योःसुभद्रायांजन्मचोत्तमतेजसः २६ द्रौपद्यास्तनयानांचसंभवोऽनुप्रकीर्तितः ॥ विहारार्थंचगतयोःकृष्णयोर्यमु
नामनु २७ संप्राप्तिश्चक्रधनुषोःखांडवस्यचदाहनम् ॥ मयस्यमोक्षोज्वलनाद्भुजंगस्यचमोक्षणम् २८ महर्षेर्मंदपालस्यशार्ङ्ग्यांतनयसंभवः ॥ इत्येतदादिप
र्वोक्तंप्रथमंबहुविस्तरम् २९ अध्यायानांशतेद्वेतुसंख्यातेपरमर्षिणा ॥ सप्तविंशतिरध्यायाव्यासेनोत्तमतेजसा ३० अष्टौश्लोकसहस्राणिअष्टौश्लोकशतानिच
॥ श्लोकाश्चचतुराशीतिर्मुनिनोक्तामहात्मना ३१ द्वितीयंतुसभापर्वबहुवृत्तांतमुच्यते ॥ सभाक्रियापांडवानांकिंकराणांचदर्शनम् ३५ लोकपालसभा
ख्यानंनारदादेवदर्शिनः ॥ राजसूयस्यचारंभोजरासंधवधस्तथा ३३ गिरिव्रजेनिरुद्धानांराज्ञांकृष्णेनमोक्षणम् ॥ तथादिग्विजयोऽत्रैवपांडवानांप्रकीर्ति
तः ३४ राज्ञामागमनंचैवसार्हणानांमहाक्रतौ ॥ राजसूयेऽर्घसंवादेशिशुपालवधस्तथा ३५ यज्ञेविभूतिंतांदृष्ट्वादुःखामर्षान्वितस्यच ॥ दुर्योधनस्या
वहासोभीमेनचसभातले ३६ यत्रास्यमन्युरुद्भूतोयेनद्यूतमकारयत् ॥ यत्रधर्मसुतंद्यूतेशकुनिःकितवोऽजयत् ३७ यत्रद्यूतार्णवेमग्नांद्रौपदींनौरिवार्णवात् ॥ धृत
राष्ट्रोमहाप्राज्ञःस्नुषांपरमदुःखिताम् ३८ तारयामासतांस्तीर्णान्ज्ञात्वादुर्योधनोनृपः ॥ पुनरेवततोद्यूतेसमाह्वयतपांडवान् ३९ जित्वासवनवासायप्रेषयामासतां
स्ततः ॥ एतत्सर्वंसभापर्वसमाख्यातंमहात्मना ४० अध्यायाःसप्ततिर्ज्ञेयास्तथाचाष्टौप्रसंख्यया ॥ श्लोकानांद्विसहस्रेतुपंचश्लोकशतानिच ४१ श्लोकाश्चैकादश
ज्ञेयाःपर्वण्यस्मिन्द्विजोत्तमाः ॥ अतःपरंतृतीयंतुज्ञेयमारण्यकंमहत् ४२ वनवासंप्रयातेषुपांडवेषुमहात्मसु ॥ पौरानुगमनंचैवधर्मपुत्रस्यधीमतः ४३

र्यंषु ॥ आदौपूज्योऽथतद्वेष्टासद्योनश्येदितीरितं ॥ गोप्यःकामाद्भयात्कंसोद्वेषाच्चैद्यादयोनृपाः ॥ तीव्रध्यानाद्धरेःसाम्यंलेभिरेकीटभृंगवत् ३५ नतथाशूलयक्ष्माद्याःपीडयंतिगदानरा
न् ॥ यथापरेषामुत्कर्षःपापिनंधार्तराष्ट्रवत्' ३६ कितवोद्यूतकारः ३७ द्रौपदींतारयामासेत्युत्तरेणान्वयः । 'नवात्योनांतरःशत्रुर्बाधतेभगवज्जनं ॥ क्रोधदुःशासनौकृष्णामापद्यपिनते
रतुः ३८ ज्ञात्वापिपरमाहात्म्यंनखलःखलतांत्यजेत् ॥ दृष्ट्वापिकृष्णमहात्म्यंनैवाशाम्यत्सुयोधनः' ॥ द्यूतेद्यूतनिमित्तं ३९ 'सत्यंसतांमहान्पाशोयेनबद्धाःपदात्पदं ॥ वंचिताअपिनो
चेलुःसमर्थाअपिपांडवाः' ४० । ४१ । ४२ पौरानुगमनंपौरकर्तृकमनुगमनं ४३

'विमार्थिभास्करंभेजेनतुराज्यायधर्मराट् ॥ धर्मायाभ्यर्थयेदेवंनराज्यायेतिदर्शयन् ॥ प्रभ्राजितःपथिरिपुंयद्धन्यान्मंगलायतत् ॥ पांडवानांप्रवसतांकिर्मीरोन्मथनंयथा ४४ उपदेशोहिमूर्खा णांप्रकोपायनशांतये ॥ भ्रातरंपथ्यवक्तारंधृतराष्ट्रोन्यवासयत् ' ४५ । ४६ । ४७ । ४८ शत्रुस्तवऊरूभेत्स्यतीतिशापोत्सर्गः ४९ अत्रधृतराष्ट्रसमीपेकथितइतिशेषः ५० निकृत्या



अन्नौषधीनांचकृतेपांडवेनमहात्मना ॥ द्विजानांभरणार्थंचकृतमाराधनंरवेः ४४ धौम्योपदेशात्तिग्मांशुप्रसादादन्नसंभवः ॥ हितंचब्रुवतःक्षत्तुःपरित्यागोंऽबिका
सुतात् ४५ त्यक्तस्यपांडुपुत्राणांसमीपगमनंतथा ॥ पुनरागमनंचैवधृतराष्ट्रस्यशासनात् ४६ कर्णप्रोत्साहनाच्चैवधार्त्तराष्ट्रस्यदुर्मतेः ॥ वनस्थान्पांडवान्हंतुंमं
त्रोदुर्योधनस्यच ४७ तंदुष्टभावंविज्ञायव्यासस्यागमनंद्रुतम् ॥ निर्याणप्रतिषेधश्चसुरभ्याख्यानमेवच ४८ मैत्रेयागमनंचात्रराज्ञश्चैवानुशासनम् ॥ शा
पोत्सर्गश्चतेनैवराज्ञोदुर्योधनस्यच ४९ किर्मीरस्यवधश्चात्रभीमसेनेनसंयुगे ॥ वृष्णीनामागमश्चात्रपंचालानांचसर्वशः ५० श्रुत्वाशकुनिनाद्यूतेनिकृत्या
निर्जितांश्चतान् ॥ क्रुद्धस्यानुप्रशमनंहरेश्चैवकिरीटिना ५१ परिदेवनंचपांचाल्यावासुदेवस्यसन्निधौ ॥ आश्वासनंचकृष्णेनदुःखार्तायाःप्रकीर्तितम् ५२
तथासौभवधाख्यानमत्रैवोक्तंमहर्षिणा ॥ सुभद्रायाःसपुत्रायाःकृष्णेनद्वारकांपुरीम् ५३ नयनंद्रौपदेयानांधृष्टद्युम्नेनचैवह ॥ प्रवेशःपांडवेयानांरम्येद्वैतव
नेततः ५४ धर्मराजस्यचात्रैवसंवादःकृष्णयासह ॥ संवादश्चतथाराज्ञाभीमस्यापिप्रकीर्तितः ५५ समीपंपांडुपुत्राणांव्यासस्यागमनंतथा ॥ प्रति
स्मृत्याथविद्यायादानंराज्ञोमहर्षिणा ५६ गमनंकाम्यकेचापिव्यासेप्रतिगतेततः ॥ अस्त्रहेतोर्विवासश्चपार्थस्यामिततेजसः ५७ महादेवेनयुद्धंचकिरा
तवपुषासह ॥ दर्शनंलोकपालानामस्त्रप्राप्तिस्तथैवच ५८ महेंद्रलोकगमनमस्त्रार्थेचकिरीटिनः ॥ यत्रचिंतासमुत्पन्नाधृतराष्ट्रस्यभूयसी ५९ दर्शनं
बृहदश्वस्यमहर्षेर्भावितात्मनः ॥ युधिष्ठिरस्यचार्तस्यव्यसनंपरिदेवनम् ६० नलोपाख्यानमत्रैवधर्मिष्ठंकरुणोदयम् ॥ दमयंत्याःस्थितिर्यत्रनलस्यचरि
तंतथा ६१ तथाऽक्षहृदयप्राप्तिस्तस्मादेवमहर्षितः ॥ लोमशस्यागमस्तत्रस्वर्गात्पांडुसुतान्प्रति ६२ वनवासगतानांचपांडवानांमहात्मनाम् ॥ स्व
र्गेप्रवृत्तिराख्यातालोमशेनार्जुनस्यवै ६३ संदेशादर्जुनस्यात्रतीर्थाभिगमनक्रिया ॥ तीर्थानांचफलप्राप्तिःपुण्यत्वंचापिकीर्तितम् ६४ पुलस्त्यतीर्थयात्रा
चनारदेनमहर्षिणा ॥ तीर्थयात्राचतत्रैवपांडवानांमहात्मनां ६५ कर्णस्यपरिमोक्षोऽत्रकुंडलाभ्यांपुरंदरात् ॥ तथायज्ञविभूतिश्चगयस्यात्रप्रकीर्तिता ६६ आ
गस्त्यमपिचाख्यानंयत्रवातापिभक्षणम् ॥ लोपामुद्राभिगमनमपत्यार्थमृषेस्तथा ६७

छद्मेन ५१ परिदेवनंविलापः ५२ महर्षिणाकृष्णेन ५३ । ५४ । ५५ । ५६ । ५७ 'देवतासुप्रसन्नासुदेवशत्रून्विनाशयेत् ॥ इतीवदेवैर्दत्तास्त्रोनिर्जघानार्जुनोऽसुरान् ॥ अकामे कामिनीशापोदेहयुस्येकचिद्भवेत् ॥ पार्थस्येवोर्वशीशापःप्रच्छन्नवासमीप्सतः' ५८ । ५९ व्यसनंद्यूतजमनर्थं ६० 'स्थितिर्विपद्यपिसतांमर्यादामतिपालनं ॥ दुःखेदुःखाधिकान्पश्येत्तेनशो कोऽपनीयते ॥ इतीवश्राविर्तोराजानलोपाख्यानमद्भुतं' ६१ । ६२ स्वर्गेप्रवृत्तिःस्वर्गीयवृत्तांतः ६३ । ६४ । ६५ । ६६ ऋषेरगस्त्यस्य ६७



'क्रोधीपुत्रान्कलत्रंचहंतिलोकाश्चभूरिशः ॥ जमदग्निःसपुत्रोऽत्रनिदर्शनमुदीरितं १६८ । ६९ देवत्वंदेवतानांहिब्राह्मण्याच्च्यवनोयतः ॥ शर्यातियज्ञेनासत्यौकृतवान्सोमपायिनौ' । सोमस्यपी तंपानंतद्वंतौसोमपीतिनौ ७० । ७१ पुत्रेणपशुभूतेन । 'याजकोनरकंयातिनयाज्यःपापमाचरन् ॥ जंतुंहत्वासोमकायशतंपुत्रान्ददद्यथा' ७२ अजिज्ञासत्परीक्षितवान् 'उत्कृत्यापिस्वमांसा निदत्त्वावाप्यखिलंवपुः ॥ शिबिःकपोतमिवचत्रायेतशरणागतं ७३ । ७४ नैयायिकानांमुख्येनयुक्तिरेवबलीयसी'नतुश्रुतिरितिमन्यमानेन ७५ सागरंप्राप्तंसागरगर्तंपितरंकहोडं ऋषिरष्टावक्रः ।

ऋश्यशृंगस्यचरितंकौमारब्रह्मचारिणः ॥ जामदग्न्यस्यरामस्यचरितंभूरितेजसः १६८ कार्तवीर्यवधोयत्रहैहयानांचवर्ण्यते ॥ प्रभासतीर्थेपांडूनांवृष्णिभिश्चस
मागमः ६९ सौकन्यमपिचाख्यानंच्यवनोयत्रभार्गवः ॥ शर्यातियज्ञेनासत्यौकृतवान्सोमपीतिनौ ७० ताभ्यांचयत्रसमुनिर्यौवनंप्रतिपादितः ॥ मांधा
तुश्चाप्युपाख्यानंराज्ञोऽत्रैवप्रकीर्तितम् ७१ जंतूपाख्यानमत्रैवयत्रपुत्रेणसोमकः ॥ पुत्रार्थमयजद्राजालेभेपुत्रशतंचसः ७२ ततःश्येनकपोतीयमुपाख्यान
मनुत्तमम् ॥ इंद्राग्नीयत्रधर्मश्चाप्यजिज्ञासच्छिबिंनृपम् ७३ अष्टावक्रीयमत्रैवविवादोयत्रबंदिना ॥ अष्टावक्रस्यविप्रर्षेर्जनकस्याध्वरेऽभवत् ७४ नैयायिका
नांमुख्येनवरुणस्यात्मजेनच ॥ पराजितोयत्रबंदीविवादेनमहात्मना ७५ विजित्यसागरंप्राप्तंपितरंलब्धवानृषिः ॥ यवक्रीतस्यचाख्यानंरैभ्यस्यचमहा
त्मनः ॥ गंधमादनयात्राचवासोनारायणाश्रमे ७६ नियुक्तोभीमसेनश्चद्रौपद्यागंधमादने ॥ व्रजन्पथिमहाबाहुर्दृष्टवान्पवनात्मजम् ७७ कदलीषंडमध्य
स्थंहनूमंतंमहाबलम् ॥ यत्रसौगंधिकार्थेऽसौनलिनींतामधर्षयत् ७८ यत्रास्ययुद्धमभवत्सुमहद्राक्षसैःसह ॥ यक्षैश्चैवमहावीर्यैर्मणिमत्प्रमुखैस्तथा ७९ ज
टासुरस्यचवधोराक्षसस्यवृकोदरात् ॥ वृषपर्वणोराजर्षेस्ततोऽभिगमनंस्मृतम् १८० आर्ष्टिषेणाश्रमेचैषांगमनंवासएवच ॥ प्रोत्साहनंचपांचाल्याभीमस्या
त्रमहात्मनः ८१ कैलासारोहणंप्रोक्तंयत्रयक्षैर्बलोत्कटैः ॥ युद्धमासीन्महाघोरंमणिमत्प्रमुखैःसह ८२ समागमश्चपांडूनांयत्रवैश्रवणेनच ॥ समागमश्चा
र्जुनस्यतत्रैवभ्रातृभिःसह ८३ अवाप्यदिव्यान्यस्त्राणिगुर्वर्थंसव्यसाचिना ॥ निवातकवचैर्युद्धंहिरण्यपुरवासिभिः ८४ निवातकवचैर्घोरैर्दानवैःसुरशत्रु
भिः ॥ पौलोमैःकालकेयैश्चयत्रयुद्धंकिरीटिनः ८५ वधश्चैषांसमाख्यातोराज्ञस्तेनैवधीमता ॥ अस्त्रसंदर्शनारंभोधर्मराजस्यसंनिधौ ८६ पार्थस्यप्रतिषेधश्च
नारदेनसुरर्षिणा ॥ अवरोहणंपुनश्चैवपांडूनांगंधमादनात् ८७ भीमस्यग्रहणंचात्रपर्वताभोगवर्ष्मणा ॥ भुजगेंद्रेणबलिनातस्मिन्सुगहनेवने ८८
अमोक्षयद्यत्रचैनंप्रश्नानुक्त्वायुधिष्ठिरः ॥ काम्यकागमनंचैवपुनस्तेषांमहात्मनाम् १८९

'नवेदंयुक्तितोलभ्यंनचवेदोगुरुंविना ॥ अष्टावक्रयवक्रीतकथाभ्यामे तदीरितं ७६ निर्गुणःपरमात्माऽयंदेहंव्याप्यावतिष्ठते ॥ इत्युक्ताहकपींद्रायनावमन्येनलंघये' ७७ सौगंधिकार्थेकल्हारार्थे । 'सौगंधिकंतुकल्हारेपद्मरागेऽपिकत्तृणे'इतिमेदिनी । नलिनींपुष्करिणीं अधर्षयदाकुलीकृतवान् ७८ । ७९ 'तीर्थयात्राखलवधौसमानावितिदर्शयन् ॥ पपाठतीर्थयात्रांतेजटासुरवधादिकं' ८० । ८१ । ८२ । ८३ । ८४ । ८५ राज्ञोऽग्रइतिशेषः तेनैवार्जुनेनैवएषांदानवानां वधआख्यातः ८६ । ८७ 'शारीराद्बलतोब्रह्मन्बलंवैर्यमहत्तमं । भीमंव्यजगरग्रस्तंधर्मराजोव्यमोचयत्' ॥ पर्वतवत्आभोगःपरिपूर्णत्वंयस्यतादृशंवर्ष्मशरीरंयस्यतेनपर्वततुल्येनेत्यर्थः ८८ । १८९

१९० समास्यायांसहोपवेशने ९१ । ९२ 'यावत्कीर्तिरकीर्तिर्वातावत्स्वर्नरकेऽथवा ॥ पुमानस्तीतिजानीयादिंद्रद्युम्ननिदर्शनात् ९३ पित्रोःशुश्रूषयाव्याधःसिद्धःपत्युःपतिव्रता ॥ सिद्धश्चेतिब्राह्मणा वह्नेर्योगिनस्त्वात्मसेवया ॥ पतिव्रतानांधर्मश्चद्रौपदीसत्यभामयोः ॥ संवादादधिगंतव्यःसैव्यास्तासांसुखावहाः ९४ । ९५ साधूनभिबुभूषुर्हिस्वयमेवाभिभूयते ॥ इतिसंदर्शयन्नाहघोषया यात्रांमहामुनिः ॥ नदेवब्राह्मणार्थेऽपिहिंसावह्वीप्रशस्यते ॥ इतिसंदर्शयन्नाहमृगस्वप्ननिदर्शनं ९६ व्रीहिद्रौणिकदृष्टांताद्वृत्तिशुद्धोऽतिथिप्रियः ॥ अत्यल्पेनापिदानेनसिद्ध्यतीत्येतदीरितं ९७ दौर्वाससेतुसार्वात्म्यंकारुण्यंचेरितंहरेः ॥ तत्तृप्त्याहिजगत्तृप्तमत्यल्पेनापितृप्यतः' ९८ भीमभियंकरः भीमःपांडवः पंचसटमितिपाठेऽपिसएवार्थः 'परस्त्रीस्पर्शमात्रेणजयद्रथदशास्ययोः ।

तत्रस्थांश्चपुनर्द्रष्टुंपांडवान्पुरुषर्षभान् ॥ वासुदेवस्यागमनमत्रैवपरिकीर्तितम् १९० मार्कंडेयसमास्यायामुपाख्यानानिसर्वशः ॥ पृथोर्वैन्यस्ययत्रोक्तमा ख्यानंपरमर्षिणा ९१ संवादश्चसरस्वत्यास्तार्क्ष्यर्षेःसुमहात्मनः ॥ मत्स्योपाख्यानमत्रैवप्रोच्यतेतदनंतरम् ९२ मार्कंडेयसमास्याचपुराणंपरिकीर्त्यते ॥ ऐंद्रद्युम्नमुपाख्यानंधौंधुमारंतथैवच ९३ पतिव्रतायाश्चाख्यानंतथैवांगिरसंस्मृतम् ॥ द्रौपद्याःकीर्तितश्चात्रसंवादःसत्यभामया ९४ पुनर्द्वैतवनंचैवपांडवाः समुपागताः ॥ घोषयात्राचगंधर्वैर्यत्रबद्धःसुयोधनः ९५ ह्रियमाणस्तुमंदात्मामोक्षितोऽसौकिरीटिना ॥ धर्मराजस्यचात्रैवमृगस्वप्ननिदर्शनात् ९६ का म्यकेकाननश्रेष्ठेपुनर्गमनमुच्यते ॥ व्रीहिद्रौणिकमाख्यानमत्रैवबहुविस्तरम् ९७ दुर्वाससोऽप्युपाख्यानमत्रैवपरिकीर्तितम् ॥ जयद्रथेनापहारोद्रौपद्याश्चा श्रमांतरात् ९८ यत्रैनमन्वयाद्भीमोवायुवेगसमोजवे ॥ चक्रेचैनंपंचशिखंयत्रभीमोमहाबलः ९९ रामायणमुपाख्यानमत्रैवबहुविस्तरम् ॥ यत्ररामेणवि क्रम्यनिहतोरावणोयुधि २०० सावित्र्याश्चाप्युपाख्यानमत्रैवपरिकीर्तितम् ॥ कर्णस्यपरिमोक्षोऽत्रकुंडलाभ्यांपुरंदरात् १ यत्रास्यशक्तिंतुष्टोऽसावदादेकव धायच ॥ आरणेयमुपाख्यानंयत्रधर्मोऽन्वशात्सुतम् २ जग्मुर्लब्धवरायत्रपांडवाःपश्चिमांदिशम् ॥ एतदारण्यकंपर्वतृतीयंपरिकीर्तितम् ३ अत्राध्यायश तेद्वेतुसंख्ययापरिकीर्तिते ॥ एकोनसप्ततिश्चैवतथाध्यायाःप्रकीर्तिताः ४ एकादशसहस्राणिश्लोकानांषट्शतानिच ॥ चतुःषष्टिस्तथाश्लोकाःपर्व ण्यस्मिन्प्रकीर्तिताः ५ अतःपरंनिबोधेदंवैराटंपर्वविस्तरम् ॥ विराटनगरेगत्वाश्मशानेविपुलांशमीम् ६ दृष्ट्वासन्निदधुस्तत्रपांडवाह्यायुधान्युत ॥ यत्रप्रविश्यनगरंछद्मनान्यवसंस्तुते ७ पांचालींप्रार्थयानस्यकामोपहतचेतसः ॥ दुष्टात्मनोवधोयत्रकीचकस्यवृकोदरात् ८ पांडवान्वेषणार्थंचरा ज्ञोदुर्योधनस्यच ॥ चाराःप्रस्थापिताश्चात्रनिपुणाःसर्वतोदिशम् ९

आयःपंचसटोजातःसकुटुंबोहतःपरः ९९ कार्यार्थीमित्रमन्विच्छन्नृशंसःस्यान्महानपि ॥ जघानवालिनंरामोनिर्दोषमपिसाहसात् ॥ पतिव्रतायामाहात्म्यंकुलद्वयसुखावहं ॥ भर्तृमृत्युहरंचैवसा वित्रीहनिदर्शनं' परिमोक्षोवियोगः १ 'कर्णोदातापात्रमिंद्रोदेयंस्वात्मसमर्पणं ॥ शक्त्याविनिमयात्तजौधर्मोनाप्यभवद्रिपुं' ॥ आरणेयंअरणीहरणं धर्मेणमृगरूपिणा । 'सर्वत्रचोदितार्थो नामुपसंहारवर्णनं ॥ आरणेयेधर्मपार्थसंवादव्याजतःकृतं ॥ आदिरेकोनविंशत्यापर्वभिर्नवभिःसभा ॥ आरण्यकंषोडशभिर्धर्ममेवन्यरूपयत् ३ । ४ । ५ धर्मउक्तस्त्रिभिःसेवानीतियुद्धादिहेतुकं ॥ शोकभोगफलंचार्थवाक्यिपर्वभिरष्टभिः ६ । ७ विराटेप्रथमंमोक्षःसेवाधर्मःप्रवेशने ॥ तत्रापिखलबाधास्तीत्युक्तंकीचकदारणे' ८ । ९



२१० । ११ 'पौरुषंदर्शयेत्त्वैवस्वामिनेगोत्रनामनी ॥ प्रकीर्तयेदितिमोचेमुनिर्गोग्रहपर्वणि १२ । १३ धर्मेणैवापदंतीर्त्वापरंसौभाग्यमश्नुते ॥ अभिमन्योर्विवाहाख्येपर्वण्येतत्प्रदर्शितं' १४ । १५ १६ । १७ । १८ । १९ । २० मंदात्मास्वार्थानभिज्ञः । दुर्मतिर्विक्षिप्तचित्तः । 'एकएवसहायोऽस्मीशःकिंसैन्यकोटिभिः ॥ इतिवव्रेऽर्जुनःकृष्णंनसैन्यंधार्तराष्ट्रवत्' २१ । २२ । २३ २४ वैचित्रवीर्यस्यपांडवस्यपुरोधसःसकाशात्वचःइंद्रविजयतात्पर्यंपुरोहितप्रेषणौचित्यंचसमादायाभ्युपेत्यसंजयंप्रेषयामासेत्युत्तरेणसंबंधः । 'भवेत्सहायवान्पूर्वंसाम्नाशत्रुमथार्थयेत् ॥ उद्योग

नचप्रवृत्तिस्तैर्लब्धापांडवानांमहात्मनाम् ॥ गोग्रहश्चविराटस्यत्रिगर्तैःप्रथमंकृतः २१० यत्रास्ययुद्धंसुमहत्तैरासीह्लोमहर्षणम् ॥ ह्रियमाणश्चयत्रासौभीमसेनेनमो क्षितः ११ गोधनंचविराटस्यमोक्षितंयत्रपांडवैः ॥ अनंतरंचकुरुभिस्तस्यगोग्रहणंकृतम् १२ समस्तायत्रपार्थेनानिर्जिताःकुरवोयुधि ॥ प्रत्याहृतंगोधनंचवि क्रमेणकिरीटिना १३ विराटेनोत्तरादत्तास्नुषायत्रकिरीटिनः ॥ अभिमन्युंसमुद्दिश्यसौभद्रमरिघातिनम् १४ चतुर्थमेतद्विपुलंवैराटंपर्ववर्णितम् ॥ अत्रापि परिसंख्याताअध्यायाःपरमर्षिणा १५ सप्तषष्टिरथोपूर्णाश्लोकानामपिमेशृणु ॥ श्लोकानांद्विसहस्रंतुश्लोकाःपंचाशदेवतु १६ उक्तानिवेदविदुषापर्वण्यस्मिन्मह र्षिणा ॥ उद्योगपर्वविज्ञेयंपंचमंशृण्वतःपरम् १७ उपप्लव्येनिविष्टेषुपांडवेषुजिगीषया ॥ दुर्योधनोऽर्जुनश्चैववासुदेवमुपस्थितौ १८ सहाय्यमस्मिन्समरेभवान्नौ कर्तुमर्हति ॥ इत्युक्तेवचनेकृष्णोयत्रोवाचमहामतिः १९ अयुध्यमानमात्मानंमंत्रिणंपुरुषर्षभौ ॥ अक्षौहिणींवासैन्यस्यकस्यकिंवाददाम्यहम् २२० वव्रेदुर्योध नःसैन्यंमंदात्मायत्रदुर्मतिः ॥ अयुध्यमानंसचिवंवव्रेकृष्णंधनंजयः २१ मद्रराजंचराजानमायांतंपांडवान्प्रति ॥ उपहारैर्वंचयित्वावर्त्मन्येवसुयोधनः २२ वरदं तंवरंवव्रेसाहाय्यंक्रियतांमम ॥ शल्यस्तस्मैप्रतिश्रुत्यजगामोद्दिश्यपांडवान् २३ शांतिपूर्वंचाकथयद्यत्रेंद्रविजयंनृपः ॥ पुरोहितप्रेषणंचपांडवैःकौरवान्प्रति २४ वैचित्रवीर्यस्यवचःसमादायपुरोधसः ॥ तथेंद्रविजयंचापियानंचैवपुरोधसः २५ संजयंप्रेषयामासशमार्थीपांडवान्प्रति ॥ यत्रदूतंमहाराजोधृतराष्ट्रःप्रताप वान् २६ श्रुत्वाचपांडवान्यत्रवासुदेवपुरोगमान् ॥ प्रजागरःसंप्रजज्ञेधृतराष्ट्रस्यचिंतया २७ विदुरोयत्रवाक्यानिविचित्राणिहितानिच ॥ श्रावयामासराजानंधृ तराष्ट्रंमनीषिणम् २८ तथासनत्सुजातेनयत्राध्यात्ममनुत्तमम् ॥ मनस्तापान्वितोराजाश्रावितःशोकलालसः २९ प्रभातेराजसमितौसंजयोयत्रवाविभो ॥ ऐकात्म्यंवासुदेवस्यप्रोक्तवानर्जुनस्यच २३० यत्रकृष्णोदयापन्नःसंधिमिच्छन्महामतिः ॥ स्वयमागाच्छमंकर्तुंनगरंनागसाह्वयम् ३१ प्रत्याख्यानंचकृष्ण स्यराज्ञादुर्योधनेनवै ॥ शमार्थेयाचमानस्यपक्षयोरुभयोर्हितम् २३२

संजयप्रेष्यपर्वभ्यामेतदीरितं' २५ । २६ । २७ । २८ शोकेलालसाआसक्तिर्यस्यसतथाभूतस्तापहरमध्यात्मंश्रावितोऽपितापंनजहावितिभावः ॥ 'ननिद्रातिपरार्थार्थीनचबुध्यतिबोधितः ॥ इतिप्रजागरेसानत्सुजातेचापिवर्णितं' २९ समितौसभायां ऐकात्म्यमेकचित्तत्वं वस्तुतस्तुयत्रकुत्रचित्प्रसंगेवासुदेवार्जुनयोर्जीवेशयोरैकात्म्यमभेदमेवशास्तिस्मसंजयः तज्ज्ञानंविनाराज्ञःशोकतरणासंभ वात् राजातुमोहत्वादविलोकपरतयैवतमर्थंनिगृह्णातीतिनास्यशोकोनश्यतीतिशास्त्रहृदयं २३० संधिमविरोधं नागोहस्तीतेनसमानसंज्ञं हस्तिनापुरमित्यर्थः ३१ । २३२

३३ । ३४ दुष्टंकृष्णनिग्रहरूपं योगेश्वरत्वंवैश्वरूप्यं । 'ऐश्वर्यंवैश्वरूप्यंचहरेःश्रुत्वाऽवलोक्यच ॥ दुर्योधनोनमेनेऽस्यवाक्यंम्लेच्छःश्रुतेरिव' ३५ अनुमंत्रितउपजापितः । उपायपूर्वंभे
दपूर्वं । शौटीर्यात्गर्वात् । 'अपित्रैलोक्यराज्यस्यहेतोर्विश्वस्तमाश्रितं । नत्यजेद्देहनाशेऽपीत्युक्तंकर्णोपजापतः ३६ । ३७ । ३८ । ३९ निर्दत्यपसंतोऽपिसतोबैडालव्रतिकाइति ॥ युधिष्ठिरमि
वोलूकइत्यूचेबादरायणः ४० यद्बलाज्जयमाशास्तेधार्तराष्ट्रस्तमर्कजं । प्राहार्द्धरथइत्युच्चैर्भीष्मस्तेजोवधेप्सया । नकिंचित्तपसोऽसाध्यंयतोजन्मांतरंविना । पुंस्त्वंशिखंडिनीप्रापेत्यंबोपाख्या

दंभोद्भवस्यचाख्यानमत्रैवपरिकीर्तितम् ॥ वरान्वेषणमत्रैवमातलेश्चमहात्मनः ३३ महर्षेश्चापिचरितंकथितंगालवस्यवै ॥ विदुलायाश्चपुत्रस्यप्रोक्तंचाप्य
नुशासनम् ३४ कर्णदुर्योधनादीनांदुष्टंविज्ञायमंत्रितम् ॥ योगेश्वरत्वंकृष्णेनयत्रराज्ञांप्रदर्शितम् ३५ रथमारोप्यकृष्णेनयत्रकर्णोऽनुमंत्रितः ॥ उपायपूर्वंशौटी
र्यात्प्रत्याख्यातश्चतेनसः ३६ आगम्यहास्तिनपुराडुपप्लव्यमरिंदमः ॥ पांडवानांयथावृत्तंसर्वमाख्यातवान्हरिः ३७ तेतस्यवचनंश्रुत्वामंत्रयित्वाचय
द्धितम् ॥ सांग्रामिकंततःसर्वंसज्जंचक्रुःपरंतपाः ३८ ततोयुद्धायनिर्यातानराश्वरथदंतिनः ॥ नगराद्धास्तिनपुराद्बलसंख्यानमेवच ३९ यत्रराज्ञाह्युलूकस्य
प्रेषणंपांडवान्प्रति ॥ श्वोभाविनिमहायुद्धेदौत्येनकृतवान्प्रभुः २४० रथातिरथसंख्यानमंबोपाख्यानमेवच ॥ एतत्सुबहुवृत्तांतंपंचमंपर्वभारते ४१ उद्योग
पर्वनिर्दिष्टंसंधिविग्रहमिश्रितम् ॥ अध्यायानांशतंप्रोक्तंषडशीतिर्महर्षिणा ४२ श्लोकानांषट्सहस्राणितावंत्येवशतानिच ॥ श्लोकाश्चनवतिःप्रोक्तास्तथैवाष्टौ
महात्मना ४३ व्यासेनोदारमतिनापर्वण्यस्मिंस्तपोधनाः ॥ अतःपरंविचित्रार्थंभीष्मपर्वप्रचक्षते ४४ जंबूखंडविनिर्माणंयत्रोक्तंसंजयेनह ॥ यत्रयौधिष्ठिरंसै
न्यंविषादमगमत्परम् ४५ यत्रयुद्धमभूद्घोरंदशाहानिसुदारुणम् ॥ कश्मलंयत्रपार्थस्यवासुदेवोमहामतिः ४६ मोहजंनाशयामासहेतुभिर्मोक्षदर्शिभिः ॥ समी
क्ष्याधोक्षजःक्षिप्रंयुधिष्ठिरहितेरतः ४७ रथादाप्लुत्यवेगेनस्वयंकृष्णउदारधीः ॥ प्रतोदपाणिराधावद्भीष्मंहंतुंव्यपेतभीः ४८ वाक्यप्रतोदाभिहतोयत्रकृष्णेनपां
डवः ॥ गांडीवधन्वासमरेसर्वशस्त्रभृतांवरः ४९ शिखंडिनंपुरस्कृत्ययत्रपार्थोमहाधनुः ॥ विनिघ्नन्निशितैर्बाणैरथाद्भीष्ममपातयत् २५० शरतल्पगतश्चैवभी
ष्मोयत्रबभूवह ॥ षष्ठमेतत्समाख्यातंभारतेपर्वविस्तृतम् ५१ अध्यायानांशतंप्रोक्तंतथासप्तदशापरे ॥ पंचश्लोकसहस्राणिसंख्ययाऽष्टौशतानिच ५२ श्लोकाश्च
चतुराशीतिरस्मिन्पर्वणिकीर्तिताः ॥ व्यासेनवेदविदुषासंख्याताभीष्मपर्वणि ५३

नमीरितं ' ४१ संधिविग्रहमिश्रितंकृष्णदौत्येनसंधिरुलूकदौत्येनविग्रहस्ताभ्यांमिश्रितं ४२ । ४३ । ४४ । ४५ 'भ्रश्येत्पतिंविनासेनाकूर्मामलकमुष्टिवत् । इतिसेनापतिंभीष्मंचक्रेकौरवनंदनः ।
वैराजदर्शनादूर्ध्वंपरब्रह्मान्ववेक्षणं । इतीयजंबूखंडादिगीतायाःपूर्वमीरितं' । कश्मलंविषादं ४६ मोहजंममतोत्थंसमीक्ष्यभीष्मस्यदुर्जयत्वमितिशेषः ४७ 'श्रुतिःस्मृतेर्बलवतीभक्तोत्वेतद्विपर्ययः ।
भीष्मंजिघांसतापार्थसूतेनैतत्प्रदर्शितं ४८ । ४९ । ५० नदेहमनुशीर्यंतेवैष्णवाश्रितमृत्यवः । भीष्मःकालांतराकांक्षीशरतल्पेऽवसच्चिरं ' ५१ । ५२ । ५३



'क्षात्राद्ब्राह्ममहःश्रेष्ठमितिमत्वासुयोधनः ॥ जयाशयास्वमाचार्यंसैनापत्येऽभ्यषेचयत्' ५४ संशप्तकास्तुयेसर्वेसर्वथाप्यनिवर्तिनस्तेअपनिन्युरपहृतवंतः रणाजिराद्रणस्थानात् ५६ । ५७
५८ 'संशप्तकवधोत्साहीजिष्णुःपुत्रवधार्दितः ॥ प्रतिज्ञांमहतींकृत्वातीर्णःश्रीपतिमायया ५९ । ६० । ६१ । ६२ । ६३ संतोऽप्यसाधुतांयांतिप्रतिकूलेविधातरि ॥ द्रोणस्यमृत्यु
कालेहिधर्मोऽप्यनृतभागभूत् ॥ अनृतेनहतोद्रोणोनत्यानारायणास्त्रकं । नानोपायैररीन्हत्वास्वीयान्रक्षितवान्हरिः' ६५ । ६६ । ६७ । ६८ । ६९ । २७० । ७१

द्रोणपर्वततश्चित्रंबहुवृत्तांतमुच्यते ॥ सैनापत्येऽभिषिक्तोऽथयत्राचार्यःप्रतापवान् ५४ दुर्योधनस्यप्रीत्यर्थंप्रतिजज्ञेमहास्त्रवित् ॥ ग्रहणंधर्मराजस्यपांडुपुत्रस्य
धीमतः ५५ यत्रसंशप्तकाःपार्थमपनिन्यूरणाजिरात् ॥ भगदत्तोमहाराजोयत्रशक्रसमोयुधि ५६ सुप्रतीकेननागेनसहिशांतःकिरीटिना ॥ यत्राभिमन्युंबह
वोजघ्नुरेकंमहारथाः ५७ जयद्रथमुखाबालंशूरमप्राप्तयौवनम् ॥ हतेऽभिमन्यौक्रुद्धेनयत्रपार्थेनसंयुगे ५८ अक्षौहिणीःसप्तहत्वाहतोराजाजयद्रथः ॥ यत्रभी
मोमहाबाहुःसात्यकिश्चमहारथः ५९ अन्वेषणार्थंपार्थस्ययुधिष्ठिरनृपाज्ञया ॥ प्रविष्टौभारतींसेनामप्रधृष्यांसुरैरपि २६० संशप्तकावशेषंचकृतंनिः
शेषमाहवे ॥ संशप्तकानांवीराणांकोट्योनवमहात्मनाम् ६१ किरीटिनाभिनिष्क्रम्यप्रापितायमसादनम् ॥ धृतराष्ट्रस्यपुत्राश्चतथापाषाणयोधिनः ६२
नारायणाश्चगोपालाःसमरेचित्रयोधिनः ॥ अलंबुषःश्रुतायुश्चजलसंधश्चवीर्यवान् ६३ सौमदत्तिर्विराटश्चद्रुपदश्चमहारथः ॥ घटोत्कचादयश्चान्येनिहताद्रो
णपर्वणि ६४ अश्वत्थामाऽपिचात्रैवद्रोणेयुधिनिपातिते ॥ अस्त्रंप्रादुश्चकारोग्रंनारायणममर्षितः ६५ आग्नेयंकीर्त्यतेयत्ररुद्रमाहात्म्यमुत्तमम् ॥ व्यासस्यचा
प्यागमनंमाहात्म्यंकृष्णपार्थयोः ६६ सप्तमंभारतेपर्वमहदेतदुदाहृतम् ॥ यत्रतेपृथिवीपालाःप्रायशोनिधनंगताः ६७ द्रोणपर्वणियेशूरानिर्दिष्टाःपुरुषर्ष
भाः ॥ अत्राध्यायशतंप्रोक्तंतथाऽध्यायाश्चसप्ततिः ६८ अष्टौश्लोकसहस्राणितथानवशतानिच ॥ श्लोकानवतथैवात्रसंख्यातास्तत्त्वदर्शिना ६९ पाराशर्ये
णमुनिनासंचिंत्यद्रोणपर्वणि ॥ अतःपरंकर्णपर्वप्रोच्यतेपरमाद्भुतम् २७० सारथ्येविनियोगश्चमद्रराजस्यधीमतः ॥ आख्यातंयत्रपौराणंत्रिपुरस्यनिपात
नम् ७१ प्रयाणेपरुषश्चात्रसंवादःकर्णशल्ययोः ॥ हंसकाकीयमाख्यानंतत्रैवाक्षेपसंहितम् ७२ वधःपांड्यस्यचतथाअश्वत्थाम्नामहात्मना ॥ दंडसे
नस्यचततोदंडस्यचवधस्तथा ७३ द्वैरथेयत्रकर्णेनधर्मराजोयुधिष्ठिरः ॥ संशयंगमितोयुद्धेमिषतांसर्वधन्विनाम् ७४ अन्योन्यंप्रतिचक्रोधोयुधिष्ठिरकिरी
टिनोः ॥ यत्रैवानुनयःप्रोक्तोमाधवेनार्जुनस्यहि ७५ प्रतिज्ञापूर्वकंचापिवक्षोदुःशासनस्यच ॥ भित्त्वावृकोदरोरक्तंपीतवान्यत्रसंयुगे ७६ द्वैरथेयत्रपार्थे
नहतःकर्णोमहारथः ॥ अष्टमंपर्वनिर्दिष्टमेतद्भारतचिंतकैः ७७

७२ । ७३ मिषतांपश्यतां ७४ । ७५ 'कार्याकार्यविचाररहितोक्रोधाविष्टानकुर्वते ॥ अपिबच्छोणितंभ्रातुर्भीमसेनोहिसंयुगे ७६ सौरिरैंद्रिंनिजघ्नेमागिदानींतद्विपर्ययः ॥
सहायोहेतुरीशानःपक्षपातविवर्जितः' ७७

७८ । ७९ । २८० । ८१ । ८२ 'जयाशाजीविताशाग्वसुक्षीणस्यापिदुस्त्यजा ॥ शल्यंन्हदंचशरणंकृतवान्पसुयोधनः ' ८३ । ८४ । ८५ समवायेसमये । 'युद्धांतेतीर्थयात्रांय

॥ २१ ॥ एकोनसप्ततिःप्रोक्ताअध्यायाःकर्णपर्वणि ॥ चत्वार्येवसहस्राणिनवश्लोकशतानिच ७८ चतुःषष्टिस्तथाश्लोकाःपर्वण्यस्मिन्प्रकीर्तिताः ॥ अतःपरंविचित्रार्थंशल्य अ०
पर्वप्रकीर्तितम् ७९ हतप्रवीरेसैन्येतुनेतामद्रेश्वरोऽभवत् ॥ यत्रकौमारमाख्यानमभिषेकस्यकर्मच २८० वृत्तानिरथयुद्धानिकीर्त्यंतेयत्रभागशः ॥ विनाशःकुरुमु ॥ २ ॥
ख्यानांशल्यपर्वणिकीर्त्यते ८१ शल्यस्यनिधनंचात्रधर्मराजान्महात्मनः ॥ शकुनेश्चवधोऽत्रैवसहदेवेनसंयुगे ८२ सैन्येचहतभूयिष्ठेकिंचिच्छिष्टेसुयोधनः ॥
न्हदंप्रविश्ययत्रासौसंस्तभ्यापोव्यवस्थितः ८३ प्रवृत्तिस्तत्रचाख्यातायत्रभीमस्यलुब्धकैः ॥ क्षेपयुक्तैर्वचोभिश्चधर्मराजस्यधीमतः ८४ न्हदात्समुत्थितोयत्रधार्त
राष्ट्रोऽत्यमर्षणः ॥ भीमेनगदयायुद्धंयत्रासौकृतवान्सह ८५ समवायेचयुद्धस्यरामस्यागमनंस्मृतम् ॥ सरस्वत्याश्चतीर्थानांपुण्यतापरिकीर्तिता ८६ गदायु
द्धंचतुमुलमत्रैवपरिकीर्तितम् ॥ दुर्योधनस्यराज्ञोऽथयत्रभीमेनसंयुगे ८७ ऊरूभग्नौप्रसह्याजौगदयाभीमवेगया ॥ नवमंपर्वनिर्दिष्टमेतदद्भुतमर्थवत् ८८ एकोन
षष्टिरध्यायाःपर्वण्यत्रप्रकीर्तिताः ॥ संख्यातावहुवृत्तांताःश्लोकसंख्याऽत्रकथ्यते ८९ त्रीणिश्लोकसहस्राणिद्वेशतेविंशतिस्तथा ॥ मुनिनासंप्रणीतानिकौ
रवाणांयशोभृता २९० अतःपरंप्रवक्ष्यामिसौप्तिकंपर्वदारुणम् ॥ भग्नोरुंयत्रराजानंदुर्योधनममर्षणम् ९१ अपयातेषुपार्थेषुत्रयस्तेऽभ्याययूरथाः ॥
कृतवर्माकृपोद्रौणिःसायाह्नेरुधिरोक्षितम् ९२ समेत्यदद्दशुर्भूमौपतितंरणमूर्धनि ॥ प्रतिजज्ञेदृढक्रोधोद्रौणिर्यत्रमहारथः ९३ अहत्वासर्वपंचालान्धृष्ट
द्युम्नपुरोगमान् ॥ पांडवांश्चसहामात्यान्नविमोक्ष्यामिदंशनम् ९४ यत्रैवमुक्त्वाराजानमपक्रम्यत्रयोरथाः ॥ सूर्यास्तमनवेलायामासेदुस्तेमहद्वनम् ॥
९५ न्यग्रोधस्याथमहतोयत्राधस्ताद्व्यवस्थिताः ॥ ततःकाकान्बहूनरात्रौदृष्ट्वोलूकेनहिंसितान् ९६ द्रौणिःक्रोधसमाविष्टःपितुर्वधमनुस्मरन् ॥ पं
चालानांप्रसुप्तानांवधंप्रतिमनोदधे ९७ गत्वाचशिविरद्वारिदुर्दर्शंतत्रराक्षसम् ॥ घोररूपमपश्यत्सदिवमावृत्यधिष्ठितम् ९८ तेनव्याघातमस्त्राणांक्रि
यमाणमवेक्ष्यच ॥ द्रौणिर्यत्रविरूपाक्षंरुद्रमाराध्यसत्वरः ९९ प्रसुप्तान्निशिविश्वस्तान्धृष्टद्युम्नपुरोगमान् ॥ पंचालान्सपरिवारान्द्रौपदेयांश्चसर्वशः ३०० ॥ २१ ॥

स्मृतेबादरायणः ॥ तेनजानीमहेहिंसाधर्म्यापिदुरितप्रदा ८६ नाधर्मेणविनाशत्रुःशक्योनिर्जेतुमुल्बणः ॥ भीमसेनोत्यधोनाभेःप्रजहारसुयोधनम् ' ८७ । ८८ । ८९ । २९० । ९१
९२ । ९३ दंशनंकवचं ९४ । ९५ । ९६ । ९७ । ९८ । ९९ 'विदुषोब्राह्मणस्यापिदैन्यात्स्याद्दारुणामतिः ॥ अश्वत्थामाऽपियत्सुप्तानभांक्षीन्यवधीद्रुपा ' ३००

कृतवर्मणेति ३०१ । २ । ३ उपाविशद्भर्तृनुपरुद्धवती ४ । ५ । ६ । ७ । ८ जितकाशिनोजयश्लाघिनः ९।३१० ।११ सौप्तिकैषीकेआख्यानेअत्रपर्वणिसंबद्धेइत्यर्थः १२ । १३ । १४ । १५आयोधनं
युद्धस्थानं १६।१७ क्षत्रियाःक्षत्रियस्त्रियः १८ । १९ । ३२० 'अर्थार्थीयधमाप्नोतिविलपंतिषतत्स्त्रियः ॥ तस्मादर्थंनलिप्सेतश्रेयोर्थीधार्तराष्ट्रवत् ॥ द्विनवाक्षौहिणीर्हत्वालेभेराज्यंयुधिष्ठिरः ॥ एवंभूतक्षयेणे

कृतवर्मणाचसहितःकृपेणचनिजघ्निवान् ॥ यत्रामुच्यंततेपार्थाःपंचकृष्णबलाश्रयात् ३०१ सात्यकिश्चमहेष्वासःशेषाश्चनिधनंगताः ॥ पंचालानांप्रसुप्तानांय
त्रद्रोणसुताद्वधः २ धृष्टद्युम्नस्यसूतेनपांडवेषुनिवेदितः ॥ द्रौपदीपुत्रशोकार्त्तापितृभ्रातृवधार्दिता ३ कृतानशनसंकल्पायत्रभर्तृनुपाविशत् ॥ द्रौपदीव
चनाद्यत्रभीमोभीमपराक्रमः ४ प्रियंतस्याश्चिकीर्षन्वैगदामादायवीर्यवान् ॥ अन्वधावत्सुसंक्रुद्धोभारद्वाजंगुरोःसुतम् ३०५ भीमसेनभयाद्यत्रदैवेनाभिप्रचो
दितः ॥ अपांडवायेतिरुषाद्रौणिरस्त्रमवासृजत् ३०६ मैवमित्यब्रवीत्कृष्णःशमयंस्तस्यतद्वचः ॥ यत्रास्त्रमस्त्रेणचतच्छमयामासफाल्गुनः ३०७ द्रौणे
श्चद्रोहबुद्धित्वंवीक्ष्यपापात्मनस्तदा ॥ द्रौणिद्वैपायनादीनांशापाश्चान्योन्यकारिताः ३०८ मणिंतथासमादायद्रोणपुत्रान्महारथात् ॥ पांडवाःप्रददुर्हृष्टाद्रौ
पद्यैजितकाशिनः ३०९ एतद्वैदशमंपर्वसौप्तिकंसमुदाहृतम् ॥ अष्टादशास्मिन्नध्यायाःपर्वण्युक्तामहात्मनाम् ३१० श्लोकानांकथितान्यत्रशतान्यष्टौ
प्रसंख्यया ॥ श्लोकाश्चसप्ततिःप्रोक्तामुनिनाब्रह्मवादिना ३११ सौप्तिकैषीकेसंबद्धेपर्वण्युत्तमतेजसि ॥ अतऊर्ध्वमिदंप्राहुःस्त्रीपर्वकरुणोदयं ३१२ पुत्रशोका
भिसंतप्तःप्रज्ञाचक्षुर्नराधिपः ॥ कृष्णोपनीतांयत्रासावायसींप्रतिमांदृढाम् ३१३ भीमसेनद्रोहबुद्धिर्धृतराष्ट्रोबभंजह ॥ तथाशोकाभितप्तस्यधृतराष्ट्रस्यधीमतः
१४ संसारगहनंबुद्ध्याहेतुभिर्मोक्षदर्शनैः ॥ विदुरेणचयत्रास्यराज्ञआश्वासनंकृतम् १५ धृतराष्ट्रस्यचात्रैवकौरवायोधनंतथा ॥ सांतःपुरस्यगमनंशोकार्त
स्यप्रकीर्तितम् १६ विलापोवीरपत्नीनांयत्रातिकरुणःस्मृतः ॥ क्रोधावेशःप्रमोहश्चगांधारीधृतराष्ट्रयोः १७ यत्रतान्क्षत्रियाःशूरान्संग्रामेष्वनिवर्तिनः ॥
पुत्रान्भ्रातृन्पितृंश्चैवददृशुर्निहतान्रणे १८ पुत्रपौत्रवधार्त्तायास्तथात्रैवप्रकीर्तिता ॥ गांधार्याश्चापिकृष्णेनक्रोधोपशमनक्रिया १९ यत्रराजामहाप्राज्ञःस
र्वधर्मभृतांवरः ॥ राज्ञांतानिशरीराणिदाहयामासशास्त्रतः ३२० तोयकर्मणिचारब्धेराज्ञामुदकदानिके ॥ गूढोत्पन्नस्यचाख्यानंकर्णस्यपृथयाऽऽत्मनः २१ सुतस्य
तदिहप्रोक्तंव्यासेनपरमर्षिणा ॥ एतदेकादशंपर्वशोकवैक्लव्यकारणम् २२ प्रणीतंसज्जनमनोवैक्लव्याश्रुप्रवर्तकम् ॥ सप्तविंशतिरध्यायाःपर्वण्यस्मिन्प्रकीर्तिताः
२३ श्लोकसप्तशतीचापिपंचसप्ततिसंयुता ॥ संख्ययाभारताख्यानमुक्तंव्यासेनधीमता २४ अतःपरंशांतिपर्वद्वादशंबुद्धिवर्धनम् ॥ यत्रनिर्वेदमापन्नोधर्मराजोयु
८ धिष्ठिरः २५ घातयित्वापितॄन्भ्रातॄन्पुत्रान्संबंधिमातुलान् ॥ शांतिपर्वणिधर्माश्चव्याख्याताशारतल्पिकाः ३२६ वभवत्यर्थःसतामपि ॥ बंधूनपिनयेद्युद्धेस्वर्गंश्राद्धेश्चतर्प

येत् । इत्येवंनिर्मलक्षात्रंकर्मोक्तंतोयकर्मणि २१।२२।२३।२४ अर्थात्रोव्यादियोगेवायत्सुखंकामशब्दितं ॥ तदापुःपांडवाःक्लेशैर्लब्धराज्याःपृथग्गृहाः ॥ चतुर्भिरेवैराट्यमेकादशभिरुद्यमं ॥ पंचभिर्भीष्म
मष्टभिर्द्रोणमेकेनसूर्यजं ॥ चतुर्भिःपंचभिःशल्यसौप्तुप्तरूपभिधानिच ॥ पर्वभिर्दीपयंत्यर्थंशांत्यादिःकामदीपिका' ॥ निर्वेदंदुःखं२५शारतल्पिकाःशराएवतल्पोयस्यतेनभीष्मेणव्याख्याताइत्यर्थः ३२६

'यथोक्तंदंडयन्दंडयान्धर्ममक्षयमश्नुते ॥ भूपइत्येवतद्धर्माःसापद्धर्मोनिरूपिताः' ॥ कालहेतुप्रदर्शिनः कालोदुर्भिक्षादिर्हेतुर्वैररोगादिश्चतत्प्रदर्शिनःदेशकालाद्यपेक्षयावर्तितव्यमित्यर्थः २७ सर्वज्ञत्वंकार्याकार्यविभागज्ञत्वं २८ । २९ । ३३० । ३१ प्रकृतिंस्वाभाविकीमवस्थां । 'सर्वाधिकारिकामोक्षधर्माःसम्यगुदीरिताः ॥ तत्राधिकारसिद्ध्यर्थंदानधर्माश्चकीर्तिताः' ३२ व्यवहारआचारःधर्मार्थीयोधर्मार्थयोर्हितः ३३ सत्यस्यहिंसाशून्यस्ययथार्थभाषणस्यपरागतिःपराकाष्ठा ३४ महाभाग्यंमहात्म्यं रहस्यमल्पायासेनापिमहाफलप्रदत्वं देशकालोपसंहितंतीर्थपर्वोपधानात ३५ 'स्वच्छंदमरणःसर्वोयोगीभीष्मसमोभवेत् ॥ इतिप्रदर्शयन्भीष्मनिर्याणंचाप्यवर्णयत् ३६ । ३७ । ३८ वाराणस्यामविज्ञातोवसेद्विघ्नभयात्सुधीः ॥ व्यासमैत्रेयसंवर्ततैरितत्सम्यक्प्रदर्शितं ॥ काश्यां

राजभिर्वेदितव्यास्तेसम्यग्ज्ञानबुभुत्सुभिः ॥ आपद्धर्माश्चतत्रैवकालहेतुप्रदर्शिनः २७ यान्बुद्ध्वापुरुषःसम्यक्सर्वज्ञत्वमवाप्नुयात् ॥ मोक्षधर्माश्चकथिताविचित्राबहुविस्तराः २८ द्वादशंपर्वनिर्दिष्टमेतत्प्राज्ञजनप्रियम् ॥ अत्रपर्वणिविज्ञेयमध्यायानांशतत्रयम् २९ विंशच्चैवतथाध्यायानवचैवतपोधनाः ॥ चतुर्दशसहस्राणितथासप्तशतानिच ३३० सप्तश्लोकास्तथैवात्रपंचविंशतिसंख्यया ॥ अतऊर्ध्वंचविज्ञेयमनुशासनमुत्तमम् ३१ यत्रप्रकृतिमापन्नःश्रुत्वाधर्मविनिश्चयम् ॥ भीष्माद्भागीरथीपुत्रात्कुरुराजोयुधिष्ठिरः ३२ व्यवहारोऽत्रकात्स्न्येनधर्मार्थीयःप्रकीर्तितः ॥ विविधानांचदानानांफलयोगाःप्रकीर्तिताः ३३ तथापात्रविशेषाश्चदानानांचपरोविधिः ॥ आचारविधियोगश्चसत्यस्यचपरागतिः ३४ महाभाग्यंगवांचैवब्राह्मणानांतथैवच ॥ रहस्यंचैवधर्माणांदेशकालोपसंहितम् ३५ एतत्सुबहुवृत्तांतमुत्तमंचानुशासनम् ॥ भीष्मस्यात्रैवसंप्राप्तिःस्वर्गस्यपरिकीर्तिता ३६ एतत्त्रयोदशंपर्वधर्मनिश्चयकारकम् ॥ अध्यायानांशतंत्वत्रषट्चत्वारिंशदेवतु ३७ श्लोकानांतुसहस्राणिप्रोक्तान्यष्टौप्रसंख्यया ॥ ततोऽश्वमेधिकंनामपर्वप्रोक्तंचतुर्दशम् ३८ तत्संवर्तमरुत्तीयंयत्राख्यानमनुत्तमम् ॥ सुवर्णकोशसंप्राप्तिर्जन्मचोक्तंपरीक्षितः ३९ दग्धस्यास्त्राग्निनापूर्वंकृष्णात्संजीवनंपुनः ॥ चर्यायांहयमुत्सृष्टंपांडवस्यानुगच्छतः ३४० तत्रतत्रचयुद्धानिराजपुत्रैरमर्षणैः ॥ चित्रांगदायाःपुत्रेणपुत्रिकायाधनंजयः ३४१ संग्रामेबभ्रुवाहेनसंशयंचात्रदर्शितः ॥ अश्वमेधेमहायज्ञेनकुलाख्यानमेवच ४२ इत्याश्वमेधिकंपर्वप्रोक्तमेतन्महाद्भुतम् ॥ अध्यायानांशतंचैवत्रयोऽध्यायाश्चकीर्तिताः ३४३ त्रीणिश्लोकसहस्राणितावंत्येवशतानिच ॥ विंशतिश्चतथाश्लोकाःसंख्यातास्तत्त्वदर्शिना ३४४ ततस्त्वाश्रमवासाख्यंपर्वपंचदशंस्मृतम् ॥ यत्रराज्यंसमुत्सृज्यगांधार्यासहितोनृपः ३४५ धृतराष्ट्रोऽऽश्रमपदंविदुरश्चजगाम ह ॥ यंदृष्ट्वाप्रस्थितंसाध्वीपृथाप्यानुययौतदा ३४६

मृतस्यकुणपंदंशिवलिंगत्वमृच्छति ॥ अपूर्वमेतत्संवर्तमरुत्तीयेप्रकाशितं ॥ क्रममुक्तिप्रसिद्ध्यर्थमश्वमेधोऽपिकीर्तितः ॥ तत्त्वस्यदुर्ग्रहत्वाच्चपुनरध्यात्ममीरितं'। तत्पुराणप्रसिद्धंसंवर्तमरुत्तीयं ३९ चर्यायांपर्यटने ३४० । ४१ संशयंप्राणांतं गंगाशापमोक्षार्थंधनंजयोदर्शितः । 'कुशेनश्रद्धयादत्तमत्यल्पमपिसज्जने ॥ अश्वमेधाधिकंपुण्यंततइत्याहनाकुले' ४२ । ४३ । ४४ । ४५ धृतराष्ट्रोऽऽश्रमपदमित्यत्राकारस्यपूर्वरूपमार्षं । 'तपोहिततमंनृणांभोगानरकयोनयः ॥ इतीवकुंतीपुत्राणांराज्यंत्यक्त्वावनंययौ' ४६ ॥ २२ ॥

४७ 'मायामात्रंसुतादीनिविज्ञायाश्चर्यपर्वतः । धृतराष्ट्रवत्यक्त्वाशोकंमोक्षंसमाश्रयेत्' ४८ । ४९ संजयश्चसुगतिंगतइत्यनुवर्तते ३५० । ५१ पंचश्लोकशतानिचेत्यत्रपंचश्लोकशतंचेतिसमासः पंचाधिकंशतमित्यर्थः तेनात्रएकादशशतीहश्लोकसंख्याज्ञेया तावत्याएवपुस्तकेषूपलंभात् ५२ । ५३ । ५४ आपानेसुरापानस्थाने पानकलिताःसुरापानेनवशीकृताः एरकानिर्ग्रथितृणं ५५ रामकृष्णौमहत्परंब्रह्मापिसंतौकालंनातिचक्रामतुः समर्थावपिमर्यादांनोल्लंघितवंतावित्यर्थः । 'आत्मक्षोभात्सुरापानाद्विनष्टाःसर्वयादवाः । तस्मादेतद्द्वयंसद्भिर्नैवकार्यंकदाचन' ५६ आ

पुत्रराज्यंपरित्यज्यगुरुशुश्रूषणेरता ॥ यत्रराजाहतान्पुत्रान्पौत्रानन्यांश्चपार्थिवान् ३४७ लोकांतरगतान्वीरानपश्यत्पुनरागतान् ॥ ऋषेःप्रसादात्कृष्णस्यदृष्ट्वाऽऽश्चर्यमनुत्तमम् ४८ त्यक्त्वाशोकंसदारश्चसिद्धिंपरमिकांगतः ॥ यत्रधर्मंसमाश्रित्यविदुरःसुगतिंगतः ४९ संजयश्चसहामात्योविद्वान्गावल्गणिर्वशी ॥ ददर्शनारदंयत्रधर्मराजोयुधिष्ठिरः ३५० नारदाच्चैवशुश्राववृष्णीनांकदनंमहत् ॥ एतदाश्रमवासाख्यंपर्वोक्तंमहदद्भुतम् ५१ द्विचत्वारिंशदध्यायाःपर्वैतदभिसंख्यया ॥ सहस्रमेकंश्लोकानांपंचश्लोकशतानिच ५२ षडेवचतथाश्लोकाःसंख्यातास्तत्त्वदर्शिना ॥ अतःपरंनिबोधेदंमौसलंपर्वदारुणम् ५३ यत्रतेपुरुषव्याघ्राःशस्त्रस्पर्शहतायुधि ॥ ब्रह्मदंडविनिष्पिष्टाःसमीपेलवणांभसः ५४ आपानेपानकलितादैवेनाभिप्रचोदिताः ॥ एरकारूपिभिर्वज्रैर्निजघ्नुरितरेतरम् ५५ यत्रसर्वक्षयंकृत्वाताबुभौरामकेशवौ ॥ नातिचक्रामतुःकालंप्राप्तंसर्वहरंमहत् ५६ यत्रार्जुनोद्वारवतीमेत्यवृष्णिविनाकृताम् ॥ दृष्ट्वाविषादमगमत्परांचार्तिनरर्षभः ५७ ससंस्कृत्यनरश्रेष्ठंमातुलंशौरिमात्मनः ॥ ददर्शयदुवीराणामापानेवैशसंमहत् ५८ शरीरंवासुदेवस्यरामस्यचमहात्मनः ॥ संस्कारंलंभयामासवृष्णीनांचप्रधानतः ५९ सवृद्धबालमादायद्वारवत्यास्ततोजनम् ॥ ददर्शापदिकष्टायांगांडीवस्यपराभवम् ३६० सर्वेषांचैवदिव्यानामस्त्राणामप्रसन्नताम् ॥ नाशंवृष्णिकलत्राणांप्रभावानामनित्यताम् ६१ दृष्ट्वानिर्वेदमापन्नोव्यासवाक्यप्रचोदितः ॥ धर्मराजंसमासाद्यसंन्यासंसमरोचयत् ६२ इत्येतन्मौसलंपर्वषोडशंपरिकीर्तितम् ॥ अध्यायाऽष्टौसमाख्याताःश्लोकानांचशतत्रयम् ६३ श्लोकानांविंशतिश्चैवसंख्यातातत्त्वदर्शिना ॥ महाप्रस्थानिकंतस्मादूर्ध्वंसप्तदशंस्मृतम् ६४ यत्रराज्यंपरित्यज्यपांडवाःपुरुषर्षभाः ॥ द्रौपद्यासहितादेवामहाप्रस्थानमास्थिताः ६५ यत्रतेऽग्निंददृशिरेलौहित्यंप्राप्यसागरम् ॥ यत्राग्निनाचोदितश्चपार्थस्तस्मैमहात्मने ६६ ददौसंपूज्यतद्दिव्यंगांडीवंधनुरुत्तमम् ॥ यत्रभ्रातॄन्निपतितान्द्रौपदींचयुधिष्ठिरः ६७ दृष्ट्वाहित्वाजगामैवसर्वाननवलोकयन् ॥ एतत्सप्तदशंपर्वमहाप्रस्थानिकंस्मृतम् ६८ यत्राध्यायास्त्रयःप्रोक्ताःश्लोकानांचशतत्रयम् ॥ विंशतिश्चतथाश्लोकाःसंख्यातास्तत्त्वदर्शिना ३६९

र्तिपिडां ५७ वैशसंपरस्परंविशसनं ५८ । ५९ 'सर्वक्षयांतानिचयावृष्णीनामपिसंक्षयात् ॥ पराभवादर्जुनस्यपतनांताःसमुच्छ्रयाः' ३६० अप्रसन्नतामस्फुरणं ६१ संन्यासंराज्यत्यागं ६२ अध्यायाष्टौसंधिरार्षः ६३ । ६४ महाप्रस्थानंदेहत्यागार्थमुदग्गमनं ६५ । ६६ 'स्वस्यमृत्युंविनिश्चित्यपरंशोचेतकःपुमान् । युधिष्ठिरइवोपेक्षांकुर्याद्बंधोर्मुमूर्षतः' ६७ । ६८ शतंचत्रयंचेतिसमासेशतत्रयमित्यस्यत्र्यधिकंशतमित्यर्थः ततश्चत्रयोविंशत्यधिकंशतंश्लोकाइत्यर्थः तावतामेवोपलंभात् ६९

३७० अनृशंस्यात्कारुण्यात् ।' आनृशंस्यपरोधर्मोयेनराजायुधिष्ठिरः । श्वानंभ्रातृन्विनदिवरथंस्वर्गौघनारुहत् ७१ एवंसर्वत्रतात्पर्यंकथायामुन्नयेद्यतः । नप्रवृत्तिनिवृत्तिभ्यांविनावाचःकृतार्थता । अर्थोधर्मायभोगायधर्मःस्वर्गायमुक्तये । कामोधर्मार्थनाशायमोक्षःस्वार्थंस्त्रिवर्गजित्'स्वर्गमिति स्वर्ग्यांतेमहतामपियातनामाप्तिरस्तीतिदर्शितमितिभावः ७२ । ७३ निदेशेयमस्यज्ञासनेयातनायामित्यर्थः अनुदर्शितः ईदृक्फलमेधर्मसुखमस्तीतिबोधितः ७४ । ७५ । ७६ । ७७ । ७८ खिलेषुआख्यानांतरेषुसत्स्वपिहरिवंशभविष्ययोर्ग्रहणंतयोरभ्यर्हितत्वप्रदर्शनार्थं दशश्लोकसहस्राणीति हरिवंशभविष्यांतग्रंथस्यद्वादशसहस्रोन्मितत्वंनतुकृत्स्नहरिवंशस्यअधिकस्यग्रंथस्यदर्शनात्तावन्मात्रविवक्षायांचलक्षपूर्तेरयोगात तथाप्यत्रकंठोक्तायाःसंख्यायाःसंकलनेषण्णवतिःसहस्राणिद्विशतेषोड

स्वर्गपर्वततोज्ञेयंदिव्यंयत्तदमानुषम् ॥ प्राप्तंदेवरथंस्वर्गान्नेष्टवान्यत्रधर्मराट् ३७० आरोढुंसुमहाप्राज्ञआनृशंस्याच्छुनाविना ॥ तामस्याविचलांज्ञात्वास्थितिंधर्ममहात्मनः ७१ श्वरूपंयत्रतत्त्यक्त्वाधर्मेणाऽसौसमन्वितः ॥ स्वर्गप्राप्तःसचतथायातनाविपुलाभृशम् ७२ देवदूतेननरकंयत्रव्याजेनदर्शितम् ॥ शुश्रावयत्रधर्मात्माभ्रातृणांकरुणागिरः ७३ निदेशेवर्तमानानांदेशेतत्रैववर्तताम् ॥ अनुदर्शितश्चधर्मेणदेवराज्ञाचपांडवः ७४ आप्लुत्याकाशगंगायांदेहंत्यक्त्वासमानुषम् ॥ स्वधर्मनिर्जितंस्थानंस्वर्गेप्राप्यसधर्मराट् ७५ मुमुदेपूजितःसर्वैःसेंद्रैःसुरगणैःसह ॥ एतदष्टादशंपर्वप्रोक्तंव्यासेनधीमता ७६ अध्यायाःपंचसंख्याताःपर्वण्यस्मिन्महात्मा ॥ श्लोकानांद्विशतेचैवप्रसंख्यातेतपोधनाः ७७ नवश्लोकास्तथैवान्येसंख्याताःपरमर्षिणा ॥ अष्टादशैवमेतानिपर्वाण्येतान्यशेषतः ७८ खिलेषुहरिवंशश्चभविष्यंचप्रकीर्तितम् ॥ दशश्लोकसहस्राणिविंशच्छ्लोकशतानिच ७९ खिलेषुहरिवंशेचसंख्यातानिमहर्षिणा ॥ एतत्सर्वंसमाख्यातंभारतेपर्वसंग्रहः ३८० अष्टादशसमाजग्मुरक्षौहिण्योयुयुत्सया ॥ तन्महादारुणंयुद्धमहान्यष्टादशाभवत् ८१ योविद्याच्चतुरोवेदान्सांगोपनिषदोद्विजः ॥ नचाख्यानमिदंविद्यान्नैवसस्याद्विचक्षणः ८२ अर्थशास्त्रमिदंप्रोक्तंधर्मशास्त्रमिदंमहत् ॥ कामशास्त्रमिदंप्रोक्तंव्यासेनामितबुद्धिना ८३ श्रुत्वात्विदमुपाख्यानंश्राव्यमन्यन्नरोचते ॥ पुंस्कोकिलगिरंश्रुत्वारूक्षाध्वांक्षस्यवागिव ८४ इतिहासोत्तमादस्माज्जायंतेकविबुद्धयः ॥ पंचभ्यइवभूतेभ्योलोकसंविधयस्त्रयः ८५ अस्याख्यानस्यविषयेपुराणंवर्ततेद्विजाः ॥ अंतरिक्षस्यविषयेप्रजाइवचतुर्विधाः ८६ क्रियागुणानांसर्वेषामिदमाख्यानमाश्रयः ॥ इंद्रियाणांसमस्तानांचित्राइवमनःक्रियाः ८७ अनाश्रित्यैतदाख्यानंकथाभुविनविद्यते ॥ आहारमनपाश्रित्यशरीरस्येवधारणम् ३८८

शचश्लोकाः । परिशेषात्पुष्करप्रादुर्भावाद्युपरितनग्रंथेकैलासयात्रासहितेकिंचिदूनंसहस्रचतुष्टयंज्ञेयं तेनततोप्यर्धशब्दंभूयःसंक्षेपंकृतवानृषिःअनुक्रमणिकाध्यायमित्यादौभूयःशब्दादध्यर्धशताधिकंलक्षंपरिपूर्णंज्ञेयं । अष्टादशसहस्राणीत्यादयोविगीतपाठास्त्विष्टसंख्यामातिकूल्यादुपेक्षणीयाः ७९ । ३८० युयुत्सयायोद्धुमिच्छया ८१ अंगानिशिक्षाकल्पादीनि उपनिषदोरहस्यविद्यास्तत्सहितान् सांगोपनिषदः विचक्षणःस्वार्थज्ञः ८२ । ८३ ध्वांक्षस्यकाकस्य ८४ लोकसंविधयस्त्रयआध्यात्माधिभूताधिदैवानांसम्यग्विधयोरचनाः ८५ विषयेदेशेअंतरित्यर्थः पुराणमष्टादशभेदंपाद्मादि चतुर्विधाजरायुजांडजस्वेदजोद्भिज्जाः ८६ क्रियालौकिक्योवैदिक्यश्चतासांगुणाउत्कृष्टफलसाधनानि अथवाक्रियादानध्यानादयःगुणाःशमादयःमनसिइंद्रियाणीवात्रसर्वेशास्त्रार्थाःप्रतिष्ठिताइत्यर्थः ८७। ३८८

इदंकविभिरुपजीव्यतेएतच्छायाहरणेनैवकाव्यनिर्वाहात् ८९ विशेषणेअतिशयकरणे अनेनग्रंथस्यसर्वोत्कृष्टत्वमुक्तं ३९० भारतसंप्रदायप्रवर्तकान्वाचकानाशिषाऽभिनंदति धर्मेइति ९१ श्रोतृन्प्रोत्साहयति द्वैपायनेति अप्रमेयंनास्तिप्रकृष्टंमेयंविज्ञेयंयस्मादित्यप्रमेयं अवश्यंश्राव्यमित्यर्थः पुण्यंपुण्यहेतुः पवित्रंपविरिवपविर्वज्रतुल्योमृत्युस्तस्मात्त्रायतइतिपवित्रं मृत्युतरणमित्यर्थः यस्मात्पापहरं पुण्यहेतुत्वादेवशिवंकल्याणं समधिगच्छतिशब्दतोर्थतश्चजानाति यद्वा अप्रमेयमाशयस्यगंभीरत्वादगाधं पुण्यंज्योतिष्टोमादिवत्स्वर्ग्यं पवित्रं संध्योपासनादिवच्चित्तशुद्धिकरं पापहरंप्रायश्चित्तवद्ब्रह्महत्यादिदोषघ्नं शिवंयोगाभ्यासवत्सर्वकल्याणप्रदं पुष्करमादितीर्थंशुंडाग्रंवातदुपाहृतजलैः एतच्छृण्वतस्तीर्थफलंसाम्राज्यफलंचानायाससिद्धंभवतीतिभावः ९२ संध्यांसंध्यायांअत्यंतसंयोगेद्वितीया आख्यायपठित्वाप्रमुच्यते तस्मात्पापादितिशेषः ९३ । ९४ । ९५ आख्यानमिति इदमाख्यानंपर्वसंग्रहेणकृतेनसुखावगाहंसुखग्राह्यंभवतीतिशेषः द्विन्याय्यमितिपाठेद्वौशब्दार्थौन्याय्यौन्यायादनपेतौयस्मिंस्तद्द्विन्याय्यं अन्येतुद्वाभ्यांसंक्षेपविस्तराभ्यांकृतेनपर्वसंग्रहेणशतपर्वाष्टादशपर्वरूपेणन्याय्यं एतच्छ्रवणेनकृत्स्नग्रंथार्थावधारणादितिव्याचख्युः तत्रपर्वसंग्रहो

इदंकविवरैःसर्वैराख्यानमुपजीव्यते ॥ उदयप्रेप्सुभिर्भृत्यैरभिजातइवेश्वरः ८९ अस्यकाव्यस्यकवयोनसमर्थाविशेषणे ॥ साधोरिवगृहस्थस्यशेषास्त्रयइवाश्रमाः ३९० धर्मेमतिर्भवतुवःसततोत्थितानांसह्येकएवपरलोकगतस्यबंधुः ॥ अर्थाःस्त्रियश्चनिपुणैरपिसेव्यमानानैवाप्तभावमुपयांतिनचस्थिरत्वम् ९१ द्वैपायनौष्ठपुटनिःसृतमप्रमेयंपुण्यंपवित्रमथपापहरंशिवंच ॥ योभारतंसमधिगच्छतिवाच्यमानंकिंतस्यपुष्करजलैरभिषेचनेन ९२ यदन्हाकुरुतेपापंब्राह्मणस्त्विंद्रियैश्चरन् ॥ महाभारतमाख्यायसंध्यांमुच्यतिपश्चिमाम् ९३ यद्रात्रौकुरुतेपापंकर्मणामनसागिरा ॥ महाभारतमाख्यायपूर्वांसंध्यांप्रमुच्यते ९४ योगोशतंकनकशृंगमयंददातिविप्रायवेदविदुषेचबहुश्रुताय ॥ पुण्यांचभारतकथांशृणुयाच्चनित्यंतुल्यंफलंभवतितस्यचतस्यचैव ९५ आख्यानंतदिदमनुत्तमंमहार्थंविज्ञेयंमहदिहपर्वसंग्रहेण ॥ श्रुत्वाऽऽदौभवतिनृणांसुखावगाहंविस्तीर्णंलवणजलंयथाप्लवेन ३९६ ॥ इतिश्रीमहाभारते आदिपर्वणि संग्रहपर्वणिद्वितीयोऽध्यायः ॥ २ ॥ ॥ ध ॥ ॥ समाप्तंपर्वसंग्रहपर्व ॥

वररुचिप्रोक्तपाकादिनवष्टादिनवपादिपंचयाद्यष्टावितिपरिभाषयाक्रियते । 'आदिश्यान १९ सभायनं ९ वनचर्यं १६ वैराटभू ४ द्योगयुक् ११ भीष्मद्रोणम ५ जं ८ चकर्णकु १ तथाशल्येभ ४ सौप्तग ३ मू ॥ स्त्रीशं ५ शांतिभ ४ दानधर्मकु १ हयेज्यारा २ श्रमावासगं ३ कं १ कं १ मौसलयानयोर्युगतिकं १ वंशेख २ मेतच्छतं' आदिपर्वणिएकोनविंशतिःपर्वाणीत्यर्थः एवमग्रेपि भीष्मेम ५ द्रोणेज ८ हयेज्याआश्रमेधिकर २ यानंमहाप्रस्थानिकं युगतिःस्वर्गारोहणं वंशेहरिवंशे एतच्छतंपर्वणामितिशेषः शेषंस्पष्टं श्लोकसंख्यापिप्रागुक्तैवज्ञेया अथसर्वपर्वतात्पर्यसंग्रहः 'आदौसर्वेद्वयोःक्रत्वृतधृतिगुरुसत्तीर्थसेवोत्थधर्मःसेवानीत्यार्यहत्याप्रमुखदुरितजःशोकदोऽर्थोष्टसूक्तः ॥ एकस्मिन्काममोक्षावसुखमयसुखौपट्सुमुक्त्यैददीज्यातापोवैराग्यहानेस्वरपिनिखिलकृत्कृष्णभक्तिःखिलेषु' ॥ दविदानं तापःकृच्छ्रादिकं तापआश्रमवासेउक्तइतिसर्वत्रानुषज्जते हानंत्यागः स्वःस्वर्गतिरपिक्रममुक्त्यैभवतीत्यर्थः । 'यःसर्गप्रतिसर्गवंशतइदंचियोनिचित्कर्तृकंचिद्रूपंजडमात्थतंतुपटवद्रूतोर्णवद्वीजवत् ॥ सत्वाप्त्यैमनुभेदपूर्वचरितैर्वैराग्ययोगोदिशन्भोःपंचांगपुराणकर्तरमलंव्यासस्वहृद्देहिमे' ३९६ ॥ इतिश्रीमहाभारते आदिपर्वणिनीलकंठीये भारतभावदीपे द्वितीयोऽध्यायः ॥ २ ॥

जनमेजयस्यसर्पसत्रेकथंपप्रवृत्तेत्युक्तंतदुपोद्घातत्वेनजनमेजयस्यसरमाशापादिकमाह जनमेजयःपारिक्षितइत्यादिना दीर्घसत्रंबहुवार्षिकंसत्रमुपास्तेअनुतिष्ठति सारमेयःश्वा १ रोरूयमाणोभृशं
 रुदन् २ । ३ । ४ । ५ नावेक्षेहविषामवेक्षणमपिनकृतंतत्रावलेहनंदूरतोऽपास्तमित्यर्थः । 'कुक्कुटःपक्षवातेनश्वाद्दष्ट्यांमदूषयेत्'इतिवचनाच्छुनादष्टमपिहविर्दुष्यतीत्याहुः ६ । ७ । ८ सा 

॥ २४ ॥ ॥ अथपौष्यपर्व ॥ सौतिरुवाच ॥ जनमेजयःपारिक्षितःसहभ्रातृभिःकुरुक्षेत्रेदीर्घसत्रमुपास्ते ॥ तस्यभ्रातरस्त्रयःश्रुतसेनउग्रसेनोभीमसेनइति ॥ तेषुतत्सत्रमु अ०
पासीनेष्वागच्छत्सारमेयः १ जनमेजयस्यभ्रातृभिरभिहतोरोरूयमाणोमातुःसमीपमुपागच्छत् २ ॥ तंमातारोरूयमाणमुवाच ॥ किंरोदिषिकेनास्यभिहत ॥ १ ॥
इति ३ सएवमुक्तोमातरंप्रत्युवाचजनमेजयस्यभ्रातृभिरभिहतोऽस्मीति ४ तंमाताप्रत्युवाचव्यक्तंत्वयातत्रापराद्धंयेनास्यभिहतइति ५ सतांपुनरुवाचनापरा
ध्यामिकिंचिन्नावेक्षेहवींषिनावलिहइति ६ तच्छ्रुत्वातस्यमातासरमापुत्रदुःखार्तातत्सत्रमुपागच्छद्यत्रसजनमेजयःसहभ्रातृभिर्दीर्घसत्रमुपास्ते ७ सतयाक्रुद्धया
तत्रोक्तोऽयंमेपुत्रोनकिंचिदपराध्यतिनावेक्षतेहवींषिनावलेढिकिमर्थमभिहतइति ८ नकिंचिदुक्तवंतस्तेसातानुवाचयस्मादयमभिहतोऽनपकारीतस्माददृष्टंत्वां
भयमागमिष्यतीति ९ जनमेजयएवमुक्तोदेवशुन्यासरमयाभृशंसंभ्रांतोविषण्णश्चासीत् १० सतस्मिन्सत्रेसमाप्तेहास्तिनपुरंप्रत्येत्यपुरोहितमनुरूपमन्वि
ष्यमाणःपरंयत्नमकरोद्योमेपापकृत्यांशमयेदिति ११ सकदाचिन्मृगयांगतःपारिक्षितोजनमेजयःकस्मिंश्चित्स्वविषयआश्रममपश्यत् १२ तत्रकश्चिदृषि
रासांचक्रेश्रुतश्रवानाम ॥ तस्यतपस्यभिरतःपुत्रआस्तेसोमश्रवानाम १३ तस्यतंपुत्रमभिगम्यजनमेजयःपारिक्षितःपौरोहित्यायवव्रे १४ सनमस्कृ
त्यतमृषिमुवाचभगवन्नयंतवपुत्रोममपुरोहितोऽस्त्विति १५ सएवमुक्तःप्रत्युवाचजनमेजयंभोजनमेजयपुत्रोऽयंममसर्प्यांजातोमहातपस्वीस्वाध्यायसंपन्नोमत्त
पोवीर्यसंभृतोमच्छुक्रंपीतवत्यास्तस्याःकुक्षौजातः १६ समर्थोऽयंभवतःसर्वाःपापकृत्याःशमयितुमंतरेणमहादेवकृत्याम् १७ अस्यत्वेकमुपांशुव्रतंयदेनंक
श्चिद्ब्राह्मणःकंचिदर्थमभियाचेत्तंतस्मैदद्यादयंयद्येतदुत्सहसेततोनयस्वैनमिति १८ तेनैवमुक्तोजनमेजयस्तंप्रत्युवाचभगवंस्तत्तथाभविष्यतीति १९ सतं
पुरोहितमुपादायोपावृत्तोभ्रातॄनुवाचमयाऽयंवृतउपाध्यायोयदयंब्रूयात्तत्कार्यमविचारयद्भिर्भवद्भिरिति ॥ तेनैवमुक्ताभ्रातरस्तस्यतथाचक्रुःसतथाभ्रातॄन्संदिश्य
तक्षशिलांप्रत्यभिप्रतस्थेतंचदेशंवशेस्थापयामास २०

तानुवाच साशुनीतानभिलक्ष्यजनमेजयंप्रत्युवाचेत्यर्थः अदृष्टमतर्कितं ९ संभ्रांतोऽत्यंतंभीतः विषण्णोवाङ्मनःकायक्रियाविकलः एतेननिरपराधिनांहिंसाहिंसकस्यसद्योदुःखावहेतिदर्शितं ॥ २४ ॥
१० पापकृत्यांशापरूपांबलायुःप्राणनिकृंतनींदेवतां शमयेदक्रोधनांकुर्यात् ११ । १२ । १३ । १४ । १५ सर्प्यांसर्पजातीयायांजातत्वाद्विचित्रोत्पत्तिमत्त्वादलौकिकशक्तिमानितिभा
वः १६ । १७ उपांशुव्रतंनिगूढवन्नियमः १८ । १९ उपावृत्तःस्वदेशंप्रत्यागतः तक्षशिलांदेशविशेषंविजेतुमितिशेषः २०

एतस्मिन्निति एवं गुरुप्रसादादपेतभयोविजयीउत्संकेनप्रोत्साहितःसर्पसत्रंकृतवानितिवक्तुंतद्गुरोर्वेदस्यप्रशंसाप्रसंगादितरावपितत्सहाध्यायिनावारुण्युपमन्यूप्रस्तौतितेनचगुरुभक्तिमाहात्म्यमत्रमुख्यंप्र
मेयंज्ञेयं धौम्योनामतःअपोऽस्तीत्यपोदःअब्भक्षस्तस्यापत्यमापोदः अयोदइतिपाठेअयोदोलोहदंतः दच्छब्दात्समासांतोडच् उपाध्यायस्यतेकाण्वीयसादंताइतिवाक्यशेषात् क्रूरवाक्इत्यर्थः २१
एतस्मिन्नंतरेकश्चिदृषिर्धौम्योनामापोदस्तस्यशिष्यास्त्रयोबभूवुः २१ उपमन्युरारुणिर्वेदश्चेतिसएकंशिष्यमारुणिंपांचाल्यंप्रेषयामासगच्छकेदारखंडंबधानेति
२२ सउपाध्यायेनसंदिष्टआरुणिःपांचाल्यस्तत्रगत्वातत्केदारखंडंबद्धुंनाशकत् ॥ सक्लिश्यमानोऽपश्यदुपायंभवत्वेवंकरिष्यामि २३ सतत्रसंविवेशकेदारखंडे
शयानेचतथातस्मिंस्तदुदकंतस्थौ २४ ततःकदाचिदुपाध्यायआपोदोधौम्यःशिष्यानपृच्छत्क्वआरुणिःपांचाल्योगतइति २५ तेतंप्रत्यूचुर्भगवंस्त्वयैवप्रे
षितोगच्छकेदारखंडंबधानेति ॥ सएवमुक्तस्तान्शिष्यान्प्रत्युवाचतस्मात्तत्रसर्वेगच्छामोयत्रसगतइति २६ सतत्रगत्वातस्याह्वानायशब्दंचकार ॥ भो
आरुणेपांचाल्यक्वासिवत्सैहीति २७ सतच्छ्रुत्वाआरुणिरुपाध्यायवाक्यंतस्मात्केदारखंडात्सहसोत्थायतमुपाध्यायमुपतस्थे २८ प्रोवाचचैनमयमस्म्यत्रकेदा
रखंडेनिःसरमाणमुदकमवारणीयंसंरोद्धुंसंविष्टोभगवच्छब्दंश्रुत्वैवसहसाविदार्यकेदारखंडंभवंतमुपस्थितः २९ तदभिवादयेभगवंतमाज्ञापयतुभवान्कमर्थंकरवाणी
ति ३० सएवमुक्तउपाध्यायःप्रत्युवाचयस्माद्भवान्केदारखंडंविदार्योत्थितस्तस्मादुद्दालकएवनाम्नाभवान्भविष्यतीत्युपाध्यायेनानुगृहीतः ३१ यस्माच्चत्वया
मद्वचनमनुष्ठितंतस्माच्छ्रेयोऽवाप्स्यसि ॥ सर्वेचतेवेदाःप्रतिभास्यंतिसर्वाणिचधर्मशास्त्राणीति ३२ सएवमुक्तउपाध्यायेनेष्टंदेशंजगाम ॥ अथापरःशिष्यस्त
स्यैवापोदस्यधौम्यस्योपमन्युर्नाम ३३ तंचोपाध्यायःप्रेषयामासवत्सोपमन्योगारक्षस्वेति ३४ सउपाध्यायवचनादरक्षद्गाःसचाहनिगारक्षित्वादिवसक्षये
गुरुगृहमागम्योपाध्यायस्याग्रतःस्थित्वानमश्चक्रे ३५ तमुपाध्यायःपीवानमपश्यदुवाचचैनंवत्सोपमन्योकेनवृत्तिंकल्पयसिपीवानसिदृढमिति ३६ सउपा
ध्यायंप्रत्युवाचभोभैक्ष्येणवृत्तिंकल्पयामीतितमुपाध्यायःप्रत्युवाच ३७ मय्यनिवेद्यभैक्ष्यंनोपयोक्तव्यमिति ॥ सतथेत्युक्तोभैक्ष्यंचरित्वोपाध्यायायन्यवेदयत्
३८ सतस्मादुपाध्यायःसर्वमेवभैक्ष्यमगृह्णात् ॥ सतथेत्युक्तःपुनररक्षद्गाअहनिरक्षित्वानिशामुखेगुरुकुलमागम्यगुरोरग्रतःस्थित्वानमश्चक्रे ३९ तमुपाध्या
यस्तथापिपीवानमेवदृष्ट्वोवाच ॥ वत्सोपमन्योसर्वमशेषतस्तेभैक्ष्यंगृह्णामिकेनेदानींवृत्तिंकल्पयसीति ४० सएवमुक्तउपाध्यायंप्रत्युवाच ॥ भगवतेनिवेद्यपूर्व
मपरंचरामितेनवृत्तिंकल्पयामीतितमुपाध्यायःप्रत्युवाच ४१

९ केदारोमहाक्षेत्रांतर्गतंचतुरस्रंतस्यखंडोजलनिरोधभित्तिस्तांबधानबध्नीहिकेदारेबहुजलप्रवेशेनबीजनाशोमाभूदितिभावः २२ नाशकत् शिष्यपरीक्षार्थंगुरुणायोगबलेनजलप्रवाहस्यदुर्वारत्वसंपादनादित्य
र्थः २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० उत्ऊर्ध्वंदारयतीत्युद्दालकः रलयोरभेदादुद्दालकइतिनिरुक्तिः ण्वुल् ३१ श्रेयऐहिकामुष्मिकसुखमपवर्गश्च सर्वेचेति विनाप्यध्ययनमैकाग्र्येणगु
रुमाराधयतासर्वाऽपिविद्यालभ्यतइतिभावः ३२ । ३३ । ३४ । ३५ पीवानंपुष्टं भूयोन्नादिरसंपीतबलमित्यर्थः वृत्तिंजीविकां ३६ । ३७ । ३८ । ३९ । ४० । ४१

वृत्त्युपरोधोवृत्तिप्रतिबंधः ४२ । ४३ चरसिभक्षयसि ४४ उपयोक्तुंभोक्तुं ४५ । ४६ । ४७। ४८ । ४९ अर्कपत्राण्यर्कवृक्षपत्राणि ५० क्षारेति अन्यदपिक्षारादिरूपंद्रव्यंचक्षुरुपघातकमेवेतिभावः । तीक्ष्णविपाकैःपाककालेउदरेऽग्निज्वालोत्थापकैः ५१ । ५२ । ५३ । ५४ । ५५ कर्तारावितिलुडंतं तौत्वांचक्षुष्मंतंकरिष्यतइत्यर्थः अत्रगुर्वनुज्ञातउपमन्युर्ऋग्भिरश्विनौतुष्टाविति स्मर्यते एतासामृचांकर्मसमवेतार्थप्रकाशकत्वंतत्समानार्थकमंतरोदाहरणपूर्वकंकर्ममीमांसकाःप्राहुः तदनुरागवलेनचानंतत्वादीनिब्रह्मलिंगान्यन्यथानिन्युस्तन्मंदं आसांकर्मणिविनियोगस्यादर्शनात् प्रत्यक्षब्रह्मलिंगैरर्थवत्त्वोपपत्तौलिंगमात्रात्कर्मणस्तत्रऋग्विनियोगस्यचकल्पनायाअनुदयात् । किंच । 'समारोप्यस्यरूपेणविषयोरूपवान्भवेत् ॥ विषयस्यतुरूपेणसमारोप्यंनरूपवत्'इति

नैषान्याय्यागुरुवृत्तिरन्येषामपिभैक्ष्योपजीविनांवृत्त्युपरोधंकरोषीइत्येवंवर्तमानोलुब्धोऽसीति ४२ सतथेत्युक्त्वागाअरक्षद्रक्षित्वाचपुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतःस्थित्वानमश्चक्रे ४३ तमुपाध्यायस्तथापिपीवानमेवदृष्ट्वापुनरुवाच ॥ वत्सोपमन्योअहंतेसर्वंभैक्ष्यंगृह्णामिनचान्यच्चरसिपीवानसिभृशंकेनवृत्तिंकल्पयसीति ४४ सएवमुक्तस्तमुपाध्यायंप्रत्युवाच ॥ भोएतासांगवांपयसावृत्तिंकल्पयामीति ॥ तमुवाचोपाध्यायोनैतन्न्याय्यंपयउपयोक्तुंभवतोमयानाभ्यनुज्ञातमिति ४५ सतथेतिप्रतिज्ञायगारक्षित्वापुनरुपाध्यायगृहमेत्यगुरोरग्रतःस्थित्वानमश्चक्रे ४६ तमुपाध्यायःपीवानमेवदृष्ट्वोवाच ॥ वत्सोपमन्योभैक्ष्यंनाश्नासिनचान्यच्चरसिपयोनपिबसिपीवानसिभृशंकेनेदानींवृत्तिंकल्पयसीति ४७ सएवमुक्तउपाध्यायंप्रत्युवाच ॥ भोःफेनंपिबामियमिमेवत्सामातॄणांस्तनात्पिबंतउद्गिरंति ४८ तमुपाध्यायःप्रत्युवाच ॥ एतेत्वदनुकंपयागुणवंतोवत्साःप्रभूततरंफेनमुद्गिरंति ॥ तदेषामपिवत्सानांवृत्त्युपरोधंकरोष्येवंवर्तमानः ॥ फेनमपिभवान्नपातुमर्हतीतिसतथेतिप्रतिश्रुत्यपुनररक्षद्गाः ४९ तथाप्रतिषिद्धोभैक्ष्यंनाश्नातिनचान्यच्चरतिपयोनपिबतिफेनंनोपयुंक्तेसकदाचिदरण्येक्षुधार्त्तोऽर्कपत्राण्यभक्षयत् ५० सतैरर्कपत्रैर्भक्षितैःक्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकैश्चक्षुष्युपहतोऽन्धोबभूव ॥ ततःसोऽन्धोऽपिचंक्रम्यमाणःकूपेपपात ५१ अथतस्मिन्ननागच्छतिसूर्येचास्ताचलावलंबिनिउपाध्यायःशिष्यानवोचत् ॥ नायात्युपमन्युःतऊचुर्वनंगतोगारक्षितुमितितानाहउपाध्यायः ५२ मयोपमन्युःसर्वतःप्रतिषिद्धःसनियतंकुपितस्ततोनागच्छतिचिरंततोऽन्वेष्यइत्येवमुक्त्वाशिष्यैःसार्धमरण्यंगत्वातस्याह्वानायशब्दंचकारभोउपमन्योक्वासिवत्सेहीति ५३ सउपाध्यायवचनंश्रुत्वाप्रत्युवाचोच्चैरयमस्मिन्कूपेपतितोऽहमितितमुपाध्यायःप्रत्युवाचकथंत्वमस्मिन्कूपेपतितइति ५४ सउपाध्यायंप्रत्युवाचअर्कपत्राणिभक्षयित्वाऽन्धीभूतोऽस्म्यतःकूपेपतितइतितमुपाध्यायःप्रत्युवाच ५५ अश्विनौस्तुहितौदेवभिषजौत्वांचक्षुष्मंतंकर्तारावितिः ॥ सएवमुक्तउपाध्यायेनोपमन्युरश्विनौस्तोतुमुपचक्रमेदेवावश्विनौवाग्भिर्ऋग्भिः ५६ 

न्यायेनयथारोपितभुजंगधर्मेणभीषणत्वादिनारज्जुर्विशेष्यतेनतुरज्जुधर्मेणाभिगम्यत्वादिनाभुजंगोविशेष्टुंशक्यःतत्स्वरूपलोपप्रसंगात् एवंब्रह्माध्यस्ताश्विदेवताधर्मेणविग्रहवत्त्वादिनाब्रह्मविशेष्टुंशक्यं नतुब्रह्मधर्मेणास्थूलत्वादिनादेवताविशेष्टुंशक्यातत्स्वरूपलोपप्रसंगात् । अतएवाकाशश्रुतिः'सर्वाणिहवाइमानिभूतान्याकाशादेवसमुत्पद्यंते'इत्यनन्यथासिद्धभूतोपादानत्वप्रकाशनसामर्थ्यरूपब्रह्मलिंगाद्ब्रह्मपरतयानीताआकाशस्तल्लिंगादित्यत्र । दृश्यतेचउभाउनूनमितिमंत्रेवितन्वातेधियइत्यश्विनोरंतर्यामित्वंतद्धियोयोनःप्रचोदयादित्यनेनतुल्यार्थंब्रह्मलिंगं सृण्येवेतिमंत्रेजर्भरीतुर्फरीतुइतिभर्तृत्वहंतृत्वे–

ब्रह्मलिंगे 'जर्भरीभर्तारावित्यर्थस्तुर्फरीतूहंतारो'इतियास्कीयनिर्वचनात् नचैतान्यसतिबाधकेसंकोचयितुंशक्यानि शास्त्रदृष्टिन्यायेनाश्विविग्रहोपलक्षितब्रह्मोपदेशार्थत्वोपपत्तेः अत्रहींद्रेणप्रतर्दनंप्रतिमामेवविजानीहीत्युक्तेर्देवतात्मनएववेद्यत्वापत्तौयच्छास्त्रदृष्टंशुद्धंब्रह्मतदभिप्रायेणायमुपदेशोनदेवतात्माभिप्रायेणेतिस्थितं अश्विनावितिद्वित्वंतुद्वासुपर्णेत्यस्यामृचितयोरन्यःपिप्पलंस्वाद्वत्तीतिसत्वमनश्नन्नन्योऽभिपश्यतिज्ञइतिपिंगिरहस्यव्याख्यातप्रकारेणोपाध्युपधेयभूतसत्त्वचैतन्यभेदाभिप्रायेण तेनात्रमायोपाधिकंजगत्कारणंब्रह्मप्रतिपाद्यते तज्ज्ञानस्यपरमपुरुषार्थहेतुत्वात् चक्षुःप्राप्तिस्तु'तस्माअक्षीनासत्याविचक्षआधत्तंदस्राभिषजावनर्वन्'इतिमंत्रेऽश्विनोश्चक्षुःप्रदत्वदर्शनादवांतरफलं विचक्षेविचक्षुषे आधत्तंदत्तवंतौ अनर्वन्वाहनशून्येकुंठितगतावपिभिषजौभैषज्यकरणेनानुग्राहकौअतएवलिंगात्सूर्यचंद्रपरत्वमस्याःस्तुतेर्विरुद्धं आख्यायिकातुगुरुदेवताभक्तेर्विद्याप्राप्त्यर्थत्वसूचनार्था । भिषक्तमंत्वाभिषजांशृणोमीतिपरमेश्वरेभिषक्त्वश्रवणादेवभिषजावित्युक्तं शेषंस्पष्टार्थं ५६ प्रगिभरित्युक्तंताऋचःपठति प्रपूर्वगौसृष्टेःप्राग्विद्यमानौ । 'सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयं'इतिश्रुतेः । पूर्वजौतावेवहिरण्यगर्भात्मकतांगतौपूर्वोत्पन्नौ । 'सवैशरीरीप्रथमः'इतिश्रुतेः । चित्रभानूविचित्रप्रपंचाकारेणभासमानौ 'ऐतदात्म्यमिदंसर्वं'इतिश्रुतेः गिराश्रवणजज्ञानेन वाशब्दश्चार्थे तपसामननध्यानात्मकेनालोचनेन आशंसामिप्रत्यगात्मत्वेनप्राप्तुमिच्छामि हियस्मादनंतौदेशकालवस्तुभिरपरिच्छिन्नौएतेनसत्त्वस्यावस्तुत्वमुक्तमन्यथाचितोवस्तुपरिच्छेदापत्तेः यस्मादनंतौतस्मादाशंसाम्यभयाय ब्रह्मविद्ब्रह्मैवभवतीतिश्रुतेः तज्ज्ञानादहमप्यनंतःस्यामित्यर्थः । अन्यथाद्वितीयाद्वैभयं

प्रपूर्वगौपूर्वजौचित्रभानूगिरावाऽऽशंसामितपसाह्यनंतौ ॥
दिव्यौसुपर्णाविरजौविमानावधिक्षिपंतौभुवनानिविश्वा १ ॥ ५७
हिरण्मयौशकुनीसांपरायौनासत्यदस्रौसुनसौवैजयंतौ ॥ शुक्लं
वयंतौतरसासुवेमावधिव्ययंतावसितंविवस्वतः २ ॥ ५८

भवतीतिश्रुतेःसंसारभयानिवृत्तिप्रसंगः । दिव्यौवृत्तितदुपारूढचैतन्यरूपेणद्योतमानौ सुपर्णौपक्षिवच्छरीरवृक्षारूढौ अधिक्षिपंतौभुवनानिविश्वा सत्त्वगतविक्षेपशक्त्यासर्वाणिभुवनानिविक्षिपंतौतदेतत्सत्त्वंयेनस्वप्नंपश्यतीतिश्रुतेःविश्वाविश्वानि सुपांसुलुगितिसुपोडादेशः विरजौरजःशब्दिताःपरमाणवोवारजःप्रधानंसांख्याभिमतंगुणत्रयंवातद्रहितौ सृष्टौतदनपेक्षावित्यर्थः बहुस्यांप्रजायेयेतितदात्मानं स्वयमकुरुतेतिस्वस्यैवबहुभवनाशंसनकरणश्रवणात् विमानौविगतंमानंप्रमासाधनंयतस्तौतुच्छचेनाभ्वपिहितंयदासीदिति सत्त्वस्यतुच्छत्वान्मानासहिष्णुत्वेनविमानत्वं चित्तस्तुयतोवाचोनिवर्त्तंतेअप्राप्यमनसासहेतिवाङ्मनसातीतत्वाद्मानत्वं ५७ अस्यैवसूत्रभूतस्यविवरणार्थान्युत्तरश्लोकाःप्रपूर्वगावितिसृष्टेःप्राक्पूर्वशब्देनकालसत्ताप्रतीयतेतांनिराचष्टेकालस्येवाश्विप्रवर्त्यत्वंवदन् हिरण्मयाविति हिरण्मयौशकुनी'हिरण्मयःशकुनिर्ब्रह्मनामा'इतिश्रुतेःरमणीयावसंगौचेत्यर्थः सांपरायौसर्वस्यलयाधिष्ठानभूतौ स्वयंचनासत्यदस्रौ असत्यंरज्जुभुजंगादिदस्रमुपक्षयधर्मकंघटादि तदुभयाभावरूपौ सुनसौशोभननासिकौविग्रहधर्मोऽयं वैनिश्चितं जयंतौकालं एतदेवाह विवस्वतः ल्यब्लोपेपंचमी विवस्वंतंसूर्यमुद्दिश्यातद्द्वाराअसितंकृष्णंरात्रिजातंशुक्लंदिनजातंचतंतुस्थानीयंतेनसंवत्सररूपंपटंवयंतौतंतुवायाविव तेनचपटेनतरसावेगेनसुवेमौसुमार्गौ वेतिलोकोयेनससुवेमः वेतेरौणादिकोमन् तौदेवपितृयाणावधिव्ययंतावुपस्थापयंतौ 'शुक्लकृष्णेगतीह्येतेजगतःशाश्वतेमते'इतिभगवद्वचनात् । एतावेवकर्मफलोपभोगायतत्तल्लोकमार्गप्रदौकालस्यचप्रवर्तकौ तस्मान्नद्वैतत्वक्षतिरितिभावः ५८

एवंब्रह्माद्वैतंप्रसाध्यैतदेववीतरागैर्ज्ञातंसन्मुक्तयेऽन्यथाबंधायभवतीत्याह । सुपर्णस्यपरमात्मनोबलेनकालशक्त्याग्रस्तांवर्त्तिकांसुपर्णसरूपांजीवपक्षिणीं अश्विनौदेवौसौभगायमहतेभाग्यायकैवल्याय अमुंचतांमोचितवंतौ मुक्त्युपायविदमित्यर्थः व्यतिरेकमुखेनमुक्त्युपायमाह तावदिति मायया अज्ञानेनसहवसन्तमाअतिशयेनवसंतोऽत्यंतंमूढाःपुरुषाः अरुणारागादिविषयाक्रांताः गाइंद्रिया णिप्रतियावत् अनमंतनतवंतः इंद्रियकैंकर्ययावदासीदित्यर्थः तावत्सुवृत्तावनात्मदोषास्पर्शिनो युवांजीवात्मरूपौकर्मीभूतौ उदाउदकप्रधानेनशरीरेण आपःपुरुषवचसइतिश्रुतेः उदोक्लेदनेइत्य स्मात्क्विप्यनिदितामितिनलोपेउदितिरूपं इत्थंभावेतृतीया तद्रूपेणाऽवहन्नूढवंतः रागादिग्रस्तायाबद्धवंत्यात्मानंदेहमेवतावन्मन्यंतेततश्चसंसरंतितस्माद्रागादिजयोमुक्त्युपायइत्युक्तंभवति ५९ काले कृतंकर्मापिमुक्त्युपायइत्याह धेनवोऽभिमतफलदोग्ध्योगावोऽहोरात्ररूपाःषष्टिश्चत्रिशताश्चसंख्याताएकंवत्संसंवत्सरंसुवतेनिर्वर्तयंतितंवत्संगोणकर्मभूतंनानागोष्ठाः पृथक्फलाअपिविहिताःक्रिया मुख्यकर्मभूताएकदोहनाएकमेवविविदिषाख्यंदुह्यतेतद्दोहनंदोग्धयेषांते अकर्तरिचकारकेइतिकर्मणिल्युट् दुहंतिविविदिषवः विविदिषंतियज्ञेनेत्यादिश्रुतेः यथोक्तंयज्ञेनेत्यादिवाक्यंशतपथविहि तंकर्मवृंदंगृहीत्वास्वोत्पत्त्याम्नानसिद्धंपुरुषंविविदिषामात्रसाध्येयुनक्तीति एकदोहना यैवत्संदुहंतितंतावश्विनौप्रसिद्धौगोस्थानीयौदुहतः अश्विनावेवकालंप्रसुवातेइत्यर्थः एतद्युवांदिशोजनयथ

ग्रस्तांसुपर्णस्यबलेनवर्तिकाममुंचतामश्विनौसौभगाय ॥ तावत्सुवृत्तावनमंतमाययावसत्तमागाअरु
णाउदाऽवहन् ३ ॥ ५९ षष्टिश्चगावस्त्रिशताश्चधेनवएकंवत्संसुवतेतंदुहंति ॥ नानागोष्ठाविहिताएक
दोहनास्तावश्विनौदुहतोघर्ममुक्थ्यम् ४ ॥ ६० एकांनाभिंसप्तशताअराःश्रिताःप्रधिष्वन्याविंशतिरर्पि
ताअराः ॥ अनेमिचक्रंपरिवर्ततेऽजरंमायाऽश्विनौसमनक्तिचर्षणी ५ ॥ ६१ एकंचक्रंवर्ततेद्वादशारंष
ण्णाभिमेकाक्षमृतस्यधारणम् ॥ यस्मिन्देवाअधिविश्वेविषक्तास्तावश्विनौमुंचतंमाविषीदतम् ६ ॥६२

इत्यत्रस्पष्टीकरिष्यते । कीदृशंवत्सं घर्मंतापकंसंहर्तारमितियावत् उक्थ्यंउत्तिष्ठत्यस्मात्कार्यजातं उत्पादकमित्यर्थः ६० एतत्कालचक्रमजरंसर्वान्देवमनुष्यान्क्षिणोतीत्याह चक्रस्यांतरमध्यमबाह्य वलयानिनाभिप्रधिनेमयःतेषांसंभेदकाष्ठानितिर्यंचिअराः एवंसतिएकांनाभिंसंवत्सराख्यांसप्तशताअराविंशतिश्चारा तेचार्धशोऽहानिरात्रयश्चश्रितानाभिंप्रधिषुचमध्यमवलयखंडेषुतेचद्वादशमाससंज्ञाः द्वादशप्रधयश्चक्रमितिश्रुतेः तेष्वर्पिताः नेमिचक्रंनियतप्रचारमिदंतुनतथामत्यहंदिनमानभेदेनपरिवर्तते अजरंअक्षयं मायामायामयं हेअश्विनौयुवाभ्यांप्रवर्तितमित्यर्थात्समनक्तिस्पृशति के चर्षणी ऐहिक्यामुष्मिक्यौप्रजे ततश्चद्विविधमपिभोगंनेच्छेत्क्षयिष्णुत्वादितिभावः ६१ एवंभचक्रस्यषष्टिघटिकात्मकैकाहोरात्रंनिर्वर्त्यप्रदक्षिणप्रक्रमैःषष्ट्यधिकशतत्रयसंमितैःसावनाख्यंसंवत्सरचक्रंजगदा युःक्षेपणमुक्तंद्वाभ्यां इदानींप्रदक्षिणावर्तेभचक्रेसूर्यचंद्रयोरप्रदक्षिणप्रक्रमेणनिर्वर्त्यसौरचांद्रसंवत्सरचक्रेकर्मोपयोगिनीआह तत्रैकस्मिन्नक्षेकोप्रोताःषट्शलाकाःपृथग्गताश्चेद्द्वादशारंषण्णाभिएकंचक्रंभ वति तत्रसंवत्सरोऽक्षः मेषाद्याराशयोद्वादशाराः षड्ऋतवोनाभयः तच्चक्रंऋतस्यकर्मफलस्यधारणंध्रियतेऽस्मिन्नितितथा अत्रहेतुः यस्मिन्विश्वेदेवाःकालाभिमानिनोऽधिविषक्ताः व्यवहिताश्चे तिच्छंदसिव्यवहितक्रियायाप्युपसर्गाणांसंबंधस्मरणात् तावश्विनौ मामांमुंचतंमोचयतंअस्माच्चक्रादितिशेषः किंभूतंमां विषीदतंजन्मादिदुःखेनविषादंप्राप्नुवंतं नुमभावश्छांदसः ततःकालो चितकर्मकरणोचिताः कालाभिमानिन्योदेवतास्तृप्यंतीष्टंफलंयजमानायप्रयच्छंत्यन्यथाविपरीतंकुर्वंतीतिभावः ६२

एवंकर्मणांविविदिषोत्पादनद्वाराविद्याहेतुत्वमुक्त्वा । सर्वंखल्विदंब्रह्मतज्जलानितिशांतउपासीतेतिश्रुत्युक्तांब्रह्मोपास्तिमाहचित्तैकाग्र्याय अश्विनौवृत्तभूयौवृत्तंनिर्वृत्तमुत्पन्नंवियदादितस्यभूयंभावः सु वोभावेइतिक्यप् अश्विनौकृत्स्नप्रपंचात्मकावित्यर्थः एतदेवाश्विनौलयकारणप्रदर्शनेनद्रढयति अश्विनौइंदुंसोमंतदुपलक्षितानिकर्माणि अमृतंतत्फलभूतमैहिकामुष्मिकंभोग्यजातं दासपत्नी सु पांसुलुगितिपूर्वसवर्णः अपःनैरुक्तप्रसिद्धेः अनुपलक्षितंवियदादिचतिरोधत्तांरज्जुरिवस्वाप्यस्तभुजंगमंतर्हितंकुरुतः अश्विनावेवसर्वात्मरूपेणोपास्यावितिभावः एवमुपासनालब्धचित्तैकाग्र्यस्यप्र त्यक्तत्त्वख्यापनायब्रह्मणएवसावद्धंधमसक्तिमाह हित्वेति अश्विनौस्वरूपेणब्रह्मैवसंतौबलस्यगिरिंसाधनसंपत्तेरुच्छ्रायमनाद्यविद्ययाहित्वागाःइंद्रियाणिमुदाविषयेंद्रियसंयोगजहर्षेणचरंतौचारयंतौवि षयभूमिषु तद्वृष्टिमद्वातस्यामुदोवृष्टिस्तद्वृष्टिस्तन्माहात्म्येनप्रस्थितौविषयजसुखार्थिमाहात्म्यात्पराक्रमावण्यमेवमाप्तौ अत्र नायमात्माबलहीनेनलभ्यइत्यत्रबलशब्दस्यबोधसाधनसंपद्वाचित्वंदृष्टं गिरि शब्दस्यापि । गिरतिहवैद्विषंतंपाप्मानमितिश्रौतनिर्वचनबलात्साधनसंपदुच्छ्रायपरतयाव्याख्यानंकृतं एवंचानादिविषयवासनावशाद्ब्रह्मैवबद्धमितिदर्शितं ६३ अस्यजीवस्यब्रह्मात्मतावबोधार्थं तत्पदार्थस्वरूपंतावदाह हेअश्विनौयुवांअग्रेसृष्टेःप्राक्दशदिशःप्राच्याद्याजनयथः अत्राकाशेएवसूर्योपाधिकीदिक्कल्पनाऽतस्तत्स्रष्टृत्वमप्याह मूर्ध्निअर्थादिशांअंतरिक्षेइत्यर्थः रथयानंरथेनयानंगम नमस्यतंसूर्यंसमानंसर्वेषामेकंतथावियंतिव्योमानिकल्पभेदात्सृष्टिभेदाद्वाबहुत्वं जनयथइत्यनुवर्तते तासांदिशांयातं अर्थात्तत्संबंधिनःसूर्यस्ययातंगमनमनुसूर्यकृतदिक्कालावनुलक्ष्यऋषयःप्रयांतिकर्म

अश्विनाविंदुममृतंवृत्तभूयौतिरोधत्तामश्विनौदासपत्नी ॥ हित्वागिरिमश्विनौगामुदाचरंतौतद्वृष्टिमन्हाप्रस्थितौबलस्य ७ ॥ ६३ युवांदिशोजनयथोदशाग्रे
समानंमूर्ध्निरथयानंवियंति ॥ तासांयातमृषयोऽनुप्रयांतिदेवामनुष्याःक्षितिमाचरंति ८ ॥ ६४ युवांवर्णान्विकुरुथोविश्वरूपांस्तेऽधिक्षियंतेभुवनानिविश्वा ॥
तेभानवोऽप्यनुसृताश्चरंतिदेवामनुष्याःक्षितिमाचरंति ९ ॥ ६५ तौनासत्यावश्विनौवांमहेऽहंस्रजंचयांबिभृथःपुष्करस्य ॥ तौनासत्यावमृतावृतावृधावृते देवा
स्तत्प्रपदेनसूते १० ॥ ६६

भिःप्रचरंति तथादेवामनुष्याश्चयथाधिकारंक्षितिमैश्वर्यमाचरंतिआसमंताद्भुंजते ६४ एवंभूतसृष्टिमुक्त्वाभौतिकींसृष्टिमाह भोअश्विनौयुवांवर्णान्तेजोबन्नानिलोहितशुक्लकृष्णवर्णवंतिविकुरुथःपर स्परमिश्रणेनविविधाकारान्कुरुथः । सेयंदेवतैक्षतहंताहमिमास्तिस्रोदेवताअनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणितासांत्रिवृतंत्रिवृतमेकैकांकरवाणीतिश्रुतेः विश्वरूपान् त्रीणिरूपाणीत्ये वसत्यमितिश्रुतेःसर्वेषांरूपाणांत्रिष्वेवांतर्भावाद्वर्णानांवैश्वरूप्यंतेवर्णाअधियंतेजनयंतिभुवनानिचतुर्दशभौतिकानि विश्वासर्वाणि तेप्रसिद्धाजीवाःअर्थाद्भानवोंऽशाइवांशाअपिविश्वानिभूतान्यनुसृताः देहेंद्रियबुद्धिरूपविकारानुसारिणोभूत्वाचरंतिविषयान्भुंजतेतएतेदेवामनुष्याअन्येऽपिपश्वादयःक्षितिंभूमिमाश्रित्यचरंतिवर्तंते । अत्राद्यश्लोकेन'तस्माद्वाएतस्मादात्मनआकाशःसंभूतः' इत्यादिश्रुतेर र्थोदर्शितः द्वितीयेईक्षणादिप्रवेशांतासृष्टिरीशेनकल्पितेत्येतत्प्रदर्शनेनतत्पदार्थतत्त्वंसर्वभूतस्रष्टृत्वंसर्वतःप्रविष्टत्वंचेत्येवंलक्षणंप्रदर्शितं ६५ उक्तविधंतत्पदार्थमनूद्यसएवसंघातप्रवर्तकोजीवोनान्यस्त तोऽस्तीत्याह तौप्रसिद्धौनासत्यावश्विनौवांयुवांमहेपूजयेऽहं वांयुवांपुष्करस्यव्योमपुष्करमंबरं आकाशोऽव्याकृतमव्यक्तमित्यनर्थांतरंतस्यस्रजंसृज्यतेइतिस्रक्कार्यजातंबिभृथःप्रविश्यधारयथस्तव पिमहेइत्यनुषज्यते तौनासत्यौ अमृतौनित्यमुक्तौ ऋतावृधौऋतस्यकर्मफलस्योपबृंहकौ नहिवृतिवृधीत्याविनादीर्घः ऋतेविना।देवावागाद्यभिमानिनोऽग्न्यादयः तत्प्रपदेतेषांवागादिविषयाणांव चनादीनांप्रपदेप्राप्तयेनसूतेनसुवतेनसमर्थाभवंति सूतेइतिच्छांदसोव्यत्ययः । 'कोह्येवान्यात्कःप्राण्यात् यदेषआकाशआनंदोनस्यात्'इतिश्रुतेः नचेतनंप्रवर्तकमृतेशकटवदचेतनःसंघातःप्रवर्ततइति–

भावः । तदेवंनान्योऽतोऽस्तिद्रष्टेतिचेतनांतरनिषेधात्तत्त्वमसीतिजीवेशयोरभेदश्रवणात्प्रपंचस्यचवाचारंभणंविकारोनामधेयमित्यनृतत्वश्रवणाच्चाद्वैतंब्रह्मशास्त्रसिद्धमत्रापिअश्विनोर्जगदुपादानत्वोक्त्या बोनासत्याविति पदद्वयेनतत्त्वंपदार्थयोः पूर्वापरार्धयोस्तुल्यशब्दोपादानेनजीवेशाभेदप्रतिपादनेनचमसाधितं ६६ एवंब्रह्मविद्यांसमाप्यकेषांचिन्मतेसंघातएवचेतयतेनान्यस्ततश्चेतनोऽस्तीतितद्दूषण पूर्वकंस्वस्यचक्षुःप्रार्थयते । युवानौमातापितरौ । अन्नात्पुरुषइतिश्रुतेः मुखेनान्नरूपंगर्भं प्रथमंलभेतांततएतदेतंगर्भं छांदसंक्लीबत्वं पुंसिरेतोरूपेणयोषितिशोणितरूपेणपरिणतंगतासुरचेतनोदे हःप्रपदेनप्रकर्षेणपद्यतेसुखमनेनेतिप्रपदमुपस्थेंद्रियं । सर्वेषामानंदानामुपस्थएकायनमितिश्रुतेः तेनपूर्वंरेतःसिक्सूतेपश्चात्स्त्री अतःसंघातस्यमलपिंडवदचेतनत्वंसिद्धं सद्योजातउत्पन्नमात्रोग र्भोबालोमातरमत्तिस्तनपानेप्रवर्ततइत्यर्थः तदेतज्जन्मांतरीयानुभवाहितसंस्कारमंतरेणनसंभवतीत्यस्तिपूर्वसिद्धःसंघातादन्यश्चेतनस्तत्प्रवर्तकइतिसिद्धं तावश्विनौस्तः अश्व्युपलक्षितंब्रह्म ताविति

मुखेनगर्भंलभेतांयुवानौगतासुरेतत्प्रपदेनसूते ॥ सद्योजातोमातरमत्तिगर्भस्तावश्विनौमुंचथोजीवसेगाः ११ ॥ ६७ स्तोतुंनशक्रोमिगुणैर्भवंतौचक्षुर्विहीनःपथिसंप्रमोहः ॥ दुर्गेऽहमस्मिन्पतितोऽस्मिकूपेयुवांशरण्यौशरणंप्रपद्ये १२ ॥ ६८ इत्येवंतेनाभिष्टुतावश्विनावाजग्मतुराहतुश्चैनंप्रीतौस्वएषतेऽपूपोऽशानैनमिति ६९ सएवमुक्तःप्रत्युवाचनानृतमूचतुर्भगवंतौनत्वहमेतमपूपमुपयोक्तुमुत्सहेगुरवेऽनिवेद्येति ७० ॥ ततस्तमश्विनावूचतुः ॥ आवाभ्यांपुरस्ताद्भवतउपाध्यायेनैवमेवाभिष्टुताभ्यामपूपोदत्तउपयुक्तःसतेनानिवेद्यगुरवेत्वमपितथैवकुरुष्वयथाकृतमुपाध्यायेनेति ७१ सएवमुक्तःप्रत्युवाचएतत्प्रत्यनुनयेभवंतावश्विनौनोत्सहेऽहमनिवेद्यगुरवेऽपूपमुपयोक्तुमिति ७२ तमश्विनावाहतुःप्रीतौस्वस्तवानयागुरुभक्त्या ॥ उपाध्यायस्यतेकार्ष्णायसादंताभवतोऽपिहिरण्मयाभविष्यंतिचक्षुष्मांश्चभविष्यसीतिश्रेयश्चावाप्स्यसीति ७३ सएवमुक्तोऽश्विभ्यांलब्धचक्षुरुपाध्यायसकाशमागम्याभ्यवादयत् ७४ आचचक्षेचसचास्यप्रीतिमान्बभूव ७५ आहचैनंयथाऽश्विनावाहतुस्तथात्वंश्रेयोऽवाप्स्यसि ७६ सर्वेचतेवेदाःप्रतिभास्यंतिसर्वाणिचधर्मशास्त्राणीति ॥ एषातस्यापिपरीक्षोपमन्योः ७७ अथापरःशिष्यस्तस्यैवापोदस्यधौम्यस्यवेदोनामतमुपाध्यायःसमादिदेशवत्सवेदइहास्यतांतावन्ममगृहेकंचित्कालंशुश्रूषुणाचभवितव्यंश्रेयस्तेभविष्यतीति ७८ सतथेत्युक्त्वागुरुकुलेदीर्घंकालंगुरुशुश्रूषणपरोऽवसत् ॥ गौरिवनित्यंगुरुणाधूर्षुनियोज्यमानःशीतोष्णक्षुत्तृष्णादुःखसहःसर्वत्राप्रतिकूलस्तस्यमहताकालेनगुरुःपरितोषंजगाम ७९

विधेयापेक्षयाद्वित्वंशैत्यंहियत्साप्रकृतिर्जलस्येतिवत् एतेनतत्त्वमसीतिवाक्यार्थउक्तः जीवसेजीवनाय गाश्चक्षुर्विमुंचथश्चक्षुःप्रतिबंधापनयनंक्रियास्तामित्यर्थः ६७ । ६८ अपूपोबहुच्छिद्रंस्नेहपक्वंभक्ष्यं यावंत्यपूपच्छिद्राणीतिव्रतविशेषेप्रसिद्धेः मधुविद्यायांमध्वपूपशब्देनमधुपेश्याबहुबिलायाग्रहणात्तत्सदृशेनैवापूपद्रव्येणभवितव्यमितिच अशानभक्षय ६९ । ७० । ७१ । ७२ दंताइवदंताःसुखदुःखभोजकत्वात्कर्माणि कृष्णमयोमलिनत्वाद्बंधकत्वाच्चाविद्यातन्मयाः उपाध्यायःकेवलकर्मार्जितेएवसुखदुःखेभुंक्तेइत्यर्थः तवतुहरतीतिहिरण्यंसंकल्पस्तन्मयास्तत्प्रधानादंता अतस्त्वं'सयदिपितृलोककामोभवतिसंकल्पादेवास्यपितरःसमुत्तिष्ठंति'इतिश्रुतेःसंकल्पमात्रसिद्धविषयोपनीतंसुखंभोक्ष्यसिब्रह्मविस्त्वादित्यर्थः एतेनानात्मज्ञस्यापिगुरोराराधनादात्मज्ञानंभक्तस्यभवति एकलव्यस्येवमृन्मयद्रोणाराधनादितिदर्शितं श्रेयोज्ञानं ७३ । ७४ । ७५ यथाश्विनावित्युक्त्यास्वस्यताद्दक्श्रेयःप्रदानेसामर्थ्याभावःसूचितउपाध्यायेन ७६ एषातस्येतिसूतवाक्यं ७७ शुश्रूषुणासेवापरेण ७८ गौर्बलीवर्दः ७९



अत्रोद्दालकपरीक्षायास्तात्पर्यंमत्यल्पमपिगुरुकार्यंदेहत्यागेनापिकर्तव्यं । उपमन्युपरीक्षायाअत्यावश्यकमप्याहारादिकंगुरुणाप्रतिषिद्धंचेत्यक्तव्यमेवेति । वेदपरीक्षायाअनर्हेऽपिकर्मणिगुरुणानियुक्तःशीतोष्णादिनाबाध्यमानोऽपिनविषीदेदनुग्रहइत्येवमत्वातिष्ठेदिति एवमग्रेऽप्याख्यायिकातात्पर्याण्यूह्यानि ८० 'अथसेवामनिच्छंतंगुरुमर्थेनतोषयेत् । गुर्वर्थंयतमानंतमनुगृह्णंतिदेवताः'इत्येतद्दर्शयितुमुत्तंकाख्यायिकामाह सउपाध्यायेनेत्यादिना । सवेदःसमावृत्तोमेखलाजिनादिब्रह्मचर्याश्रमलिंगंत्यक्त्वास्नातकत्वंप्राप्तः नेयेषनकामितवान् ८१ । ८२ निर्यांजयामासअग्निशुश्रूषादावि

तत्परितोषाच्चश्रेयःसर्वज्ञतांचावाप ॥ एषातस्यापिपरीक्षावेदस्य ८० सउपाध्यायेनानुज्ञातःसमावृत्तस्तस्माद्गुरुकुलवासाद्गृहाश्रमंप्रत्यपद्यततस्यापिस्वगृहेवसतस्त्रयःशिष्याबभूवुःसशिष्यान्नकिंचिदुवाचकर्मवाक्रियतांगुरुशुश्रूषाचेति ॥ दुःखाभिज्ञोहिगुरुकुलवासस्यशिष्यान्परिक्लेशेनयोजयितुंनेयेष ८१ अथकस्मिंश्चित्कालेवेदंब्राह्मणंजनमेजयःपौष्यश्चक्षत्रियावुपेत्यवरयित्वोपाध्यायंचक्रतुः ८२ सकदाचिद्याज्यकार्येणाभिप्रस्थितउत्तंकनामानंशिष्यंनियोजयामास ८३ भोयत्किंचिदस्मद्गृहेपरिहीयतेतदिच्छाम्यहमपरिहीयमानंभवताक्रियमाणमितिसएवंप्रतिसंदिश्योत्तंकंवेदःप्रवासंजगाम ८४ अथोत्तंकःशुश्रूषुर्गुरुनियोगमनुतिष्ठमानोगुरुकुलेवसतिस्म ॥ सतत्रवसमानउपाध्यायस्त्रीभिःसहिताभिराहूयोक्तः ८५ उपाध्यायिनीतिऋतुमतीउपाध्यायश्चप्रोषितोऽस्यायथाऽयमृतुर्वंध्योनभवतितथाक्रियतामेषाविषीदतीति ८६ एवमुक्तस्ताःस्त्रियःप्रत्युवाच ॥ नमयास्त्रीणांवचनादिदमकार्यंकरणीयम् ॥ नह्यहमुपाध्यायेनसंदिष्टोऽकार्यमपित्वयाकार्यमिति ८७ तस्यपुनरुपाध्यायःकालांतरेणगृहमाजगामतस्मात्प्रवासात् ॥ सतुतद्वृत्तंतस्याशेषमुपलभ्यप्रीतिमानभूत् ८८ उवाचचैनंवत्सोत्तंककिंतेप्रियंकरवाणीति ॥ धर्मतोहिशुश्रूषितोऽस्मिभवतातेनप्रीतिःपरस्परेणनौसंवृद्धातदनुजानेभवंतंसर्वानेवकामानवाप्स्यसिगम्यतामिति ८९ सएवमुक्तःप्रत्युवाचकिंतेप्रियंकरवाणीति एवमाहुः ९० यश्चाधर्मेणवैब्रूयाद्यश्चाधर्मेणपृच्छति ॥ तयोरन्यतरःप्रैतिविद्वेषंचाधिगच्छति ९१ सोऽहमनुज्ञातोभवताइच्छामीष्टंगुर्वर्थमुपहर्तुमिति ॥ तेनैवमुक्तउपाध्यायःप्रत्युवाचवत्सोत्तंकउष्यतांतावदिति ९२ सकदाचिदुपाध्यायमाहोत्तंकआज्ञापयतुभवान्किंतेप्रियमुपाहरामिगुर्वर्थमिति ९३ तमुपाध्यायःप्रत्युवाचवत्सोत्तंकबहुशोमांचोदयसिगुर्वर्थमुपाहरामीतितद्गच्छैनांप्रविश्योपाध्यायिनींपृच्छकिमुपाहरामीति ९४

तिशेषः ८३ । ८४ वसमानोवसन् उपाध्यायस्त्रीभिरुपाध्यायाश्रमस्थाभिः ८५ वंध्यउपगमशून्यः पाठांतरेएतत्कर्म विषीदतिपरिहीयते ८६ । ८७ । ८८ । ८९ । आहुर्वृद्धाः ९० यश्चेति । 'याजनेहिददतंवैनेतमयाजयंस्तस्माद्दद्याज्यःप्रतिगृह्णंतोवैतेतमयाजयंस्तस्मात्प्रतिगृह्णतायाज्यमुभयेराध्नुवंति'इतिश्रूयते तद्वदध्यापनेऽपियाजनेप्रतिग्रहवज्जीविकारूपेददेवाध्याप्यःप्रतिगृह्णतैवाध्याप्यमितिधर्मः तत्रयोदक्षिणायाअग्रहणेनाधर्मेणयोब्रूयादध्यापयेत् यश्चाधर्मेणतस्याअसमर्पणेनपृच्छत्यधीते अन्यतरःअदाताअप्रतिग्रहीतावा प्रैतिम्रियते विद्वेषंचान्यतरोऽदानादप्रतिग्रहाद्वाधिगच्छतिमद्दत्तदक्षिणायाअग्रहेतवअधर्मःस्यान्ममचत्वयिद्वेषःस्यादहमनेनकृतार्थोनकृतइतिभावः ९१ उष्यतामिति कालांतरेएतस्यगुरुदक्षिणादानानिर्बंधमपनेष्यामीतिभावः ९२ । ९३ । ९४

९५ पिनद्धेपरिहिते ९६ पुण्यकंव्रतविशेषः परिवेषणमन्नादिदानं ९७ ऋषभोवृषभःस्वाध्यायाध्ययनजोधर्मः तमधिरूढःपुमांस्तदधिष्ठातापरमेश्वरः ९८ तेनप्रेरितउत्तंकःपुरीषंधर्मफलममृतंमरण भयनिवृत्तयेभक्षयस्वांगीकुरुष्व ९९ सतदनिच्छन्नपिबलादिंद्रेणधर्मफलंग्राहितः १०० सतुपुरीषमेवेदमितिमत्वाभक्षयित्वाउत्थितोऽनुपविश्यैवापउपस्पृश्यकार्यशैघ्र्यात्प्रतस्थे अत्रऋषभादिरूपकेण

एषायद्ब्रवीतितदुपाहरस्वेति ॥ सएवमुक्तउपाध्यायेनोपाध्यायिनीमपृच्छद्भगवत्युपाध्यायेनास्म्यनुज्ञातोगृहंगंतुमिच्छामीष्टंतेगुर्वर्थमुपहृत्यानृणोगंतुमिति ९५ तदाज्ञापयतुभवतीकिमुपाहरामिगुर्वर्थमिति ॥ सैवमुक्तोपाध्यायिनीतमुत्तंकंप्रत्युवाच ॥ गच्छपौष्यंप्रतिराजानंकुंडलेभिक्षितुंतस्यक्षत्रिययापिनद्धे ९६ आनयस्व चतुर्थेऽहनिपुण्यकंभवितातताभ्यामाबद्धाभ्यांशोभमानाब्राह्मणान्परिवेष्टुमिच्छामि ॥ तत्संपादयस्वएवंहिकुर्वतःश्रेयोभविताऽन्यथाकुतःश्रेयइति ९७ सएवमुक्त स्तयाप्रातिष्ठतोत्तंकःसपथिगच्छन्नपश्यदृषभमतिप्रमाणंतमधिरूढंचपुरुषमतिप्रमाणमेवसपुरुषउत्तंकमभ्यभाषत ९८ भोउत्तंकैतत्पुरीषमस्यऋषभस्यभक्षय स्वेतिसएवमुक्तोनैच्छत् ९९ तमाहपुरुषोभूयोभक्षयस्वोत्तंकमाविचारयोपाध्यायेनापितेभक्षितंपूर्वमिति १०० सएवमुक्तोबाढमित्युक्त्वातदातदृषभस्यमूत्रं पुरीषंचभक्षयित्वोत्तंकःसंभ्रमादुत्थितएवापउपस्पृश्यप्रतस्थे १ यत्रसक्षत्रियःपौष्यस्तमुपेत्यासीनमपश्यदुत्तंकः ॥ सउत्तंकस्तमुपेत्याशीर्भिरभिनंद्योवाच २ अर्थीभवंतमुपागतोऽस्मीतिसएनमभिवाद्योवाच ॥ भगवन्पौष्यःखल्वहंकिंकरवाणीति ३ तमुवाचगुर्वर्थंकुंडलयोरर्थेनाभ्यागतोऽस्मीति ॥ येवैतेक्षत्रियया पिनद्धेकुंडलेतेभवान्दातुमर्हतीति ४ तंप्रत्युवाचपौष्यःप्रविश्यांतःपुरंक्षत्रियायाच्यतामिति ॥ सतेनैवमुक्तःप्रविश्यांतःपुरंक्षत्रियांनापश्यत् ५ सपौष्यंपुनरु वाचनयुक्तंभवताऽहमनृतेनोपचरितुंनहितेंऽतःपुरेक्षत्रियासन्निहितानैनांपश्यामि ६ सएवमुक्तःपौष्यःक्षणमात्रंविमृश्योत्तंकंप्रत्युवाच ॥ नियतंभवानुच्छिष्टःस्म रतावन्नहिसाक्षत्रियाउच्छिष्टेनाशुचिनाशक्याद्रष्टुंपतिव्रतात्वात्सैषानाशुचेर्दर्शनमुपैतीति ७ अथैवमुक्तउत्तंकःस्मृत्वोवाचास्तिखलुमयोत्थितेनोपस्पृष्टंगच्छता चेति ॥ तंपौष्यःप्रत्युवाचएषतेव्यतिक्रमोनोत्थितेनोपस्पृष्टंभवतीतिशीघ्रंगच्छताचेति ८ अथोत्तंकस्तंतथेत्युक्त्वाप्राङ्मुखउपविश्यसुप्रक्षालितपाणिपादवद नोनिःशब्दाभिरफेनाभिरनुष्णाभिर्हृद्गताभिरद्भिस्त्रिःपीत्वाद्विःपरिमृज्यखान्यद्भिरुपस्पृश्याचांतःपुरंप्रविवेश ९ ततस्तांक्षत्रियामपश्यत्साचदृष्ट्वैवोत्तंकंप्रत्युत्था याभिवाद्योवाचस्वागतंतेभगवन्नाज्ञापयकिंकरवाणीति ११० सतामुवाचैतेकुंडलेगुर्वर्थंमेभिक्षितेदातुमर्हसीति ॥ साप्रीतातेनतस्यसद्भावेनपात्रमयमनतिक्रमणी यश्चेतिमत्वातेकुंडलेऽवमुच्यास्मैप्रायच्छदाहचैनमेतेकुंडलेतक्षकोनागराजःसुभृशंप्रार्थयत्यप्रमत्तोनेतुमर्हसीति ११



धर्मबलादनिष्टनिवृत्तिरिष्टप्राप्तिश्चभवतीतिदर्शितं १ । २ । ३ । ४ तावतैवापराधेनक्षत्रियांनापश्यत् अशुचित्वदोषादिवेदानींतनानांदेवर्षिदर्शनादिकंनजायतइतिभावः ५ । ६ पतिव्रतात्वादिति पातिव्रत्याद्देवतावदल्पापराधेऽपिस्त्रियोदुर्लक्ष्याभवंतीतितद्धर्ममाहात्म्यंदर्शितं ७ अथेति तिष्ठतागच्छताचोपस्पृष्टमाचमनंकृतं तदकृतमेवेत्यर्थः ८ खानिइंद्रियाणि ९ । ११० सद्भावेनगुरुभक्त्या ११

हेभगवतित्वंनिर्वृतानिश्चिताभवइत्युवाचेतिसंबंधः १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ अत्रसर्वत्रशापव्याजेनसत्पात्रेकेशकीटाद्यवपन्नमन्नंददद्‌ंधोभवतीतिदर्शितं तस्मात्परीक्ष्यदे यमितिभावः विनापराधंदत्तःशापोऽपिनिष्फलोभवतीत्यप्युन्नेयं राज्ञादत्तस्यशापस्यवैयर्थ्यदर्शनात् १२० नचिराच्छीघ्रं २१ प्रत्यादातुमुपसंहर्तुं २२ नवनीतवत्शीघ्रद्रावि वाक्क्षुरवत्सद्यो

सएवमुक्तस्तांक्षत्रियांप्रत्युवाचभगवतिसुनिर्वृताभव ॥ नमांशक्तस्तक्षकोनागराजोधर्षयितुमिति १२ सएवमुक्त्वातांक्षत्रियामामंत्र्यपौष्यसकाशमागच्छत् ॥ आहचैनंभोःपौष्यप्रीतोऽस्मीतितमुत्तंकंपौष्यःप्रत्युवाच १३ भगवंश्चिरेणपात्रमासाद्यतेभवांश्चगुणवानतिथिस्तदिच्छेश्राद्धंकर्तुंक्रियतांक्षणइति १४ तमुत्तंकःप्र त्युवाचकृतक्षणएवास्मिशीघ्रमिच्छामि ॥ यथोपपन्नमन्नमुपस्कृतंभवतेतिसतथेत्युक्त्वायथोपपन्नेनान्नेनैनंभोजयामास १५ अथोत्तंकःसकेशंशीतमन्नंदृष्ट्वाअशुच्येतदि तिमत्वातंपौष्यमुवाच ॥ यस्मान्मेअशुच्यन्नंददासितस्माद‌ंधोभविष्यसीति १६ ॥ तंपौष्यःप्रत्युवाच ॥ यस्मात्त्वमप्यदुष्टमन्नंदूषयसितस्मात्त्वमनपत्योभविष्य सीतितमुत्तंकःप्रत्युवाच १७ नयुक्तंभवताऽन्नमशुचिदत्त्वाप्रतिशापंदातुंतस्मादन्नमेवप्रत्यक्षीकुरु ॥ ततःपौष्यस्तदन्नमशुचिदृष्ट्वातस्याशुचिभावमपरोक्षयामा स १८ अथतदन्नंमुक्तकेश्यास्त्रियायत्कृतमनुष्णंसकेशंचाशुच्येतदितिमत्वातमृषिमुत्तंकंप्रसादयामास १९ भगवन्नेतदज्ञानादन्नंसकेशमुपाहृतंशीतंतत्क्षामयेभवंतंन भवेयमंधइति ॥ तमुत्तंकःप्रत्युवाच १२० नमृषाब्रवीमिभूत्वात्वमंधोनचिरादनंधोभविष्यसीति ॥ ममापिशापोभवतादत्तोनभवेदिति २१ तंपौष्यःप्रत्युवाच नचाहंशक्तःशापंप्रत्यादातुंनहिमेमन्युरद्याप्युपशमंगच्छतिकिंचैतद्भवतानज्ञायतेतथा २२ नवनीतंहृदयंब्राह्मणस्यवाचिक्षुरोनिशितस्तीक्ष्णधारःतदुभयमेत द्विपरीतंक्षत्रियस्यवाङ्नवनीतंहृदयंतीक्ष्णधारमिति २३ तदेवंगतेनशक्तोऽहंतीक्ष्णहृदयत्वात्तंशापमन्यथाकर्तुंगम्यतामितितमुत्तंकःप्रत्युवाच ॥ भवताऽहम न्नस्याशुचिभावमालक्ष्यप्रत्यनुनीतःप्राक्चतेऽभिहितम् २४ यस्माददुष्टमन्नंदूषयसितस्मादनपत्योभविष्यसीति ॥ दुष्टेचान्नेनैषममशापोभविष्यतीति २५ साधयामस्तावदित्युक्त्वाप्रातिष्ठतोत्तंकस्तेकुंडलेगृहीत्वासोऽपश्यदथपथिनग्नंक्षपणकमागच्छंतंमुहुर्मुहुर्दृश्यमानमदृश्यमानंच २६ अथोत्तंकस्तेकुंडलेसन्यस्य भूमावुदकार्थंप्रचक्रमे ॥ एतस्मिन्नंतरेसक्षपणकस्त्वरमाणउपसृत्यतेकुंडलेगृहीत्वाप्राद्रवत् २७ तमुत्तंकोऽभिसृत्यकृतोदककार्यःशुचिःप्रयतोनमोदेवेभ्योगुरुभ्यश्च कृत्वामहताजवेनतमन्वयात् २८ तस्यतक्षकोदृढमासन्नःसतंजग्राहगृहीतमात्रःसतद्रूपंविहायतक्षकस्वरूपंकृत्वासहसाधरण्यांविवृतंमहाबिलंप्रविवेश २९ प्रवि श्यचनागलोकंस्वभवनमगच्छत् ॥ अथोत्तंकस्तस्याःक्षत्रियायावचःस्मृत्वातंतक्षकमन्वगच्छत् ३० सतद्बिलंदंडकाष्ठेनचखाननचाशकत् ॥ तंक्लिश्यमानमिं द्रोऽपश्यत्सवज्रंप्रेषयामास ३१ गच्छास्यब्राह्मणस्यसाहाय्यंकुरुष्वेति ॥ अथवज्रंदंडकाष्ठमनुप्रविश्यतद्बिलमदारयत् ३२

विच्छेदिकासुखजीवितादेरित्यर्थः २३ गम्यतांत्वयेतिशेषः तेत्वया २४ । २५ साधयामःशापभावंनिश्चिनुमः क्षपणकंपाखंडभिक्षुकं २६ उदकार्थंशौचाचमनादिप्रचक्रमेकर्तुमितिशेषः २७ नमस्कृत्वेतिसंबंधः २८ दृढमासन्नःअत्यंतसन्निहितः २९ अन्वगच्छदाज्ञातवान् ३० । ३१ ३२

प्रासादादेवनृदेवगृहाणि हर्म्याणिधनिकानांगृहाणि । वलभ्योऽभ्युच्छ्रिताउभयतोनमत्पक्षागृहविशेषाः । निर्यूहाःपट्टशालाः ३३ ऐरावतोराजायेषांते समितिःरणेशोभनाःश्लाघिनः जीमूताइवशस्त्रधाराःक्षरंतः सविद्युतःपवनस्येवईरितंगमनंयासांताःशीघ्राःसफालाश्च शस्त्रधाराइत्यध्याहारः ३४ कल्माषकुंडलाश्चित्रकुंडलाः ३५ । ३६ अर्कांशूनामतितीक्ष्णानां अर्थभूतराग्रऐरावतस्त्रातायदाएजतिदीप्यते । एजृभ्रेजृभ्राजृदीप्तावित्यस्यधातोरूपं । तदाष्टाधिकान्यष्टाविंशतिसहस्राणिसर्पाणांप्रग्रहाःसूर्यहयरश्मिभूतानागायांति सौरंतेजोपिषयत्तेजसानिरुद्धंप्रग्रहसर्पान्दग्धुमीष्टइत्यर्थः सार्धः ३७ । ३८ । ३९ । ४० । ४१ महद्युम्निरितीर्थविशेषइतिप्राञ्चः महद्युम्निःसूर्यस्तत्समीपेनागमुख्यतांप्रार्थयन् कुरुक्षेत्रेऽवसदितिपूर्वेणसंबंधः कुरुक्षेत्रवासमात्रादेवमहत्स्थानंप्राप्यतइत्याशयः द्युमानित्यत्रेमनिचआदिलोपआर्षः अत्रायमाख्यायिकातात्पर्यार्थः कुंडलरत्नंवस्तुतत्त्वंतक्षकेणेवपाखंडिनाअपहृतंपरमेश्वरप्रसादलब्धविवेकवज्रबलेनपाखंडमतविलमवदार्यविवेकमनु नागराजबिलतुल्यमांतरमांतरंकोशंपूर्वपूर्वकोशाद्रमणीयतरंप्रविश्यतत्रत्यासत्यसंकल्पत्वादिसंपद्दृष्टातदभिमानिनांसर्पतुल्यानामिंद्रियबुद्ध्यादिस्थानीयानामनुनयेनापितत्त्वरत्नंयदानप्राप्तंतदा

तमुत्तंकोऽनुविवेशतेनैवबिलेनप्रविश्यचतंनागलोकमपर्यंतमनेकविधप्रासादहर्म्यवलभीनिर्यूहशतसंकुलमुच्चावचक्रीडाश्चर्यस्थानावकीर्णमपश्यत् ३३ सतत्रनागांस्तानस्तुवदेभिःश्लोकैः ॥ यऐरावतराजानःसर्पाःसमितिशोभनाः ॥ क्षरंतइवजीमूताःसविद्युत्पवनेरिताः ३४ सुरूपाबहुरूपाश्चतथाकल्माषकुंडलाः ॥ आदित्यवन्नाकपृष्ठेरेजुरैरावतोद्भवाः ३५ बहूनिनागवेश्मानिगंगायास्तीरउत्तरे ॥ तत्रस्थानपिसंस्तौमिमहतःपन्नगानहम् ३६ इच्छेत्कोऽर्कांशुसेनायांचर्तुमैरावतंविना ॥ शतान्यशीतिरष्टौचसहस्राणिचविंशतिः ३७ सर्पाणांप्रग्रहायांतिधृतराष्ट्रोऽयदेजति ॥ येचैनमुपसर्पंतियेचदूरपथंगताः ३८ अहमैरावतज्येष्ठभ्रातृभ्योऽकरवंनमः ॥ यस्यवासःकुरुक्षेत्रेखांडवेचाभवत्पुरा ३९ तंनागराजमस्तौषंकुंडलार्थायतक्षकम् ॥ तक्षकश्चाश्वसेनश्चनित्यंसहचरावुभौ ४० कुरुक्षेत्रंचवसतांनदीमिक्षुमतीमनु ॥ जघन्यजस्तक्षकस्यश्रुतसेनेतियःसुतः ४१ अवसद्योमहद्युम्निप्रार्थयन्नागमुख्यताम् ॥ करवाणिसदाचाहंनमस्तस्मैमहात्मने ४२ एवंस्तुत्वासविप्रर्षिरुत्तंकोभुजगोत्तमान् ॥ नैवतेकुंडलेलेभेततश्चितामुपागमत् ४३ एवंस्तुवन्नपिनागान्यदातेकुंडलेनालभत्तदाऽपश्यत्स्त्रियौतंत्रेअधिरोप्यसुवेमेपटंवयंत्यौ ॥ तस्मिंस्तंत्रेकृष्णाःसिताश्चतंतवश्चक्रंचापश्यद्द्वादशारंषड्भिःकुमारैःपरिवर्त्यमानंपुरुषंचापश्यदश्वंचदर्शनीयम् ४४

संकटस्थःस्वयमेवपूर्वार्जितसांगाध्ययनधर्मबलादालोचितवानिति तत्रवेदेऽपिच्छांदोग्यादौगुरुशुश्रूषयातुष्टःपरमात्मास्वयमेवानुगृह्णातीतिदृष्टं यथासत्यकामस्यउपाध्यायगृहेरभिरक्षतोऽमानुषेभ्यऋषभादिभ्योविद्यालाभः तथाउपकोसलस्यगुरोरग्नीन्सेवमानस्याग्निभ्यएवविद्यालाभः एवमुत्तंकस्यापिब्रह्मचर्यदार्ढ्यात्प्रजापतेरिवस्वतएवज्ञानमुद्भविततियुज्यतएवेति ४२ । ४३ तत्रसंवत्सरात्मकपटरूपकेणप्रपंचस्वरूपमत्रनिरूप्यते तत्रस्त्रियौचितिर्माया च तंत्रंयत्रदीर्घतंतवःप्रोताभवंतितत्स्थानीयमविद्याकामकर्मात्मकंवासनाजालंतत्रस्थितत्सर्वंप्रतिष्ठितं पटःसंसारस्तंवयंत्यावविच्छिन्नतंतुसंतानेननिर्वर्तयंत्यौ प्रकाशाप्रकाशाभ्यामेवरज्जूरगादिजायतेनत्वन्यतरेणताद्दृशत्वात्संसारस्यचिदचिद्रूपयुवतीद्वयनिर्वर्त्यत्वंयुक्तं तस्मिंस्तंत्रेसुवेमेशोभनेवेमेतिर्यक्तंतुक्षिपणेतत्तुल्येपुण्यपापे तत्प्रयोज्येसितकृष्णतंतुस्थानीयेसुखदुःखे चक्रंतत्स्थूलशरीरं षड्भिर्वक्ष्यमाणैःकुमारैःपरिवर्त्यमानंसंचार्यमाणंपुरुषंचतदधिष्ठातारमंतर्यामिणंमायाविनं अश्वंचाध्रुवस्वभावंबुद्धिवशवर्तित्वात्तिरोहितासंगस्वभावंजीवं चातद्दर्शनीयमहंप्रत्ययगोचरंचापश्यत् ४४



सतान्सर्वांस्तुष्टावएभिर्वक्ष्यमाणैःश्लोकैः मंत्रवद्वेदगतऋग्भागवत् तत्त्वार्थप्रकाशकैरितिशेषः मंत्रवादेतिपाठेमंत्रवादोमंत्रस्वरूपं १४५ श्लोकानेवाह त्रीणीति । अत्रसंवत्सरःप्रजापतिरितिश्रुतेःसंवत्सररूपकेणप्रजापतिंविश्वात्मानंकृत्स्नसंसाराभिमानिनंसमष्टिजीवंस्तौति तत्रसंवत्सरस्यषष्ट्यधिकशतत्रयमहोरात्रादर्शपूर्णमासाख्यानिचतुर्विंशतिपर्वाणिषडृतवश्चेत्यवयवाः एवंप्रजापतेरपिचतुर्विंशतेस्तत्त्वानांयोगेसंघातरूपेचक्रेस्थूलसूक्ष्मशरीरात्मके तत्त्वानिचमूलप्रकृतिर्महान्अहंकारःपंचतन्मात्राणिएकादशेंद्रियाणिपंचमहाभूतानीति तत्रध्रुवेयावन्मोक्षस्थायिनि चक्रेचक्रवदनिशंभ्राम्यमाणे मध्येअंतर्योनित्यंचरतिविषयान्भुंक्तेभोक्तात्माअत्रास्मिन्नेवप्रत्यग्रूपेत्रीणिशतानिषष्टिश्चवासनातंतुयूथानिसमर्पितानि । तथाहृदयस्यहितानाड्योद्वासप्ततिःसहस्राणीतिश्रूयमाणसंख्याकानाड्यस्तत्तल्लोकगतिप्रदाःसंति तासांचैकैकस्मिँल्लोकेशब्दादीनांपंचानामपिसत्त्वात्प्रत्येकंपंचविधत्वं तथाचविस्तरेणतावत्सहस्रसंख्याकाअपिसंक्षेपात्त्रीणिशतानिषष्टिश्चोच्यंते एवंचास्मिन्भोक्तरितावत्योवासनाअर्पिताइत्यर्थः षट्कुमाराःजीवगताअविद्यास्मितारागद्वेषाभिनिवेशाख्याः 'तमोमोहोमहामोहस्तामिस्रोह्यंधसंज्ञितः । अविद्यापंचपर्वैषाप्रादुर्भूतामहात्मनः' इतिस्मृत्युक्तनामआयाख्यावापंचक्लेशाः । अनित्याशुचिदुःखानात्मसुनित्यशुचिदुःखात्मधीरविद्या अहमेवमहानस्मीतिधीरस्मिता शेषाःप्रसिद्धाः षष्ठीऐश्वरीमायाच एतेषट्कुमाराअविवेकवैराग्यबलवतासुजेयाअपितेपरिवर्तयंतिजन्ममरणप्रवर्षघटीयंत्रवदनिशंचालयंतीत्यर्थः ॥ १ ॥ ४६ तंत्रेचेदमिति इदंतंत्रंवासनाजालंविश्वरूपेविश्वरूपातावन्मायेवतामनुचितिरपिविश्वरूपा । 'इंद्रोमायाभिःपुरुरूपईयते

सतान्सर्वांस्तुष्टावएभिर्मंत्रवदेवश्लोकैः १४५ त्रीण्यर्पितान्यत्रशतानिमध्येषष्टिश्चनित्यंचरतिध्रुवेऽस्मिन् ॥ चक्रेचतुर्विंशतिपर्वयोगेषड्वैकुमाराःपरिवर्तयंति ॥ १ ॥ ४६ तंत्रंचेदंविश्वरूपेयुवत्यौवयतस्तंतून्सततंवर्तयंत्यौ ॥ कृष्णान्सितांश्चैवविवर्तयंत्यौभूतान्यजस्रंभुवनानिचैव ॥ २ ॥ ४७ वज्रस्यभर्ताभुवनस्यगोप्तावृत्रस्यहंतानमुचेर्निहंता ॥ कृष्णेवसानोवसनेमहात्मासत्यानृतेयोविविनक्तिलोके ॥ ३ ॥ १४८

रूपंरूपंप्रतिरूपोबभूव'इत्यादिश्रुतिभ्यः । युवत्यौबाल्यवार्धक्यकृतापकर्षशून्ये वयतःसंततुतः कथंसततंतंतून्वासनामयान्वर्तयंत्यौचालयंत्यौ तंतुवायाविवइमेषुबुद्धिचिदाभासरूपाभ्यांघटादिकंकवलीकृत्यतद्विषयांवासनांदृढयतइत्यर्थः । यद्वा युवत्यौधाताविधातारौ तत्रधातामायोपाधिरीश्वरःपर्जन्यवत्साधारणंकारणं विधाताविविधवासनामयत्वेनविचित्ररूपःसन्कर्ताजीवस्तच्चद्वीजवदसाधारणंकारणं तावेतौप्रयोज्यप्रयोजकरूपेणेदंतंत्रंसंसाराख्यंवयतइत्यादियथायोग्यंव्याख्येयं कृष्णान्दुःखरूपान्सितान्सुखमयान् विवर्तयंत्यौ वैपरीत्येनसुखेदुःखबुद्धिंदुःखेसुखबुद्धिंचसंपादयंत्यौ तथाऽऽजस्रंभूतानिजरायुजादीनिभुवनानितदाश्रयरूपाणिचतुर्दशतानिसर्वाणिविवर्तयंत्यावित्यनुकृष्यते ऊर्ध्वाधरीभावेनचालयंत्यावित्यर्थः ॥ २ ॥ ४७ एवंबंधस्वरूपंप्रदर्श्यतस्याज्ञानकार्यत्वेनज्ञानमात्रापनोद्यत्वमाह वज्रस्येति योऽयंचक्रेचरतिमोहदशायांसएवसाधकदशायांवज्रस्यविवेकस्यभर्ताभवति शास्त्रश्रवणेनगुर्वाद्यनुग्रहात् अतएवभुवनस्यगोप्ताविवेकवत्त्वाद्देवसर्वभूताभयदायी वृत्रस्यस्वरूपावरकस्याज्ञानस्यनिहंता सर्वत्रेंद्रवृत्रवज्रशब्दानामात्ममायाविवेकवाचित्वमाश्वमेधिकेस्पष्टीभविष्यति अनयैवदिशाकृत्स्नोवेदार्थोऽपिनिर्वोढव्यः । नमुचेःनमुंचतीत्यावरणापगमेसत्यपिप्रतिबिंबभ्रमवदित्यज्ञानगतविक्षेपशक्तिर्नमुचिस्तस्यापिनिहंता भूयश्चांतेविश्वमायानिवृत्तिरितिसत्यपिविद्ययाऽविद्योच्छेदेतद्विक्षेपशक्तेर्देहांतएवनाशश्रवणात् कृष्णेविद्याविद्येमायाकार्यत्वादुभेअपिकृष्णे यथोक्तंश्रीमद्भागवते । 'विद्याविद्येममतनूविद्ध्युद्धवशरीरिणां ॥ मोक्षबंधकरीआद्येमाययामेविनिर्मिते' इति । वसनेवसनवदावरके वसानःकरीकृतवान्–

उभेअपिस्वरूपाद्वहिर्भूतेइत्यर्थः अतएवमहात्माव्यापकस्तेनत्रिविधपरिच्छेदशून्यत्वमुक्तं अस्यचिद्रूपत्वमाह सत्यानृते सत्यमबाधितंप्रत्यगात्मतत्त्वंअनृतमहंकारादितदुभयंयोविविनक्तिपृथक्करो तियस्तस्मैनमइत्युत्तरेणसंबंधः स्थूलसूक्ष्मकारणाख्योपाधित्रयंनिरस्यस्वमहिमप्रतिष्ठोभवतीत्यर्थः एतेनदृश्यस्याहंकारादेःपृथक्करणेनदृङ्मात्रमात्मतत्त्वमितिदर्शितं ॥ ३ ॥ ४८ अस्यैवंभूतस्यचि दात्मनःसमष्टिव्यष्टिपिंडांतःप्रविष्टत्वंदर्शयति यइति यआत्मापूर्वोक्तोवैश्वानरंविराजंविश्वंवावाहनंस्वारोहणस्थानमभ्युपैतिअभितउपैत्युपगच्छति । तत्सृष्ट्वातदेवानुप्राविशदितिश्रुतेः उपाध्या त्मतांचचेत्यर्थः । आकस्मिकत्वमभ्युपगंतव्याभ्युपगमयोर्वारयति पुराणमिति कार्यरूपेणक्षयिष्णुमपिकारणरूपेणसततंसंतमित्यर्थः अपांगर्भमिवगर्भंप्रतिबिंबभूतं नतुब्रह्मैकदेशभूतं तस्यासंगत्वादनं शत्वाच वाजिनं इंद्रियंवैवीर्यंवाजिनमितिश्रुतेश्चिदात्मनोजडशक्तिरूपं यएवंभूतोऽपिजीवत्वंमिथ्यैवप्रतिबिंबरूपेणाप्यतेतस्मैनमोऽस्तु जगदीश्वरायचतुर्दशभुवननियंत्रे लोकत्रयंजाग्रत्स्वप्नसुषु

योवाजिनंगर्भमपांपुराणंवैश्वानरंवाहनमभ्युपैति ॥ नमोऽस्तुतस्मैजगदीश्वरायलोकत्रयेशायपुरंदराय ॥ ४ ॥ ४९ ततःसएनंपुरुषःप्राहप्रीतो ऽस्मितेहमनेनस्तोत्रेणकिंतेप्रियंकरवाणीतिसतमुवाच १५० नागामेवशमीयुरितिसचैनंपुरुषःपुनरुवाचएतमश्वमपानेधमस्वेति ५१ ततोऽश्व स्यापानमधमत्ततोऽश्वाद्धम्यमानात्सर्वस्रोतोभ्यःपावकार्चिषःसधूमानिष्पेतुः ५२ ताभिर्नागलोकउपधूपितेऽथसंभ्रांतस्तक्षकोऽग्नेस्तेजोभयाद्वि षण्णःकुंडलेगृहीत्वासहसाभवनान्निष्क्रम्योत्तंकमुवाच ५३ इमेकुंडलेगृह्णातुभवानितिसतेप्रतिजग्राहोत्तंकःप्रतिगृह्यचकुंडलेऽचिंतयत् ५४ अद्यत त्पुण्यकमुपाध्यायिन्यादूरंचाहमभ्यागतःसकथंसंभावयेयमितिततएनंचिंतयानमेवसपुरुषउवाच ५५ उत्तंकएनमेवाश्वमधिरोहत्वांक्षणेनैवोपाध्या यकुलंप्रापयिष्यतीति ५६ सतथेत्युक्त्वातमश्वमधिरुह्यप्रत्याजगामोपाध्यायकुलंउपाध्यायिनीचस्नाताकेशानावापयंत्युपविष्टोत्तंकोनागच्छतीति शापायास्यमनोदधे ५७ अथैतस्मिन्नंतरेसउत्तंकःप्रविश्यउपाध्यायकुलंउपाध्यायिनीमभ्यवादयत्तेचास्यैकुंडलेप्रायच्छत्साचैनंप्रत्युवाच ५८ उ त्तंकदेशेकालेऽभ्यागतःस्वागतंतेवत्सत्वमनागसिमयानशप्तःश्रेयस्तवोपस्थितंसिद्धिमाप्नुहीति ५९ अथोत्तंकउपाध्यायमभ्यवादयत् ॥ तमुपाध्यायः प्रत्युवाचवत्सोत्तंकस्वागतंतेकिंचिरंकृतमिति १६०

प्तानितेषामीशाय एवंतत्त्वंपदवाच्यार्थरूपित्वमुक्तंतल्लक्ष्यार्थरूपित्वमाह पुरंदरायेति पुराणिव्यष्टिसमष्ट्यात्मकानित्रीणित्रीणिशरीराणिदारयतिविद्ययाऽविद्योच्छेदेनसमूलमुन्मूलयतीतितथा सर्वोपाधिशून्यचिन्मात्रायेत्यर्थः पुराणिदारयतीतिस्थितेवाचंयमपुरंदरौचेतिखश्नुमागमश्चनिपात्येते ॥ ४ ॥ ४९ । १५० एतमश्वमपानेधमस्वेतिवैराजमैश्वर्यंप्रदर्शयेत्यर्थः ५१ स्रो तोभ्यःशरीररंध्रेभ्यः १५२ उपधूपितेधूमेनव्याप्ते ततएवसर्वेश्वरत्वाविर्भावात्तक्षकःशरणागतोबभूवेतितात्पर्यं १५३ । १५४ । १५५ । १५६ ततएवसत्यसंकल्पत्वाख्यंवैराजं भावमारूढःक्षणेनगुरुकुलंप्राप । आवापयंतीदंतपत्रिकयावेणीरूपेणसंग्रथनंकेशानांकारयंती १५७ । १५८ यदिक्षणंनागतःस्यास्तर्ह्यनागसिअपराधाभावेऽपिमयाशप्तःस्याइत्यर्थः श्रेय स्तत्त्वज्ञानं सिद्धिमणिमाद्यैश्वर्यं १५९ । १६० ॥ ३० ॥

६१ इदानींस्वयमपरोक्षीकृतमर्थंगुरुमुखेनाधिगंतुमुत्तंकःपृच्छति तत्रचेत्यादिना ६२ सोपचारंसानुनयं ६४ 'आचार्याद्धैवविद्याविदितासाधिष्ठंप्रापत्' इतिश्रुतेरमानुषैरुक्ताऽपिविद्यागुरुमुखेनदृढीकृता बाढंफलवतीभवतीतिभावः ६५ स्त्रियौधाताविधाताचेति दधातिसत्तास्फूर्तीकार्येष्वितिधाताचितिः विविधरूपेणदधातिधारयत्यात्मानमित्यनेकविकारवतीमायाविधाता रात्रिवद्व्यामोहकत्वा दुःखंरात्रिः अहर्वत्प्रसादकत्वात्सुखमहः ऋतुवदनिशंभ्रममाणत्वादृतुशब्देनाविद्यादिपंचकंमायाचेतिपूर्वोक्तमेवषट्कं संवत्सरःप्रजापतिःसर्वोपाधित्वसाम्यादुदाहृतश्रुतेश्च नहिसंवत्सराख्यःकालो नामकिंचित्सूर्यादिपरिस्पंदाल्पत्वबहुत्वादिनानुमेयंवस्तुनिजीर्णत्वनूतनत्वादिव्यवहारहेतुतयासिद्धमिदानींतदानीमित्यादिव्यवहारालंबनंद्रव्यमस्ति घटादिद्रव्यस्यैवपूर्वापरदेशसंबंधेननूतनत्वातीत

तमुत्तंकउपाध्यायंप्रत्युवाच ॥ भोस्तक्षकेणमेनागराजेनविघ्नःकृतोऽस्मिन्कर्मणितेनास्मिनागलोकंगतः ६१ तत्रचमयादृष्टेस्त्रियौतंत्रेऽधिरोप्यपटंवयंत्यौतस्मिंश्च कृष्णाःसिताश्चतंतवःकिंतत् ६२ तत्रचमयाचक्रंदृष्टंद्वादशारंषड्भिश्चैनंकुमाराःपरिवर्तयंतितदपिकिम् ॥ पुरुषश्चापिमयादृष्टःसचापिकः ॥ अश्वश्चातिप्रमाणो दृष्टःसचापिकः ६३ पथिगच्छताचमयाऋषभोदृष्टस्तंचपुरुषोऽधिरूढस्तेनास्मिसोपचारमुक्तउत्तंकास्यऋषभस्यपुरीषंभक्षयउपाध्यायेनापितेभक्षितमिति ६४ ततस्तस्यवचनान्मयातदृषभस्यपुरीषमुपयुक्तंसचापिकः ॥ तदेतद्भवतोदिष्टमिच्छेयंश्रोतुंकिंतदिति ॥ सतेनैवमुक्तउपाध्यायःप्रत्युवाच ६५ येतेस्त्रियौधाताविधाताचयेचतेकृष्णाःसितास्तंतवस्तेरात्र्यहनी ॥ यदपिचचक्रंद्वादशारंषड्भिःकुमाराःपरिवर्तयंतितेपिऽषड्ऋतवःसंवत्सरश्चक्रम् ६६ यःपुरुषः सपर्जन्यःयोऽश्वःसोऽग्निःयऋषभस्त्वयापथिगच्छतादृष्टःसऐरावतोनागराट् ६७ यश्चैनमधिरूढःपुरुषःसचेंद्रःयदपितेभक्षितंतस्यऋषभस्यपुरीषंतदमृतंते नखल्वासितस्मिन्नागभवनेनव्यापन्नस्त्वम् ६८ सहिभगवानिंद्रोममसखात्वदनुक्रोशादिममनुग्रहंकृतवान् ॥ तस्मात्कुंडलेगृहीत्वापुनरागतोऽसि ६९ तत्सौम्यगम्यतामनुजानेभवंतंश्रेयोऽवाप्स्यसीति ॥ सउपाध्यायेनानुज्ञातोभगवानुत्तंकःक्रुद्धस्तक्षकंप्रतिचिकीर्षमाणोहास्तिनपुरंप्रतस्थे १७० सहा स्तिनपुरंप्राप्यनचिराद्विप्रसत्तमः ॥ समागच्छतराजानमुत्तंकोजनमेजयम् १७१


त्वाद्यवस्थाभेदेनचतदुपपत्तेःकिमंतर्गडुनाकालेनेतिप्रजापतिरेवसंवत्सरशब्दार्थः ६६ यःपुरुषःसपर्जन्यः पर्जन्यवत्तापनाशकत्वादाचार्यरूपीईश्वरः योश्वःसोऽग्निर्भोक्ताजीवइत्यर्थः इराअन्नं तद्वानिरावान्क्रतुस्तत्उत्पन्नऐरावतोधर्मः नागराड्विवाप्रकंप्यः शेषमुक्तार्थं ६७ नव्यापन्नोनमृतः ६८ सहीति ममजीवस्यसखा परमेश्वरोह्यंतरात्मत्वात्सर्वेषांसखा । द्वासुपर्णासयुजास खायेतिमंत्रवर्णात् सहिसर्वान्स्वधर्मस्थाननुगृह्णाति तत्प्रतिकूलस्यतक्षकस्येवकुलक्षयंचकरोतीत्याख्यायिकातात्पर्यं 'खलोनप्रार्थनासाध्यःसचदंडेनदंडितः । अभ्येतिमृदुतांपश्चादुत्तंकेतक्षकोयथा' ६९ प्रतिचिकीर्षमाणः हेठांशानच् तक्षकंबाधितुमित्यर्थः १७० हर्षकालेराजानमर्थयेतेतिभावः १७१

१७२ शव्यतइतिशव्दोऽर्थस्तेनसंपन्नयाविशिष्टार्थवत्या ७३ । ७४ । ७५ । ७६ । ७७ । ७८ योऽस्मान्द्वेष्टियंचवयंद्विष्मस्तंहन्मीतिमंत्रलिंगानुमितेशत्रुर्हंतव्यएवेत्यस्मिन्नर्थेविधौसाध्ये ऽध्यंयत्कर्मसर्पसत्राख्यंतस्यकार्यस्यावश्यानुष्ठेयस्यकर्तव्यतायावाकालंमन्ये अपचितिंप्रतिक्रियां ७९ । १८० । ८१ मुख्यमपराधमाह यियासुमिति विषहरणायजिगमिषुमर्थदानेनन्यव र्तयत् पिपासुमितिपाठेरिरक्षिषुमित्यर्थः ८२ । ८३ । ८४ । ८५ वाक्यहविषावाक्यरूपेणोद्दीपकेनहविषाघृतादिना ८६ । ८७ वृत्तंमृतं 'वृत्तोऽतीतेदृढेख्यातेवर्तुलेऽपिमृते

पुरातक्षशिलासंस्थंनिवृत्तमपराजितम् ॥ सम्यग्विजयिनंदृष्ट्वासमंतान्मंत्रिभिर्वृतम् १७२ तस्मैजयाशिषःपूर्वंयथान्यायंप्रयुज्यसः ॥ उवाचैनंवचःकालेशब्द संपन्नयागिरा ७३ ॥ उत्तंकउवाच ॥ अन्यस्मिन्करणीयेतुकार्येपार्थिवसत्तम ॥ बाल्यादिवान्यदेवत्वंकुरुषेनृपसत्तम ७४ ॥ सौतिरुवाच ॥ एवमुक्तस्तुवि प्रेणसराजाजनमेजयः ॥ अर्चयित्वायथान्यायंप्रत्युवाचद्विजोत्तमम् ७५ ॥ जनमेजयउवाच ॥ आसांप्रजानांपरिपालनेनस्वंक्षत्रधर्मंपरिपालयामि ॥ प्रब्रू हिमेकिंकरणीयमद्ययेनासिकार्येणसमागतस्त्वम् ७६ ॥ सौतिरुवाच ॥ सएवमुक्तस्तुनृपोत्तमेनाद्विजोत्तमःपुण्यकृतांवरिष्ठः ॥ उवाचराजानमदीनसत्वंस्वमे वकार्यंनृपतेकुरुष्व ७७ ॥ उत्तंकउवाच ॥ तक्षकेणमहींद्रेंद्रयेनतेहिंसितःपिता ॥ तस्मैप्रतिकुरुष्वत्वंपन्नगायदुरात्मने ७८ कार्यकालंहिमन्येऽहंविधिदृष्टस्य कर्मणः ॥ तद्गच्छापचितिंराजन्पितुस्तस्यमहात्मनः ७९ तेनह्यनपराधीसदष्टोदुष्टांतरात्मना ॥ पंचत्वमगमद्राजावज्राहतइवद्रुमः १८० बलदर्पसमुत्सि क्तस्तक्षकःपन्नगाधमः ॥ अकार्यंकृतवान्पापोयोऽदशत्पितरंतव ८१ राजर्षिवंशगोप्तारममरप्रतिमंनृपम् ॥ यियासुंकश्यपंचैवन्यवर्तयतपापकृत् ८२ होतुम र्हसितंपापंज्वलितेहव्यवाहने ॥ सर्पसत्रेमहाराजत्वरितंतद्विधीयताम् ८३ एवंपितुश्चापचितिंकृतवांस्त्वंभविष्यसि ॥ ममप्रियंचसुमहत्कृतंराजन्भविष्यति ८४ कर्मणःपृथिवीपालममयेनदुरात्मना ॥ विघ्नःकृतोमहाराजगुर्वर्थंचरतोऽनघ ८५ ॥ सौतिरुवाच ॥ एतच्छ्रुत्वातुनृपतिस्तक्षकायचुकोपह ॥ उत्तंकवाक्य हविषादीप्तोऽग्निर्हविषायथा ८६ अपृच्छत्सतदाराजामंत्रिणस्तान्सुदुःखितः ॥ उत्तंकस्यैवसान्निध्येपितुःस्वर्गगतिंप्रति ८७ तदैवहिसराजेंद्रोदुःख शोकाप्लुतोऽभवत् ॥ यदैववृत्तंपितरमुत्तंकादशृणोत्तदा १८८ ॥ इति श्रीमहाभारते आदिपर्वणि पौष्यपर्वणि पौष्याख्याने तृतीयोऽध्यायः ॥ ३ ॥ ॥ समाप्तंचपौष्यपर्व ॥ ॥ ॥

वृते'इतिविश्वः तक्षकविषेणेतिशेषः 'धर्मोयत्रमेऽनुकूलाःस्युर्देवारतत्प्रतिबध्नतः । तक्षकस्यैवदुःखाप्तिरितिपौष्येव्यवस्थितम्'इतिरत्नगर्भः १८८ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे तृतीयोऽध्यायः ॥ ३ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥



एवंकृतोपोद्घातंभारतमारभते लोमहर्षणेत्यादिपूर्ववद्व्याख्येयं अत्रसौतिरुवाचेतिपाठेलोमहर्षणपुत्रादीनांसृष्टिप्रवाहानादितयाप्रतिकल्पंसमाननामरूपाधिकारपुरुषविशेषवचनानां । सूर्याचंद्रमसौधाता यथापूर्वमकल्पयदित्यादिश्रुतिभ्यः स्थानपतिसेनापत्यादिशब्दवदधिकारविशेषवाचित्वादेतत्कल्पीयसौतिवचनंपूर्वकल्पीयलोमहर्षणपुत्रादिपरमिति एवंसर्पसत्रादिकथाऽपिकृतत्रेतादियुगस्थानुरुरु प्रभृतीन्प्रत्युच्यमानापूर्वकल्पीयसर्पसत्रादिपरेतिध्येयं १ पौराणिकःपुराणंपण्यंजीविकास्येतिव्युत्पत्तिंनिराकरोतिपुराणेकृतश्रमइति । अत्रब्राह्मण्यांक्षत्रियात्सूतइतिस्मृत्युक्तोविलोमजोजातिसूतःसंजया धिरथादिरन्यः यस्यजीविकासारथ्यंवापुराणराज्ञांशौर्यौदार्यादिवर्णनेनस्वामिप्रोत्साहनंच । अतएवास्यपौराणिकइतिसंज्ञा उग्रश्रवास्तुसौतिरेवनजातिसूतःतथात्वेतत्रापिसूतशब्दप्रयोगोपपत्तेःसौ तिरित्यपत्यार्थस्यतद्धितस्यानर्थक्यंस्यात् किंतर्हि अग्निकुंडसमुद्भूतसूतनिर्मलमानसेतिरोमहर्षणंप्रतिशौनकवचनस्यपुराणांतरेदर्शनादग्निजोरोमहर्षणःसतस्तस्यचब्राह्मणसंकल्पाद्ब्रह्मासनार्हत्वं धृष्टद्युम्न स्यक्षत्रियत्ववत् ब्रह्मासनंचवैशंपायनशांतव्रतमार्कंडेयादितुल्यस्तत्सजातीयएवार्हतिनहीनः नहिमहांतःशौनकादयोहीनात्परंरहस्यंजगृहुरितिवकंयुक्तं नहीनतःपरमभ्याददीतेत्यत्रैवतन्निषेधात् । नीचाद

॥ अथपौलोमपर्व ॥ लोमहर्षणपुत्रउग्रश्रवाःसौतिःपौराणिकोनैमिषारण्येशौनकस्यकुलपतेर्द्वादशवार्षिकेसत्रेऋषीनभ्यागतानुपतस्थे १ पौराणिकःपुराणेकृत श्रमःसकृतांजलिस्तानुवाच ॥ किंभवंतःश्रोतुमिच्छंतिकिमहंप्रब्रवाणीति २ ॥ तमृषयऊचुः ॥ परमंलौमहर्षणेवक्ष्यामस्त्वांनःप्रतिवक्ष्यसिवचःशुश्रूषतांकथा योगंनःकथायोगे ३ तत्रभगवान्कुलपतिस्तुशौनकोऽग्निशरणमध्यास्ते ४ योऽसौदिव्याःकथावेददेवतासुरसंश्रिताः ॥ मनुष्योरगगंधर्वकथावेदचसर्वशः ५ सचाप्यस्मिन्मखेसौतेविद्वान्कुलपतिर्द्विजः ॥ दक्षोधृतव्रतोधीमाञ्छास्त्रेचारण्यकेगुरुः ६ सत्यवादीशमपरस्तपस्वीनियतव्रतः ॥ सर्वेषामेवनोमान्यःसतावत्प्र तिपाल्यताम् ७ तस्मिन्नध्यासतिगुरावासनंपरमार्चितम् ॥ ततोवक्ष्यसियत्त्वांसप्रक्ष्यतिद्विजसत्तमः ८ ॥ सौतिरुवाच ॥ एवमस्तुगुरौतस्मिन्नुपविष्टे महात्मनि ॥ तेनपृष्टःकथाःपुण्यावक्ष्यामिविविधाश्रयाः ९ सोऽथविप्रर्षभःसर्वंकृत्वाकार्यंयथाविधि ॥ देवान्वाग्भिःपितॄनद्भिस्तर्पयित्वाऽऽजगामह १० यत्रब्र ह्मर्षयःसिद्धाःसुखासीनाधृतव्रताः ॥ यज्ञायतनमाश्रित्यसूतपुत्रपुरःसराः ११ ऋत्विक्ष्वथसदस्येषुसवैगृहपतिस्तदा ॥ उपविष्टेषूपविष्टःशौनकोऽथाब्रवी दिदम् १२ ॥ इति श्रीमहाभारते आदिपर्वणि पौलोमपर्वणिकथाप्रवेशोनामचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ५ ॥ ॥

प्युत्तमांविद्यांप्राह्येतित्वापद्विषयमेतत् अतएवतद्वधाद्बलरामेणब्रह्महत्याव्रतंचीर्णमितिस्मर्यतेतत्रसूतशब्दस्तुकथाप्रवक्तृत्वसामान्यात् तस्माद्ब्राह्मणएवपुराणप्रवक्तृत्वेनवरणीयःश्रोतुकामैर्नहीनः पौराणि कपदंनजातिसूतपरमपितुपुराणाध्येतृब्राह्मणपरमिति २ परममिति हेलौमहर्षणेत्वांपरमंवचोवक्ष्यामः परमंब्रह्मवक्ष्यामस्त्वत्प्रयोजकत्वेनवाचयिष्यामः शौनकेसमागतेइतिशेषः कथायोगंकथास मुदायं शुश्रूषतांनः त्वंप्रतिवक्ष्यसीतिज्ञात्वेतिशेषः नोऽस्माकंकथायोगेकथाप्रसंगेइतिव्यवहितान्वयेनयोज्यं ३ अग्निशरणमग्निगृहं ४ वेदतात्पर्यंबोद्धुमितिशेषः ५ शास्त्रेविधिनिषेधप्रधानेकर्मकांडे आरण्यकेउपनिषदिज्ञानकांडे ६ प्रतिपाल्यतांप्रतीक्ष्यतां ७ ततःतत्प्रथमार्थेतसिः ८ । ९ वाग्भिर्ब्रह्मयज्ञीयाभिः यदृचोऽधीतेपयआहुतिभिरेवतद्देवतास्तर्पयतीत्यादिवचनात् आजगामेतिच्छेदः १० । ११ । १२ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥

पुराणमिति पुराणंपुरावृत्तं १ । २ कल्याःसमर्थाः तवत्वत्तःश्रोतुमितिसंबंधः ३ कथितंमह्यमितिशेषः ४ ततोमयेति पितुःसकाशान्मयाऽधीतमित्यावर्तनीयं ५ । ६ पुराणस्याश्रयःउपोद्घात
स्तत्संयुतं ७ । ८ । ९ पूर्वपितामहःकुलप्रधानपुरुषः १० नियतःशमादिमान् नियताशनःहितंमितंमेध्यंवाऽश्नाति नत्वनशनमेवेतिभावः नियतेंद्रियइतिपाठेयमनियमयुक्तः ११ । १२ । १३

॥ शौनकउवाच ॥ पुराणमखिलंतातपितातेऽधीतवान्पुरा ॥ कच्चित्त्वमपितत्सर्वमधीषेलोमहर्षणे १ पुराणेहिकथादिव्याआदिवंशाश्चधीमताम् ॥ कथ्यंतेये
पुराऽस्माभिःश्रुतपूर्वाःपितुस्तव २ तत्रवंशमहंपूर्वंश्रोतुमिच्छामिभार्गवम् ॥ कथयस्वकथामेतांकल्याःस्मश्रवणेतव ३ ॥ सौतिरुवाच ॥ यदधीतंपुरासम्यक्
द्विजश्रेष्ठैर्महात्मभिः ॥ वैशंपायनविप्राग्र्यैस्तैश्चापिकथितंयथा ४ यदधीतंचपित्रामेसम्यक्चैवततोमया ॥ तावच्छृणुष्वयोदेवैः सेंद्रैःसर्षिमरुद्गणैः ५ पूजितःप्रव
रोवंशोभार्गवोभृगुनंदन ॥ इमंवंशमहंपूर्वंभार्गवंतेमहामुने ६ निगदामियथायुक्तंपुराणाश्रयसंयुतम् ॥ भृगुर्महर्षिर्भगवान्ब्रह्मणावैस्वयंभुवा ७ वरुणस्यक्रतौजातः
पावकादितिनःश्रुतम् ॥ भृगोःसुदयितःपुत्रश्च्यवनोनामभार्गवः ८ च्यवनस्यचदायादःप्रमतिर्नामधार्मिकः॥ प्रमतेरप्यभूत्पुत्रोघृताच्यांरुरुरित्युत ९ रुरोरपिसुतो
जज्ञेशुनकोवेदपारगः ॥ प्रमद्वरायांधर्मात्मातवपूर्वपितामहः १० तपस्वीचयशस्वीचश्रुतवान्ब्रह्मवित्तमः ॥ धार्मिकःसत्यवादीचनियतोनियताशनः ११
॥ शौनकउवाच ॥ सूतपुत्रयथातस्यभार्गवस्यमहात्मनः ॥ च्यवनत्वंपरिख्यातंतन्ममाचक्ष्वपृच्छतः १२ ॥ सौतिरुवाच ॥ भृगोःसुदयिताभार्यापुलोमेत्यभि
विश्रुता ॥ तस्यांसमभवद्गर्भोभृगुवीर्यसमुद्भवः १३ तस्मिन्गर्भेऽथसंभूतेपुलोमायांभृगूद्वह ॥ समयेसमशीलिन्यांधर्मपत्न्यांयशस्विनः १४ अभिषेकायनिष्क्रां
तेभृगौधर्मभृतांवरे ॥ आश्रमंतस्यरक्षोऽथपुलोमाभ्याजगामह १५ तंप्रविश्याश्रमंदृष्ट्वाभृगोर्भार्यामनिंदिताम् ॥ हृच्छयेनसमाविष्टोविचेताःसमपद्यत १६
अभ्यागतंतुतद्रक्षःपुलोमाचारुदर्शना ॥ न्यमंत्रयतवन्येनफलमूलादिनातदा १७ तांतुरक्षस्तदाब्रह्मन्हृच्छयेनाभिपीडितम् ॥ दृष्ट्वाहृष्टमभूद्राजन्जिहीर्षुस्ताम
निंदिताम् १८ जातमित्यब्रवीत्कार्यंजिहीर्षुर्मुदितःशुभाम् ॥ साहिपूर्ववृतातेनपुलोम्नातुशुचिस्मिता १९ तांतुप्रादात्पितापश्चाद्भृगवेशास्त्रवत्तदा ॥ तस्यतत्कि
ल्बिषंनित्यंहृदिवर्ततिभार्गव २० इदमंतरमित्येवंहर्तुंचक्रेमनस्तदा ॥ अथाग्निशरणेऽपश्यज्ज्वलंतंजातवेदसम् २१ तमपृच्छत्ततोरक्षःपावकंज्वलितंतदा ॥ शंस
मेकस्यभार्येयमग्नेपृच्छेऋतेनवै २२ मुखंत्वमसिदेवानांवदपावकपृच्छते ॥ मयाहीयंवृतापूर्वंभार्यार्थेवरवर्णिनी २३ पश्चादिमांपिताप्रादाद्भृगवेऽनृतकारकः ॥ सेयं
यदिवरारोहाभृगोर्भार्यारहोगता २४ तथासत्यंसमाख्याहिजिहीर्षाम्याश्रमादिमाम् ॥ समन्युस्तत्रहृदयंप्रदहन्निवतिष्ठति॥ मत्पूर्वभार्यांयदिमांभृगुरापसुमध्यमाम् २५

१४ । १५ हृच्छयेनकामेन १६ । १७ । १८ कथंपरदारेषुकामइत्यतआह साहीति बाल्येकिलरुदतींकन्यांरोदननिवृत्त्यर्थंभीषयितुंपित्राउक्तंरेरक्षएनांगृहाणेतितावतैवगृहेसन्निहितेनरक्षसा
वृताममेयंभार्येतिभावः १९ । २० । २१ । २२ । २३ अतएवतस्याःपिताअनृतकारकः अनृतकारिणेइतिपाठेतुभृगोरेवविशेषणं । परिहासेनापिददामीत्युक्त्वानदत्तंचेद्दोषोभवती
तिभावः वरारोहाश्रेष्ठनितंबा २४ । २५



शंकमानंछलवचनेनपूर्वंमह्यंदत्तापश्चाद्विधिपूर्वकंभृगवेदत्ताऽतोममवाइयंभृगोर्वेतिसंदिहानं २६ कवेसर्वज्ञ २७ यदितथेति मत्पूर्वासाचेद्भृगुश्चानृतकारीचेत्तर्हिसत्यंब्रूहि २८ । २९ भृगोरित्युक्तेऽनृतंपूर्वं
रक्षःपरिग्रहत्वात्तस्याः रक्षसइत्युक्तेभृगुतःशापभयं ३० । ३१ । ३२ । ३३ सेयमिति यात्वयापूर्ववृतासेयंत्वदीयैवेयमित्यर्थः ३४ ॥ इति आदिपर्वणि नीलकंठीये भा० पंचमोऽध्यायः ॥ ५ ॥

॥ सौतिरुवाच ॥ एवंरक्षस्तमामंत्र्यज्वलितंजातवेदसम् ॥ शंकमानंभृगोर्भार्यांपुनःपुनरपृच्छत २६ त्वमग्नेसर्वभूतानामंतश्चरसिनित्यदा ॥ साक्षिवत्पुण्यपापे
षुसत्यंब्रूहिकवेवचः २७ मत्पूर्वाऽपहृताभार्याभृगुणाऽनृतकारिणा ॥ सेयंयदितथामेत्वंसत्यमाख्यातुमर्हसि २८ श्रुत्वात्वत्तोभृगोर्भार्यांहरिष्याम्याश्रमादिमाम् ॥
जातवेदःपश्यतस्तेवदसत्यांगिरंमम २९ ॥ सौतिरुवाच ॥ तस्यैतद्वचनंश्रुत्वासप्तार्चिर्दुःखितोऽभवत् ॥ भीतोऽनृताच्चशापाच्चभृगोरित्यब्रवीच्छनैः ३०
॥ अग्निरुवाच ॥ त्वयावृतापुलोमेयंपूर्वंदानवनंदन ॥ किंत्वियंविधिनापूर्वंमंत्रवन्नवृतात्वया ३१ पित्रातुभृगवेदत्तापुलोमेयंयशस्विनी ॥ ददातिनपितातुभ्यंवर
लोभान्महायशाः ३२ अथेमांवेददृष्टेनकर्मणाविधिपूर्वकम् ॥ भार्यामृषिर्भृगुःप्रापमांपुरस्कृत्यदानव ३३ सेयमित्यवगच्छामिनानृतंवक्तुमुत्सहे ॥ नानृतंहिसदा
लोकेपूज्यतेदानवोत्तम ३४ ॥ इति श्रीमहाभारते आदिपर्वणि पौलोमपर्वणिपुलोमाग्निसंवादेपंचमोऽध्यायः ॥ ५ ॥ सौतिरुवाच ॥ अग्नेरथवचःश्रुत्वातद्रक्षःप्रज
हारताम् ॥ ब्रह्मन्वराहरूपेणमनोमारुतरंहसा १ ततःसगर्भोनिवसन्कुक्षौभृगुकुलोद्वह ॥ रोषान्मातुश्च्युतःकुक्षेश्च्यवनस्तेनसोऽभवत् २ तंदृष्ट्वामातुरुदराच्च्युत
मादित्यवर्चसम् ॥ तद्रक्षोभस्मसाद्भूतंपपातपरिमुच्यताम् ३ सातमादायसुश्रोणीससारभृगुनंदनम् ॥ च्यवनंभार्गवंपुत्रंपुलोमादुःखमूर्च्छिता ४ तांददर्शस्वयं
ब्रह्मासर्वलोकपितामहः ॥ रुदतींबाष्पपूर्णाक्षींभृगोर्भार्यामनिंदिताम् ५ सांत्वयामासभगवान्वधूंब्रह्मापितामहः ॥ अश्रुबिंदूद्भवातस्याःप्रावर्ततमहानदी ६
आवर्तंतीसृतिंतस्याभृगोःपत्न्यास्तपस्विनः ॥ तस्यामार्गंसृतवतींदृष्ट्वातुसरितंतदा ७ नामतस्यास्तदानद्याश्चक्रेलोकपितामहः ॥ वधूसरेतिभगवांश्च्यवनस्या
श्रमंप्रति ८ सएवंच्यवनोजज्ञेभृगोःपुत्रःप्रतापवान् ॥ तंददर्शपितातत्रच्यवनंतांचभाविनीम् ॥ सपुलोमांततोभार्यांपप्रच्छकुपितोभृगुः ९ ॥ भृगुरुवाच ॥
केनासिरक्षसेतस्मैकथितात्वंजिहीर्षते ॥ नहित्वांवेदतद्रक्षोमद्भार्यांचारुहासिनीम् १० तत्त्वमाख्याहितंह्यद्यशप्तुमिच्छाम्यहंरुषा ॥ बिभेतिकोनशापान्मेकस्य
चायंव्यतिक्रमः ११ ॥ पुलोमोवाच ॥ अग्निनाभगवंस्तस्मैरक्षसेऽहंनिवेदिता ॥ ततोमामनयद्रक्षःक्रोशंतींकुररीमिव १२ साऽहंतवसुतस्यास्यतेजसापरिमो
क्षिता ॥ भस्मीभूतंचतद्रक्षोमामुत्सृज्यपपातवै १३ ॥ सौतिरुवाच ॥ इतिश्रुत्वापुलोमायाभृगुःपरममन्युमान् ॥ शशापाग्निमतिक्रुद्धःसर्वभक्षोभविष्यसि १४
॥ इति श्रीमहाभारते आदिपर्वणि पौलोमपर्वणि अग्निशापेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥

छलवचनाद्वैधएवविधिःश्रेयान् तयोःसाम्यंपश्यन्नग्निःशापंप्राप आद्यस्यप्राबल्यंमन्वानोराक्षसोनाशंचप्रापेतिषष्ठाध्यायतात्पर्यं अग्नेरथेति १ तेनचुच्याचेतियोगेन २ । ३ । ४ । ५ । ६ सृतिंमार्गं ७
८ । ९ मद्भार्यामियंममैवभार्यानतुभृगोरित्येवंरूपेणत्वांरक्षोनवेदेत्यर्थः तवेयंभार्येतिकेनकथितासि १० । १२ । १३ । १४ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे षष्ठोऽध्यायः ॥ ६ ॥

शमस्त्विति १ सत्यंचवदतःसमं सत्यंयथार्थं समंपक्षपातहीनं व्यभिचारःअपराधः २ । ३ । ४ । ५ योगेनयोगसिद्धिबलेन मूर्तिषुगार्हपत्यदक्षिणाग्न्यादिषु सत्रेष्वनेककर्तृकेषु गवामयनादिषु क्रियासुस्मार्तासुगर्भाधानादिषु मखेज्योतिष्टोमादौ ६ । ७ आपःसोमाज्यपयःप्रभृतयोऽग्नौहूयमानादेवपितृरूपाः । आपःपुरुषवचसोभवंतीतिश्रुतेरग्नौहुताआपएवदेवताशरीररूपेणपरिणमंतइत्यर्थः ८ देवादिभावस्यापिकर्मप्राप्यत्वाद्देवानांपितृणांचमिथोभेदोनास्त्येवतुल्यहेतुकत्वादित्याह देवताइति ९ । १० अमावास्यामावास्यायां हूयंतेइज्यंते १ संहारं

॥ सौतिरुवाच ॥ शप्तस्तुभृगुणावन्हिःक्रुद्धोवाक्यमथाब्रवीत् ॥ किमिदंसाहसंब्रह्मन्कृतवानसिमांप्रति १ धर्मेप्रयतमानस्यसत्यंचवदतःसमम् ॥ पृष्टोयदब्रुवंसत्यंव्यभिचारोऽत्रकोमम २ पृष्टोहिसाक्षीयःसाक्ष्यंजानानोऽप्यन्यथावदेत् ॥ सपूर्वानात्मनःसप्तकुलेहन्यात्तथापरान् ३ यश्चकार्यार्थतत्त्वज्ञोजानानोऽपिनभाषते ॥ सोऽपितेनैवपापेनलिप्यतेनात्रसंशयः ४ शक्तोऽहमपिशप्तुंत्वांमान्यास्तुब्राह्मणामम ॥ जाननोऽपिचतेब्रह्मन्कथयिष्येनिबोधतत् ५ योगेनबहुधात्मानंकृत्वातिष्ठामिमूर्तिषु ॥ अग्निहोत्रेषुसत्रेषुक्रियासुचमखेषुच ६ वेदोक्तेनविधानेनमयियद्धूयतेहविः ॥ देवताःपितरश्चैवतेनतृप्ताभवंतिवै ७ आपोदेवगणाःसर्वेआपःपितृगणास्तथा ॥ दर्शश्चपौर्णमासश्चदेवानांपितृभिःसह ८ देवताःपितरस्तस्मात्पितरश्चापिदेवताः ॥ एकीभूताश्चदृश्यंतेपृथक्त्वेनचपर्वसु ९ देवताःपितरश्चैवभुंजतेमयियद्धुतम् ॥ देवतानांपितृणांचमुखमेतदहंस्मृतम् १० अमावास्यांहिपितरःपौर्णमास्यांहिदेवताः ॥ मन्मुखेनैवहूयंतेभुंजतेचहुतंहविः ११ सर्वभक्षःकथंत्वेषांभविष्यामिमुखंत्वहम्॥ सौतिरुवाच॥ चिंतयित्वाततोवह्निश्चक्रेसंहारमात्मनः १२ द्विजानामग्निहोत्रेषुयज्ञसत्रक्रियासुच ॥ निरोंकारवषट्काराःस्वधास्वाहाविवर्जिताः १३ विनाऽग्निनाप्रजाःसर्वास्ततआसन्सुदुःखिताः ॥ अथर्षयःसमुद्विग्नादेवान्गत्वाब्रुवन्वचः १४ अग्निनाशात्क्रियाभ्रंशाद्भ्रांतालोकास्त्रयोऽनघाः ॥ विधध्वमत्रयत्कार्यंनस्यात्कालात्ययोयथा १५ अथर्षयश्चदेवाश्चब्रह्माणमुपगम्यतु ॥ अग्नेरावेदयन्शापंक्रियासंहारमेवच १६ भृगुणावैमहाभागशप्तोऽग्निःकारणांतरे ॥ कथंदेवमुखोभूत्वायज्ञभागाग्रभुक्तथा १७ हुतभुक्सर्वलोकेषुसर्वभक्षत्वमेष्यति॥ श्रुत्वातुतद्वचस्तेषामग्निमाहूयविश्वकृत् १८उवाचवचनंश्लक्ष्णंभूतभावनमव्ययम्॥ लोकानामिहसर्वेषांत्वंकर्ताचांतएवच१९ त्वंधारयासिलोकांस्त्रीन्क्रियाणांचप्रवर्तकः॥ सतथाकुरुलोकेशनोच्छिद्येरन्यथाक्रियाः२०कस्मादेवंविमूढस्त्वमीश्वरःसन्हुताशन॥ त्वंपवित्रंसदालोकेसर्वभूतगतिश्चह २१ नत्वंसर्वशरीरेणसर्वभक्षत्वमेष्यसि ॥ अपानेह्यर्चिषोयास्तेसर्वंभक्ष्यंतिताःशिखिन् २२ क्रव्यादाचतनुर्यातेसासर्वंभक्षयिष्यति ॥ यथासूर्यांशुभिःस्पृष्टंसर्वंशुचिविभाव्यते २३ तथात्वदर्चिर्निर्दग्धंसर्वंशुचिभविष्यति ॥ त्वमग्नेपरमंतेजःस्वप्रभावाद्विनिर्गतम् २४

तिरोभावं १२ । १३ । १४ क्रियाभ्रंशादग्निहोत्रादिलोपात् भ्रांताःकर्तव्याकर्तव्यविमूढाः १५ । १६ । १७ । १८ भूतभावनंजरायुजादिभूतकर्तारं १९ । २० । २१ भक्ष्यंति भक्षयिष्यंति शिखिन्नग्ने २२ क्रव्यादामनुष्याद्यमेध्यमांसभक्षिणी २३ स्वप्रभावाद्विनिर्गतंशापंसत्यंकुर्वितिभावः । यथोक्तंशिक्षायां 'आत्माबुद्ध्यासमेत्यार्थान्मनोयुंक्तेविवक्षया । मनःकायाग्निमाहंतिसप्रेरयतिमारुतं । मारुतस्तूरसिचरन्मंद्रंजनयतिस्वरम्'इत्याद्युक्तत्वादग्नेर्वागधिष्ठातृत्वाच्च २४



२५ । २६ । २७ ब्राह्मणैरनपराधबाधितोऽपिनतेषुप्रतीकारंप्रयुंजीतेत्यध्यायतात्पर्यं २८ । २९ ॥ इतिश्रीआदिपर्वणिनीलकंठीये भारतभावदीपेसप्तमोऽध्यायः ॥ ७ ॥ सचापीति १ । २ । ३ । ४ । ५

स्वतेजसैवतंशापंकुरुसत्यमृषेर्विभो ॥ देवानांचात्मनोभागंगृहाणत्वंमुखेहुतम् २५ ॥ सौतिरुवाच ॥ ॥ एवमस्त्वितितंवन्हिःप्रत्युवाचपितामहम् ॥ जगामशासनंकर्तुंदेवस्यपरमेष्ठिनः २६ देवर्षयश्चमुदितास्ततोजग्मुर्यथागतम् ॥ ऋषयश्चयथापूर्वंक्रियाःसर्वाःप्रचक्रिरे २७ दिविदेवामुमुदिरेभूतसंघाश्चलौकिकाः ॥ अग्निश्चपरमांप्रीतिमवापहतकल्मषः २८ एवंसभगवाञ्छापंलेभेऽग्निर्भृगुतःपुरा ॥ एवमेषपुरावृत्तइतिहासोऽग्निशापजः ॥ पुलोम्नश्चविनाशोऽयंच्यवनस्यचसंभवः २९ ॥ इतिश्रीमहाभारते आदिपर्वणिपौलोमपर्वणि अग्निशापमोचने सप्तमोऽध्यायः ॥ ७ ॥ ॥ सौतिरुवाच ॥ सचापिच्यवनोब्रह्मन्भार्गवोजनयत्सुतम् ॥ सुकन्यायांमहात्मानंप्रमतिंदीप्ततेजसम् १ प्रमतिस्तुरुरुंनामघृताच्यांसमजीजनत् ॥ रुरुःप्रमद्वरायांतुशुनकंसमजीजनत् २ शुनकस्तुमहासत्वःसर्वभार्गवनंदनः ॥ जातस्तपसितीव्रेचस्थितःस्थिरयशास्ततः ३ तस्यब्रह्मन्रुरोःसर्वंचरितंभूरितेजसः ॥ विस्तरेणप्रवक्ष्यामितच्छृणुत्वमशेषतः ४ ऋषिरासीन्महापूर्वंतपोविद्यासमन्वितः ॥ स्थूलकेशइतिख्यातःसर्वभूतहितेरतः ५ एतस्मिन्नेवकालेतुमेनकायांप्रजज्ञिवान् ॥ गंधर्वराजोविप्रर्षेविश्वावसुरितिस्मृतः ६ अप्सरामेनकातस्यतंगर्भंभृगुनंदन ॥ उत्ससर्जयथाकालंस्थूलकेशाश्रमंप्रति ७ उत्सृज्यचैवतंगर्भंनद्यास्तीरेजगामसा ॥ अप्सरामेनकाब्रह्मन्निर्दयानिरपत्रपा ८ कन्याममरगर्भाभांज्वलंतीमिवचश्रिया॥तांददर्शसमुत्सृष्टांनदीतीरेमहानृषिः९स्थूलकेशःसतेजस्वीविजनेबंधुवर्जिताम् ॥सतांदृष्ट्वातदाकन्यांस्थूलकेशोमहाद्विजः १० जग्राहचमुनिश्रेष्ठःकृपाविष्टःपुपोषच ॥ ववृधेसावरारोहातस्याश्रमपदेशुभे ११ जातकाद्याःक्रियाश्चास्याविधिपूर्वंयथाक्रमम् ॥ स्थूलकेशोमहाभागश्चकारसुमहानृषिः १२ प्रमदाभ्योवरासातुसत्वरूपगुणान्विता॥ततःप्रमद्वरेत्यस्यानामचक्रेमहानृषिः१३ तामाश्रमपदेतस्यरुरुर्दृष्ट्वाप्रमद्वराम् ॥ बभूवकिलधर्मात्मामदनोपहतस्तदा १४ पितरंसखिभिःसोऽथश्रावयामासभार्गवम् ॥ प्रमतिश्चाभ्ययाचत्तांस्थूलकेशंयशस्विनम् १५ ततःप्रादात्पिताकन्यांरुरवेतांप्रमद्वराम् ॥ विवाहंस्थापयित्वाग्रेनक्षत्रेभगदैवते १६ ततःकतिपयाहस्यविवाहेसमुपस्थिते ॥ सखीभिःक्रीडतीसार्धंसाकन्यावरवर्णिनी १७ नापश्यत्संप्रसुप्तंवैभुजंगंतिर्यगायतम् ॥ पदाचैनंसमाक्रामन्मुमूर्षुःकालचोदिता १८ सतस्याःसंप्रमत्तायाश्चोदितःकालधर्मणा ॥ विषोपलिप्तान्दशनान्भृशमंगेन्यपातयत् १९ सादष्टातेनसर्पेणपपातसहसाभुवि ॥ विवर्णाविगतश्रीकाभ्रष्टाभरणचेतना २० निरानंदकरीतेषांबंधूनांमुक्तमूर्धजा ॥ व्यसुरप्रेक्षणीयासाप्रेक्षणीयतमाऽभवत् २१ प्रसुप्तेवाभवच्चापिभुविसर्पविषार्दिता ॥ भूयोमनोहरतराबभूवतनुमध्यमा २२

प्रजज्ञिवानुत्पादितवान् ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ भगदैवतेपूर्वयोःफल्गुन्योरितिलौकिकाः फल्गुनीनक्षत्रमर्यमादेवताफल्गुनीनक्षत्रंभगोदेवतेतिश्रुतेरुत्तराफल्गुन्योर्वाविवाहंस्थापयित्वानिश्चित्य १६ विवाहेसमुपस्थितेप्रागेवविवाहाच्छन्दतः परिग्रहमात्रेणभार्यात्वेनकल्पितायाअपिनाशेहरोर्दुरंतदुःखावाप्तिरितिपरिग्रहस्यदुःखदत्वंव्यक्तं १७ । १८ कालधर्मणामृत्युना विषोपलिप्तान्सविषान् १९ । २० व्यसुर्विगतप्राणा २१ । २२

२३ । २४ । २५ । २६ । २७ ॥ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे अष्टमोऽध्यायः ॥ ८ ॥ ॥ ९ ॥ महामहिम्नाप्यायुषःक्षणोऽपिदुर्लभइत्यर्थमध्यायआरभ्यतेतेषुतत्रेत्यादिः १ २ । ३ । ४ । ५ । ६ गतायुषआयुर्लाभोनास्ति ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ रुरोरेवनान्यस्यदंपत्योरेकात्मकत्वात् १५ । १६ नचैवमायुषोऽर्धमदा

ददर्शतांपिताचैवयेचैवान्येतपस्विनः ॥ विचेष्टमानांपतितांभूतलेपद्मवर्चसम् २३ ततःसर्वेद्विजवराःसमाजग्मुःकृपान्विताः ॥ स्वस्त्यात्रेयोमहाजानुःकुशिकः शंखमेखलः २४ उद्दालकःकठश्चैवश्वेतश्चैवमहायशाः ॥ भरद्वाजःकौणकुत्स्यआर्ष्टिषेणोऽथगौतमः २५ प्रमतिःसहपुत्रेणतथान्येवनवासिनः ॥ तांतेकन्यांव्य सुंदष्ट्वाभुजंगस्यविषार्दिताम् २६ रुरुदुःकृपयाऽऽविष्टारुरुस्त्वार्तोबहिर्ययौ ॥ तेचसर्वेद्विजश्रेष्ठास्तत्रैवोपाविशंस्तदा २७ ॥ इतिश्रीमहाभारतेआदिपर्वणि पौ० प० प्रमद्वरासर्पदंशेअष्टमोऽध्यायः ॥ ८ ॥ ॥ सौतिरुवाच ॥ तेषुतत्रोपविष्टेषुब्राह्मणेषुमहात्मसु ॥ रुरुश्चुक्रोशगहनंवनंगत्वाऽतिदुःखितः १ शोकेनाभिह तःसोऽथविलपन्करुणंबहु ॥ अब्रवीद्वचनंशोचन्प्रियांस्मृत्वाप्रमद्वराम् २ शेतेसाभुवितन्वंगीममशोकविवर्धिनी ॥ बांधवानांचसर्वेषांकिंनुदुःखमतःपरम् ३ यादि दत्तंतपस्तप्तंगुरवोवामयायदि ॥ सम्यगाराधितास्तेनसंजीवतुममप्रिया ४ यथाचजन्मप्रभृतियतात्माऽहंधृतव्रतः ॥ प्रमद्वरातथाह्येषासमुत्तिष्ठतुभामिनी ५ एवंलालप्यतस्तस्यभार्यार्थेदुःखितस्यच ॥ देवदूतस्तदाऽभ्येत्यवाक्यमाहरुरुंवने ६ ॥ देवदूतउवाच ॥ अभिधत्सेहयद्वाचारुरोदुःखेनतन्मृषा ॥ यतोमर्त्य स्यधर्मात्मन्नायुरस्तिगतायुषः ७ गतायुरेषाकृपणागंधर्वाप्सरसोःसुता ॥ तस्माच्छोकेमनस्तातमाकृथास्त्वंकथंचन ८ उपायश्चात्रविहितःपूर्वंदेवैर्महात्मभिः ॥ तंयदीच्छसिकर्तुंत्वंप्राप्स्यसीहप्रमद्वराम् ९ ॥ रुरुरुवाच ॥ कउपायःकृतोदेवैर्ब्रूहितत्वेनखेचर ॥ करिष्येऽहंतथाश्रुत्वात्रातुमर्हतिमांभवान् १० ॥ देवदूतउवाच ॥ आयुषोऽर्धंप्रयच्छत्वंकन्यायैभृगुनंदन ॥ एवमुत्थास्यतिरुरोतवभार्याप्रमद्वरा ११ ॥ रुरुरुवाच ॥ ॥ आयुषोऽर्धंप्रयच्छामिकन्यायैखेचरोत्तम ॥ शृंगाररूपा भरणासमुत्तिष्ठतुमेप्रिया १२ ॥ सौतिरुवाच ॥ ॥ ततोगंधर्वराजश्चदेवदूतश्चसत्तमौ ॥ धर्मराजमुपेत्येदंवचनंप्रत्यभाषताम् १३ धर्मराजायुषोऽर्धेनरुरोर्भार्याप्रम द्वरा ॥ समुत्तिष्ठतुकल्याणीमृतैवंयदिमन्यसे १४ ॥ धर्मराजउवाच ॥ प्रमद्वरांरुरोर्भार्यांदेवदूतयदीच्छसि ॥ उत्तिष्ठत्वायुषोऽर्धेनरुरोरेवसमन्विता १५ ॥ सौ तिरुवाच ॥ एवमुक्तेततःकन्यासोदतिष्ठत्प्रमद्वरा ॥ रुरोस्तस्यायुषोऽर्धेनसुप्तेववरवर्णिनी १६ एतद्दृष्टंभविष्येहिरुरोरुत्तमतेजसः ॥ आयुषोऽतिप्रवृद्धस्यभार्या र्थेऽर्धमलुप्यत १७ ततइष्टेऽहनितयोःपितरौचक्रतुर्मुदा ॥ विवाहंतौचरेमातेपरस्परहितैषिणौ १८ सलब्ध्वादुर्लभांभार्यांपद्मकिंजल्कसुप्रभाम् ॥ व्रतंचक्रेविनाशा यजिह्मगानांधृतव्रतः १९ सदृष्ट्वाजिह्मगान्सर्वांस्तीव्रकोपसमन्वितः ॥ अभिहंतियथासत्त्वंगृह्यप्रहरणंसदा २० सकदाचिद्वनंविप्रोरुरुरभ्यागमन्महत् ॥ शयानं तत्रचापश्यत्डुंडुभंवयसाऽन्वितम् २१ 

नैनेतरेषामप्यायुर्लाभोभवतीत्याह भविष्येरुरोरेवजातकेदृष्टंदृष्टंनान्यत्रेत्यर्थः १७ । १८ एवंकामप्रतीघातेक्रोधावेशादविवेकेनाधर्ममपिमहांतोऽनुतिष्ठंतीत्याह व्रतमिति व्रतंनियमं जिह्मगानांसर्पाणां १९ गृह्यगृहीत्वा २० डुंडुभंनिर्विषंस्थूलसर्पं वयसान्वितंवृद्धं २१

२२ संरंभादावेशात् २३ ॥ इतिश्रादिपर्वणिनीलकंठीये भारतभावदीपे नवमोऽध्यायः ॥ ९ ॥ ममेति १ । २ अहिगंधेनसर्पसादृश्यमात्रेण ३ अत्राध्यायेविधेयांशमाह एकानर्थानिति अनर्थोहानिः अर्थोलाभः तत्रार्थःसुखंचकर्तुर्भोक्तुश्चभवति अनर्थोदुःखंचैकस्यापराधेनसर्वेषांतत्सजातीयानांभवतीत्यर्थः धर्मवित्यस्यापराधःसएवदंड्योनान्यइतिधर्मस्तज्ज्ञः ४ । ५ । ६ । ७ । ८ ॥ इतिआदि

ततउद्यम्यदंडंसकालदंडोपमंतदा ॥ जिघांसुःकुपितोविप्रस्तमुवाचाऽथडुंडुभः २२ नापराध्यामितेकिंचिदहमद्यतपोधन ॥ संरंभाच्चकिमर्थंमामभिहंसिरुषाऽ न्वितः २३ ॥ इतिश्रीमहाभारते आदिपर्वणिपौ० प० प्रमद्वराजीवने नवमोऽध्यायः ॥ ९ ॥ रुरुरुवाच ॥ ममप्राणसमाभार्यादष्टासीद्भुजगेनह ॥ तत्रमेसमयो घोरआत्मनोरगवैकृतः १ भुजंगंवैसदाहन्यांयंयंपश्येयमित्युत ॥ ततोऽहंत्वांजिघांसामिजीवितेनाद्यमोक्ष्यसे २ ॥ डुंडुभउवाच ॥ अन्येतेभुजगाब्रह्मन्येदशंतीह मानवान् ॥ डुंडुभानहिगंधेननत्वंहिंसितुमर्हसि ३ एकानर्थान्पृथगर्थानेकदुःखान्पृथक्सुखान् ॥ डुंडुभान्धर्मविद्भूत्वानत्वंहिंसितुमर्हसि ४ ॥ सौतिरुवाच ॥ इतिश्रुत्वावचस्तस्यभुजगस्यरुरुस्तदा ॥ नावधीद्भयसंविग्नमृषिंमत्वाऽथडुंडुभम् ५ उवाचचैनंभगवान्रुरुःसंशमयन्निव ॥ कामंमांभुजगब्रूहिकोऽसीमांविक्रियां गतः ६ ॥ डुंडुभउवाच ॥ अहंपुरारुरोनाम्नाऋषिरासंसहस्रपात् ॥ सोऽहंशापेनविप्रस्यभुजगत्वमुपागतः ७ ॥ रुरुरुवाच ॥ किमर्थंशप्तवान्क्रुद्धोद्विजस्त्वांभुजगो त्तम ॥ कियंतंचैवकालंतेवपुरेतद्भविष्यति ८ ॥ इतिश्रीमहाभारते आदिपर्वणिपौलोमपर्वणि रुरुडुंडुभसंवादे दशमोऽध्यायः ॥ १० ॥ ॥ डुंडुभउवाच ॥ सखाबभूवमेपूर्वंखगमोनामवैद्विजः ॥ भृशंसंशितवाक्ताततपोबलसमन्वितः १ समयाक्रीडताबाल्येकृत्वातार्णंभुजंगमम् ॥ अग्निहोत्रेप्रसक्तस्तुभीषितःप्रमुमो हवै २ लब्ध्वासचपुनःसंज्ञांमामुवाचतपोधनः ॥ निर्दहन्निवकोपेनसत्यवाक्संशितव्रतः ३ यथावीर्यस्त्वयासर्पःकृतोऽयंमद्बिभीषया ॥ तथावीर्योभुजंगस्त्वंममशा पाद्भविष्यसि ४ तस्याहंतपसोवीर्यंजानन्नासंतपोधन ॥ भृशमुद्विग्नहृदयस्तमवोचमहंतदा ५ प्रणतःसंभ्रमाच्चैवप्रांजलिःपुरतःस्थितः ॥ सखेतिसहसेदंतेनर्मा र्थंवैकृतंमया ६ क्षंतुमर्हसिमेब्रह्मन्शापोऽयंविनिवर्त्यताम् ॥ सोऽथमामब्रवीद्दृष्ट्वाभृशमुद्विग्नचेतसम् ७ मुहुरुष्णंविनिःश्वस्यसुसंभ्रांतस्तपोधनः ॥ नानृतंवैमया प्रोक्तंभवितेदंकथंचन ८ यत्तुवक्ष्यामितेवाक्यंशृणुतन्मेतपोधन ॥ श्रुत्वाचहृदितेवाक्यमिदमस्तुसदाऽनघ ९ उत्पत्स्यतिरुरुर्नामप्रमतेरात्मजःशुचिः ॥ तंदृष्ट्वा शापमोक्षस्तेभवितानाचिरादिव १० सत्वंरुरुरितिख्यातःप्रमतेरात्मजोऽपिच ॥ स्वरूपंप्रतिपद्याहमद्यवक्ष्यामितेहितम् ११ सडौंडुभंपरित्यज्यरूपंविप्रर्षभ स्तदा ॥ स्वरूपंभास्वरंभूयःप्रतिपेदेमहायशाः १२ इदंचोवाचवचनंरुरुमप्रतिमौजसम् ॥ अहिंसापरमोधर्मःसर्वप्राणभृतांवर १३ तस्मात्प्राणभृतः सर्वान्नहिंस्याद्ब्राह्मणःक्वचित् ॥ ब्राह्मणःसौम्यएवेहभवतीतिपराश्रुतिः १४

पर्वणिनीलकंठीये भारतभावदीपे दशमोऽध्यायः ॥ १० ॥ नर्मपूर्विकाऽपिपरपीडानकर्तव्याकिमुतवास्तवीसाप्यधर्मेणेत्याहाध्यायेन सखाबभूवेत्यादिना खगमोनाम वाडवइतिपाठेवाडवोब्राह्मणः संशितवाक्तीक्ष्णवचनः १ तार्णंतृणमयं २ । ३ । ४ । ५ संभ्रमाद्भयात् पुरतइत्यपेक्षितेपुरतइत्यार्षम् ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ सौम्योऽतीक्ष्णस्वभावः १४

अहिंसाअविधिस्पृष्टहिंसायाअभावः १५ । १६ । १७ परित्राणंदृष्टमितिशेषः परैर्हिंस्यमानस्यब्राह्मणेनत्राणंकर्त्तव्यंनतुहिंसेत्यर्थः १८ । १९ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे एकादशोऽध्यायः ॥ ११ ॥ ॥ ७ ॥ कथमिति १ । २ । ३ नष्टमंतर्हितं ४ । ५ 'सत्रेहंसत्यवचनमतिरागश्चयोपिति ॥ अनागसामपिद्रोहःपौलोमेऽर्थाद्विनिंदितः'इतिरत्नगर्भः ६ ॥ इति

वेदवेदांगविन्नामसर्वभूताभयप्रदः ॥ अहिंसासत्यवचनंक्षमाचेतिविनिश्चितम् १५ ब्राह्मणस्यपरोधर्मोवेदानांधारणाऽपिच ॥ क्षत्रियस्यहियोधर्मःसाहिनेष्यतेवै
तव १६ दंडधारणमुग्रत्वंप्रजानांपरिपालनम् ॥ तदिदंक्षत्रियस्यासीत्कर्मवैशृणुमेरुरो १७ जनमेजयस्ययज्ञेऽस्मिन्सर्पाणांहिंसनंपुरा ॥ परित्राणंचभीतानां
सर्पाणांब्राह्मणादपि १८ तपोवीर्यबलोपेताद्विदवेदांगपारगात् ॥ आस्तीकाद्विजमुख्याद्वैसर्पसत्रेद्विजोत्तम १९ ॥ इतिश्रीमहाभारते आदिपर्वणिपौलोमपर्वणि
डुंडुभशापमोक्षे एकादशोऽध्यायः ॥ ११ ॥ ॥ ७ ॥ ॥ रुरुरुवाच ॥ कथंहिंसितवान्सर्पान्सराजाजनमेजयः ॥ सर्पावाहिंसितास्तत्रकिमर्थंद्वि
जसत्तम १ किमर्थंमोक्षिताश्चैवपन्नगास्तेनधीमता ॥ आस्तीकेनद्विजश्रेष्ठश्रोतुमिच्छाम्यशेषतः २ ॥ ऋषिरुवाच ॥ श्रोष्यसित्वंरुरोसर्वमास्तीकचरितंमहत् ॥
ब्राह्मणानांकथयतामित्युक्त्वांतरधीयत ३ ॥ सौतिरुवाच ॥ रुरुश्चापिवनंसर्वंपर्यधावत्समंततः ॥ तमृषिंनष्टमन्विच्छन्संश्रांतोन्यपतद्भुवि ४ समोहंपरमं
गत्वानष्टसंज्ञइवाभवत् ॥ तदृषेर्वचनंतथ्यंचिंतयानःपुनःपुनः ५ लब्धसंज्ञोरुरुश्चायात्तदाचख्यौपितुस्तदा ॥ पिताचास्यतदाख्यानंपृष्टःसर्वंन्यवेदयत् ६
॥ इतिश्रीमहाभारते आदिपर्वणि पौलोमपर्वणि सर्पसत्रप्रस्तावनायां द्वादशोऽध्यायः ॥ १२ ॥ ॥ समाप्तं पौलोमपर्व ॥ ॥ ७ ॥ अथास्तीकपर्व ॥
॥ शौनकउवाच ॥ किमर्थंराजशार्दूलःसराजाजनमेजयः ॥ सर्पसत्रेणसर्पाणांगतोऽतंतद्वदस्वमे १ निखिलेनयथातत्त्वंसौतेसर्वमशेषतः ॥ आस्तीकश्चद्विज
श्रेष्ठःकिमर्थंजयतांवरः २ मोक्षयामासभुजगान्प्रदीप्ताद्वसुरेतसः ॥ कस्यपुत्रःसराजासीत्सर्पसत्रंयआहरत् ३ सचद्विजातिप्रवरःकस्यपुत्रोऽभिधत्स्वमे ॥
॥ सौतिरुवाच ॥ महदाख्यानमास्तीकंयथैतत्प्रोच्यतेद्विज ४ सर्वमेतदशेषेणशृणुमेवदतांवर ॥ शौनकउवाच ॥ श्रोतुमिच्छाम्यशेषेणकथामेतांमनोरमाम्
५ आस्तीकस्यपुराणर्षेर्ब्राह्मणस्ययशस्विनः ॥ ॥ सौतिरुवाच ॥ इतिहासमिमंविप्राःपुराणंपरिचक्षते ६ कृष्णद्वैपायनप्रोक्तंनैमिषारण्यवासिषु ॥ पूर्वंप्रचो
दितःसूतःपितामेलोमहर्षणः ७ शिष्योव्यासस्यमेधावीब्राह्मणेष्विदमुक्तवान् ॥ तस्मादहमुपश्रुत्यप्रवक्ष्यामियथातथम् ८ इदमास्तीकमाख्यानंतुभ्यंशौनकपृ
च्छते ॥ कथयिष्याम्यशेषेणसर्वपापप्रणाशनम् ९ आस्तीकस्यपिताह्यासीत्प्रजापतिसमःप्रभुः ॥ ब्रह्मचारीयताहारस्तपस्युग्रेरतःसदा १०

आदिपर्वणिनीलकंठीये भारतभावदीपे द्वादशोऽध्यायः ॥ १२ ॥ ॥ ७ ॥ पौलोमेदारपरिग्रहस्यमहाद्रोहहेतुत्वमुक्त्वासंततिमात्रार्थंसआवश्यकोनतुभोगार्थमितिदर्शयितुमास्तीकाख्यानमारभते किमर्थमिति अंतमंतकरत्वं १ जयतांजितेंद्रियाणां यद्वाअराजासन्विजयासमंतंसर्वतःपृथिवींजयन्परीयायेतिब्राह्मणाद्धियैवजयतामितिव्याख्येयं जपतामित्यपिकेचित्पठंति २ वसुरेतसोऽग्नेः आहरत् कृतवान् ३ । ४ । ५ परिचक्षतेमाटशाइतिशेषः ६ तदेवाह पूर्वमिति ७ तस्मादित्यनेनस्वस्यसंप्रदायविरवंस्फुटीकृतं ८ । ९ ब्रह्मचारीअकृतदारत्वान्नित्यंवेदाध्ययनमात्रपरः १०



यायावराणांग्रामेकरात्रवासिनांगृहस्थानां येभ्योऽयंपक्षहोमसंप्रदायःप्रवृत्तः तथाचभरद्वाजः । 'यायावरानामब्राह्मणाआसंस्तेऽर्धमासायाग्निहोत्रमजुहवन्निति' ११ यत्रसायंगृहइत्येकंपदं यत्रैवसायं कालस्तत्रैवगृहमस्येतिसतथा १२ दीक्षांव्रतनियमंचरन् १३ वायुभक्षोजितपवनः आहरणमाहारोविषयभोगस्तच्छून्योनिराहारः अनिमिषोजितनिद्रः इतस्ततोवृक्षादिभ्यःशीर्णपर्णादिकंपरितःकाले सर्वदाचरन्नश्नन् १४ अटमानोनित्यंपर्यटनकरः अत्रप्रक्षीणसंतानस्यवंशस्यगतिमनेनरूपकेणप्रदर्शयति लंबमानानित्यादिना १५ । १६ वीरणस्तंबकेतृणस्तंबे अत्रगर्तोभूलोकः उर्ध्वपादत्वाधोमुख

जरत्कारुरितिख्यातऊर्ध्वरेतामहातपाः ॥ यायावराणांप्रवरोधर्मज्ञःसंशितव्रतः ११ सकदाचिन्महाभागस्तपोबलसमन्वितः ॥ चचारपृथिवींसर्वांयत्रसायंगृहोमु
निः १२ तीर्थेषुचसमाप्लावंकुर्वन्नटतिसर्वशः ॥ चरन्दीक्षांमहातेजादुश्चरामकृतात्मभिः १३ वायुभक्षोनिराहारःशुष्यन्ननिमिषोमुनिः ॥ इतस्ततःपरिचरन्दीप्तपा
वकसप्रभः १४ अटमानःकदाचित्स्वान्सददर्शपितामहान् ॥ लंबमानान्महागर्तेपादैरूर्ध्वैरवाङ्मुखान् १५ तानब्रवीत्सदृष्ट्वैवजरत्कारुःपितामहान् ॥ केभवंतोऽ
वलंबंतेगर्तेह्यस्मिन्नधोमुखाः १६ वीरणस्तंबकेलग्नाःसर्वतःपरिभक्षिते ॥ मूषकेननिगूढेनगर्तेऽस्मिन्नित्यवासिना १७ ॥ पितरऊचुः ॥ यायावरानामवयमृषयः
संशितव्रताः ॥ संतानप्रक्षयाद्ब्रह्मन्नधोगच्छाममेदिनीम् १८ अस्माकंसंततिस्त्वेकोजरत्कारुरितिस्मृतः ॥ मंदभाग्योऽल्पभाग्यानांतपएवंसमास्थितः १९
नसपुत्राञ्जनयितुंदारान्मूढश्चिकीर्षति ॥ तेनलंबामहेगर्तेसंतानस्यक्षयादिह २० अनाथास्तेननाथेनयथादुष्कृतिनस्तथा ॥ कस्त्वंबंधुरिवास्माकमनुशोचसि
सत्तम २१ ज्ञातुमिच्छामहेब्रह्मन्कोभवानिहनःस्थितः ॥ किमर्थंचैवनःशोच्याननुशोचसिसत्तम २२ ॥ जरत्कारुरुवाच ॥ ममपूर्वेभवंतोवैपितरःसपितामहाः ॥
ब्रूतकिंकरवाण्यद्यजरत्कारुरहंस्वयम् २३ ॥ ॥ पितरऊचुः ॥ ॥ यतस्वयत्नवांस्तातसंतानायकुलस्यनः ॥ आत्मनोऽर्थेस्मदर्थेचधर्मइत्येववाविभो २४ न
हिधर्मफलैस्तातनतपोभिःसुसंचितैः ॥ तांगतिंप्राप्नुवंतीहपुत्रिणोयांव्रजंति वै २५ तद्दारग्रहणेयत्नंसंतत्यांचमनःकुरु ॥ पुत्रकास्मन्नियोगात्त्वमेतन्नःपरमं
हितम् २६ ॥ जरत्कारुरुवाच ॥ नदारान्वैकरिष्येऽहंनधनंजीवितार्थतः ॥ भवतांतुहितार्थायकरिष्येदारसंग्रहम् २७ समयेनचकर्ताऽहमनेनविधिपूर्वकम् ॥
यथायदुपलप्स्यामिकरिष्येनान्यथाह्यहम् २८ सनाम्नीयाभवित्रीमेदित्सिताचैवबंधुभिः ॥ भैक्ष्यवत्तामहंकन्यामुपयंस्येविधानतः २९ दरिद्रायहिमेभार्यांकोदा
स्यतिविशेषतः ॥ प्रतिग्रहीष्येभिक्षांतुयदिकश्चित्प्रदास्यति ३० एवंदारक्रियाहेतोःप्रयतिष्येपितामहाः ॥ अनेनविधिनाशश्वन्नकरिष्येऽहमन्यथा ३१

त्वाभ्यां स्वर्गस्थत्वेऽपिपातभयेनव्याकुलत्वमुक्तं वीरणस्तंबोवंशस्तोमः मूषकः कालः १७ । १८ । १९ । २० । २१ नःस्थितोऽस्माकंस्वामीवेतिशेषः २२ । २३ । २४ । २५ । २६ नदारानित्यस्या यतात्पर्यमुक्तं भोगायधनदारसंग्रहोनकार्यःकिंतुपुत्रकृत्वोरेवार्थेइतिभावः २७ । २८ सनाम्नीति प्रायेणवस्तूनांयथार्थनामत्वाज्जरत्कारुशब्देनतपसाजीर्यमाणशरीरत्वंविवक्षितं तादृशोऽहंसदृशीमे वभार्यांस्वीकरिष्यामि बंधुभिर्दित्सितामिति 'ऋत्विजेविततेकर्मणिदद्यादलंकृत्यसदैवोगोमिथुनंदत्वोपयच्छेतसआर्षः'इत्यार्त्विज्यगोमिथुनपूर्वयोर्दैवार्षयोर्विवाहयोर्व्यावृत्तिर्दर्शिता भैक्ष्यवदितितस्याब्राह्म प्राजापत्यविधिनाअलंकृतायाअनलंकृतायावालाभेऽप्यन्नवस्त्रादिनाभरणेममधनादिकंनास्तीतिचदर्शितं उपयंस्येपरिणेष्ये २९ । ३० । ३१

३२ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे त्रयोदशोऽध्यायः ॥ १३ ॥ ततइति निवेशायदारसंग्रहाय पाठांतरेयतिर्ब्रह्मचारी १ तिस्रोवाचःकन्याभिक्षां देहीत्येवंरूपाः २ । ३ । ४ । ५ प्रतीच्छम
तिगृह्णीष्व ६ । ७ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे चतुर्दशोऽध्यायः ॥ १४ ॥ एवमास्तीकोत्पत्तिमकारमुक्त्वासर्पसत्रनिमित्तंसर्पाणांमातृशापमुपक्षिपति मात्राहीत्यादिना अनिलसार

॥३६॥ तत्रचोत्पत्स्यतेजंतुर्भवतांतारणायवै ॥ शाश्वतंस्थानमासाद्यमोदंतांपितरोमम ३२ ॥ इतिश्रीमहाभारतेआदिपर्वणि आस्तीकपर्वणिजरत्कारुतापितृसंवादेत्रयो
दशोऽध्यायः ॥ १३ ॥ ॥ सौतिरुवाच ॥ ततोनिवेशायतदासविप्रःसंशितव्रतः ॥ महींचचारदारार्थीनचदारानविंदत १ सकदाचिद्वनंगत्वाविप्रःपितृवचः
स्मरन् ॥ चुक्रोशकन्याभिक्षार्थीतिस्रोवाचःशनैरिव २ तंवासुकिःप्रत्यगृह्णादुद्यम्यभगिनींतदा ॥ नसतांप्रतिजग्राहनसनाम्नीतिचिंतयन् ३ सनाम्नींचोद्यतांभा ॥१६॥
र्यांगृह्णीयामितितस्यहि ॥ मनोनिविष्टमभवज्जरत्कारोर्महात्मनः ४ तमुवाचमहाप्राज्ञोजरत्कारुर्महातपाः ॥ किंनाम्नीभगिनीयंतेब्रूहिसत्यंभुजंगम ५ ॥ वासुकि
रुवाच ॥ जरत्कारोजरत्कारुःस्वसेयमनुजामम ॥ प्रतिगृह्णीष्वभार्यार्थेमयादत्तांसुमध्यमाम् ॥ त्वदर्थंरक्षितापूर्वंप्रतीच्छेमांद्विजोत्तम ६ एवमुक्त्वाततःप्रादाद्भा
र्यार्थेवरवर्णिनीम् ॥ सचतांप्रतिजग्राहविधिदृष्टेनकर्मणा ७ ॥ इतिश्रीमहाभारते आदिपर्वणिआस्तीकपर्वणि वासुकिस्वसृवरणे चतुर्दशोऽध्यायः ॥ १४ ॥ ॥
॥ सौतिरुवाच ॥ ॥ मात्राहिभुजगाःशप्ताःपूर्वंब्रह्मविदांवर ॥ जनमेजयस्यवोयज्ञेधक्ष्यत्यनिलसारथिः १ तस्यशापस्यशांत्यर्थंप्रददौपन्नगोत्तमः ॥ स्वसारमृष
येतस्मैसुव्रतायमहात्मने २ सचतांप्रतिजग्राहविधिदृष्टेनकर्मणा ॥ आस्तीकोनामपुत्रश्चतस्यांजज्ञेमहामनाः ३ तपस्वीचमहात्माचवेदवेदांगपारगः ॥ समःसर्व
स्यलोकस्यपितृमातृभयापहः ४ अथदीर्घस्यकालस्यपांडवेयोनराधिपः ॥ आजहारमहायज्ञंसर्पसत्रमितिश्रुतिः ५ तस्मिन्प्रवृत्तेसत्रेतुसर्पाणामंतकायवै ॥ मो
चयामासतान्नागानास्तीकःसुमहातपाः ६ भ्रातृंश्चमातुलांश्चैवतथैवान्यान्सपन्नगान् ॥ पितृंश्चतारयामाससंतत्यातपसातथा ७ व्रतैश्चविविधैर्ब्रह्मन्स्वाध्यायैश्चा
नृणोऽभवत् ॥ देवांश्चतर्पयामासयज्ञैर्विविधदक्षिणैः ८ ऋषींश्चब्रह्मचर्येणसंतत्याचपितामहान् ॥ अपहृत्यगुरुंभारंपितृणांसंशितव्रतः ९ जरत्कारुर्गतःस्वर्गंसहितः
स्वैःपितामहैः ॥ आस्तीकंचसुतंप्राप्यधर्मंचानुत्तमंमुनिः १० जरत्कारुःसुमहताकालेनस्वर्गमेयिवान् ॥ एतदाख्यानमास्तीकंयथावत्कथितंमया ॥ प्रब्रूहिभृगु
शार्दूलकिमन्यत्कथयामिते ११ ॥ इतिश्रीमहाभारतेआदिपर्वणि आस्तीकप० सर्पाणांमातृशापप्रस्तावेपंचदशोऽध्यायः ॥ १५ ॥ ॥ शौनकउवाच ॥ सौ
तेत्वंकथयस्वेमांविस्तरेणकथांपुनः ॥ आस्तीकस्यकवेःसाधोःशुश्रूषापरमाहिनः १ मधुरंकथ्यतेसौम्यश्लक्ष्णाक्षरपदंत्वया ॥ प्रीयामहेभृशंतातपितेवेदंप्रभाषसे
२ अस्मच्छुश्रूषणेनित्यंपिताहिनिरतस्तव ॥ आचष्टैतद्यथाख्यानंपितातेत्वंतथावद ३ ॥३६॥

थिर्वह्निः धक्ष्यतिदाहंकरिष्यति १ । २ जज्ञेजातः ३ पितृमातृपक्षीयाणांभयापहःपितृमातृभयापहइतिमध्यमपदलोपः ४ आजहारचक्रे ५ । ६ भ्रातृन्मातुलपुत्रान् ७ । ८ । ९ । १० । ११
॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे पंचदशोऽध्यायः ॥ १५ ॥ ॥ ७ ॥ सौतेइति शुश्रूषाश्रोतुमिच्छा १ । २ अस्मच्छुश्रूषणेअस्माकंश्रावणे आचष्टसाकल्येनव्यक्तंकथितवान् ३

कथयतःपितुःसकाशात् ४ देवयुगेसत्ययुगे रूपेणप्रकाशेनाद्भुतेइतिसर्वंधः । 'रूपंस्वभावेसौंदर्येआलोकेपशुशब्दयोः'इतिमेदिनी अद्भुतइत्यादेःपूर्वरूपमार्षं ५ । ६ वरातिसर्गंवरदानं ७ । ८ तेजसादी
प्त्या विक्रमेणपराभिभवसामर्थ्येन ओजसातेजसेतिपाठेओजसाइंद्रियबलेन ९ पुत्रंपुनातीतितंपवित्रंवरंदिव्यपुत्रद्वयलाभरूपं १० । ११ । १२ यथादशावृत्तानवनवतिः तथादशावृत्तादशदशतिः
शतमित्यर्थः दशदशतीर्दशशतानीत्यर्थः १३ । १४ सोपस्वेदेषुऊष्मवत्सु तत्रह्यंडांतर्जलमूष्मणाशीघ्रंघनीभवतीति पंचशतेपंचशत्याःपूरणेकालेसंवत्सरेपूर्णेसतीतिशेषः १५ मिथुनंनिःसृतंसत् नव्यद

॥ सौतिरुवाच ॥ ॥ आयुष्मन्निदमाख्यानमास्तीकंकथयामिते ॥ यथाश्रुतंकथयतःसकाशाद्वैपितुर्मया ४ पुरादेवयुगेब्रह्मन्प्रजापतिसुतेशुभे ॥ आस्तांभगि
न्यौरूपेणसमुपेतेऽद्भुतेऽनघ ५ तेभार्येकश्यपस्यास्तांकद्रूश्चविनताचह ॥ प्रादात्ताभ्यांवरंप्रीतःप्रजापतिसमःपतिः ६ कश्यपोधर्मपत्नीभ्यांमुदापरमयायुतः ॥
वरातिसर्गंश्रुत्वैवंकश्यपादुत्तमंचते ७ हर्षादप्रतिमांप्रीतिंप्रापतुःस्मवरस्त्रियौ ॥ वव्रेकद्रूःसुतान्नागान्सहस्रंतुल्यवर्चसः ८ द्वौपुत्रौविनतावव्रेकद्रूपुत्राधिकौबले ॥
तेजसावपुषाचैवविक्रमेणाधिकौचतौ ९ तस्यैभर्तावरंप्रादादत्यर्थंपुत्रमीप्सितम् ॥ एवमस्त्वितितंचाहकश्यपंविनतातदा १० यथावत्प्रार्थितंलब्ध्वावरंतुष्टाऽभ
वत्तदा ॥ कृतकृत्यातुविनतालब्ध्वावीर्याधिकौसुतौ ११ कद्रूश्चलब्ध्वापुत्राणांसहस्रंतुल्यवर्चसाम् ॥ धार्यौप्रयत्नतोगर्भावित्युक्त्वासमहातपाः १२ तेभार्येवरसंतु
ष्टेकश्यपोवनमाविशत् ॥ सौतिरुवाच ॥ कालेनमहताकद्रूरंडानांदशतीर्दश १३ जनयामासविप्रेंद्रद्वेचांडेविनतातदा ॥ तयोरंडानिनिदधुःप्रहृष्टाःपरिचा
रिकाः १४ सोपस्वेदेषुभांडेषुपंचवर्षशतानिच ॥ ततःपंचशतेकालेकद्रूपुत्राविनिःसृताः १५ अंडाभ्यांविनतायास्तुमिथुनंनव्यदृश्यत ॥ ततःपुत्रार्थिनीदेवी
व्रीडिताचतपस्विनी १६ अंडंबिभेदविनतातत्रपुत्रमपश्यत ॥ अध्यर्धकायसंपन्नमितरेणाप्रकाशता १७ सपुत्रःक्रोधसंरब्धःशशापैनामितिश्रुतिः ॥ योऽहमेवं
कृतोमातस्त्वयालोभपरीतया १८ शरीरेणासमग्रेणतस्माद्दासीभविष्यसि ॥ पंचवर्षशतान्यस्याययाविस्पर्धसेसह १९ एषचत्वांसुतोमातर्दासीत्वान्मोचयिष्य
ति ॥ यद्येनमपिमातस्त्वंमामिवांडविभेदनात् २० नकरिष्यस्यनंगंवाव्यंगंवापितपस्विनम् ॥ प्रतिपालयितव्यस्तेजन्मकालोऽस्यधीरया २१ विशिष्टंबलमी
प्सत्यापंचवर्षशतात्परः ॥ एवंशप्त्वाततःपुत्रोविनतामंतरिक्षगः २२ अरुणोदृश्यतेब्रह्मन्प्रभातसमयेयदा ॥ आदित्यरथमध्यास्तेसारथ्यंसमकल्पयत् २३
गरुडोऽपियथाकालंजज्ञेपन्नगभोजनः ॥ सजातमात्रोविनतांपरित्यज्यखमाविशत् २४ आदास्यन्नात्मनोभोज्यमन्नंविहितमस्ययत् ॥ विधात्राभृगुशार्दूलक्षु
धितःपतगेश्वरः २५ ॥ इतिश्रीमहाभारते आदिपर्वणिआस्तीकपर्वणि सर्पादीनामुत्पत्तौ षोडशोऽध्यायः ॥ १६ ॥

११ शतनहृष्टं स्वरूपेणेतिशेषः व्रीडितासपत्न्याःपुत्रसमृद्ध्यालज्जिता १६ अपश्यतअपश्यत् अध्यर्धेतिचचरणादारभ्याऽर्धांदुपरितनेनदेहेनकृत्स्नोऽन्येनाकृत्स्नइत्यर्थः पूर्वार्धेतिपाठःसुगमः १७ क्रोध
संरब्धःक्रोधेनद्वेषेणसंरब्धोऽभिनिविष्टः १८ । १९ । २० अनंगंमामिवव्यंगंमदृढावयवं प्रतिपालयितव्यःप्रतीक्षणीयः २१ । २२ । २३ । २४ भर्तृशुश्रूषयैवनारीणांमनोरथसिद्धिरीर्ष्ययाचसिद्धम
पिसर्वंहीयतइत्यध्यायतात्पर्यं विधात्राविहितमितियोजना २५ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे षोडशोऽध्यायः ॥ १६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

एतस्मिन्निति समायाते एकीभूते १ । २ । ३ । ४ ज्वलंतंमेरुंसमागम्यदिवौकसोऽमृतायमंत्रयितुमारब्धाइतिषष्ठेनान्वयःकिंकृत्वातस्यमेरोःशृंगमुपारुह्येतिसंबंधः ५ अप्रमेयमतिमनोहरत्वान्मनसा
वाचावाकलयितुमशक्यं ६ आवारितमावीर्णं ७ अगम्यमप्राप्यं अन्यैःप्राकृतैः ८ अनंतकल्पं अनंतोविष्णुराकाशोवाततईषदून्यूनं बहुगुणाढ्यत्वादतिप्रमाणत्वाच्च ईषदसमाप्तौकल्पप् उद्विद्धमुच्चं
९ । १० । ११ कलशइवकलशोमंथनाधारत्वादुदधिः समुद्रःकलशोदधिः क्षीरसमुद्रइतिकेचित् कलाःपाषाणमयाःपर्वतामैनाकादयःशेरतेऽस्मिन्निति कलशःसमुद्रःसचोदधिः उदकानिधीयंते

॥ सौतिरुवाच ॥ एतस्मिन्नेवकालेतुभगिन्यौतेतपोधन ॥ अपश्यतांसमायातेउच्चैःश्रवसमंतिकात् १ यंतंदेवगणाःसर्वेहृष्टरूपमपूजयन् ॥ मथ्यमानेऽमृतेजा
तमश्वरत्नमनुत्तमम् २ अमोघबलमश्वानामुत्तमंजगतांवरम् ॥ श्रीमंतमजरंदिव्यंसर्वलक्षणपूजितम् ३ ॥ ॥ शौनकउवाच ॥ ॥ कथंतदमृतंदेवैर्मथितंक्वचशं
समे ॥ यत्रजज्ञेमहावीर्यःसोऽश्वराजोमहाद्युतिः ४ ॥ सौतिरुवाच ॥ ॥ ज्वलंतमचलंमेरुंतेजोराशिमनुत्तमम् ॥ आक्षिपंतंप्रभांभानोःस्वशृंगैःकांचनोज्व
लैः ५ कनकाभरणंचित्रंदेवगंधर्वसेवितम् ॥ अप्रमेयमनाधृष्यमधर्मबहुलैर्जनैः ६ व्यालैरावारितंघोरैर्दिव्यौषधिविदीपितम् ॥ नाकमावृत्यतिष्ठंतमुच्छ्रयेणमहा
गिरिम् ७ अगम्यंमनसाऽप्यन्यैर्नदीवृक्षसमन्वितम् ॥ नानापतगसंघैश्चनादितंसुमनोहरैः ८ तस्यशृंगमुपारुह्यबहुरत्नाचितंशुभम् ॥ अनंतकल्पमुद्विद्धंसुराः
सर्वेमहौजसः ९ तेमंत्रयितुमारब्धास्तत्रासीनादिवौकसः ॥ अमृतायसमागम्यतपोनियमसंयुताः १० तत्रनारायणोदेवोब्रह्माणमिदमब्रवीत् ॥ चिंतयत्सुसुरे
ष्वेवंमंत्रयत्सुचसर्वशः ११ देवैरसुरसंघैश्चमथ्यतांकलशोदधिः ॥ भविष्यत्यमृतंतत्रमथ्यमानेमहोदधौ १२ सर्वौषधीःसमावाप्यसर्वरत्नानिचैवह ॥ मंथध्वमुद
धिंदेवावेत्स्यध्वममृतंततः १३ ॥ इतिश्रीमहाभारते आदिपर्वणिआस्तीकपर्वणि अमृतमंथनेसप्तदशोऽध्यायः ॥ १७ ॥ ॥ सौतिरुवाच ॥ ततोऽभ्र
शिखराकारैर्गिरिशृंगैरलंकृतम् ॥ मंदरंपर्वतवरंलताजालसमाकुलम् १ नानाविहगसंघुष्टंनानादंष्ट्रिसमाकुलम् ॥ किन्नरैरप्सरोभिश्चदेवैरपिचसेवितम् २ एकादश
सहस्राणियोजनानांसमुच्छ्रितम् ॥ अधोभूमेःसहस्रेषुतावत्स्वेवप्रतिष्ठितम् ३ तमुद्धर्तुमशक्तावैसर्वेदेवगणास्तदा ॥ विष्णुमासीनमभ्येत्यब्रह्माणंचेदमब्रुवन् ४ भ
वंतावत्रकुर्वीतांबुद्धिंनैःश्रेयसींपराम् ॥ मंदरोद्धरणेयत्नःक्रियतांचहितायनः ५ ॥ ॥ सौतिरुवाच ॥ ॥ तथेतिचाब्रवीद्विष्णुर्ब्रह्मणासहभार्गव ॥ अचोदयदमे
यात्माफणींद्रंपद्मलोचनः ६ ततोऽनंतःसमुत्थायब्रह्मणापरिचोदितः ॥ नारायणेनचाप्युक्तस्तस्मिन्कर्मणिवीर्यवान् ७ अथपर्वतराजानंतमनंतोमहाबलः ॥
उज्जहारबलाद्ब्रह्मन्सवनंसवनौकसम् ८ ततस्तेनसुराःसार्धंसमुद्रमुपतस्थिरे ॥ तमूचुरमृतस्यार्थेनिर्मथिष्यामहेजलम् ९

ऽस्मिन्निति योगात्जलसमुद्रइत्यर्थः विशेषणविशेष्येणबहुलमितिसमासः कलशब्दोदृषदिरूढोलादेषु क्षोभ्यतांकलशःसर्वैरितिवाक्यशेषात् आर्यप्रसिद्धमभाविम्लेच्छप्रसिद्धचाप्यर्थनिर्णयाभ्युपगमात्
१२ वेत्स्यध्वंलप्स्यध्वं १३ ॥ इतिआदिपर्वणिनैलकंठीये भारतभावदीपे सप्तदशोऽध्यायः ॥ १७ ॥ ॥ ७ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ अनंतःशेषः ७ पर्वतराजानं
अनित्यत्वात्समासांतटच् सवनंसतेनेनेत्यमृतप्रसवस्थानं वनैःसहितंवा ८ तेनपर्वतभृताऽनंतेन तंसमुद्रमूचुः जलंतवेतिशेषः ९



१० अकूपारेसमुद्रसमीपे द्वितीयांतपाठेउपेत्येत्यध्याहारः अधिष्ठानंगौरवात्सलंभिमिषतोमंदरस्याधारः ११ । १२ मंथानंमंथनदंडं नेत्रंमंथनरज्जुं १३ एकमंतंएकंप्रदेशंमुखभागंउपाश्लिष्टाःदृढं
वृतवंतः १४ अनंतइतिशेषोविष्णुपक्षीयः वासुकेःशिरउत्क्षिप्योत्क्षिप्यभूमावाक्षिपस्तन्मुखनिःसृतविषस्वयंसोढवानितिभावः १५ वासुकिमुखोत्थवाय्वादिदेवोपकारायाभूदित्याह वासुकेरितिद्वाभ्यां
आक्षिप्यतआक्षिप्यमाणस्य एतेनमेघस्यधूमज्योतिर्वातवारिमयत्वमुक्तं १६ । १७ । १८ । १९ जलचरामत्स्यादयः अस्मदादिवत्पार्थिवांशप्रधानशरीराः २० वारुणानिवरुणलोकस्थानिआप्यांश

अपांपतिरथोवाचममाप्यंशोभवेत्ततः ॥ सोढास्मिविपुलंमर्दंमंदरभ्रमणादिति १० ऊचुश्चकूर्मराजानमकूपारेसुरासुराः ॥ अधिष्ठानंगिरेरस्यभवान्भवितुमर्
हति ११ कूर्मेणतुतथेत्युक्त्वापृष्ठमस्यसमर्पितम् ॥ तंशैलंतस्यपृष्ठस्थंयंत्रेणेंद्रोन्यपीडयत् १२ मंथानंमंदरंकृत्वातथानेत्रंचवासुकिम् ॥ देवामथितुमारब्धाःसमु
द्रंनिधिमंभसाम् १३ अमृतार्थेपुराब्रह्मंस्तथैवासुरदानवाः ॥ एकमंतमुपाश्लिष्टानागराज्ञोमहासुराः १४ विबुधाःसहिताःसर्वेयतःपुच्छंततःस्थिताः ॥ अनंतो
भगवान्देवोयतोनारायणस्ततः ॥ शिरउत्क्षिप्यनागस्यपुनःपुनरवाक्षिपत् १५ वासुकेरथनागस्यसहसाऽऽक्षिप्यतःसुरैः ॥ सधूमाःसार्चिषोवातानिष्पे
तुरसकृन्मुखात् १६ तेधूमसंघाःसंभूतामेघसंघाःसविद्युतः ॥ अभ्यवर्षन्सुरगणाञ्श्रमसंतापकर्शितान् १७ तस्माच्चगिरिकूटाग्रात्प्रच्युताःपुष्पवृष्टयः ॥ सुरा
सुरगणान्सर्वान्समंतात्समवाकिरन् १८ बभूवात्रमहानादोमहामेघरवोपमः ॥ उदधेर्मथ्यमानस्यमंदरेणसुरासुरैः १९ तत्रनानाजलचराविनिष्पिष्टामहाद्रिणा ॥
विलयंसमुपाजग्मुःशतशोलवणांभसि २० वारुणानिचभूतानिविविधानिमहीधरः ॥ पातालतलवासीनिविलयंसमुपानयत् २१ तस्मिंश्चभ्राम्यमाणेऽद्रौसंघृष्यं
तःपरस्परम् ॥ न्यपतन्पतगोपेताःपर्वताग्रान्महाद्रुमाः २२ तेषांसंघर्षजश्चाग्निरर्चिर्भिःप्रज्वलन्मुहुः ॥ विद्युद्भिरिवनीलाभ्रमावृणोन्मंदरंगिरिम् २३ ददाहकुंज
रांस्तत्रसिंहांश्चैवविनिर्गतान् ॥ विगतासूनिसर्वाणिसत्वानिविविधानिच २४ तमग्निममरश्रेष्ठःप्रदहंतमितस्ततः ॥ वारिणामेघजेनेंद्रःशमयामाससर्वशः २५
ततोनानाविधास्तत्रसुस्रुवुःसागरांभसि ॥ महाद्रुमाणांनिर्यासाबहवश्चौषधीरसाः २६ तेषाममृतवीर्याणांरसानांपयसैवच ॥ अमरत्वंसुराजग्मुःकांचनस्यचनिःस्र
वात् २७ ततस्तस्यसमुद्रस्यतज्जातमुदकंपयः ॥ रसोत्तमैर्विमिश्रंचततःक्षीरादभूद्घृतम् २८ ततोब्रह्माणमासीनंदेवावरदमब्रुवन् ॥ श्रांताःस्मसुभृशंब्रह्मन्नोद्भ
वत्यमृतंचतत् २९ विनानारायणंदेवंसर्वेऽन्येदेवदानवाः ॥ चिरारब्धमिदंचापिसागरस्यापिमंथनम् ३० ततोनारायणंदेवंब्रह्मावचनमब्रवीत् ॥ विधत्स्वैषांबलं
विष्णोभवानत्रपरायणम् ३१ ॥ विष्णुरुवाच ॥ बलंददामिसर्वेषांकर्मैतद्येसमास्थिताः ॥ क्षोभ्यतांकलशःसर्वैर्मंदरःपरिवर्त्यताम् ३२

प्रधानदेहानि २१ पर्वताग्रात्पतमानानांद्रुमाणांसंघर्षाज्जातोऽग्निःपर्वतंव्याप्नुवंस्तत्रस्थान्पश्वादीन्ददाहेत्याह त्रिभिस्तस्मिन्नित्यादिभिः २२ । २३ । २४ । २५ । २६ तेषांद्रुमौषधीनांयेऽमृतवीर्या र
सास्तज्जेनपयसाक्षीरेणकांचनस्यस्वर्णमयस्यपर्वतस्यनिःस्रवात् दिव्यप्रभावानेकमणिभ्योनिःसृतात् जलाच्चसुराअमृतत्वंजग्मुः २७ ततःपयोनिःस्रवंप्राप्य समुद्रस्यतत्क्षारंउदकं लवणांभसीत्युपक्रमात्
पयःक्षीरंजातंयथाक्षारमक्षारंवाजलंगवितृणादिरसंप्राप्यक्षीरंभवतितद्वदित्यर्थः पयोऽपिरसोत्तमैर्विमिश्रमस्ति ततोहेतोःक्षीरादभूद्घृतं २८ । २९ । ३० । ३१ । ३२

३३ शतसहस्रंलक्षंअनंताअंशवःआप्यायनीयौषधिभेदात्रश्मयोयस्यसशतसहस्रांशुः शतसहस्रांतइतिपाठेअंतशब्दोगम्यप्रदेशपरः ३४ घृतेनद्यावापृथिवीपृथ्वीतिपाठेंप्येदर्शनान्नैषंदुक्रमसिद्धेश्चघृतंजलं
तस्मात्श्रीरुत्पन्नाद्रुमौषधिरसाजलस्यक्षीरत्वंततोघृतमितिक्रमेसारत्वमात्रंविवक्षितं ३५ मरीचिविकचःरश्मिभिरुज्ज्वलः नारायणउरोगतइत्यर्धसंधिरार्षः ३६ । ३७ । ३८ । ३९ ऐरावणऐरावतः
महानागोमहाहस्ती ४० । ४१ । ४२ । ४३ निराशाः विषमप्येतैर्गृहीतमस्माभिस्तुतद्ग्रहणासमर्थैःकथममृतंलब्धुंशक्यमितिभावः महान्अंतःसंहारोयेनतन्महांतं ४४ अभिसंश्रितःसंमुखः

॥ सौतिरुवाच ॥ नारायणवचःश्रुत्वाबलिनस्तेमहोदधेः ॥ तत्पयःसहिताभूयश्चक्रिरेभृशमाकुलम् ३३ ततःशतसहस्रांशुर्मथ्यमानात्तुसागरात् ॥ प्रसन्नात्मास
मुत्पन्नःसोमःशीतांशुरुज्ज्वलः ३४ श्रीरनंतरमुत्पन्नाघृतात्पांडुरवासिनी ॥ सुरादेवीसमुत्पन्नातुरगःपांडुरस्तथा ३५ कौस्तुभस्तुमणिर्दिव्यउत्पन्नोघृतसंभवः ॥
मरीचिविकचःश्रीमान्नारायणउरोगतः ३६ श्रीःसुराचैवसोमश्चतुरगश्चमनोजवः ॥ यतोदेवास्ततोजग्मुरादित्यपथमाश्रिताः ३७ धन्वंतरिस्ततोदेवोवपुष्मा
नुदतिष्ठत ॥ श्वेतंकमंडलुंबिभ्रदमृतंयत्रतिष्ठति ३८ एतदत्यद्भुतंदृष्ट्वादानवानांसमुत्थितः ॥ अमृतार्थेमहान्नादोममेदमितिजल्पताम् ३९ श्वेतैर्दंतैश्चतुर्भिस्तु
महाकायस्ततःपरम् ॥ ऐरावणोमहानागोऽभवद्वज्रभृताधृतः ४० अतिनिर्मथनादेवकालकूटस्ततःपरः ॥ जगदावृत्यसहसासधूमोऽग्निरिवज्वलन् ४१ त्रैलो
क्यंमोहितंयस्यगंधमाघ्रायतद्विषम् ॥ प्राग्रसल्लोकरक्षार्थंब्रह्मणोवचनाच्छिवः ४२ दधारभगवान्कंठेमंत्रमूर्तिर्महेश्वरः ॥ तदाप्रभृतिदेवस्तुनीलकंठइतिश्रुतिः ४३
एवंतदद्भुतंदृष्ट्वानिराशादानवाःस्थिताः ॥ अमृतार्थेचलक्ष्म्यर्थेमहांतंवैरमाश्रिताः ४४ ततोनारायणोमायांमोहिनींसमुपाश्रितः ॥ स्त्रीरूपमद्भुतंकृत्वादानवा
नभिसंश्रितः ४५ ततस्तदमृतंतस्यैददुस्तेमूढचेतसः ॥ स्त्रियैदानवदैतेयाःसर्वेतद्गतमानसाः ४६ ॥ इति श्रीमहाभारते आदिपर्वणि आस्तीकपर्वणि अमृतमं
थनेअष्टादशोऽध्यायः ॥ १८ ॥ ॥ सौतिरुवाच ॥ अथावरणमुख्यानिनानाप्रहरणानिच ॥ प्रगृह्याभ्यद्रवन्देवान्सहितादैत्यदानवाः १ ततस्तदमृतंदेवोवि
ष्णुरादायवीर्यवान् ॥ जहारदानवेंद्रेभ्योनरेणसहितःप्रभुः २ ततोदेवगणाःसर्वेपपुस्तदमृतंतदा ॥ विष्णोःसकाशात्संप्राप्यसंभ्रमेतुमुलेसति ३ ततःपिबत्सुतत्का
लंदेवेष्वमृतमीप्सितम् ॥ राहुर्विबुधरूपेणदानवःप्रापिबत्तदा ४ तस्यकंठमनुप्राप्तेदानवस्यामृतेतदा ॥ आख्यातंचंद्रसूर्याभ्यांसुराणांहितकाम्यया ५ ततो
भगवतातस्यशिरश्छिन्नमलंकृतम् ॥ चक्रायुधेनचक्रेणपिबतोऽमृतमोजसा ६ तच्छैलशृंगप्रतिमंदानवस्यशिरोमहत् ॥ चक्रच्छिन्नंखमुत्पत्यननादातिभयंकरम्
७ तत्कबंधंपपातास्यविस्फुरद्धरणीतले ॥ सपर्वतवनद्वीपांदैत्यस्याकंपयन्महीम् ८ ततोवैरविनिर्बंधःकृतोराहुमुखेनवै ॥ शाश्वतश्चंद्रसूर्याभ्यांग्रसत्यद्यापिचै
वतौ ९ विहायभगवांश्चापिस्त्रीरूपमतुलंहरिः ॥ नानाप्रहरणैर्भीमैर्दानवान्समकंपयत् १० ॥३८॥

मोहनार्थमित्यर्थः ४५ 'अमृतादपिविभ्रंशःसंगमात्रेणयोषितां दर्शितामोहिनीरूपंहरिणैवंप्रकाशितम्'इतिरत्नगर्भः ४६ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपे अष्टादशोऽध्यायः ॥ १८ ॥
अथेति आवरणमुख्यानिकवचाद्यानि प्रहरणान्यायुधानि १ । २ संभ्रमेउभयेषाममृतादरेसति ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

११ प्रासाहस्तक्षेप्याःक्षुद्रभल्लाः विंध्ये'करकाडी'इतिप्रसिद्धाः तोमराद्दीर्घदंडास्तएवाक्षेप्याकाटेघ्विटाइतिप्रसिद्धाः विविधानिशस्त्राणियमदंष्ट्रादीनिलोकप्रसिद्धानि'जमधड'इत्यादीनि १२ असिःखड्गः
शक्तिर्हस्तक्षेप्योलोहदंडः पृथुबुध्नागदासरलःसएव १३ पट्टिशःखड्गविशेषउभयतोधारस्तीक्ष्णाग्रः'पट्टा'इतिप्रसिद्धः १४ । १५ । १६ परिघःपरितोहंतीतितथासर्वतःकंटकितोलोहदंडः एवमग्रेऽपिलो

ततःप्रवृत्तःसंग्रामःसमीपेलवणांभसः ॥ सुराणामसुराणांचसर्वघोरतरोमहान् ११ प्रासाश्चविपुलास्तीक्ष्णान्यपतंतसहस्रशः ॥ तोमराश्चसुतीक्ष्णाग्राःशस्त्राणि
विविधानिच १२ ततोऽसुराश्चक्रभिन्नावमंतोरुधिरंबहु ॥ असिशक्तिगदारुग्णानिपेतुर्धरणीतले १३ छिन्नानिपट्टिशैश्चैवशिरांसियुधिदारुणैः ॥ तप्तकांचनमा
लीनिनिपेतुरनिशंतदा १४ रुधिरेणानुलिप्तांगानिहताश्चमहासुराः ॥ अद्रीणामिवकूटानिधातुरक्तानिशेरते १५ हाहाकारःसमभवत्तत्रतत्रसहस्रशः ॥ अन्यो
न्यंछिंदतांशस्त्रैरादित्येलोहितायति १६ परिघैरायसैस्तीक्ष्णैःसन्निकर्षेचमुष्टिभिः ॥ निघ्नतांसमरेऽन्योन्यंशब्दोदिवमिवास्पृशत् १७ छिंधिभिंधिप्रधावत्वंपात
याभिसरेतिच ॥ व्यश्रूयंतमहाघोराःशब्दास्तत्रसमंततः १८ एवंसुतुमुलेयुद्धेवर्तमानेमहाभये ॥ नरनारायणौदेवौसमाजग्मतुराहवम् १९ तत्रदिव्यंधनुर्दृष्ट्वा
नरस्यभगवानपि ॥ चिंतयामासतच्चक्रंविष्णुर्दानवसूदनम् २० ततोऽम्बराच्चिंतितमात्रमागतंमहाप्रभंचक्रममित्रतापनम् ॥ विभावसोस्तुल्यमकुंठमंडलंसुदर्शनं
संयतिभीमदर्शनम् २१ तदागतंज्वलितहुताशनप्रभंभयंकरंकरिकरबाहुरच्युतः ॥ मुमोचवैप्रबलवदुग्रवेगवान्महाप्रभंपरनगरावदारणम् २२ तदंतकज्वलनसमा
नवर्चसंपुनःपुनर्न्यपततवेगवत्तदा ॥ विदारयद्दितिदनुजान्सहस्रशःकरेरितंपुरुषवरेणसंयुगे २३ दहत्क्वचिज्ज्वलनइवावलेलिहत्प्रसह्यतानसुरगणान्न्यकृंतत ॥ प्रवे
रितंवियतिमुहुःक्षितौतथापपौरणेरुधिरमथोपिशाचवत् २४ तथाऽसुरागिरिभिरदीनचेतसोमुहुर्मुहुःसुरगणमार्दयंस्तदा ॥ महाबलाविगलितमेघवर्चसःसहस्रशो
गगनमभिप्रपद्यह २५ अथांबराद्भयजननाःप्रपेदिरेसपादपाबहुविधमेघरूपिणः ॥ महाद्रयःपरिगलिताग्रसानवःपरस्परंद्रुतमभिहत्यसस्वनाः २६ ततोमही प्रवि
चलितासकाननामहाद्रिपाताभिहतासमंततः ॥ परस्परंभृशमभिगर्जतांमुहूरणाजिरेभृशमभिसंप्रवर्तिते २७ नरस्ततोवरकनकाग्रभूषणैर्महेषुभिर्गगनपथंसमावृ
णोत् ॥ विदारयन्गिरिशिखराणिपत्रिभिर्महाभयेऽसुरगणविग्रहेतदा २८ ततोमहींलवणजलंचसागरंमहासुराःप्रविविशुरर्दिताःसुरैः ॥ वियद्गतंज्वलितहुताशनप्रभं
सुदर्शनंपरिकुपितंनिशम्यते २९ ततःसुरैर्विजयमवाप्यमंदरःस्वमेवदेशंगमितःसुपूजितः ॥ विनाद्यखंदिवमपिचैवसर्वशस्ततोगताःसलिलधरायथागतम् ३०

कप्रसिद्ध्यनुसारेणयोगबलेनवायुधवाचिनांशब्दानामर्थोबोध्यः १७ । १८ । १९ । २० संयतियुद्धे २१ । २२ । २३ प्रवेरितंप्रेरितं अवोपसर्गस्यभागुरिमतेनाकारलोपः २४ विगलितारिक्तामे
घास्ततुल्यदीप्तयः श्वेतभास्वराइत्यर्थः २५ बहुविधानीलपीतादिधातुमत्त्वात् । मेघरूपित्वंगगनगामित्वात् २६ गणशब्दितारुद्रानुचरोपलक्षितादेवाः असुराश्चगणाश्चतेषांविग्रहे । 'गणःप्रम
थसंख्यौघे'इतिमेदिनी २७ । २८ निशम्यविज्ञाय तेअसुराः २९ सलिलधराअमृतभृतोदेवाः ३०

किरीटिनेनराय । 'तुल्यायासेऽप्यविवुधानाविजेविमुखाहरेः ॥ देवास्तुवञ्चनाविष्णोःप्रापुरेतादिहोच्यते'इतिरत्नगर्भः ३१ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे एकोनविंशोऽध्यायः ॥ १९ ॥
एतदिति १ । २ विपणावहेपणंकुर्वहे ३ दीव्यविजिगीषस्व दासीभावायमांवादासीकर्तुंत्वंवादासीभवितुंब्रूहीत्यर्थः ४ । ५ जिह्मंकौटिल्यं ६ नावपर्यंतमनानुमोदितवंतः ७ । ८ । ९ । १० दंदशूकाः

ततोऽमृतंसुनिहितमेवचक्रिरेसुराःपरांमुदमभिगम्यपुष्कलाम् ॥ ददौचतंनिधिममृतस्यरक्षितुंकिरीटिनेबलभिदथामरैःसह ३१ ॥ इतिश्रीमहाभारते आदिपर्वणि
आस्तीकपर्वणि अमृतमंथनसमाप्तिर्नामएकोनविंशोऽध्यायः ॥ १९ ॥ ॥ सौतिरुवाच ॥ एतत्तेकथितंसर्वममृतंमथितंयथा ॥ यत्रसोऽश्वःसमुत्पन्नःश्रीमा
नतुलविक्रमः १ यंनिशम्यतदाकद्रूर्विनतामिदमब्रवित् ॥ उच्चैःश्रवाहिकिंवर्णोभद्रेप्रब्रूहिमाचिरम् २ ॥ विनतोवाच ॥ श्वेतएवाश्वराजोऽयंकिंवात्वंमन्यसेशुभे ॥
ब्रूहिवर्णंत्वमप्यस्यततोऽत्रविपणावहे ३ ॥ ॥ कद्रूरुवाच ॥ ॥ कृष्णवालमहंमन्येहयमेनंशुचिस्मिते ॥ एहिसार्धंमयादीव्यदासीभावायभामिनि ४ ॥ सौति
रुवाच ॥ ॥ एवंतेसमयंकृत्वादासीभावायवैमिथः ॥ जग्मतुःस्वगृहानेवश्वोद्रक्ष्यावइतिस्मह ५ ततःपुत्रसहस्रंतुकद्रूर्जिह्मंचिकीर्षती ॥ आज्ञापयामासतदावा
लाभूत्वाञ्जनप्रभाः ६ आविशध्वंहयंक्षिप्रंदासीनस्यामहंयथा ॥ नावपद्यंतयेवाक्यंतान्शशापभुजंगमान् ७ सर्पसत्रेवर्तमानेपावकोवःप्रधक्ष्यति ॥ जनमेज
यस्यराजर्षेःपांडवेयस्यधीमतः ८ शापमेनंतुशुश्रावस्वयमेवपितामहः ॥ अतिक्रूरंसमुत्सृष्टंकद्र्वादैवादतीवहि ९ सार्धंदेवगणैःसर्वैर्वाचंतामन्वमोदत ॥ बहुत्वंप्रे
क्ष्यसर्पाणांप्रजानांहितकाम्यया १० तिग्मवीर्यविषाह्येतेदंदशूकामहाबलाः ॥ तेषांतीक्ष्णविषत्वाद्धिप्रजानांचहितायच ११ युक्तंमात्राकृतंतेषांपरपीडोपसर्पि
णाम् ॥ अन्येषामपिसत्वानांनित्यंदोषपरास्तुये १२ तेषांप्राणांतिकोदंडोदैवेनविनिपात्यते ॥ एवंसंभाष्यदेवस्तुपूज्यकद्रूंचतांतदा १३ आहूयकश्यपंदेव
इदंवचनमब्रवीत् ॥ यदेतेदंदशूकाश्चसर्पाजातास्त्वयाऽनघ १४ विषोल्बणामहाभोगामात्राशप्ताःपरंतप ॥ तत्रमन्युस्त्वयातातनकर्तव्यःकथंचन १५ दृष्टंपु
रातनंह्येतद्यज्ञेसर्पविनाशनम् ॥ इत्युक्त्वासृष्टिकृद्देवस्तंप्रसाद्यप्रजापतिम् ॥ प्रादाद्विषहरींविद्यांकश्यपायमहात्मने १६ ॥ इतिश्रीम० आदिपर्वणिआस्तीकप०
सौपर्णेविंशोऽध्यायः ॥ २० ॥ ॥ सौतिरुवाच ॥ ततोरजन्यांव्युष्टायांप्रभातेऽभ्युदितेरवौ ॥ कद्रूश्चविनताचैवभगिन्यौतेतपोधन १ अमर्षितेसुसंरब्धेदा
स्येकृतपणेतदा ॥ जग्मतुस्तुरगंद्रष्टुमुच्चैःश्रवसमंतिकात् २ ददृशातेऽथतेतत्रसमुद्रंनिधिमंभसाम् ॥ महांतमुदकागाधंक्षोभ्यमाणंमहास्वनम् ३ तिमिंगि
लझषाकीर्णंमकरैरावृतंतथा ॥ सत्वैश्चबहुसाहस्रैर्नानारूपैःसमावृतम् ४ भीषणैर्विकृतैरन्यैर्घोरैर्जलचरैस्तथा ॥ उग्रैर्नित्यमनाधृष्यंकूर्मग्राहसमाकुलम् ५

भृशंदंशनशीलाः ११ । १२ । १३ । १४ महाभोगामहाशरीराः १५ विषहरींविषघ्नीं विषहरामितिपाठः १६ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे विंशोऽध्यायः ॥ २० ॥ ॥ ५ ॥ ॥३१॥
ततइति व्युष्टायांव्यतीतायां १ दास्येविषये २ उदकेनागाधंतलस्पर्शशून्यं क्षोभ्यमाणंमकरादिभिः ३ । ४ । ५

६ पातालज्वलनोवाडवाग्निस्तस्यावासं बांधवंशरणं बंधनमितिपाठेकारागारं ७ । ८ । ९ वेलायादोलआंदोलनंतज्जेनानिलेनचलं १० । ११ गांपृथ्वीं विंदतालंभमानेन हेतौशतृप्रत्ययः तेन
हेतुनाविक्षोभितेनजलेनाविलंव्याप्तं १२ अत्रिणातलान्वेषिणेतिशेषः गाधंतलं पातालस्यापितलमधःस्थं अव्ययंपातालादिव्ययेऽप्यविनाशं १३ सेवतःसेवमानस्य युगादिकालशयनंयुगंकृतादि
कंतस्यआदिभूतोयुगादिकालस्तस्मिन्शयनंतल्पभूतं १४ डिंबाहवेडिंबोभयवतामाक्रंदस्तद्वतिआहवे 'डिंबोभयध्वनावंडे'इतिमेदिनी । तिग्माहवइतिपाठःस्पष्टार्थः १५ वडवाअश्वातस्यामुखादुत्पन्नो

आकरंसर्वरत्नानामालयंवरुणस्यच ॥ नागानामालयंरम्यमुत्तमंसरितांपतिम् ६ पातालज्वलनावासमसुराणांचबांधवम् ॥ भयंकरंचसत्वानांपयसांनिधिमर्ण
वम् ७ शुभंदिव्यममर्त्यानाममृतस्याकरंपरम् ॥ अप्रमेयमचिंत्यंचसुपुण्यजलमद्भुतम् ८ घोरंजलचरारावरौद्रंभैरवनिःस्वनम् ॥ गंभीरावर्तकलिलंसर्व
भूतभयंकरम् ९ वेलादोलानिलचलंक्षोभोद्वेगसमुच्छ्रितम् ॥ वीचीहस्तैःप्रचलितैर्नृत्यंतमिवसर्वतः १० चंद्रवृद्धिक्षयवशादुद्वृत्तोर्मिसमाकुलम् ॥ पांचज
न्यस्यजननंरत्नाकरमनुत्तमम् ११ गांविंदताभगवतागोविंदेनामितौजसा ॥ वराहरूपिणाचांतर्विक्षोभितजलाविलम् १२ ब्रह्मर्षिणाव्रतवतावर्षाणांशतमत्रि
णा ॥ अनासादितगाधंचपातालतलमव्ययम् १३ अध्यात्मयोगनिद्रांचपद्मनाभस्यसेवतः ॥ युगादिकालशयनंविष्णोरमिततेजसः १४ वज्रपातनसंत्रस्त
मैनाकस्याभयप्रदम् ॥ डिंबाहवार्दितानांचअसुराणांपरायणम् १५ वडवामुखदीप्ताग्नेस्तोयहव्यप्रदंशिवम् ॥ अगाधपारंविस्तीर्णमप्रमेयंसरित्पतिम् १६ महान
दीभिर्बह्वीभिःस्पर्धयेवसहस्रशः ॥ अभिसार्यमाणमनिशंददृशातेमहार्णवम् ॥ आपूर्यमाणमत्यर्थंनृत्यमानमिवोर्मिभिः १७ गंभीरंतिमिमकरोग्रसंकुलंतंगर्जंतं
जलचररावरौद्रनादैः ॥ विस्तीर्णंददृशतुरंबरप्रकाशंतेऽगाधंनिधिमुरुमंभसामनंतम् १८ ॥ इतिश्रीमहाभारते आदिपर्वणिआस्तीकपर्वणि सौपर्णेएकविंशति
तमोऽध्यायः ॥ २१ ॥ ॥ सौतिरुवाच ॥ नागाश्चसंविदंकृत्वाकर्तव्यमितितद्वचः ॥ निःस्नेहावैदहेन्माताअसंप्राप्तमनोरथा १ प्रसन्नामोक्षयेदस्मांस्तस्माच्छा
पाच्चभामिनी ॥ कृष्णंपुच्छंकरिष्यामस्तुरगस्यनसंशयः २ तथाहिगत्वातेतस्यपुच्छेवालाइतिस्मृताः ॥ एतस्मिन्नंतरेतेतुसपत्न्यौपणितेतदा ३ ततस्तेपणितं
कृत्वाभगिन्यौद्विजसत्तम ॥ जग्मतुःपरयाप्रीत्यापरंपारंमहोदधेः ४ कद्रूश्चविनताचैवदाक्षायण्यौविहायसा ॥ आलोकयंत्यावक्षोभ्यंसमुद्रंनिधिमंभसाम् ५ वायुनाऽती
वसहसाक्षोभ्यमाणंमहास्वनम् ॥ तिमिंगिलसमाकीर्णंमकरैरावृतंतथा ६ संयुतंबहुसाहस्रैःसत्त्वैर्नानाविधैरपि ॥ घोरैर्घोरमनाधृष्यंगंभीरमतिभैरवम् ७ आकरंसर्व
रत्नानामालयंवरुणस्यच ॥ नागानामालयंचापिसुरम्यंसरितांपतिम् ८ पातालज्वलनावासमसुराणांतथालयम् ॥ भयंकराणांसत्वानांपयसोनिधिमव्ययम् ९

॥ १४ दीप्तोयोऽग्निस्तस्मैतोयहव्यप्रदं गाधःपारश्चनास्तियस्यसोऽगाधपारस्तं अतएवविस्तीर्णं विशेषेणस्तीर्णंसमंततआस्तीर्णं १६ अभिसार्यमाणमभितोगम्यमानं १७ तेकद्रूविनते अगाधंपूर्वरूप
मार्षं १८ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे एकविंशतितमोऽध्यायः ॥ २१ ॥ नागाश्चसंविदंकृत्वेतिद्वादशश्लोकमध्यायंकेचिन्नपठंति कांश्चिदत्रत्यान्श्लोकान्पूर्वत्रैवचपठंति अन्येतुपंचपा
न्यठंत्यपीत्यत्रकोशशुद्धिंनप्रतीमः संविदंमिथआलोचनं १ । २ पणितेपणंकृतवत्यौ ३ । ४ उक्तानुक्तविशेषणैःपुनःस्तौतिसमुद्रं अक्षोभ्यमित्यादिना ५ । ६ । ७ । ८ । ९

१० । ११ । १२ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ तमिति १ शशांककिरणवत्प्रख्यादीप्तिर्यस्यतंताहशमपिकालवालंकृष्णकेशं २ निशम्य दृष्ट्वा ३ । ४ । ५ कामरूपःइच्छाकृतमेवरूपंयस्यसतथा ६ उद्भासनुत्कर्षेणभासमानः ७ और्वौवाडवः ८ विभावसुंवन्हिं ९ अग्नेमात्वमितिदेवानांभ्रमवर्णनमग्निगरुडयोरतिसादृश्यकथनार्थं १० । ११ । १२ । १३ । १४ अत्रापिपूर्ववत्सुपर्णोपाधिकंब्रह्मैवस्तूयते नहिविष्णुवाहनेपक्षिमात्रेमकृतानिसर्वाणिविशेषणान्यंजसासंगच्छंते । 'इंद्रंमित्रंवरुणमग्निमाहुरथोदिव्यःससुपर्णोगरु

शुभ्रंदिव्यममर्त्यानाममृतस्याकरंपरम् ॥ अप्रमेयमचिंत्यंचसुपुण्यजलसंमितम् १० महानदीभिर्बह्वीभिस्तत्रतत्रसहस्रशः ॥ आपूर्यमाणमत्यर्थंनृत्यंतमिवचोर्मिभिः ११ इत्येवंतरलतरोर्मिसंकुलंतेगंभीरंविकसितमंबरप्रकाशम् ॥ पातालज्वलनशिखाविदीपितांगंगर्जंतंद्रुतमभिजग्मतुस्ततस्ते १२ ॥ इतिश्रीमहाभारते आदिपर्वणिसौपर्णेसमुद्रदर्शनंनाम द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ सौतिरुवाच ॥ तंसमुद्रमतिक्रम्यकद्रूर्विनतयासह ॥ न्यपततुरगाभ्याशेनचिरादिवशीघ्रगा १ ततस्तेतंहयश्रेष्ठंददृशातेमहाजवम् ॥ शशांककिरणप्रख्यंकालवालमुभेतदा २ निशम्यचबहून्वालान्कृष्णान्पुच्छसमाश्रितान् ॥ विषण्णरूपांविनतांकद्रूर्दास्येन्ययोजयत् ३ ततःसाविनतातस्मिन्पणितेनपराजिता ॥ अभवद्दुःखसंतप्तादासीभावंसमास्थिता ४ एतस्मिन्नंतरेचापिगरुडःकालआगते ॥ विनामात्रामहातेजाविदार्यांडमजायत ५ महासत्वबलोपेतःसर्वाविद्योतयन्दिशः ॥ कामरूपःकामगमःकामवीर्योविहंगमः ६ अग्निराशिरिवोद्भासन्समिद्धोऽतिभयंकरः ॥ विद्युद्विस्पष्टपिंगाक्षोयुगांताग्निसमप्रभः ७ प्रवृद्धःसहसापक्षीमहाकायोनभोगतः ॥ घोरोघोरस्वनोरौद्रोवन्हिरौर्वइवापरः ८ तंदृष्ट्वाशरणंजग्मुर्देवाःसर्वेविभावसुम् ॥ प्रणिपत्याब्रुवंश्चैनमासीनंविश्वरूपिणम् ९ अग्नेमात्वंप्रवर्धिष्ठाःकच्चिन्नोनदिधक्षसि ॥ असौहिराशिःसमुद्दान्समिद्धस्तवसर्पति १० ॥ ॥ अग्निरुवाच ॥ नैतदेवंयथायूयंमन्यध्वमसुरार्दनाः ॥ गरुडोबलवानेषममतुल्यश्चतेजसा ११ जातःपरमतेजस्वीविनतानंदवर्धनः ॥ तेजोराशिमिमंदृष्ट्वायुष्मान्मोहःसमाविशत् १२ नागक्षयकरश्चैवकाश्यपेयोमहाबलः ॥ देवानांचहितेयुक्तस्त्वहितोदैत्यरक्षसाम् १३ नभीःकार्याकथंचात्रपश्यध्वंसहितामम ॥ एवमुक्तास्तदागत्वागरुडंवाग्भिरस्तुवन् १४ तेदूरादभ्युपेत्यैनंदेवाःसर्षिगणास्तदा ॥ देवाऊचुः ॥ त्वमृषिस्त्वंमहाभागस्त्वंदेवःपतगेश्वरः १५ त्वंप्रभुस्तपनःसूर्यःपरमेष्ठीप्रजापतिः ॥ त्वमिंद्रस्त्वंहयमुखस्त्वंशरस्त्वंजगत्पतिः १६ त्वंमुखंपद्मजोविप्रस्त्वमग्निःपवनस्तथा ॥ त्वंहिधाताविधाताचत्वंविष्णुःसुरसत्तमः १७

त्मान् । एकंसद्विप्राबहुधावदंत्यग्निंयमंमातरिश्वानमाहुः'इतिश्रुतेरिंद्रादिबहुमकारेणसदेवैकमुच्यतइत्यवगमात् ऋषिःप्रणवरूपोमंत्रः मंत्राणांसर्वेषांद्रष्टामधुच्छंदआदिरूपोवा महाभागःकृत्स्नस्ययज्ञस्यभोक्ता देवोद्योतमानः पतगानांजीवपक्षिणामीश्वरोऽतिशीघ्रगोवा । तद्धावतोऽन्यानत्येतिशश्वदितिश्रुतेः १५ प्रभुश्चेतनाचेतनस्यकृत्स्नस्याधिष्ठाता तपनस्तपतीतितपनोंऽतकर्त्ता सूर्यःसूते इतिसूर्यउत्पादकः उपादानमित्यर्थः परमेष्ठीहिरण्यगर्भरूपेणप्रजापतिर्दक्षादिरूपेणचनिमित्तमपीत्यर्थः त्वमिंद्रोदेवराजः हयमुखोहयग्रीवावतारः त्वंशरोमहादेवस्यत्रिपुरवधेबाणभूतोविष्णुः १६ त्वंमुखं 'ब्राह्मणोऽस्यमुखमासीत्'इतिश्रुतेः पद्मजश्चतुर्मुखः विप्रोविज्ञानवान् अग्निर्वायुश्चेत्यादिसर्वदेवतात्मा धाताचितिः विधातामायेतिप्राग्व्याख्यातमेव विष्णुर्व्यापकः सुरसत्तमोदेवेश्वरः १७

महान्महत्तत्वं अभिभूःअभितोभवतीत्यभिभूरभिमानोऽहंकारइत्यर्थः । शश्वत्सर्वदा अमृतममविकृतं महद्यशः । तस्यनाममहद्यशइतिश्रुतेर्निर्गुणंब्रह्म त्वंप्रभाःसूर्यादीनांतेजांसि त्वमभिप्रेतंबुद्धिवृत्तिः प्राणंरक्षणं १८ बलस्यपुण्यस्य ऊर्मिमान्सागरः अतएवादीनंरजआदिनाऽनुपक्षीणंसत्वंयस्यसः अतएवसमृद्धिरैश्वर्यंतद्वान् दुर्विषहोयुद्धे त्वत्तःसृतंनिर्गतंसर्वं अहीनकीर्तंपुण्यश्लोक अनागतादिसत्वमेव १९ उत्तमश्चिन्मात्रः चराचरंचेतनाचेतनंस्थावरजंगमंवा गभस्तिभिर्वृत्तिज्ञानैः भानुरिवकिरणैः अवभाससेघटादिज्ञानरूपेण यथोक्तं । 'परागर्थप्रमेयेषुयाफलत्वेनसंमता । संवित्सैवेहमेयोऽर्थोवेदांतोक्तिप्रमाणतः'इति । भानुमतःसूर्यस्य अंतकोमृत्युः ध्रुवाध्रुवंक्षराक्षरंप्रधानपुरुषात्मकं २० युगपरिवर्तनंसहस्रकृत्वोजायमानंतस्यांतस्तत्कर्त्ता कालस्यापिकालइत्यर्थः २१ खगेश्वरमुपेत्यसमीपंगत्वा

त्वंमहानभिभूःशश्वदमृतंत्वंमहद्यशः ॥ त्वंप्रभास्त्वमभिप्रेतंत्वंनस्त्राणमनुत्तमम् १८ बलोर्मिमान्साधुरदीनसत्वःसमृद्धिमान्दुर्विषहस्त्वमेव ॥ त्वत्तःसृतंसर्वमहीनकीर्तेह्यनागतंचोपगतंचसर्वम् १९ त्वमुत्तमःसर्वमिदंचराचरंगभस्तिभिर्भानुरिवावभाससे ॥ समाक्षिपन्भानुमतःप्रभांमुहुस्त्वमंतकःसर्वमिदंध्रुवाध्रुवम् २० दिवाकरःपरिकुपितोयथादहेत्प्रजास्तथादहसिहुताशनप्रभ ॥ भयंकरःप्रलयइवाग्निरुत्थितोविनाशयन्युगपरिवर्तनांतकृत् २१ खगेश्वरंशरणमुपागतावयंमहौजसंज्वलनसमानवर्चसम् ॥ तडित्प्रभंवितिमिरमभ्रगोचरंमहाबलंगरुडमुपेत्यखेचरम् २२ परावरंवरदमजय्यविक्रमंतवौजसासर्वमिदंप्रतापितम् ॥ जगत्प्रभोतप्तसुवर्णवर्चसात्वंपाहिसर्वांश्चसुरान्महात्मनः २३ भयान्वितानभसिविमानगामिनोविमानिताविपथगतिंप्रयांतिते ॥ ऋषेःसुतस्त्वमसिदयावतःप्रभोमहात्मनःखगवरकश्यपस्यह २४ समाकुधःकुरुजगतोदयांपरांत्वमीश्वरःप्रशममुपैहिपाहिनः ॥ महाशनिस्फुरितसमस्वनेनतेदिशोंऽबरंत्रिदिवमियंचमेदिनी २५ चलंतिनःखगहृदयानिचानिशंनिगृह्यतांवपुरिदमग्निसन्निभम् ॥ तवद्युतिंकुपितकृतांतसन्निभांनिशम्यनश्चलतिमनोऽव्यवस्थितम् ॥ प्रसीदनःपतगपतेप्रयाचतांशिवश्चनोभवभगवन्सुखावहः २६ एवंस्तुतःसुपर्णस्तुदेवैःसर्षिगणैस्तदा ॥ तेजसःप्रतिसंहारमात्मनःसचकारह २७ ॥ इतिश्रीम०आ०आ०सौपर्णेत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ सौतिरुवाच ॥ सश्रुत्वाऽथात्मनोदेहंसुपर्णःप्रेक्ष्यचस्वयम् ॥ शरीरप्रतिसंहारमात्मनःसंप्रचक्रमे १ ॥ सुपर्णउवाच ॥ नमेसर्वाणिभूतानिबिभियुर्देहदर्शनात् ॥ भीमरूपात्समुद्विग्नास्तस्मात्तेजस्तुसंहरे २ ॥ सौतिरुवाच ॥ ततःकामगमःपक्षीकामवीर्योविहंगमः ॥ अरुणंचात्मनःपृष्ठमारोप्यसपितुर्गृहात् ३ मातुरंतिकमागच्छत्परंतीरंमहोदधेः ॥ तत्रारुणश्चनिक्षिप्तोदिशंपूर्वांमहाद्युतिः ४ सूर्यस्तेजोभिरत्युग्रैर्लोकान्दग्धुमनायदा ॥ रुरुरुवाच ॥ किमर्थंभगवान्सूर्योलोकान्दग्धुमनास्तदा ५

वयंशरणमुपागताइतिसंबंधः २२ परावरंकारणंकार्यंच अजय्योजेतुमशक्योविक्रमोयस्यतं २३ विमानगामिनोदेवाःविमानिताःपराजिताः विपथगतिंहीनमार्गानुसृतिं २४ सत्वंमाकुधःक्रोधंमाकार्षीः महाशनेःस्फुरितंतेनसमस्तुल्यःस्वनःशब्दस्तेनदिशश्चलंतीत्युत्तरादपकृष्यते २५ निगृह्यतांसंक्षिप्तंक्रियतां अव्यवस्थितमितिच्छेदः व्याकुलमित्यर्थः २६ । २७ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपेत्रयोविंशतितमोऽध्यायः ॥ २३ ॥ ॥ सइति ससुपर्णःस्तुतिव्याजेनदेवैर्बोधितस्तेभ्यआत्मनोदेहंस्वरूपंश्रुत्वाप्रेक्ष्यानुभूयचसर्वभूताभयायसौम्योबभूवेत्यर्थः १ समुद्विग्नाजनाइतिशेषः २ अरुणंमातुर्विवशतयायत्रकुत्रापिस्थितं ३ सूर्योदग्धुमनायदाऽभूत्तदापूर्वादिशंगत्वातत्रसूर्यस्याग्रेऽरुणोनिक्षिप्तइतियोज्यं ४ । ५

आदित्यस्यमूर्तिबहुत्वेनचंद्रादित्यैरितिबहुवचनं ६ चंद्रादित्येकत्वंचसमाहारात् ग्रहेणराहुणाग्रहणेनवा ७ सुराणामर्थायहिताय ८ सहंतेमर्षयंति सहदेवैरितिपाठेदिवौकसखपदेवामरीच्यादयःप्रजाप तयः ९ तस्मादस्ताचलंगत्वेतिल्यब्लोपेपंचमी १० संतापयतसमतापयत अडभावआर्षः तिरोभूतएवसन्नेवंदहत्युदयेतुभस्मीकरिष्यतिलोकानित्याह ततइत्यादिना ११ । १२ । १३ । १४ इश्य

॥४१॥ किमस्यापहृतंदेवैर्येनेमंमन्युराविशत् ॥ प्रमतिरुवाच ॥ चंद्रादित्यैर्यदाराहुराख्यातोह्यमृतंपिबन् ६ वैरानुबंधंकृतवांश्चंद्रादित्येतदाऽनघ ॥ वध्यमानेग्रहेणा
थआदित्येमन्युराविशत् ७ सुरार्थायसमुत्पन्नोरोषोराहोस्तुमांप्रति ॥ बह्वनर्थकरंपापमेकोऽहंसमवाप्नुयाम् ८ सहायएवकार्येषुनचकृच्छ्रेषुदृश्यते ॥ पश्यंतिग्रस्य ॥२५॥
मानंमांसहंतेवैदिवौकसः ९ तस्माल्लोकविनाशार्थंह्यवतिष्ठेनसंशयः ॥ एवंकृतमतिःसूर्योह्यस्तमभ्यगमद्गिरिम् १० तस्माल्लोकविनाशायसंतापयतभास्करः ॥
ततोदेवानुपागम्यप्रोचुरेवंमहर्षयः ११ अद्यार्धरात्रसमयेसर्वलोकभयावहः ॥ उत्पत्स्यतेमहान्दाहस्त्रैलोक्यस्यविनाशनः १२ ततोदेवाःसर्षिगणाउपगम्य
पितामहम् ॥ अब्रुवन्किमिवेहाद्यमहद्दाहकृतंभयम् १३ नतावदृश्यतेसूर्यःक्षयोऽयंप्रतिभातिच ॥ उदितेभगवन्भानौकथमेतद्भविष्यति १४ ॥ पितामहउवाच॥
एषलोकविनाशायरविरुद्यंतुमुद्यतः ॥ दृश्यन्नेवहिलोकान्सभस्मराशीकरिष्यति १५ तस्यप्रतिविधानंचविहितंपूर्वमेवहि ॥ कश्यपस्यसुतोधीमानरुणेत्यभि
विश्रुतः १६ महाकायोमहातेजाःसस्थास्यतिपुरोरवेः ॥ करिष्यतिचसारथ्यंतेजश्चास्यहरिष्यति १७ लोकानांस्वस्तिचैवंस्यादृषीणांचदिवौकसाम् ॥
॥ प्रमतिरुवाच ॥ ततःपितामहाज्ञातःसर्वंचक्रेतदाऽरुणः १८ उदितश्चैवसविताह्यरुणेनसमावृतः ॥ एतत्तेसर्वमाख्यातंयत्सूर्यंमन्युराविशत् १९ अरुणश्चय
थैवास्यसारथ्यमकरोत्प्रभुः ॥ भूयएवापरंप्रश्नंशृणुपूर्वमुदाहृतम् २० ॥ इति श्रीमहाभारते आदिपर्वणि आस्तीकपर्वणि सौपर्णेचतुर्विंशोऽध्यायः ॥ २४ ॥
॥ सौतिरुवाच ॥ ततःकामगमःपक्षीमहावीर्योमहाबल ॥ मातुरंतिकमागच्छत्परंपारंमहोदधेः १ यत्रसाविनतातस्मिन्पणितेनपराजिता ॥ अतीवदुः
खसंतप्तादासीभावमुपागता २ ततःकदाचिद्विनतांप्रणतांपुत्रसन्निधौ ॥ कालेचाहूयवचनंकद्रूरिदमभाषत ३ नागानामालयंभद्रेसुरम्यंचारुदर्शनम् ॥
समुद्रकुक्षावेकांतेतत्रमांविनतेनय ४ ततःसुपर्णमातातामवहत्सर्पमातरम् ॥ पन्नगान्गरुडश्चापिमातुर्वचनचोदितः ५ ससूर्यमभितोयातिवैनतेयोविहंगमः ॥
सूर्यरश्मिप्रतप्ताश्चमूर्छिताःपन्नगाऽभवन् ६ तदवस्थान्सुतान्दृष्ट्वाकद्रूःशक्रमथास्तुवत् ॥ नमस्तेसर्वदेवेशनमस्तेबलसूदन ७ नमुचिघ्ननमस्तेऽस्तुसहस्राक्षश
चीपते ॥ सर्पाणांसूर्यतप्तानांवारिणात्वंप्लवोभव ८ त्वमेवपरमंत्राणमस्माकममरोत्तम ॥ ईशोह्यसिपयःस्रष्टुंत्वमनल्पंपुरंदर ९ ॥ ॥४१॥

न्पश्यन् कद्र्वादेराकृतिगणत्वादूङोरपिस्वार्थेयक् १५ प्रतिविधानंप्रतीकारः १६ । १७ । १८ । १९ । २० ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे चतुर्विंशतितमोऽध्यायः ॥ २४ ॥
ततइति १ । २ । ३ । ४ । ५ अभितःसंमुखं पन्नगाअभवन् संधिरार्षः ६ अत्रापींद्रोपाधिकंब्रह्मस्तूयते नमस्तेइत्यादिना लोकस्रष्टृत्वसंहर्तृत्वादेस्तल्लिंगदर्शनात् ७ । ८ । ९

१० । ११ ज्योतिश्चिद्रूपं १२ सर्वममृतंमोक्षः आपेक्षिकेह्यमृतत्वेसर्वेत्वंनास्ति मोक्षेऽवशिष्यमाणंयद्रूपंतत्त्वमेवेत्यर्थः सोमईश्वरः परमैःश्रेष्ठैरर्चितः । 'सोमःपवतेजनितामतीनांजनितादिवोजनि तापृथिव्याः । जनिताग्नेर्जनितासूर्यस्यजनितेंद्रस्यजनितोतविष्णोः'इतिश्रुतिप्रसिद्धः १३ बहुलःकृष्णपक्षः १४ कालोपादानत्वात्तद्रूपत्वमुक्त्वाभूम्योमांबुरूपत्वमाह त्वमुत्तमेति १५ यज्ञभोक्ताऽ पित्वमेवेत्याह महायशाइति १६ यज्ञफलदोऽपित्वमेवेत्याह त्वंविप्रैरिति त्वद्धेतोस्त्वत्प्राप्तये । विविदिषंतियज्ञेनेत्यादिश्रुतेः वेदांगानिषट् यज्ञसाद्गुण्यार्थं तत्रशिक्षापाठशुद्ध्यर्थं । कल्पःप्रयोगज्ञानार्थं ।

त्वमेवमेघस्त्वंवायुस्त्वमग्निर्वैद्युतोंऽबरे ॥ त्वमभ्रगणविक्षेप्तात्वामेवाहुर्महाघनम् १० त्वंवज्रमतुलंघोरंघोषवांस्त्वंबलाहकः ॥ स्रष्टात्वमेवलोकानांसंहर्ताचापरा
जितः ११ त्वंज्योतिःसर्वभूतानांत्वमादित्योविभावसुः ॥ त्वंमहद्भूतमाश्चर्यंत्वंराजात्वंसुरोत्तमः १२ त्वंविष्णुस्त्वंसहस्राक्षस्त्वंदेवस्त्वंपरायणम् ॥ त्वंसर्वममृतंदे
वत्वंसोमःपरमार्चितः १३ त्वंमुहूर्तस्तिथिस्त्वंचत्वंलवस्त्वंपुनःक्षणः ॥ शुक्लस्त्वंबहुलस्त्वंचकलाकाष्ठात्रुटिस्तथा ॥ संवत्सरर्तवोमासारजन्यश्चदिनानिच १४
त्वमुत्तमासगिरिवनावसुंधरासभास्करंवितिमिरमंबरंतथा ॥ महोदधिःसतिमितिमिंगिलस्तथामहोर्मिमान्बहुमकरोझषाकुलः १५ महायशास्त्वमितिसदाऽभि
पूज्यसेमनीषिभिर्मुदितमनामहर्षिभिः ॥ अभिष्टुतःपिबसिचसोममध्वरेवषट्कृतान्यपिचहवींषिभूतये १६ त्वंविप्रैःसततमिहेज्यसेफलार्थंवेदांगेष्वतुलबलौघगी
यसेच ॥ त्वद्धेतोर्यजनपरायणाद्विजेंद्रावेदांगान्यभिगमयंतिसर्वयत्नैः १७ ॥ इति श्रीमहाभारते आदिपर्वणि आस्तीकपर्वणि सौपर्णेपंचविंशोऽध्यायः ॥ २५ ॥
॥ सौतिरुवाच ॥ एवंस्तुतस्तदाकद्र्वाभगवान्हरिवाहनः ॥ नीलजीमूतसंघातैःसर्वमंबरमावृणोत् १ मेघानाज्ञापयामासवर्षध्वममृतंशुभम् ॥ तेमेघामुमुचुस्तो
यंप्रभूतंविद्युदुज्ज्वलाः २ परस्परमिवात्यर्थंगर्जंतःसततंदिवि ॥ संवर्तितमिवाकाशंजलदैःसुमहाद्भुतैः ३ सृजद्भिरतुलंतोयमजस्रंसुमहारवैः ॥ संप्रनृत्तमिवाकाशं
धारोर्मिभिरनेकशः ४ मेघस्तनितनिर्घोषैर्विद्युत्पवनकंपितैः ॥ तैर्मेघैःसततासारंवर्षद्भिरनिशंतदा ५ नष्टचंद्रार्ककिरणमंबरंसमपद्यत ॥ नागानामुत्तमोहर्षस्त
थावर्षतिवासवे ६ आपूर्यतमहीचापिसलिलेनसमंततः ॥ रसातलमनुप्राप्तंशीतलंविमलंजलम् ७ तदाभूरभवच्छन्नाजलोर्मिभिरनेकशः ॥ रामणीयकमाग
च्छन्मात्रासहभुजंगमाः ८ ॥ इति श्रीमहाभारते आदिपर्वणि आस्तीकपर्वणि सौपर्णेषड्विंशोऽध्यायः ॥ २६ ॥ ॥ सौतिरुवाच ॥ संप्रहृष्टास्ततोनागा
जलधाराप्लुतास्तदा ॥ सुपर्णेनोह्यमानास्तेजग्मुस्तंद्वीपमाशुवै १ तंद्वीपंमकरावासंविहितंविश्वकर्मणा ॥ तत्रतेलवणंघोरंददृशुःपूर्वमागताः २

व्याकरणमूहादिसिद्ध्यर्थं । छंदोगायत्र्योयाज्यानुवाक्याभवंतीतिविध्यपेक्षितगायत्र्यादिज्ञानार्थं । निरुक्तंवेदार्थज्ञानार्थं । ज्योतिषंकर्मकालज्ञानार्थमिति एतान्येववेदांगानि १७ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे पंचविंशोऽध्यायः ॥ २५ ॥ एवमिति हरयोऽश्वावाहनेरथेयस्यहरिवाहनः १ । २ संवर्तितंसंवर्तःकल्पांतःसंजातोऽस्मिन्निति संवर्तितमिव ३ । ४ सततासारमनव च्छिन्नधारासंपातंयथास्यात्तथा ५ । ६ । ७ रामणीयकंद्वीपविशेषं ८ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे षड्विंशोऽध्यायः ॥ २६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ संप्रहृष्टा इति तंद्वीपंरामणीयकमेव १ लवणंलवणासुरंपूर्वंददृशुः पुनर्गमनेसनास्तीतिभावः २

मैषामिति ज्ञानशब्दः कर्मव्युत्पन्नोज्ञेयवचनः अयसंप्रतिज्ञातुंज्ञेयंनविद्यतेसर्वस्यज्ञातत्वादित्यर्थः अतएवतेभ्योदत्तंसाक्षाद्ब्रह्मण्येवार्पितमतस्तस्यकदाचिदपिदानजपुण्यस्यनाशोनास्तीत्यर्थः ८ लोकेषुप
रलोकसाधनेषु । दीक्षाःदीक्षावंतःकुशलाः दक्षाइत्यपिपाठः ९ अग्निंस्तौति विभावसुरिति वह्निकामयते वह्निदेवानितिपाठेप्रापयितुमितिशेषः १० त्वंवावरुणइत्यत्रत्वंवाराजेत्यपिपाठः ११
नचत्वदन्यस्त्राताभूपतिरस्तिइदानीं । नचजज्ञेमागपि । अस्तियज्ञेइत्यपिपाठः तथासति यज्ञेत्राताऽस्तीतियोज्यं तेनप्रकृतहिंसानिवृत्तिःकर्तव्येतिव्यज्यते १२ । १३ निभृतंगुप्तं नियतोनिगृहीतः १४

इमेचतेसूर्यसमानवर्चसःममासतेवृत्रहणःक्रतुंयथा ॥ नैषांज्ञातुंविद्यतेज्ञानमद्यदत्तंयेभ्योनप्रणश्येत्कदाचित् ८ ऋत्विक्समोनास्तिलोकेषुचैवद्वैपायनेनेतिविनिश्चि
तंमे ॥ एतस्यशिष्याहिक्षितिंसंचरंतिसर्वर्त्विजःकर्मसुस्वेषुदीक्षाः ९ विभावसुश्चित्रभानुर्महात्माहिरण्यरेताहुतभुक्कृष्णवर्त्मा ॥ प्रदक्षिणावर्तशिखःप्रदीप्तोहव्यंत ॥५६॥
वेदंहुतभुग्वष्टिदेवः १० नेहत्वदन्योविद्यतेजीवलोकेसमोनृपःपालयिताप्रजानाम् ॥ धृत्याचतेप्रीतमनाःसदाऽहंत्वंवावरुणोधर्मराजोयमोवा ११ शक्रःसाक्षाद्वज्रपा
णिर्यथेहत्राताऽलोकेऽस्मिंस्त्वंतथेहप्रजानाम् ॥ मतस्त्वंनःपुरुषेंद्रेहलोकेनचत्वदन्योभूपतिरस्तिजज्ञे १२ खट्वांगनाभागदिलीपकल्पययातिमांधातृसमप्रभाव ॥
आदित्यतेजःप्रतिमानतेजाभीष्मोयथाराजसिसुव्रतस्त्वम् १३ वाल्मीकिवत्तेनिभृतंस्ववीर्यवसिष्ठवत्तेनियतश्चकोपः ॥ प्रभुत्वमिंद्रत्वसमंमतंमेद्युतिश्चनारायणव
द्विभाति १४ यमोयथाधर्मविनिश्चयज्ञःकृष्णोयथासर्वगुणोपपन्नः ॥ श्रियांनिवासोऽसियथावसूनांनिधानभूतोऽसितथाक्रतूनाम् १५ दंभोद्भवेनासिसमोबलेनरामो
यथाशास्त्रविदस्त्रविच्च ॥ और्वत्रिताभ्यामसितुल्यतेजादुष्प्रेक्षणीयोऽसिभगीरथेन १ ॥ सौतिरुवाच ॥ एवंस्तुताःसर्वएवप्रसन्नाराजासदस्याऋत्विजोहव्यवाहः ॥
तेषांदृष्ट्वाभावितानींगितानिप्रोवाचराजाजनमेजयोऽथ १७ ॥ इतिश्रीमहाभारते आदिपर्वणिआस्तीकपर्वणिसर्पसत्रे आस्तीककृतराजस्तवे पंचपंचाशत्तमोऽ
ध्यायः ॥ ५५ ॥ ॥ जनमेजयउवाच ॥ बालोऽप्ययंस्थविरइवावभाषतेनायंबालःस्थविरोऽयंमतोमे ॥ इच्छाम्यहंवरमस्मैप्रदातुंतन्मेविप्राःसंविदध्वंयथावत् १
॥ सदस्याऊचुः ॥ बालोऽपिविप्रोमान्यएवेहराज्ञांविद्वान्योवैसपुनर्वैयथावत् ॥ सर्वान्कामांस्त्वत्तएवार्हतेऽद्ययथाचनस्तक्षकएतिशीघ्रम् २ ॥ सौतिरुवाच ॥
व्याहर्तुकामेवरदेनृपेद्विजंवरंवृणीष्वेतिततोऽभ्युवाच ॥ होतावाक्यंनातिहृष्टांतरात्माकर्मण्यस्मिंस्तक्षकोनैतितावत् ३ ॥ जनमेजयउवाच ॥ यथाचेदंकर्म
समाप्यतेमेयथाचवैतक्षकएतिशीघ्रम् ॥ तथाभवंतःप्रयतंतुसर्वेपरंशक्त्यासहिमेविद्विषाणः ४

वसूनांश्रियांनिवासोऽसि वसवोऽष्टौतत्संबंधिनीनांश्रियां १५ रामोभार्गवः और्वत्रितावृषी १६ तेषामृत्विगादीनांभावितानिमनसिसंकल्पितानि । इंगितानिबहिश्चेष्टितानिवक्त्रादिचिन्हानिआ
स्तीकातिथ्यविषयाणि । भारतस्त्विंगितानीतिपाठेभारतोराजाभरतवंशजत्वात् १७ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे पंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ छ ॥ ॥ छ ॥ ॥५९॥
बालोऽपीति संविदध्वमैकमत्यंकुरुध्वं ११ एतिशीघ्रंमाग्वरदानादितितथाकर्तव्यमितिभावः २ तक्षकस्तावन्नैतीतिवाक्यंहोताउवाचेतिसंबंधः तावद्वरोनदेयइतिभावः ३ विद्विषाणःद्वेषंकृतवान् ।
लिटःकानच अभ्यासलोपआर्षः दिद्विषाणइतिवापाठः ४

शस्त्राणिशंसनमंत्रदेवताः । शास्त्राणीतिपाठेपुराकल्परूपाअर्थवादाः ५ । ६ पुराणंपूर्वकल्पीयवृत्तांतं आगम्यज्ञात्वातेनास्मिन्नपिकल्पेतथैवभवितेतिभावः ७ । ८ । ९ । १० विभावसो

॥ ऋत्विजऊचुः ॥ यथाशस्त्राणिनःप्राहुर्यथाशंसतिपावकः ॥ इंद्रस्यभवनेराजंस्तक्षकोभयपीडितः ५ यथासूतोलोहिताक्षोमहात्मापौराणिकोवेदितवान्पुर
स्तात् ॥ सराजानंप्राहपृष्टस्तदानींयथाहुर्विप्रास्तद्वदेतन्नृदेव ६ पुराणमागम्यततोब्रवीम्यहंदत्तंतस्मैवरमिंद्रेणराजन् ॥ वसेहत्वंमत्सकाशेसुगुप्तोनपावकस्त्वांप्रद
हिष्यतीति ७ एतच्छ्रुत्वादीक्षितस्तप्यमानआस्तेहोतारंचोदयन्कर्मकाले ॥ होताचयत्तोऽस्याजुहावाथमंत्रैरथोमहेंद्रःस्वयमाजगाम ८ विमानमारुह्यमहानुभा
वःसर्वैर्देवैःपरिसंस्तूयमानः ॥ बलाहकैश्चाप्यनुगम्यमानोविद्याधरैरप्सरसांगणैश्च ९ तस्योत्तरीयेनिहितःसनागोभयोद्विग्नःशर्मनैवाभ्यगच्छत् ॥ ततोराजामंत्र
विदोऽब्रवीत्पुनःक्रुद्धोवाक्यंतक्षकस्यांतमिच्छन् १० ॥ जनमेजयउवाच ॥ इंद्रस्यभवनेविप्रायदिनागःसतक्षकः ॥ तमिंद्रेणैवसहितंपातयध्वंविभावसो ११
॥ सौतिरुवाच ॥ जनमेजयेनराज्ञातुनोदितस्तक्षकंप्रति ॥ होताजुहावतत्रस्थंतक्षकंपन्नगंतथा १२ हूयमानेतथाचैवतक्षकःसपुरंदरः ॥ अकाशेददृशेचैवक्षणेन
व्यथितस्तदा १३ पुरंदरस्तुतंयज्ञंदृष्ट्वोरुभयमाविशत् ॥ हित्वातुतक्षकंत्रस्तःस्वमेवभवनंययौ १४ इंद्रेगतेतुराजेंद्रतक्षकोभयमोहितः ॥ मंत्रशक्त्यापावकार्चिःस
मीपमवशोगतः १५॥ऋत्विजऊचुः॥वर्ततेतवराजेंद्रकर्मैतद्विधिवत्प्रभो ॥ अस्मैतुद्विजमुख्यायवरंत्वंदातुमर्हसि १६ ॥जनमेजयउवाच ॥ बालाभिरूपस्यतवाप्रमेय
वरंप्रयच्छामियथानुरूपम् ॥ वृणीष्वयत्तेऽभिमतंहृदिस्थितंतत्तेप्रदास्याम्यपिचेददेयम् १७ ॥ऋत्विजऊचुः॥ अयमायातितूर्णंसतक्षकस्तेवशंनृप ॥ श्रूयतेऽस्यमहा
न्नादोनदतोभैरवंरवम् १८ नूनंमुक्तोवज्रभृतासनागोभ्रष्टोनाकान्मंत्रविस्रस्तकायः ॥ घूर्णन्नाकाशेनष्टसंज्ञोऽभ्युपैतितीव्रान्निःश्वासान्निःश्वसन्पन्नगेंद्रः १९ सौतिरुवा
च ॥ पतिष्यमाणेनागेंद्रेतक्षकेजातवेदसि ॥ इदमंतरमित्येवंतदाऽऽस्तीकोऽभ्यचोदयत् २० ॥ आस्तीकउवाच ॥ वरंददासिचेन्मह्यंवृणोमिजनमेजय ॥ सत्रंते
विरमत्वेतन्नपतेयुरिहोरगाः २१ एवमुक्तस्तदातेनब्रह्मन्पारिक्षितस्तुसः ॥ नातिहृष्टमनाश्चेदमास्तीकंवाक्यमब्रवीत् २२ सुवर्णंरजतंगाश्चयच्चान्यन्मन्यसेविभो ॥
तत्तेदद्यांवरंविप्रननिवर्तेत्क्रतुर्मम २३ ॥ आस्तीकउवाच ॥ सुवर्णंरजतंगाश्चनत्वांराजन्वृणोम्यहम् ॥ सत्रंतेविरमत्वेतत्स्वस्तिमातृकुलस्यनः २४ ॥ सौतिरुवाच ॥
आस्तीकेनैवमुक्तस्तुराजापारिक्षितस्तदा ॥ पुनःपुनरुवाचेदमास्तीकंवदतांवरः २५ अन्यंवरयभद्रंतेवरंद्विजवरोत्तम ॥ अयाचतनचाप्यन्यंवरंसभृगुनंदन २६ ततो
वेदविदस्तातसदस्याःसर्वएवतम् ॥ राजानमूचुःसहितालभतांब्राह्मणोवरम् २७ ॥ इतिश्री०आदि०आस्तीक०आस्तीकवरप्रदानंनामषट्पंचाशत्तमोऽध्यायः ५६

वन्हो । ११ । १२ । १३ भयंआविशत्प्राप्तवान् १४ । १५ ईदृशपिब्राह्मणसामर्थ्यमधिकंतथाऽपिब्राह्मणैर्देवहेलनंनकर्तव्यमित्याशयेनऋत्विजऊचुः वर्ततइति १६ हेबाल १७ । १८
नाकात्स्वर्गात् १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे षट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥

येसर्पाइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ योजनायामविस्तारा अपिमंत्रसामर्थ्यात्स्वल्पप्रमाणाःअगस्त्यक



॥ शौनकउवाच ॥ येसर्पाःसर्पसत्रेऽस्मिन्पतिताहव्यवाहने ॥ तेषांनामानिसर्वेषांश्रोतुमिच्छामिसूतज १ ॥ सौतिरुवाच ॥ सहस्राणिबहून्यस्मिन्प्रयुतान्य
र्बुदानिच ॥नशक्यंपरिसंख्यातुंबहुत्वाद्विजसत्तम २ यथास्मृतितुनामानिपन्नगानांनिबोधमे ॥ उच्यमानानिमुख्यानांहुतानांजातवेदसि ३ वासुकेःकुलजातां
स्तुप्राधान्येननिबोधमे ॥ नीलरक्तान्सितान्घोरान्महाकायान्विषोल्बणान् ४ अवशान्मातृवाग्दंडपीडितान्कृपणान्हुतान् ॥ कोटिशोमानसःपूर्णःशलःपालो
हलीमकः ५ पिच्छलःकौणपश्चक्रःकालवेगप्रकालनः ॥ हिरण्यबाहुःशरणःकक्षकःकालदंतकः ६ एतेवासुकिजानागाःप्रविष्टाहव्यवाहने ॥ अन्येचबहवोविप्रत
थावैकुलसंभवाः ॥ प्रदीप्ताग्नौहुताःसर्वेघोररूपामहाबलाः ७ तक्षकस्यकुलेजातान्प्रवक्ष्यामिनिबोधतान् ॥ पुच्छांडकोमंडलकःपिंडसेक्तारभेणकः ८ उच्छि
खःशरभोभंगोबिल्वतेजाविरोहणः ॥ शिलीशल्करोमूकःसुकुमारःप्रवेपनः ९ मुद्गरःशिशुरोमाचसुरोमाचमहाहनुः ॥ एतेतक्षकजानागाःप्रविष्टाहव्यवाह
नम् १० पारावतःपारियातःपांडरोहरिणःकृशः ॥ विहंगःशरभोमेदःप्रमोदःसंहतापनः ११ ऐरावतकुलादेतेप्रविष्टाहव्यवाहनम् ॥ कौरव्यकुलजान्नागान्शृणु
मेत्वंद्विजोत्तम १२ एरकःकुंडलोवेणीवेणीस्कंधःकुमारकः ॥ बाहुकःशृंगवेरश्चधूर्तकःप्रातरातकौ १३ कौरव्यकुलजास्त्वेतेप्रविष्टाहव्यवाहनम् ॥ धृतराष्ट्रकुले
जातान्शृणुनागान्यथातथम् १४ कीर्त्यमानान्मयाब्रह्मन्वातवेगान्विषोल्बणान् ॥ शंकुकर्णःपिठरकःकुठारमुखसेचकौ १५ पूर्णांगदःपूर्णमुखःप्रहासःशकुनि
र्दरिः ॥ अमाहठःकामठकःसुषेणोमानसोऽव्ययः १६ भैरवोमुंडवेदांगःपिशंगश्चोद्रपारकः ॥ ऋषभोवेगवान्नामःपिंडारकमहाहनू १७ रक्तांगःसर्वसारंगःसमृद्धप
टवासकौ ॥ वराहकोवीरणकःसुचित्रश्चित्रवेगिकः १८ पराशरस्तरुणकोमणिःस्कंधस्तथाऽरुणिः ॥ इतिनागामयाब्रह्मन्कीर्तिताःकीर्त्तिवर्धनाः १९ प्राधान्ये
नबहुत्वात्तुनसर्वेपरिकीर्तिताः ॥ एतेषांप्रसवोयश्चप्रसवस्यचसंततिः २० नशक्यंपरिसंख्यातुंयेदीप्तंपावकंगताः ॥ त्रिशीर्षाःसप्तशीर्षाश्चदशदीर्घास्तथाऽपरे २१
कालानलविषाघोराहुताःशतसहस्रशः ॥ महाकायामहावेगाःशैलशृंगसमुच्छ्रयाः २२ योजनायामविस्ताराद्वियोजनसमायताः ॥ कामरूपाःकामबलादीप्ता
नलविषोल्बणाः २३ दग्धास्तत्रमहासत्रेब्रह्मदंडनिपीडिताः २४ ॥ इति श्रीमहाभारते आदिपर्वणि आस्तीकपर्वणि सर्पनामकथने सप्तपंचाशत्त
मोऽध्यायः ॥ ५७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ सौतिरुवाच ॥ इदमत्यद्भुतंचान्यदास्तीकस्यानुशुश्रुम ॥ तथावरैश्छंद्यमानेराज्ञापारिक्षितेनहि
१ इंद्रहस्ताच्च्युतोनागःखएवयदतिष्ठत ॥ ततश्चिंतापरोराजाबभूवजनमेजयः २



स्गतसमुद्रवद्वह्नौप्रवेशयोग्याभवंति २३ ब्रह्मवेदस्तत्तुल्यंमातृवाक्यंतद्रूपोदंडोब्रह्मदंडस्तेननिपीडिताः २४ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपेसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ इदमिति १ । २

३ । ४ । ५ खंचरगांचांतरांद्यावापृथिव्योर्मध्येअंतरिक्षइत्यर्थः ६ । ७ । ८ । ९ । १० सयज्ञउपररामेत्यन्वयः ११ स्थपतयेशिल्पिने १२ । १३ अवभृथंयज्ञसमाप्तिं १४ सुसंस्कृतं

हूयमानेभृशंदीप्तेविधिवद्वसुरेतसि ॥ नस्मसप्रापतद्वन्हौतक्षकोभयपीडितः ३ ॥ शौनकउवाच ॥ किंसूततेषांविप्राणांमंत्रग्रामोमनीषिणाम् ॥ नप्रत्यभात्तदाऽग्नौ
यत्सपपातनतक्षकः ४ ॥ सौतिरुवाच ॥ तमिंद्रहस्ताद्विस्रस्तंविसंज्ञंपन्नगोत्तमम् ॥ आस्तीकस्तिष्ठतिष्ठेतिवाचस्तिस्रोऽभ्युदैरयत् ५ वितस्थेसोंऽतरिक्षेचहृदयेन
विदूयता ॥ यथातिष्ठतिवैकश्चित्खंचगांचांतरानरः ६ ततोराजाऽब्रवीद्वाक्यंसदस्यैश्चोदितोभृशम् ॥ काममेतद्भवत्वेवंयथाऽऽस्तीकस्यभाषितम् ७ समाप्यता
मिदंकर्मपन्नगाःसंत्वनामयाः ॥ प्रीयतामयमास्तीकःसत्यंसूतवचोऽस्तुतत् ८ ततोहलहलाशब्दःप्रीतिदःसमजायत ॥ आस्तीकस्यवरेदत्तेतथैवोपरराम च ९ सयज्ञः
पांडवेयस्यराज्ञःपारिक्षितस्यह ॥ प्रीतिमांश्चाभवद्राजाभारतोजनमेजयः १० ऋत्विग्भ्यःससदस्येभ्योयेतत्रासन्समागताः ॥ तेभ्यश्चप्रददौवित्तंशतशोऽथसहस्रशः
११ लोहिताक्षायसूतायतथास्थपतयेविभुः ॥ येनोक्तंतस्यतत्राग्रेसर्पसत्रनिवर्तने १२ निमित्तंब्राह्मणइतितस्मैवित्तंददौबहु ॥ दत्त्वाद्रव्यंयथान्यायंभोजनाच्छा
दनान्वितम् १३ प्रीतस्तस्मैनरपतिरप्रमेयपराक्रमः ॥ ततश्चकारावभृथंविधिदृष्टेनकर्मणा १४ आस्तीकंप्रेषयामासगृहानेवसुसंस्कृतम् ॥ राजाप्रीतमनाःप्रीतंकृत
कृत्यंमनीषिणम् १५ पुनरागमनंकार्यमितिचैनंवचोऽब्रवीत् ॥ भविष्यसिसदस्योमेवाजिमेधेमहाक्रतौ १६ तथेत्युक्त्वाप्रदुद्रावतदाऽऽस्तीकोमुदायुतः ॥ कृत्वास्व
कार्यमतुलंतोषयित्वाचपार्थिवम् १७ सगत्वापरमप्रीतोमातुलंमातरंचताम् ॥ अभिगम्योपसंगृह्यतथावृत्तंन्यवेदयत् १८ ॥ सौतिरुवाच ॥ एतच्छ्रुत्वाप्रीयमाणाःस
मेतायेतत्रासन्पन्नगावीतमोहाः ॥ आस्तीकेवैप्रीतिमंतोबभूवुरूचुश्चैनंवरमिष्टंवृणीष्व १९ भूयोभूयःसर्वशस्तेऽब्रुवंस्तंकिंतेप्रियंकरवामाद्यविद्वन् ॥ प्रीतावयंमो
क्षिताश्चैवसर्वेकामंकिंतेकरवामाद्यवत्स २० ॥ आस्तीकउवाच ॥ सायंप्रातर्येप्रसन्नात्मरूपालोकेविप्रामानवायेपरेऽपि ॥ धर्माख्यानंयेपठेयुर्ममेदंतेषांयुष्मन्नैवाकिं
चिद्भयंस्यात् २१ तैश्चाप्युक्तोभागिनेयःप्रसन्नैरेतत्सत्यंकाममेवंवरंते ॥ प्रीत्यायुक्ताःकामितंसर्वशस्तेकर्तारःस्मप्रवणाभागिनेय २२ असितंचार्तिमंतंचसुनीथं
चापियःस्मरेत् ॥ दिवावायदिवारात्रौनास्यसर्पभयंभवेत् २३ योजरत्कारुणाजातोजरत्कारौमहायशाः ॥ आस्तीकःसर्पसत्रेवःपन्नगान्योऽभ्यरक्षत ॥ तंस्मरंतंम
हाभागानमांहिंसितुमर्हथ २४ सर्पापसर्पभद्रंतेगच्छसर्पमहाविष ॥ जनमेजयस्ययज्ञांतेआस्तीकवचनंस्मर २५ आस्तीकस्यवचःश्रुत्वायःसर्पोननिवर्तते ॥ शतधा
भिद्यतेमूर्ध्निशिंशवृक्षफलंयथा २६ ॥ सौतिरुवाच ॥ सएवमुक्तस्तुतदाद्विजेंद्रसमागतैस्तैर्भुजगेंद्रमुख्यैः ॥ संप्राप्यप्रीतिंविपुलांमहात्माततोमनोगमनायाथदध्रे २७

वस्त्रालंकरणादिभिःशोभितं १५ । १६ मदुद्रावशीघ्रंमातुलायहर्षमाख्यातुं १७ । १८ । १९ । २० । २१ प्रवणानम्राः २२ प्रसंगात्सर्पभयनिवर्तकान्मंत्रान्पठति
असितमित्यादीन् तत्रद्वितीयःषट्पादः २३ । २४ २५ । २६ । २७

दिष्टांतंमोक्षं २८ । २९ । ३० । ३१ कौतूहलंकौतुकसर्पसत्रमित्याश्चर्यं । 'रहस्येसौपर्णंकुमतिसुमतीकद्रुविनतेभुजंगाःकामाद्याःसुकृतमरुणस्तापशमनः ॥ सुपर्णःप्रत्यग्धीःकृतकममृतंनेच्छतिफणीतदि च्छन्बंध्याशोत्यजनिहरिशक्रौपरनरौ १ अमृतमथनगुर्व्यंयत्नतौल्येऽपिदेवैरमृतमसुरसंघःक्षामनस्कोनलेभे । अपिफणिमखगोप्यंसाध्वसाध्वोरपिस्तोभयमभयमवश्यंविप्रहेलाश्रयाभ्यां' २ रत्नगर्भ स्तु । 'संततिस्तुतिरास्तीकेतथासर्वापदामपि । निवृत्तिर्ब्राह्मणात्तस्यशक्तिश्चातीवकथ्यते' ३२ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे अष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ ॥

मोक्षयित्वातुभुजगान्सर्पसत्राद्द्विजोत्तमः ॥ जगामकालेधर्मात्मादिष्टांतंपुत्रपौत्रवान् २८ इत्याख्यानंमयाऽऽस्तीकंयथावत्तवकीर्तितम् ॥ यत्कीर्तयित्वासर्पेभ्यो नभयंविद्यतेक्वचित् २९ ॥ सौतिरुवाच ॥ यथाकथितवान्ब्रह्मन्प्रमतिःपूर्वजस्तव ॥ पुत्रायरुरवेप्रीतःपृच्छतेभार्गवोत्तम ३० यद्वाक्यंश्रुतवांश्चाहंतथाचकथि तंमया ॥ आस्तीकस्यकवेर्विप्रश्रीमच्चरितमादितः ३१ श्रुत्वाधर्मिष्ठमाख्यानमास्तीकंपुण्यवर्धनम् ॥ यन्मांत्वंपृष्टवान्ब्रह्मन्श्रुत्वाडुंडुभभाषितम् ॥ व्येतुतेसु महद्ब्रह्मन्कौतूहलमरिंदम ३२ ॥ इति श्रीमहाभारते आदिपर्वणि आस्तीकपर्वणि सर्पसत्रेअष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ समाप्तंचास्तीकपर्व ॥ ॥ अथांशावतरणपर्व ॥ शौनकउवाच ॥ भृगुवंशात्प्रभृत्येवत्वयामेकीर्तितंमहत् ॥ आख्यानमखिलंतातसौतेप्रीतोऽस्मितेनते १ वक्ष्यामिचैवभूयस्त्वांयथावत्सू तनंदन ॥ याःकथाव्याससंपन्नास्ताश्चभूयोविचक्ष्वमे २ तस्मिन्परमदुष्पारेसर्पसत्रेमहात्मनाम् ॥ कर्मांतरेषुयज्ञस्यसदस्यानांतथाऽध्वरे ३ याबभूवुःकथाश्चि त्रायेष्वर्थेषुयथातथम् ॥ त्वत्तइच्छामहेश्रोतुंसौतेत्वंवैप्रचक्ष्वनः ४ ॥ सौतिरुवाच ॥ कर्मांतरेष्वकथयन्द्विजावेदाश्रयाःकथाः ॥ व्यासस्त्वकथयच्चित्रमाख्यानं भारतंमहत् ५ ॥ शौनकउवाच ॥ महाभारतमाख्यानंपांडवानांयशस्करम् ॥ जनमेजयेनपृष्टःसन्कृष्णद्वैपायनस्तदा ६ श्रावयामासविधिवत्तदाकर्मांतरेतुसः ॥ तामहंविधिवत्पुण्यांश्रोतुमिच्छामिवैकथाम् ७ मनःसागरसंभूतांमहर्षेर्भावितात्मनः ॥ कथयस्वसतांश्रेष्ठसर्वरत्नमयीमिमाम् ८ ॥ सौतिरुवाच ॥ हंततेकथयि ष्यामिमहदाख्यानमुत्तमम् ॥ कृष्णद्वैपायनमतंमहाभारतमादितः ९ शृणुसर्वमशेषेणकथ्यमानंमयाद्विज ॥ शंसितुंतन्महान्हर्षोममापीहप्रवर्तते १० ॥ इति श्रीमहाभारते आदिपर्वणि अंशावतरणपर्वणि कथानुबंधेएकोनषष्टितमोऽध्यायः ॥ ५९ ॥ सौतिरुवाच ॥ श्रुत्वातुसर्पसत्रायदीक्षितंजनमेजयम् ॥ अभ्यग च्छदृषिर्विद्वान्कृष्णद्वैपायनस्तदा १ जनयामासयंकालीशक्तेःपुत्रात्पराशरात् ॥ कन्यैवयमुनाद्वीपेपांडवानांपितामहम् २

भृग्विति १ विचक्ष्वविशेषेणस्पष्टंकथय २ । ३ । ४ कर्मांतरेष्विति वेदाश्रयाःशौनःशेपाख्यानादयः अकथयन्वैशंपायनंकथाःकथयितुंप्रयोजितवान् वेदाश्रयाभ्योऽपिकथाभ्यएताःकथाः श्रेष्ठतराइतिभावः ५ । ६ । ७ भावितःयोगसंस्कृतआत्मामनोयस्यसभावितात्मातस्य । पाठांतरे नहितृप्यामिकथ्यतित्वयिकथयतिसति ८ । ९ । १० ॥ इति आदिपर्वणि नील कंठीये भारतभावदीपे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ श्रुत्वेति १ कालीसत्यवती २



इष्टचाइच्छयादेहंसद्योऽवीवृधत्वर्धितवान् देवीमितिपाठे देवींमातरंवरदानेनवासरस्वतींवाउपबृंहणैरवीवृधत्वर्धितवान् देवीवृद्धिमेवाह वेदानिति चाद्वेदार्थान् अधिजगेअधिगतवान् ३ यन्नेतीति यत्तपआदिनाकश्चिन्नैतिनात्येतिनातिशेतेइतिप्राश्वः यद्वस्तुतपआदिनाकश्चिन्नैतिनप्राप्नोतितदप्यात्मतत्त्वमधिजगेइतिपूर्वेणसंबंधः । तथाच'नकर्मणानप्रजयाधनेन नायमात्माप्रवचनेनलभ्योनमेधया नबहुनाश्रुतेन'इत्यादिश्रुतिभ्यस्तपआदिनाऽपिदुष्प्रापमात्मतत्त्वंजातमात्रएवाधिगतवानित्यर्थः मन्युनायज्ञेन ४ विव्यासविभक्तवान् हौत्राध्वर्यवौद्गात्राणिकांडानित्रेताऽनुपयुक्तंकांडंचपृथक्कृतवा नित्यर्थः । परावरेनिरुपाधिसोपाधिब्रह्मणीजानातीतिपरावरज्ञःब्रह्मर्षिःब्राह्मणश्चासौमंत्रद्रष्टाचेत्यर्थः । कविःक्रांतंअतीतादितद्दर्शी ५ पुण्यकीर्तिर्महायशाः । योगुणौघःश्रूयमाणस्तादृशंगुणार्जनं पुरुषंव्यापारयतिसाकीर्तिः यथायुधिष्ठिरस्यधर्मनिष्ठत्वं । कृविक्षेपेऽस्मात्संज्ञायांक्तिच् । यश्चगुणौघोगृह्यमाणःपुरुषमाह्लादयत्येवनप्रवर्तयतिसयशःयथाज्योत्स्नाचंद्रस्य । यथाविष्णोर्लोकत्रया

जातमात्रश्चयःसद्यइष्टयादेहमवीवृधत् ॥ वेदांश्चाधिजगेसांगान्सेतिहासान्महायशाः ३ यन्नेतितपसाकश्चिन्नवेदाध्ययनेनच ॥ नव्रतैर्नोपवासैश्चनप्रसूत्यानम न्युना ४ विव्यासैकंचतुर्धायोवेदंवेदविदांवरः ॥ परावरज्ञोब्रह्मर्षिःकविःसत्यव्रतःशुचिः ५ यःपांडुंधृतराष्ट्रंचविदुरंचाप्यजीजनत् ॥ शांतनोःसंततिंतन्वन्पुण्यकी र्तिर्महायशाः ६ जनमेजयस्यराजर्षेःसमहात्मासदस्तथा ॥ विवेशसहितःशिष्यैर्वेदवेदांगपारगैः ७ तत्रराजानमासीनंददर्शजनमेजयम् ॥ वृतंसदस्यैर्बहुभिर्देवै रिवपुरंदरम् ८ तथामूर्धाभिषिक्तैश्चनानाजनपदेश्वरैः ॥ ऋत्विग्भिर्ब्रह्मकल्पैश्चकुशलैर्यज्ञसंस्तरे ९ जनमेजयस्तुराजर्षिर्दृष्ट्वातमृषिमागतम् ॥ सगणोऽभ्युद्य यौतूर्णंप्रीत्याभरतसत्तमः १० कांचनंविष्टरंतस्मैसदस्यानुमतःप्रभुः ॥ आसनंकल्पयामासयथाशक्रोबृहस्पतेः ११ तत्रोपविष्टंवरदंदेवर्षिगणपूजितम् ॥ पूजया मासराजेंद्रःशास्त्रदृष्टेनकर्मणा १२ पाद्यमाचमनीयंचअर्घ्यंगांचविधानतः ॥ पितामहायकृष्णायतदर्हायन्यवेदयत् १३ प्रतिगृह्यतुतांपूजांपांडवाज्जनमेजयात् ॥ गांचैवसमनुज्ञाप्यव्यासःप्रीतोऽभवत्तदा १४ तथाचपूजयित्वातंप्रणयात्प्रपितामहम् ॥ उपोपविश्यप्रीतात्मापर्यपृच्छदनामयम् १५ भगवानपितंदृष्ट्वाकुशलंप्र तिवेद्यच ॥ सदस्यैःपूजितःसर्वैःसदस्यान्प्रत्यपूजयत् १६ ततस्तुसहितःसर्वैःसदस्यैर्जनमेजयः ॥ इदंपश्चाद्द्विजश्रेष्ठंपर्यपृच्छत्कृतांजलिः १७ ॥ जनमेजयउवाच ॥ कुरूणांपांडवानांचभवान्प्रत्यक्षदर्शिवान् ॥ तेषांचरितमिच्छामिकथ्यमानंत्वयाद्विज १८

क्रमणंपदत्रयेण वसिष्ठस्यवाक्षमा रामस्यसेतुर्यशः ६ सदःयज्ञमंडपं ७ देवैरित्यत्रमेधैरितिपाठेमेधाशब्दान्मत्वर्थीयोऽर्शआद्यच् मेधावद्भिर्बहुभिर्बृहस्पतिभिरिवेत्यभूतोपमा बृहस्पतेरेकत्वात् ८ मूर्धि पट्टस्थानेऽभिषिक्तैर्मूर्धाभिषिक्तैः यज्ञसंस्तरेयज्ञांगानांरचनानुष्ठानेइत्यर्थः ९ । १० । ११ । १२ पितामहायब्रह्मतुल्यायकृष्णायव्यासाय १३ विष्टरादिभिर्मधुपर्कार्चनंदर्शितं तत्रनिवेदितांगांसमनु ज्ञापितवान्व्यासोमागामनागामितिमंत्रलिंगात्तस्याअवध्यत्वंमन्यमानः । 'तद्यथैवादोमनुष्यराजआगतेऽन्यस्मिन्वार्हत्युक्षाणंवावेहतंवाक्षदंते'इत्यर्थवादस्तुरागप्राप्तानुवादसरूपोनविधायकः । माव धिष्टेतिनिषेधलिंगस्यअनागामितिनिरपराधत्वहेतूपोद्बलितस्यप्रबलतरत्वात् । वेहतंवंध्यांगां क्षदंतेहिंसंति १४ उपोपविश्यसमीपेउपविश्य १५ प्रतिवेद्यप्रतिख्याप्य अत्रपूजास्तुतिरेव १६ इदंवक्ष्य माणं १७ प्रत्यक्षदर्शिवान्प्रत्यक्षदर्शी । अन्येभ्योऽपिदृश्यंतइतिवनिप् १८

भेदोवैरं अक्लिष्टरागद्वेषादिशून्यंकर्मयेषांतेषामक्लिष्टकर्मणां १९ पितमहानांप्रपितामहानां २० । २१ । २२ । २३ भेदंवैरमूलंसर्वविनाशंचतत्फलं २४ ॥ इति आदिपर्वणि नीलकंठीये भारतभाव
दीपे षष्टितमोऽध्यायः ॥ ६० ॥ गुरवइति मनोबुद्धिसमाधिभिःमनइत्यष्टांगोपलक्षणं । बुद्धीतिभक्तिश्रद्धयोः । समाधिश्चित्तैकाग्र्यं । संपूज्यनमस्कारादिनामानयित्वा १ । २
मोत्साहतीवप्रोत्साहयतीव । परिस्पंदंमुत्प्रोत्साहयतीवमेइतिपाठेपरिस्पंदशब्देक्लीबत्वमार्षं गुरोर्वक्रपरिस्पंदस्त्वंकथांकथयेत्याज्ञावचनंतज्जन्यामुत्प्रीतिःसाप्रोत्साहयति ३ । ४ । ५ नचिरात्शीघ्रं

कथंसमभवद्भेदस्तेषामक्लिष्टकर्मणाम् ॥ तच्चयुद्धंकथंवृत्तंभूतांतकरणंमहत् १९ पितामहानांसर्वेषां दैवेनानिष्टचेतसाम् ॥ कार्त्स्न्येनैतन्ममाचक्ष्वयथावृत्तंद्विजो
त्तम २० ॥ सौतिरुवाच ॥ ॥ तस्यतद्वचनंश्रुत्वाकृष्णद्वैपायनस्तदा ॥ शशासशिष्यमासीनंवैशंपायनमंतिके २१ ॥ व्यासउवाच ॥ ॥ कुरूणांपांडवानां
चयथाभेदोऽभवत्पुरा ॥ तदस्मैसर्वमाचक्ष्वयन्मत्तःश्रुतवानसि २२ गुरोर्वचनमाज्ञायसतुविप्रर्षभस्तदा ॥ आचचक्षेततःसर्वमितिहासंपुरातनम् २३ राज्ञेत
स्मैसदस्येभ्यःपार्थिवेभ्यश्चसर्वशः ॥ भेदंसर्वविनाशंचकुरुपांडवयोस्तदा २४ ॥ इतिश्रीमहाभारतेआदिपर्वणिअंशावतरणपर्वणिकथानुबंधेषष्टितमोऽध्यायः ॥६०॥
॥ वैशंपायनउवाच ॥ गुरवेप्राङ्नमस्कृत्यमनोबुद्धिसमाधिभिः ॥ संपूज्यचद्विजान्सर्वांस्तथान्यान्विदुषोजनान् १ महर्षेर्विश्रुतस्येहसर्वलोकेषुधीमतः ॥ प्रवक्ष्या
मिमतंकृत्स्नंव्यासस्यास्यमहात्मनः २ श्रोतुंपात्रंचराजंस्त्वंप्राप्येमांभारतींकथाम् ॥ गुरोर्वक्रपरिस्पंदोमनःप्रोत्साहतीवमे ३ शृणुराजन्यथाभेदःकुरुपांडवयोर
भूत् ॥ राज्यार्थंद्यूतसंभूतोवनवासस्तथैवच ४ यथाचयुद्धमभवत्पृथिवीक्षयकारकम् ॥ तत्तेऽहंकथयिष्यामिपृच्छतेभरतर्षभ ५ मृतेपितरितेवीरावनादेत्यस्वमंदि
रम् ॥ नचिरादेवविद्वांसोवेदेधनुषिचाभवन् ६ तांस्तथासत्ववीर्यौजःसंपन्नान्पौरसंमतान् ॥ नामृष्यन्कुरवोदृष्ट्वापांडवान्श्रीयशोभृतः ७ ततोदुर्योधनःक्रूरःकर्ण
श्चसहसौबलः ॥ तेषांनिग्रहनिर्वासान्विविधांस्तेसमारभन् ८ ततोदुर्योधनःशूरःकुलिंगस्यमतेस्थितः ॥ पांडवान्विविधोपायैराज्यहेतोरपीडयत् ९ ददावथविषं
पापोभीमायधृतराष्ट्रजः ॥ जरयामासतद्वीरःसहान्नेनवृकोदरः १० प्रमाणकोट्यांसंसुप्तंपुनर्बद्ध्वावृकोदरम् ॥ तोयेषुभीमंगंगायाःप्रक्षिप्यपुरमाव्रजत् ११ यदा
विबुद्धःकौंतेयस्तदासंछिद्यबंधनम् ॥ उदतिष्ठन्महाबाहुर्भीमसेनोगतव्यथः १२ आशीविषैःकृष्णसर्पैःसुप्तंचैनमदंशयत् ॥ सर्वेष्वेवांगदेशेषुनममारचशत्रुहा १३
तेषांतुविप्रकारेषुतेषुतेषुमहामतिः ॥ मोक्षणेप्रतिकारेचविदुरोमहितोऽभवत् १४ स्वर्गस्थोजीवलोकस्ययथाशक्रःसुखावहः ॥ पांडवानांतथानित्यंविदुरोऽपिसुखा
वहः १५ यदातुविविधोपायैःसंवृतैर्विवृतैरपि ॥ नाशकद्विनिहंतुंतान्दैवभाव्यर्थरक्षितान् १६

विद्वांसोऽभवन् ६ सत्वंदेहबलं वीर्यमुत्साहः ओजश्चेन्द्रियबलं ७ । ८ कुलिंगस्यपक्षिणोमतेसाहसेसहिसिंहदंष्ट्रांतर्गतंमांसमादातुंयतते कलिंगस्येत्यपपाठ ९ साहसमेवाह ददावित्यादि
ना १० प्रमाणकोट्यांगंगायास्तीर्थविशेषे । वृकनामाबहुभक्षोऽग्निरुदरेयस्यसवृकोदरः ११ । १२ । १३ विप्रकारेष्वपकारेषु । मोक्षणेप्राप्तापन्निवारणे प्रतिकारेप्रातिभट्येनशत्रोरप्याप
दिनिपातने १४ । १५ संवृतैर्गुप्तैः विवृतैःप्रकाशैः । दैवभाव्यर्थरक्षितान्दैवेनादृष्टेनभावीकुरुक्षयपांडवराज्यलाभादिरर्थस्तस्मैरक्षितान् १६



वृषःकर्णः जातुषंलाक्षामयं १७ । १८ क्षत्ताविदुरः १९ तेनक्षत्तुर्मंत्रणेन २० । २१ पुरोचनादात्मानंरक्षमाणाःरक्षंतः सुरुंगांसुभयतोबिलंविवरं २२ । २३ वननिर्झरेवननिर्झरसमीपे अववोधनात्
प्राकट्यात् २४ । २५ । २६ । २७ । २८ निहत्यनागराणांशोकमपनीतवानित्यर्थः २९ स्वयंवृणुतेइतिस्वयंवरातां ३० । ३१ शांतनवेनभीष्मेण ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९

ततःसंमंत्र्यसचिवैर्वृषदुःशासनादिभिः ॥ धृतराष्ट्रमनुज्ञाप्यजातुषंगृहमादिशत् १७ सुतप्रियैषीतान्राजापांडवानंबिकासुतः ॥ ततोविवासयामासराज्यभोगबुभु
क्षया १८ तेप्रातिष्ठंतसहितानगरान्नागसाह्वयात् ॥ प्रस्थानेचाभवन्मंत्रीक्षत्तातेषांमहात्मनाम् १९ तेनमुक्ताजतुगृहान्निशीथेप्राद्रवन्वनम् ॥ ततःसंप्राप्यकौंतेया
नगरंवारणावतम् २० न्यवसंतमहात्मानोमात्रासहपरंतपाः ॥ धृतराष्ट्रेणचाज्ञप्ताउषिताजातुषेगृहे २१ पुरोचनाद्रक्षमाणाःसंवत्सरमतंद्रिताः ॥ सुरुंगांकारयि
त्वातुविवरेणप्रचोदिताः २२ आदीप्यजातुषंवेश्मदग्ध्वाचैवपुरोचनम् ॥ प्राद्रवन्भयसंविग्नामात्रासहपरंतपाः २३ ददृशुर्दारुणंरक्षोहिडिंबंवननिर्झरे ॥ हत्वाच
तंराक्षसेंद्रंभीताःसमवबोधनात् २४ निशिसंप्राद्रवन्पार्थाधार्तराष्ट्रभयार्दिताः ॥ प्राप्ताहिडिंबाभीमेनयत्रजातोघटोत्कचः २५ एकचक्रांततोगत्वापांडवाःसंशित
व्रताः ॥ वेदाध्ययनसंपन्नास्तेऽभवन्ब्रह्मचारिणः २६ तेतत्रनियताःकालंकंचिद्रूपुर्नरर्षभाः ॥ मात्रासहैकचक्रायांब्राह्मणस्यनिवेशने २७ तत्रासससादक्षुधितंपुरु
षादंवृकोदरः ॥ भीमसेनोमहाबाहुर्बकंनाममहाबलम् २८ तंचापिपुरुषव्याघ्रोबाहुवीर्येणपांडवः ॥ निहत्यतरसावीरोनागरान्पर्यसांत्वयत् २९ ततस्तेशुश्रुवुः
कृष्णांपंचालेषुस्वयंवराम् ॥ श्रुत्वाचैवाभ्यगच्छंतगत्वाचैवालभंतताम् ३० तेतत्रद्रौपदींलब्ध्वापरिसंवत्सरोषिताः ॥ विदिताहास्तिनपुरंप्रत्याजग्मुररिंदमाः ३१
तेउक्ताधृतराष्ट्रेणराज्ञाशांतनवेनच ॥ भ्रातृभिर्विग्रहस्तातकथंवोनभवेदिति ३२ अस्माभिःखांडवप्रस्थेयुष्मद्वासोऽनुचिंतितः ॥ तस्माज्जनपदोपेतंसुविभक्तम
हापथम् ३३ वासायखांडवप्रस्थंव्रजध्वंगतमत्सराः ॥ तयोस्तेवचनाज्जग्मुःसहसर्वैःसुहृज्जनैः ३४ नगरंखांडवप्रस्थंरत्नान्यादायसर्वशः ॥ तत्रतेन्यवसन्पार्थाःसंव
त्सरगणान्बहून् ३५ वशेशस्त्रप्रतापेनकुर्वंतोऽन्यान्महीभृतः ॥ एवंधर्मप्रधानास्तेसत्यव्रतपरायणाः ३६ अप्रमत्तोत्थिताःक्षांताःप्रतपंतोऽहितान्बहून् ॥ अजय
द्भीमसेनस्तुदिशंप्राचींमहायशाः ३७ उदीचीमर्जुनोवीरःप्रतीचींनकुलस्तथा ॥ दक्षिणांसहदेवस्तुविजिग्येपरवीरहा ३८ एवंचक्रुरिमांसर्वेवशेकृत्स्नांवसुंधराम् ॥
पंचभिःसूर्यसंकाशैःसूर्येणचविराजता ३९ षट्सूर्येवाभवत्पृथ्वीपांडवैःसत्यविक्रमैः ॥ ततोनिमित्तेकस्मिंश्चिद्धर्मराजोयुधिष्ठिरः ४० वनंप्रस्थापयामासतेजस्वी
सत्यविक्रमः ॥ प्राणेभ्योऽपिप्रियतरंभ्रातरंसव्यसाचिनम् ४१ अर्जुनंपुरुषव्याघ्रंस्थिरात्मानंगुणैर्युतम् ॥ सवैसंवत्सरंपूर्णंमासंचैकंवनेवसन् ४२ ततोऽगच्छद्धृषी
केशंद्वारवत्यांकदाचन ॥ लब्धवांस्तत्रबीभत्सुर्भार्यांराजीवलोचनाम् ४३ अनुजांवासुदेवस्यसुभद्रांभद्रभाषिणीम् ॥ साशचीवमहेंद्रेणश्रीःकृष्णेनेवसंगता ४४

४० । ४१ सवैसंवत्सरंपूर्णंमासंचैकंवनेवसदिति । दशसंख्यापूरकत्वात्पूर्णशब्देनदशगुणमुच्यतेसंवत्सरंपूर्णंएकंवतथामासंपूर्णमेव । तेनएकादशसंवत्सरादशमासाश्चभवंति । तेषांचसौराणां
मत्यब्दंसपादपंचदिनवृद्ध्यासावनाद्वादशाब्दाभवंति । अन्येतुमासशब्देनद्वादशसंख्यांलक्षयंतएकशब्दवैयर्थ्यमेकवचनानुपपत्तिंचनेक्षंते । वनेइत्युपलक्षणंनगरस्यापि ४२ । ४३ । ४४

४५ नातीति खांडवदाहइतिशेषः ४६ व्यवसायएवमेवेदंकरिष्यामीतिनिश्चयः ४७ बाणैर्युक्तावितिशेषः कपिलक्षणंवानरध्वजं यत्रखांडवदाहे ४८ । ४९ अक्षैःपाशैर्द्यूतेनेत्यर्थः ५० ५१ । ५२ विहतभूयिष्ठंनष्टप्रायं ५३ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे एकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ ७ ॥ कथितमिति १ । २ । ३ अवध्यान्भीष्मद्रो



सुभद्रायुयुजेप्रीत्यापांडवेनार्जुनेनह ॥ अतर्पयच्चकौंतेयःखांडवेहव्यवाहनम् ४५ बीभत्सुर्वासुदेवेनसहितोनृपसत्तम ॥ नातिभारोहिपार्थस्यकेशवेनसहाभवत् ४६ व्यवसायसहायस्यविष्णोःशत्रुवधेष्विव ॥ पार्थायाग्निर्ददौचापिगांडीवंधनुरुत्तमम् ४७ इषुधीचाक्षयैर्बाणैरथंचकपिलक्षणम् ॥ मोक्षयामासबीभत्सुर्मयंयत्रमहा सुरम् ४८ सचकारसभांदिव्यांसर्वरत्नसमाचिताम् ॥ तस्यांदुर्योधनोमंदोलोभंचक्रेसुदुर्मतिः ४९ ततोऽक्षैर्वंचयित्वाचसौबलेनयुधिष्ठिरम् ॥ वनंप्रस्थापयामा ससप्तवर्षाणिपंचच ५० अज्ञातमेकंराष्ट्रेचततोवर्षंत्रयोदशम् ॥ ततश्चतुर्दशेवर्षेयाचमानाःस्वकंवसु ५१ नालभंतमहाराजततोयुद्धमवर्तत ॥ ततस्तेक्षत्रमुत्सा द्यहत्वादुर्योधनंनृपम् ५२ राज्यंविहतभूयिष्ठंप्रत्यपद्यंतपांडवाः ॥ एवमेतत्पुरावृत्तंतेषामक्लिष्टकर्मणाम् ॥ भेदोराज्यविनाशायजयश्चजयतांवर ५३ ॥ इतिश्री महाभारतेआदिपर्वणि अंशावतरणपर्वणिभारतसूत्रंनामएकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ ७ ॥ ॥ जनमेजयउवाच ॥ कथितंवैसमासेनत्व यासर्वंद्विजोत्तम ॥ महाभारतमाख्यानंकुरूणांचरितंमहत् १ कथांत्वनघचित्रार्थांकथयस्वतपोधन ॥ विस्तरश्रवणेजातंकौतूहलमतीवमे २ सभवान्विस्तरेणे मांपुनराख्यातुमर्हति ॥ नहितृप्यामिपूर्वेषांशृण्वानश्चरितंमहत् ३ नतत्कारणमल्पंवैधर्मज्ञायत्रपांडवाः ॥ अवध्यान्सर्वशोजघ्नुःप्रशस्यंतेचमानवैः ४ किमर्थंते नरव्याघ्राःशक्ताःसंतोह्यनागसः ॥ प्रयुज्यमानान्संक्लेशान्क्षांतवंतोदुरात्मनाम् ५ कथंनागायुतप्राणोबाहुशालीवृकोदरः ॥ परिक्लिश्यन्नपिक्रोधंधृतवान्वैद्विजोत्त म ६ कथंसाद्रौपदीकृष्णाक्लिश्यमानादुरात्मभिः ॥ शक्तासतीधार्त्तराष्ट्रान्नादहत्क्रोधचक्षुषा ७ कथंव्यसनिनंद्यूतेपार्थौमाद्रीसुतौतदा ॥ अन्वयुस्तेनरव्याघ्राबा ध्यमानादुरात्मभिः ८ कथंधर्मभृतांश्रेष्ठःसुतोधर्मस्यधर्मवित् ॥ अनर्हःपरमंक्लेशंसोढवान्सयुधिष्ठिरः ९ कथंचबहुलाःसेनाःपांडवःकृष्णसारथिः ॥ अस्यन्नेकोऽन यत्सर्वाःपितृलोकंधनंजयः १० एतदाचक्ष्वमेसर्वंयथावृत्तंतपोधन ॥ यद्यच्चकृतवंतस्तेतत्रतत्रमहारथाः ११ ॥ वैशंपायनउवाच ॥ क्षणंकुरुमहाराजविपुलोऽय मनुक्रमः ॥ पुण्याख्यानस्यवक्तव्यःकृष्णद्वैपायनेरितः १२ महर्षेःसर्वलोकेषुपूजितस्यमहात्मनः ॥ प्रवक्ष्यामिमतंकृत्स्नंव्यासस्यामिततेजसः १३ इदंशतसह स्रंहिश्लोकानांपुण्यकर्मणाम् ॥ सत्यवत्यात्मजेनेहव्याख्यातममितौजसा १४ यइदंश्रावयेद्विद्वान्येचेदंशृणुयुर्नराः ॥ तेब्रह्मणःस्थानमेत्यप्राप्नुयुर्देवतुल्यताम् १५ इदंहिवेदैःसमितंपवित्रमपिचोत्तमम् ॥ श्राव्याणामुत्तमंचेदंपुराणमृषिसंस्तुतम् १६ अस्मिन्नर्थश्चकामश्चनिखिलेनोपदेक्ष्यते ॥ इतिहासेमहापुण्येबुद्धिश्चपरिनैष्ठिकी १७



णादीन् ४ । ५ बाहुशालीबाहुबलवान् कथंक्रोधंधृतवान्निरुद्धवान् ६ शक्तादग्धुमितिशेषः ७ । ८ । ९ अस्यन्शरान्क्षिपन् सकर्थंक्लेशंसोढवानित्यनुषज्यते १० । ११ । १२ १३ । १४ । १५ ऋषिभिर्मंत्रैस्तद्द्रष्टृभिर्वासंस्तुतंसमंस्तुतंवा १६ परिनैष्ठिकीपरिनिष्ठामोक्षस्तदुचिता १७

१८ । १९ । २० पुंसवनंपुमांसःसूयंतेऽस्मिन्श्रुते २१ महिषीपट्टराज्ञी २२ । २३ । २४ । २५ अनसूयतांगुणेषुदोषारोपमकुर्वतां २६ । २७ । २८ । २९ । ३० । ३१

अक्षुद्रान्दानशीलांश्चसत्यशीलाननास्तिकान् ॥ कार्ष्णंवेदमिमंविद्वाञ्छ्रावयित्वाऽर्थमश्नुते १८ भ्रूणहत्याकृतंचापिपापंजह्यादसंशयम् ॥ इतिहासमिमंश्रुत्वा पुरुषोऽपिसुदारुणः १९ मुच्यतेसर्वपापेभ्योराहुणाचंद्रमायथा ॥ जयोनामेतिहासोऽयंश्रोतव्योविजिगीषुणा २० महींविजयतेराजाशत्रूंश्चापिपराजयेत् ॥ इदं पुंसवनंश्रेष्ठमिदंस्वस्त्ययनंमहत् २१ महिषीयुवराजाभ्यांश्रोतव्यंबहुशस्तथा ॥ वीरंजनयतेपुत्रंकन्यांवाराज्यभागिनीम् २२ धर्मशास्त्रमिदंपुण्यमर्थशास्त्रमिदं परम् ॥ मोक्षशास्त्रमिदंप्रोक्तंव्यासेनामितबुद्धिना २३ संप्रत्याचक्षतेचेदंतथाश्रोष्यंतिचापरे ॥ पुत्राःशुश्रूषवःसंतिप्रेष्याश्चप्रियकारिणः २४ शरीरेणकृतंपापं वाचाचमनसैवच ॥ सर्वंसंत्यजतिक्षिप्रंयइदंशृणुयान्नरः २५ भरतानांमहज्जन्मशृण्वतामनसूयताम् ॥ नास्तिव्याधिभयंतेषांपरलोकभयंकुतः २६ धन्यंयशस्य मायुष्यंपुण्यंस्वर्ग्यंतथैवच ॥ कृष्णद्वैपायनेनेदंकृतंपुण्यचिकीर्षुणा २७ कीर्त्तिंप्रथयतालोकेपांडवानांमहात्मनाम् ॥ अन्येषांक्षत्रियाणांचभूरिद्रविणतेजसाम् २८ सर्वविद्यावदातानांलोकेप्रथितकर्मणाम् ॥ यइदंमानवोलोकेपुण्यार्थेब्राह्मणाञ्छुचीन् २९ श्रावयेतमहापुण्यंतस्यधर्मःसनातनः ॥ कुरूणांप्रथितंवंशंकीर्त्तयन्सततं शुचिः ३० वंशमाप्नोतिविपुलंलोकेपूज्यतमोभवेत् ॥ योऽधीतेभारतंपुण्यंब्राह्मणोनियतव्रतः ३१ चतुरोवार्षिकान्मासान्सर्वपापैःप्रमुच्यते ॥ विज्ञेयःसचवेदानां पारगोभारतंपठन् ३२ देवाराजर्षयोह्यत्रपुण्याब्रह्मर्षयस्तथा ॥ कीर्त्यंतेधूतपाप्मानःकीर्त्यतेकेशवस्तथा ३३ भगवांश्चापिदेवेशोयत्रदेवीचकीर्त्यते ॥ अनेकज ननोयत्रकार्त्तिकेयस्यसंभवः ३४ ब्राह्मणानांगवांचैवमाहात्म्यंयत्रकीर्त्यते ॥ सर्वश्रुतिसमूहोऽयंश्रोतव्योधर्मबुद्धिभिः ३५ यइदंश्रावयेद्विद्वान्ब्राह्मणानिहपर्वसु ॥ धूत पाप्माजितस्वर्गोब्रह्मगच्छतिशाश्वतम् ३६ श्रावयेद्ब्राह्मणान्श्राद्धेयश्चेमंपादमंततः ॥ अक्षय्यंतस्यतच्छ्राद्धमुपावर्त्तेत्पितॄनिह ३७ अन्हायदेनःक्रियतेइंद्रियैर्मन साऽपिवा ॥ ज्ञानादज्ञानतोवापिप्रकरोतिनरश्चयत् ३८ तन्महाभारताख्यानंश्रुत्वैवप्रविलीयते ॥ भरतानांमहज्जन्ममहाभारतमुच्यते ३९ निरुक्तमस्ययोवेद सर्वपापैःप्रमुच्यते ॥ भरतानांयतश्चायमितिहासोमहाद्भुतः ४० महतोह्येनसोमर्त्यान्मोचयेदनुकीर्त्तितः ॥ त्रिभिर्वर्षैर्लब्धकामःकृष्णद्वैपायनोमुनिः ४१ नि त्योत्थितःशुचिःशक्तोमहाभारतमादितः ॥ तपोनियममास्थायकृतमेतन्महर्षिणा ४२ तस्मान्नियमसंयुक्तैःश्रोतव्यंब्राह्मणैरिदम् ॥ कृष्णप्रोक्तामिमांपुण्यांभार तीमुत्तमांकथाम् ४३ श्रावयिष्यंतियेविप्रायेचश्रोष्यंतिमानवाः ॥ सर्वथावर्त्तमानावैनतेशोच्याःकृताकृतैः ४४



३२ । ३३ अनेकजननःअनेकेभ्यःषड्भ्यःकृत्तिकाभ्योजननमुत्पत्तिरस्मिन्नितितथा ३४ सर्वश्रुतिसमूहःसर्वासांश्रुतीनांकर्मब्रह्मपराणांसमूहएवायं ३५ । ३६ । ३७ । ३८ । ३९ । ४० ४१ । ४२ । ४३ सर्वथासाधुनाऽसाधुनावावर्त्मनावर्तमानाअपिकृताकृतैःक्रमेणपापपुण्यैस्तेनशोच्याः । एतच्छ्रवणादेवसर्वप्रत्यवायपरिहारोभवतीतिभावः ४४

सिद्धिर्धर्मफलंचित्तशुद्ध्यादिः ४५ नतामिति स्वर्गादप्येतच्छ्रवणसुखकरंमुक्तिहेतुत्वादितिभावः ४६ श्राद्धःश्रद्धावान् ४७ । ४८ श्रव्यमर्थतोरम्यं ४९ । ५० । ५१ सदोत्थायीसदोद्युक्तः
५२ अद्भुतत्वमेवाह धर्मेचेति धर्मादिचतुष्टयेउपादेयेचकारचतुष्टयोक्तेअधर्मानर्थदुःखसंसाररूपेचतुष्केहातव्येचविषयेहेयमुपादेयंचकृत्स्नमत्रैवनिरूपितं । इतोऽधिकंग्रंथांतरेनास्तीतिकात्स्न्येनसर्वे
षांशास्त्राणामर्थंज्ञातुकामेनैतदेवादर्तव्यमित्यर्थः ५३ ॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ ७ ॥ राजेति रंजकत्वाद्राजा महीपतिःपृथ्वीपालकः

नरेणधर्मकामेनसर्वःश्रोतव्यइत्यपि ॥ निखिलेनेतिहासोऽयंततःसिद्धिमवाप्नुयात् ४५ नतांस्वर्गगतिंप्राप्यतुष्टिंप्राप्नोतिमानवः ॥ यांश्रुत्वैवमहापुण्यमितिहासमु
पाश्नुते ४६ शृण्वन्श्राद्धःपुण्यशीलःश्रावयंश्चेदमद्भुतम् ॥ नरःफलमवाप्नोतिराजसूयाश्वमेधयोः ४७ यथासमुद्रोभगवान्यथामेरुर्महागिरिः ॥ उभौख्यातौरत्न
निधीतथाभारतमुच्यते ४८ इदंहिवेदैःसमितंपवित्रमपिचोत्तमम् ॥ श्रव्यंश्रुतिसुखंचैवपावनंशीलवर्धनम् ४९ यइदंभारतंराजन्वाचकायप्रयच्छति ॥ तेनसर्वा
महीदत्ताभवेत्सागरमेखला ५० पारिक्षितकथांदिव्यांपुण्यायविजयायच ॥ कथ्यमानांमयाकृत्स्नांशृणुहर्षकरीमिमाम् ५१ त्रिभिर्वर्षैःसदोत्थायीकृष्णद्वैपायनो
मुनिः ॥ महाभारतमाख्यानंकृतवानिदमद्भुतम् ५२ धर्मेचार्थेचकामेचमोक्षेचभरतर्षभ ॥ यदिहास्तितदन्यत्रयन्नेहास्तिनतत्क्वचित् ५३ ॥ इतिश्रीमहाभारते
आदिपर्वणिअंशावतरणपर्वणि महाभारतप्रशंसायांद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ वैशंपायनउवाच ॥ राजोपरिचरोनामधर्मनित्योमहीपतिः ॥ बभूवमृ
गयांगंतुंसदाकिलधृतव्रतः १ सचेदिविषयंरम्यंवसुःपौरवनंदनः ॥ इंद्रोपदेशाज्जग्राहरमणीयंमहीपतिः २ तमाश्रमेन्यस्तशस्त्रंनिवसंतंतपोनिधिम् ॥ देवाःशक्रपुरो
गवैराजानमुपतस्थिरे ३ इंद्रत्वमर्होराजाऽयंतपसेत्यनुचिंत्यवै ॥ तंसांत्वेनन्नृपंसाक्षात्तपसःसंन्यवर्तयन् ४ ॥ देवाऊचुः ॥ नसंकीर्येतधर्मोऽयंपृथिव्यांपृथिवीपते
त्वयाहिधर्मोविधृतःकृत्स्नंधारयतेजगत् ५ ॥ इंद्रउवाच ॥ लोकेधर्मंपालयत्वंनित्ययुक्तःसमाहितः ॥ धर्मयुक्तस्ततोलोकान्पुण्यान्पश्यसिशाश्वतान् ६ दिविष्ठस्य
भुविष्ठस्त्वंसखाभूतोममप्रियः ॥ रम्यःपृथिव्यांयोदेशस्तमावसनराधिप ७ पशव्यश्चैवपुण्यश्चप्रभूतधनधान्यवान् ॥ स्वारक्ष्यश्चैवसौम्यश्चभोग्यैर्भूमिगुणैर्युतः
८ अर्थवानेषदेशोहिधनरत्नादिभिर्युतः ॥ वसुपूर्णाचवसुधावसचेदिषुचेदिप ९ धर्मशीलाजनपदाःसुसंतोषाश्चसाधवः ॥ नचमिथ्याप्रलापोऽत्रस्वैरेष्वपिकुतोऽ
न्यथा १० नचपित्राविभज्यंतेपुत्रागुरुहितेरताः ॥ युंजतेधुरिनोगाश्चकृशान्संधुक्षयंतिच ११ सर्वेवर्णाःस्वधर्मस्थाःसदाचेदिषुमानद ॥ नतेऽ
स्त्यविदितंकिंचित्त्रिषुलोकेषुयद्भवेत् १२

१ वसुःउपरिचरः २ । २ साक्षात्प्रत्यक्षीभूय ४ नसंकीर्येतनिर्नायकत्वात् ५ । ६ । ७ पशव्यःपशुभ्योहितःस्वारक्ष्यःस्वःस्वर्गस्तत्तुल्यःअतएवरक्ष्यः ८ । ९ । १० गाःबलीव
र्दान् देशोऽकृष्टपच्यइतिहलधुरिनयुंजतेनापिशकटधुरि । पृष्ठवाहैरेवतत्कार्यसिद्धेरितिभावः कृशान्दीनानाथादीन्संधुक्षयंतिपुष्टान्कुर्वंति । यद्वा वृषभान्कृशान्नधुरियुंजतेमत्युतसंधुक्षयंतीति ।
अन्येतुगाःस्त्रीगवीःतासामप्यांध्रादिदेशेषुधुरियोजनंदृष्टंतदिहनास्तीत्याहुः ११ नतइति आत्मज्ञानात्सर्वज्ञोभविष्यसीत्यर्थः १२



उपपत्स्यतेउपस्थास्यते १३ । १४ वैजयंतींविजयहेतुं अविक्षतमेवधारयिष्यतिपालयिष्यतिनतुविक्षतं । अनयाशस्त्रमेवत्वांनबाधिष्यतइतिभावः १५ लक्षणंचिह्नं १६ इष्टप्रदानंप्रीतिदानमु
द्दिश्ययष्टिंददौ १७ शक्रस्यपूजार्थमानार्थं तस्यायष्टेः गतेसंवत्सरेसंवत्सरांतेयष्टिप्रवेशोऽद्यापिमहाराष्ट्रादिषुदृश्यते १८ । १९ अपरेद्युःप्रतिपदिद्वितीयसंवत्सरादौ । अत्युच्छ्रयकर्ध्वस्थापनं । पिटकैःमं

दैवोपभोग्यंदिव्यंत्वामाकाशेस्फाटिकंमहत् ॥ आकाशगंत्वांमद्दत्तंविमानमुपपत्स्यते १३ त्वमेकःसर्वमर्त्येषुविमानवरमास्थितः ॥ चरिष्यस्युपरिस्थोहिदेवोवि
ग्रहवानिव १४ ददामितेवैजयंतींमालामम्लानपंकजाम् ॥ धारयिष्यतिसंग्रामेयात्वांशस्त्रैरविक्षतम् १५ लक्षणंचैतदेवेहभवितातेनराधिप ॥ इंद्रमालेतिवि
ख्यातंधन्यमप्रतिमंमहत् १६ यष्टिंचवैणवींतस्मैददौवृत्रनिषूदनः ॥ इष्टप्रदानमुद्दिश्यशिष्टानांप्रतिपालिनीम् १७ तस्याःशक्रस्यपूजार्थंभूमौभूमिपतिस्तदा ॥
प्रवेशंकारयामासगतेसंवत्सरेतदा १८ ततःप्रभृतिचाद्यापियष्टेःक्षितिपसत्तमैः ॥ प्रवेशःक्रियतेराजन्यथातेनप्रवर्तितः १९ अपरेद्युस्ततस्तस्याःक्रियतेऽत्युच्छ्रयो
नृपैः ॥ अलंकृतायाःपिटकैर्गंधमाल्यैश्चभूषणैः २० माल्यदामपरिक्षिप्ताविधिवत्क्रियतेऽपिच ॥ भगवान्पूज्यतेचात्रहंसरूपेणचेश्वरः २१ स्वयमेवगृहीते
नवसोःप्रीत्यामहात्मनः ॥ सतांपूजांमहेंद्रस्तुदृष्ट्वादेवःकृतांशुभाम् २२ वसुनाराजमुख्येनप्रीतिमानब्रवीत्प्रभुः ॥ येपूजयिष्यंतिनराराजानश्चमहंमम २३ कार
यिष्यंतिचमुदायथाचेदिपतिर्नृपः ॥ तेषांश्रीर्विजयश्चैवसराष्ट्राणांभविष्यति २४ तथास्फीतोजनपदोमुदितश्चभविष्यति ॥ एवंमहात्मनातेनमहेंद्रेणनराधि
प २५ वसुःप्रीत्यामघवतामहाराजोऽभिसत्कृतः ॥ उत्सवंकारयिष्यंतिसदाशक्रस्ययेनराः २६ भूमिरत्नादिभिर्दानैस्तथापूज्याभवंतिते ॥ वरदानमहायज्ञै
स्तथाशक्रोत्सवेनच २७ संपूजितोमघवतावसुश्चेदीश्वरोनृपः ॥ पालयामासधर्मेणचेदिस्थःपृथिवीमिमाम् २८ इंद्रप्रीत्याचेदिपतिश्चकारेंद्रमहंवसुः ॥ पुत्रा
श्चास्यमहावीर्याःपंचासन्नमितौजसः २९ नानाराज्येषुचसुतान्ससम्राडभ्यषेचयत् ॥ महारथोमागधानांविश्रुतोयोबृहद्रथः ३० प्रत्यग्रहःकुशांबश्चयमाहुर्म
णिवाहनम् ॥ मावेल्लश्चयदुश्चैवराजन्यश्चापराजितः ३१ एतेतस्यसुताराजन्राजर्षेर्भूरितेजसः ॥ न्यवेशयन्नामभिःस्वैस्तेदेशांश्चपुराणिच ३२ वासवाःपंच
राजानःपृथग्वंशाश्चशाश्वताः ॥ वसंतमिंद्रप्रासादेआकाशेस्फाटिकेचतम् ३३ उपतस्थुर्महात्मानंगंधर्वाप्सरसोनृपम् ॥ राजोपरिचरेत्येवंनामतस्याथविश्रु
तम् ३४ पुरोपवाहिनींतस्यनदींशुक्तिमतींगिरिः ॥ अरौत्सीच्चेतनायुक्तःकामात्कोलाहलःकिल ३५

जूषारूपैर्वेत्रमयैःकोशैः । यद्वाकांच्यमिवपिटकाःस्वर्णादिमयावेष्टकाःपेट्यइतिभाषायांप्रसिद्धाग्राह्याः । 'पिटकःपेटकःपेटामंजूषाऽथविहंगिका'इत्यमरः २० हंसरूपेणयुक्तोऽहंसरूपी तस्यैव
बुद्धिस्थस्यरूपस्यविशेषणंस्वयमेवगृहीतेनेति । हंसरूपेणवासवइतिपाठेस्पष्टोऽर्थः २१ देवःकृतामितिपाठः विसर्गाभावेतुदेवेतिजनमेजयसंबोधनं २२ महमुत्सवं । 'महउद्धवउत्सवः'इत्यमरः २३
२४ । २५ । २६ वरदानंचमहायज्ञाश्चतैः २७ । २८ । २९ । ३० । ३१ । ३२ वासवावसुपुत्राः । इंद्रप्रासादेइंद्रदत्तेविमाने ३३ । ३४ पुरोपवाहिनींपुरसमीपेवहंतीमरौत्सीदात्मन्येवावरुरोध ३५

३६ नदीराज्ञेन्यवेदयन्मिथुनमित्यनुषज्यते ३७ । ३८ । ३९ पुंसवनेऽप्रसवयोग्येकाले तदहस्तस्मिन्दिने ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ सिंहावलोकनेनाशोकमेवविशिनष्टि मधुगंधैरिति ४८ वायुनाकामोद्दीपकेन धूम्रंमलिनंरतिकर्मतदर्थं मुदंस्त्रीविषयांप्रीतिमनुसृत्यतामेवमनसाऽगात्तयासहमानसंसुरतमकरोदित्यर्थः प्रचस्कंदपपात ४९ मिथ्याप्रसवशून्यत्वेनालीकमायं

गिरिंकोलाहलंतंतुपदावसुरताडयत् ॥ निश्चक्रामततस्तेनप्रहारविवरेणसा ३६ तस्यांनद्यांसजनयन्मिथुनंपर्वतःस्वयम् ॥ तस्माद्विमोक्षणात्प्रीतानदीराज्ञेन्यवे
दयत् ३७ यःपुमानभवत्तत्रतंसराजर्षिसत्तमः ॥ वसुर्वसुप्रदश्चक्रेसेनापतिमरिंदमः ३८ चकारपत्नींकन्यांतुतथातांगिरिकांनृपः ॥ वसोःपत्नीतुगिरिकाकामकालं
न्यवेदयत् ३९ ऋतुकालमनुप्राप्तास्नातापुंसवनेशुचिः ॥ तदहःपितरश्चैनमूचुर्जहिमृगानिति ४० तंराजसत्तमंप्रीतास्तदामतिमतांवर ॥ सपितॄणांनियोगंतमनति
क्रम्यपार्थिवः ४१ चकारमृगयांकामीगिरिकामेवसंस्मरन् ॥ अतीवरूपसंपन्नांसाक्षाच्छ्रियमिवापराम् ४२ अशोकैश्चंपकैश्चूतैरनेकैरतिमुक्तकैः ॥ पुन्नागैःकर्णिकारै
श्चबकुलैर्दिव्यपाटलैः ४३ पाटलैर्नारिकेलैश्चचंदनैश्चार्जुनैस्तथा ॥ एतैरम्यैर्महावृक्षैःपुण्यैःस्वादुफलैर्युतम् ४४ कोकिलाकुलसन्नादंमत्तभ्रमरनादितम् ॥ वसंतका
लेततस्यवनंचैत्ररथोपमम् ४५ मन्मथाभिपरीतात्मानापश्यद्गिरिकांतदा ॥ अपश्यन्कामसंतप्तश्चरमाणोयदृच्छया ४६ पुष्पसंछन्नशाखाग्रंपल्लवैरुपशोभितम् ॥
अशोकंस्तवकैश्छन्नंरमणीयमपश्यत ४७ अधस्तात्तस्यच्छायायांसुखासीनोनराधिपः ॥ मधुगंधैश्चसंयुक्तंपुष्पगंधमनोहरम् ४८ वायुनाप्रेर्यमाणस्तुधूम्राय
मुदमन्वगात् ॥ तस्यरेतःप्रचस्कंदचरतोगहनेवने ४९ स्कन्नमात्रंचतद्रेतोवृक्षपत्रेणभूमिपः ॥ प्रतिजग्राहमिथ्यामेनपतेद्रेतइत्युत ५० इदंमिथ्यापरिस्कन्नं
रेतोमेनभवेदिति ॥ ऋतुश्चतस्याःपत्न्यामेनमोघःस्यादितिप्रभुः ५१ संचिंत्यैवंतदाराजाविचार्यचपुनःपुनः ॥ अमोघत्वंचविज्ञायरेतसोराजसत्तमः ५२ शुक्र
प्रस्थापनेकालंमहिष्याःप्रसमीक्ष्यवै ॥ अभिमंत्र्याथतच्छुक्रमारात्तिष्ठंतमाशुगम् ५३ सूक्ष्मधर्मार्थतत्त्वज्ञोगत्वाश्येनंततोऽब्रवीत् ॥ मत्प्रियार्थमिदंसौम्यशुक्रंमम
गृहंनय ५४ गिरिकायाःप्रयच्छाशुतस्याह्यार्तवमद्यवै ॥ गृहीत्वातत्तदाश्येनस्तूर्णमुत्पत्यवेगवान् ५५ जवंपरममास्थायप्रदुद्रावविहंगमः ॥ तमपश्यदथायांतं
श्येनंश्येनस्तथाऽपरः ५६ अभ्यद्रवच्चतंसद्योदृष्ट्वैवामिषशंकया ॥ तुंडयुद्धमथाकाशेतावुभौसंप्रचक्रतुः ५७ युध्यतोरपतद्रेतस्तच्चापियमुनांभसि ॥ तत्राद्रिकेति
विख्याताब्रह्मशापाद्वराप्सराः ५८ मीनभावमनुप्राप्ताबभूवयमुनाचरी ॥ श्येनपादपरिभ्रष्टंतद्वीर्यमथवासवम् ५९ जग्राहतरसोपेत्यसाऽद्रिकामत्स्यरूपिणी ॥
कदाचिदपिमत्सींतांबबंधुर्मत्स्यजीविनः ६० मासेचदशमेप्राप्तेतदाभरतसत्तम ॥ उज्जन्हुरुदरात्तस्याःस्त्रींपुमांसंचमानुषम् ६१ आश्चर्यभूतंतद्गत्वाराज्ञेऽथप्रत्य
वेदयन् ॥ कायेमत्स्याइमौराजन्संभूतौमानुषाविति ६२ तयोःपुमांसंजग्राहराजोपरिचरस्तदा ॥ समत्स्योनामराजाऽसीद्धार्मिकःसत्यसंगरः ६३ ॥ ६५ ॥

५० । ५१ । ५२ अभिमंत्र्यपुत्रोत्पत्तिलिंगैर्मंत्रैःस्पृष्ट्वा आरात्विमानैकदेशसमीपे ५३ । ५४ आर्तवमृतुकालीनंस्नानम् ५५ । ५६ । ५७ युध्यतोःसतोः अद्रिकागिरिकेतिनामसाम्यादेकस्याएवाप्सर सोव्यूहभेदेनदेहद्वयंज्ञेयं । अन्यथाराज्ञोमिथ्यासंकल्पत्वापत्तेः ५८ । ५९ । ६० मासेदशमेप्राप्तेबबंधुरितिसंबंधः उज्जन्हुःउद्धृतवंतः ६१ कायेदेहे मत्स्याःमत्स्ययोषायाः ६२ । ६३

६४ । ६५ । ६६ मत्स्यसगंधिनीमत्स्यसमानगंधा दाशायकैवर्ताय ६७ । ६८ । ६९ । ७० चक्रमेकामितवान् ७१ । ७२ नीहारंधूमिकां ७३ । ७४ पितुर्वशइच्छातदनुसारिणींपितृवशानुगां ७५ ७६ नस्थातुंजीवितुंनोत्सहे कन्यात्वदूषणादित्यर्थः ७७ । ७८ । ७९ । ८० स्त्रीभावेयोगुणःपुष्पवत्तातेनभूषिता सद्यःपुष्पवत्यभूदित्यर्थः ८१ । ८२ वरंकन्याभावंसौगंध्यंचलब्ध्वासद्योगर्भंचसुषा

साऽप्सरामुक्तशापाचक्षणेनसमपद्यत ॥ यापुरोक्ताभगवतातिर्यग्योनिगताशुभा ६४ मानुषौजनयित्वात्वंशापमोक्षमवाप्स्यसि ॥ ततःसाजनयित्वातौविश
स्तामत्स्यघातिना ६५ संत्यज्यमत्स्यरूपंसादिव्यंरूपमवाप्यच ॥ सिद्धर्षिचारणपथंजगामाथवराप्सराः ६६ साकन्यादुहितातस्यामत्स्यामत्स्यसगंधिनी ॥
राज्ञादत्ताचदाशायकन्येयंतेभवत्विति ६७ रूपसत्वसमायुक्तासर्वैःसमुदितागुणैः ॥ सातुसत्यवतीनाममत्स्यघात्यभिसंश्रयात् ६८ आसीत्सामत्स्यगंधैवकंचित्का
लंशुचिस्मिता ॥ शुश्रूषार्थंपितुर्नावंवाहयंतींजलेचताम् ६९ तीर्थयात्रांपरिक्रामन्नपश्यद्वैपराशरः ॥ अतीवरूपसंपन्नांसिद्धानामपिकांक्षिताम् ७० दृष्ट्वैवसच
तांधीमांश्चकमेचारुहासिनीम् ॥ दिव्यांतांवासवींकन्यांरंभोरुंमुनिपुंगवः ७१ संगमंममकल्याणिकुरुष्वेत्यभ्यभाषत ॥ साऽब्रवीत्पश्यभगवन्पारावारेस्थिता
नृषीन् ७२ आवयोर्दृष्टयोरेभिःकथंतुस्यात्समागमः ॥ एवंतयोक्तोभगवान्नीहारमसृजत्प्रभुः ७३ येनदेशःससर्वस्तुतमोभूतइवाभवत् ॥ दृष्ट्वासृष्टंतुनीहारंतत
स्तंपरमर्षिणा ७४ विस्मितासाऽभवत्कन्याव्रीडिताचतपस्विनी ॥ सत्यवत्युवाच ॥ विद्धिमांभगवन्कन्यांसदापितृवशानुगाम् ७५ त्वत्संयोगाच्चदुष्येतकन्या
भावोममाऽनघ ॥ कन्यात्वेदूषितेवाऽपिकथंशक्ष्येद्विजोत्तम ७६ गृहंगंतुमृषेचाहंधीमन्नस्थातुमुत्सहे ॥ एतत्संचिंत्यभगवन्विधत्स्वयदनंतरम् ७७ एवमुक्तवतीं
तांतुप्रीतिमानृषिसत्तमः ॥ उवाचमत्प्रियंकृत्वाकन्यैवत्वंभविष्यसि ७८ वृणीष्वचवरंभीरुयंत्वमिच्छसिभाविनि ॥ वृथाहिनप्रसादोमेभूतपूर्वःशुचिस्मिते ७९
एवमुक्तावरंवव्रेगात्रसौगंध्यमुत्तमम् ॥ सचास्यैभगवान्प्रादान्मनसःकांक्षितंभुवि ८० ततोलब्धवराप्रीतास्त्रीभावगुणभूषिता ॥ जगामसहसंसर्गमृषिणाऽद्भुतक
र्मणा ८१ तेनगंधवतीत्येवंनामास्याःप्रथितंभुवि ॥ तस्यास्तुयोजनाद्गंधमाजिघ्रंतनराभुवि ८२ तस्यायोजनगंधेतिततोनामापरंस्मृतम् ॥ इतिसत्यवती
हृष्टालब्ध्वावरमनुत्तमम् ८३ पराशरेणसंयुक्तासद्योगर्भंसुषावसा ॥ जज्ञेचयमुनाद्वीपेपाराशर्यःसवीर्यवान् ८४ समातरमनुज्ञाप्यतपस्येवमनोदधे ॥ स्मृतोऽ
हंदर्शयिष्यामिकृत्येष्वितिचसोऽब्रवीत् ८५ एवंद्वैपायनोजज्ञेसत्यवत्यांपराशरात् ॥ न्यस्तोद्वीपेसयद्बालस्तस्माद्द्वैपायनःस्मृतः ८६ पादापसारिणंधर्मंस
तुविद्वान्युगेयुगे ॥ आयुःशक्तिंचमर्त्यानांयुगावस्थामवेक्ष्यच ८७ ब्रह्मणोब्राह्मणानांचतथाऽनुग्रहकांक्षया ॥ विव्यासवेदान्यस्मात्सतस्माद्व्यासइतिस्मृतः ८८

वेतिसंबंधः ८३ । ८४ । ८५ द्वीपमेवाऽयनंन्यासस्थानंयस्यद्वीपायनः स्वार्थेतद्धितः द्वैपायनएवद्वैपायनइतिनामनिर्वक्ति न्यस्तइति ८६ पादापसारिणंयुगेयुगेपादशःक्षीयमाणं कलेरादौपादमा त्रमवशिष्टमित्यर्थः एवमायुरादिह्रासंचावेक्ष्य ८७ ब्रह्मणोवेदस्य । अनुग्रहोरक्षणं । विव्यासशाखाभेदेनविस्तारितवान् अतोव्यासइत्यपितस्यनामेत्यर्थः ८८

महाभारतपंचमानितिभारतंपंचमोवेदः सर्वश्रुतिसमूहोऽयमित्यसकृदुक्तेः इतरपुराणवदिदंनमंतव्यमित्यर्थः ८९ भारतस्यमूलभूताःसंहितामंत्रब्राह्मणरूपावेदाः तैःसुमंतुप्रभृतिभिः प्रकाशिताइदमस्य मूलमिदमस्यमूलमितिस्पष्टीकृतास्तेनप्रत्यक्षवेदमूलमेतदितिभावः ९० वसुवीर्यादष्टानांवसूनामंशात् ९१ । ९२ आहूयसमीपमानीय आहत्येतिपाठेअधिक्षिप्य ९३ । ९४ वधःपीडाऽपमानोवा ९५ ९६ । ९७ कुंतिभोजस्यकन्यायांकुंत्यां ९८ । ९९ अनादिनिधनइतिस्थूलदेहधर्मयोर्जन्ममरणयोर्व्यावृत्तिःदेवोदीप्यमानोजगत्कर्ता । किंतैजसोनप्रभुर्जीवस्यस्वप्नेऽपिजगत्कर्तृत्वाभावात् । अन्यथा स्वप्नेप्रतिकूलसृष्टयनुपपत्तिः । एतेनकर्मद्वाराऽपिजगत्कर्तृत्वंजीवस्यलांगलंगवादीनुद्वहतीतिवन्निमित्तत्वमात्रेणनत्वीश्वरत्वेनेतिदर्शितं । अव्यक्तमव्याकृतं । किंसौषुप्तंकारणं । यथोक्तं'सुषुप्ताख्यंतमोऽ ज्ञानंयद्बीजंस्वप्नबोधयोः'इतितद्व्यावर्तयतिअक्षरमितिनक्षरत्यपरिणामित्वात्ततत्सुक्षयोद्धवयुक्तं । एतेनव्यष्टिस्थूलसूक्ष्मकारणदेहत्र्यावर्तनेनत्वंपदार्थशोधउक्तः । अन्यथाभगवतिजन्मायप्रसक्तेस्त द्वारकमनादिनिधनइतिविशेषणमनुपपन्नं । तत्पदार्थमाह ब्रह्मबृहत्प्रधानंप्रधीयतेऽस्मिन्सर्वमितिलयस्थानंत्रिगुणात्मकंसत्वरजस्तमोमयं १०० अस्यसांख्याभिमतमनात्मत्वंपरिणामित्वंचवारय

वेदानध्यापयामासमहाभारतपंचमान् ॥ सुमंतुंजैमिनिंपैलंशुकंचैवस्वमात्मजम् ८९ प्रभुर्वरिष्ठोवरदोवैशंपायनमेवच ॥ संहितास्तैःपृथक्त्वेनभारतस्यप्रकाशिताः ९० तथाभीष्मःशांतनवोगंगायाममितद्युतिः ॥ वसुवीर्यात्समभवन्महावीर्योमहायशाः ९१ वेदार्थविच्चभगवानृषिर्विप्रोमहायशाः ॥ शूलेप्रोतःपुराणर्षिरचौ रश्चौरशंकया ९२ अणीमांडव्यइत्येवंविख्यातःसमहायशाः ॥ सधर्ममाहूयपुरामहर्षिरिदमुक्तवान् ९३ इषीकयामयाबाल्यादिद्धाह्येकाशकुंतिका ॥ तत्किल्बिषं स्मरेधर्मनान्यत्पापमहंस्मरे ९४ तन्मेसहस्रममितंकस्मान्नेहाजयत्तपः ॥ गरीयान्ब्राह्मणवधःसर्वभूतवधाद्यतः ९५ तस्मात्त्वंकिल्बिषीधर्मशूद्रयोनौजनिष्यसि ॥ तेनशापेनधर्मोऽपिशूद्रयोनावजायत ९६ विद्वान्विदुररूपेणधार्मीतनुरकिल्बिषी ॥ संजयोमुनिकल्पस्तुजज्ञेसूतोगवल्गणात् ९७ सूर्याच्चकुंतिकन्यायांजज्ञेकर्णो महाबलः ॥ सहजंकवचंबिभ्रत्कुंडलोद्योतिताननः ९८ अनुग्रहार्थंलोकानांविष्णुर्लोकनमस्कृतः ॥ वसुदेवात्तुदेवक्यांप्रादुर्भूतोमहायशाः ९९ अनादिनिधनोदेवःस कर्ताजगतःप्रभुः ॥ अव्यक्तमक्षरंब्रह्मप्रधानंत्रिगुणात्मकम् १०० आत्मानमव्ययंचैवप्रकृतिंप्रभवंप्रभुम् ॥ पुरुषंविश्वकर्माणंसत्वयोगंध्रुवाक्षरम् १०१

त्यात्मानमव्ययमितिविशेषणाभ्यां प्रधानत्वादेवप्रकृतिमुपादानं । प्रभवमुत्पत्तिनिमित्तं । प्रभुमधिष्ठातारं । ननुघटादेर्मृदुपादानंचक्रंनिमित्तंकुलालःकर्ता । अत्रतुत्रयमपिदेवएवेत्युक्तंतत्कथ मित्याशंक्य । तत्सृष्ट्वातदेवानुप्राविशदितिश्रुत्यर्थमाह पुरुषंपूर्षुवसतीतिपुरुषः । पुरश्च'ज्ञानेंद्रियाणिखलुपंचतथापराणिकर्मेंद्रियाणिमनआदिचतुष्टयंच । प्राणादिपंचकमथोवियदादिकंचकामश्चकर्म चतमःपुनरष्टमीपूः'इत्युक्ताः । आत्मानमेवस्वाविद्ययापूर्यष्टकाकारंकृत्वातत्रप्रविष्टइत्यर्थः एवमैश्वरींप्रवेशांतांसृष्टिमुक्त्वाजाग्रदादिविमोक्षांतांजैवींसृष्टिं 'तदनुप्रविश्यसच्चत्यच्चाभवत्'इतिश्रुत्युक्तांसं गृह्णातिविश्वकर्माणमिति विश्वंपृथिव्यप्तेजोरूपंसच्छब्दवाच्यंवाय्वाकाशादिरूपंत्यच्छब्दवाच्यंचेत्येवमादिरूपंकर्मघटादिवक्रियाफलभूतंयस्येतिविश्वकर्मातं । एवंविशेषणैरेवब्रह्मणएवजीवभावंप्रदर्श्यत न्निवृत्त्युपायमपितैरेवप्रत्याययतिसत्वयोगंसत्वेनैवधर्मज्ञानवैराग्यमूलेनयोगःप्राप्तिरस्यतं । सत्ववतोब्रह्मभावप्राप्तावालंबनमाह ध्रुवाक्षरंप्रणवाख्यवर्णस्वरूपं । वाच्यवाचकयोरभेदात्प्रणवमात्राभिरकारो कारमकारार्धमात्राभिरुपासिताभिस्तदर्थभूताविराट्सूत्रांतर्यामितुरीयाख्याःप्राप्यंतइतिभावः १०१



एतेपुकतमोमुख्यःप्राप्यइत्यतआह अनंतमिति देशतःकालतोवस्तुतश्चापरिच्छन्नंतुरीयमित्यर्थः । ननुतत्तदवस्थायांसर्वेषामानंत्यमविशिष्टमित्याशंक्याह अचलमबाधितंइतरेषांबाधोऽस्तीत्यपेक्षि कमनंतत्वमितिभावः । नन्वेवंकारणत्वादिनिषेधेशून्यमेवस्यादित्याह देवंद्योतमानंचिद्रूपमित्यर्थः । एवंतर्वकुरबीजद्वाराभुवश्चविराट्सूत्रेशद्वारातुरीयप्राप्तिमुक्त्वातत्रैवद्वारांतरमाह हंसंसंन्या साश्रमरूपं तत्रह्यविक्षेपेणश्रवणादिकंसिध्यतीतितसोऽपिद्वारं । नारायणंफलस्थानीयंपंचमंमहाविष्णुं । एतद्विग्रहध्यानद्वारैवहिविराडादिभावमारोहंतिध्यायिनः । फलगर्भेबीजानीवास्यगर्भेऽनं तानिकारणानिसंतीत्येनंतुरीयविशेषणैरेवविशिनष्टि प्रभुंप्रभवत्यस्मात्कार्यमितिजगज्जन्माधिष्ठानं । धातारंकार्यस्यसास्फूर्त्योःसमर्पकं । अजमुरगोपादानभूतरज्जुवदजातं । अव्यक्तमप्रकटं ।

अनंतमचलंदेवंहंसंनारायणंप्रभुम् ॥ धातारमजमव्यक्तंयमाहुःपरमव्ययम् १०२ कैवल्यंनिर्गुणंविश्वमनादिमजमव्ययम् ॥ पुरुषःसविभुःकर्तासर्वभूतपितामहः ३ धर्मसंवर्धनार्थायप्रजज्ञेऽन्धकवृष्णिषु ॥ अस्त्रज्ञौतुमहावीर्यौसर्वशास्त्रविशारदौ ४ सात्यकिःकृतवर्माचनारायणमनुव्रतौ ॥ सत्यकादृदिकाच्चैवजज्ञातेऽस्त्रविशार दौ ५ भरद्वाजस्यचस्कन्नंद्रोण्यांशुक्रमवर्धत ॥ महर्षेरुग्रतपसस्तस्माद्द्रोणोव्यजायत ६ गौतमान्मिथुनंजज्ञेशरस्तंबाच्छरद्वतः ॥ अश्वत्थाम्नश्चजननीकृपश्चैव महाबलः ७ अश्वत्थामाततोजज्ञेद्रोणादेवमहाबलः ॥ तथैवधृष्टद्युम्नोऽपिसाक्षादग्निसमद्युतिः ८ वैतानेकर्मणिततेपावकात्समजायत ॥ वीरोद्रोणविनाशायधनु रादायवीर्यवान् ९ तत्रैववेद्यांकृष्णाऽपिजज्ञेतेजस्विनीशुभा ॥ विभ्राजमानावपुषाबिभ्रतीरूपमुत्तमम् ११० प्रह्लादशिष्योनग्नजित्सुबलश्चाभवत्ततः ॥ तस्यप्रजा धर्महंत्रीजज्ञेदेवप्रकोपनात् ११ गांधारराजपुत्रोऽभूच्छकुनिःसौबलस्तथा ॥ दुर्योधनस्यजननीजज्ञातेऽर्थविशारदौ १२ कृष्णद्वैपायनाज्जज्ञेधृतराष्ट्रोजनेश्वरः ॥ क्षेत्रेविचित्रवीर्यस्यपांडुश्चैवमहाबलः १३ धर्मार्थकुशलोधीमान्मेधावीधूतकल्मषः ॥ विदुरःशूद्रयोनौतुजज्ञेद्वैपायनादपि १४ पांडोस्तुजज्ञिरेपंचपुत्रादेवसमाः पृथक् ॥ द्वयोःस्त्रियोर्गुणज्येष्ठस्तेषामासीद्युधिष्ठिरः १५ धर्माद्युधिष्ठिरोजज्ञेमारुताच्चवृकोदरः ॥ इंद्राद्धनंजयःश्रीमान्सर्वशस्त्रभृतांवरः १६ जज्ञातेरूपसंपन्नाव श्विभ्यांचयमावपि ॥ नकुलःसहदेवश्चगुरुशुश्रूषणेरतौ १७ तथापुत्रशतंजज्ञेधृतराष्ट्रस्यधीमतः ॥ दुर्योधनप्रभृतयोयुयुत्सुःकरणस्तथा ११८

अधिष्ठानव्यक्तौव्यस्तमेवलुप्येताऽतोऽव्यक्तं । परं आदित्यवर्णंतमसःपरस्तादित्यादयोमंत्रायंकारणात्परंप्राहुः । अतएवाव्ययंनाशबाधाभ्यांहीनं १०२ कैवल्यंकेवलमेवकैवल्यमसंगं । निर्गुणं रूपादिभिश्चक्षुरादिभिश्चहीनं । अत्रविग्रहवत्त्वात्प्रसक्तंपरिच्छिन्नत्वंकारणवत्त्वंजन्ममरणेचेतितचतुष्कंक्रमेणव्यावर्तयति विश्वमनादिमजमव्ययमिति मायिकत्वाद्विग्रहस्यनतत्कृतपरिच्छेदादयो ऽस्मिन्संभवंतीत्यर्थः । यएवंरूपोनारायणःसएवदेवकीसूनुरित्याह पुरुषइत्यादिसार्धेन सएवंभूतोऽस्त्रज्ञौरामकृष्णौजज्ञे तदुभयरूपेणजातइत्यर्थः ३ । ४ विशारदौप्रयोगकुशलौ ५ द्रोण्यांगिरिद र्यां ६ शरस्तंबाच्छरस्तंबस्कन्नाद्रेतसः ७ । ८ वैतानेत्रेताग्निसाध्ये ९ । ११० तस्यसुबलस्यप्रजापुंरूपैवशकुनिरूपा दुर्योधनमातुर्धर्मंहंतृत्वंपुत्रद्वारेव ११ । १२ । १३ प्रसं गात्पुनर्विदुरजन्मोक्तिः १४ । १५ । १६ । १७ युयुत्सुःशताधिकः । करणस्तु'वैश्यायांक्षत्रियाज्जातःकरणःपरिकीर्तितः'इतिस्मृत्युक्तः ११८

११९ । २० । २१ । २२ । २३ । २४ स्थूणोनाम्ना २५ । २६ । २७ ॥ इतिश्रादिपर्वणि नैलकंठीये भारतभावदीपे त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ यएतइति १ । २ । ३ त्रिःसप्तकृत्वएकविंशतिवारान्

ततोदुःशासनश्चैवदुःसहश्चापिभारत ॥ दुर्मर्षणोविकर्णश्चचित्रसेनोविविंशतिः ११९ जयःसत्यव्रतश्चैवपुरुमित्रश्चभारत ॥ वैश्यापुत्रोयुयुत्सुश्चएकादशमहारथाः
१२० अभिमन्युःसुभद्रायामर्जुनादभ्यजायत ॥ स्वस्रीयोवासुदेवस्यपौत्रःपांडोर्महात्मनः २१ पांडवेभ्योहिपांचाल्यांद्रौपद्यांपंचजज्ञिरे ॥ कुमारारूपसंपन्नाः
सर्वशास्त्रविशारदाः २२ प्रतिविंध्योयुधिष्ठिरात्सुतसोमोवृकोदरात् ॥ अर्जुनाच्छ्रुतकीर्तिस्तुशतानीकस्तुनाकुलिः २३ तथैवसहदेवाच्चश्रुतसेनःप्रतापवान् ॥
हिडिंबायांचभीमेनवनेजज्ञेघटोत्कचः २४ शिखंडीद्रुपदाज्जज्ञेकन्यापुत्रत्वमागता ॥ यांयक्षःपुरुषंचक्रेस्थूणःप्रियचिकीर्षया २५ कुरूणांविग्रहेतस्मिन्समागच्छ
न्बहून्यथ ॥ राज्ञांशतसहस्राणियोत्स्यमानानिसंयुगे २६ तेषामपरिमेयानांनामधेयानिसर्वशः ॥ नशक्यानिसमाख्यातुंवर्षाणामयुतैरपि ॥ एतेतुकीर्तितामु
ख्यायैराख्यानमिदंततम् १२७ ॥ इतिश्रीमहाभारते आदिपर्वणि अंशावतरणपर्वणिव्यासाद्युत्पत्तौत्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ जनमेजयउवाच ॥
यएतेकीर्तिताब्रह्मन्येचान्येनानुकीर्तिताः ॥ सम्यक्तान्श्रोतुमिच्छामिराज्ञश्चान्यान्सहस्रशः १ यदर्थमिहसंभूतादेवकल्पामहारथाः ॥ भुवितन्मेमहा
भागसम्यगाख्यातुमर्हसि २ ॥ वैशंपायनउवाच ॥ रहस्यंखल्विदंराजन्देवानामितिनःश्रुतम् ॥ तत्तुतेकथयिष्यामिनमस्कृत्वास्वयंभुवे ३ त्रिःसप्तकृत्वःपृथि
वींकृत्वानिःक्षत्रियांपुरा ॥ जामदग्न्यस्तपस्तेपेमहेंद्रेपर्वतोत्तमे ४ तदानिःक्षत्रियेलोकेभार्गवेणकृतेसति ॥ ब्राह्मणान्क्षत्रियाराजन्सुतार्थिन्योऽभिचक्रमुः ५ ता
भिःसहसमापेतुर्ब्राह्मणाःसंशितव्रताः ॥ ऋतावृतौनरव्याघ्रनकामान्नानृतौतथा ६ तेभ्यश्चलेभिरेगर्भंक्षत्रियास्ताःसहस्रशः ॥ ततःसुषुविरेराजन्क्षत्रियान्वीर्यव
त्तरान् ७ कुमारांश्चकुमारीश्चपुनःक्षत्राभिवृद्धये ॥ एवंतद्ब्राह्मणैःक्षत्रंक्षत्रियासुतपस्विभिः ८ जातंवृद्धंचधर्मेणसुदीर्घेणायुषाऽन्वितम् ॥ चत्वारोऽपिततोवर्णा
बभूवुर्ब्राह्मणोत्तराः ९ अभ्यगच्छन्नृतौनारीन्नकामान्नानृतौतथा ॥ तथैवान्यानिभूतानितिर्यग्योनिगतान्यपि १० ऋतौदारांश्चगच्छंतितत्तथाभरतर्षभ ॥ त
तोऽवर्धंतधर्मेणसहस्रशतजीविनः ११ ताःप्रजाःपृथिवीपालधर्मव्रतपरायणाः ॥ आधिभिर्व्याधिभिश्चैवविमुक्ताःसर्वशोनराः १२ अथेमांसागरापांगींगांगजेंद्रगता
खिलाम् ॥ अध्यतिष्ठत्पुनःक्षत्रंसशैलवनपत्तनाम् १३ प्रशासतिपुनःक्षत्रेधर्मेणेमांवसुंधराम् ॥ ब्राह्मणाद्यास्ततोवर्णालेभिरेमुदमुत्तमाम् १४ कामक्रोधोद्भवान्दो
षान्निरस्यचनराधिपाः ॥ धर्मेणदंडंदंड्येषुप्रणयंतोऽन्वपालयन् १५ तथाधर्मपरेक्षत्रेसहस्राक्षःशतक्रतुः ॥ स्वादुदेशेचकालेचवर्षेणापालयत्प्रजाः १६ नबालएव
म्रियतेतदाकश्चिज्जनाधिप ॥ नचस्त्रियंप्रजानातिकश्चिदप्राप्तयौवनः १७

४ । ५ । ६ । ७ । ८ ब्राह्मणोत्तराःब्राह्मणप्रधानाः ९ । १० जीविनोजीविन्यः
११ आधिभिःशोकादिभिः व्याधिभिर्ज्वरादिभिः १२ अपांगइवापांगःप्रांतःसागरांतामित्यर्थः अध्यतिष्ठदधिष्ठितवान् इेगजेंद्रगत १३ । १४ । १५ स्वादुरोचकंयथास्यात्तथा १६ । १७

१८ । १९ ब्रह्मवेदंनविक्रीणते भृतकाध्यापनंनकुर्वंतइत्यर्थः २० वैश्याःस्वयंधुरिगाबलीवर्दान्नयुंजते २१ फेनपान्अतृणादानभिलक्ष्यनदुहंतिधेनूरितिशेषः कूटमानैःकपटतुलाप्रस्थादिभिः
२३ । २४ ऋतुषुवसंतादिषुस्वस्वकाले २५ । २६ समुदितेमुदितप्रायामीत्यासहिते २७ । २८ देवत्वंराज्यंदेवभावंवा २९ । ३० । ३१ । ३२ । ३३ । । ३४ । ३५ । ३६

एवमायुष्मतीभिस्तुप्रजाभिर्भरतर्षभ ॥ इयंसागरपर्यंतासमापूर्यतमेदिनी १८ ईजिरेचमहायज्ञैःक्षत्रियाबहुदक्षिणैः ॥ सांगोपनिषदान्वेदान्विप्राश्चाधीयतेतदा १९
नचविक्रीणतेब्रह्मब्राह्मणाश्चतदानृप ॥ नचशूद्रसमभ्यासेवेदानुच्चारयंत्युत २० कारयंतःकृषिंगोभिस्तथवैश्याःक्षिताविह ॥ युंजतेधुरिनोगाश्चकृशांगांश्चाप्यजीव
यन् २१ फेनपांश्चतथावत्सान्नदुहंतिस्ममानवाः॥ नकूटमानैर्वणिजःपण्यंविक्रीणतेतदा २२ कर्माणिचनरव्याघ्रधर्मोपेतानिमानवाः ॥ धर्ममेवानुपश्यंतश्चक्रुर्धर्मपरा
यणाः २३ स्वकर्मनिरताश्चासन्सर्ववर्णानराधिप ॥ एवंतदानरव्याघ्रधर्मोनह्रसतेकचित् २४ कालेगावःप्रसूयंतेनार्यश्चभरतर्षभ ॥ भवंत्यृतुषुवृक्षाणांपुष्पाणिच
फलानिच २५ एवंकृतयुगेसम्यग्वर्तमानेतदानृप ॥ आपूर्यतमहीकृत्स्नाप्राणिभिर्बहुभिर्भृशम् २६ एवंसमुदितेलोकेमानुषेभरतर्षभ ॥ असुराजज्ञिरेक्षेत्रेराज्ञांतुम
नुजेश्वर २७ आदित्यैर्हितदादैत्याबहुशोनिर्जितायुधि ॥ ऐश्वर्याद्भ्रंशिताःस्वर्गात्संबभूवुःक्षिताविह २८ इहदेवत्वमिच्छंतोमानुषेषुमनस्विनः ॥ जज्ञिरेभुविभूते
षुतेषुतेष्वसुराविभो २९ गोष्वश्वेषुचराजेंद्रखरोष्ट्रमहिषेषुच ॥ क्रव्यात्सुचैवभूतेषुगजेषुचमृगेषुच ३० जातैरिहमहीपालजायमानैश्चतैर्मही ॥ नशशाकात्मना
ऽऽत्मानमियंधारयितुंधरा ३१ अथजातामहीपालाःकेचिद्बहुमदान्विताः ॥ दितेःपुत्रादनोश्चैवतदालोकादिहाऽच्युताः ३२ वीर्यवंतोऽवलिप्तास्तेनानारूपधरा
महीं ॥ इमांसागरपर्यंतांपरीयुररिमर्दनाः ३३ ब्राह्मणान्क्षत्रियान्वैश्यान्शूद्रांश्चैवाप्यपीडयन् ॥ अन्यानिचैवसत्वानिपीडयामासुरोजसा ३४ त्रासयंतोऽभिनि
घ्नंतःसर्वभूतगणांश्चते ॥ विचेरुःसर्वशोराजन्महींशतसहस्रशः ३५ आश्रमस्थान्महर्षींश्चधर्षयंतस्ततस्ततः ॥ अब्रह्मण्यावीर्यमदामत्तामदबलेनच ३६ एवंवीर्य
बलोत्सिक्तैर्भूरियत्नैर्महासुरैः ॥ पीड्यमानामहीराजन्ब्रह्माणमुपचक्रमे ३७ नह्यमींभूतसत्वौघाःपन्नगाःसनगांमहीम् ॥ तदाधारयितुंशेकुःसंक्रांतांदानवैर्बलात्
३८ ततोमहीमहीपालभारार्त्ताभयपीडिता ॥ जगामशरणंदेवंसर्वभूतपितामहम् ३९ सासंवृतंमहाभागैर्देवद्विजमहर्षिभिः ॥ ददर्शदेवंब्रह्माणंलोककर्तारमव्ययम्
४० गंधर्वैरप्सरोभिश्चदेवकर्मसुनिष्ठितैः ॥ वंद्यमानंमुदोपेतैर्ववंदेचैनमेत्यसा ४१ अथविज्ञापयामाससूभूमिस्तंशरणार्थिनी ॥ सन्निधौलोकपालानांसर्वेषामेव
भारत ४२ तत्प्रधानात्मनस्तस्यभूमेःकृत्यंस्वयंभुवः ॥ पूर्वमेवाभवद्राजन्विदितंपरमेष्ठिनः ४३

महीउपचक्रमेगंतुमितिशेषः महाराजेतिपाठांतरेतुमहीतिशेषः ३७ नह्यमीइति भूतसत्वौघाः भूतानांशेषकूर्मदिग्गजानांधराभूतांसत्वौघाबलसंघाः पन्नगाःशेषाः बहुवचनंतेषांप्रत्येकंबहूनाम
प्यसामर्थ्यंकिंपुनरेकैकस्येतिसूचनार्थं । नह्येनामितिपाठेएनांबुद्धिस्थांभूमिं ३८ । ३९ अव्ययमजरत्वादपक्षयशून्यं ४० एनंब्रह्माणं सापृथ्वी ४१ । ४२ तद्भूमेःकृत्यं प्रधानात्मनःप्रधानजयी
आत्मामनोयस्यतस्य सांख्ययोगानांहिप्रधानजयिनःसर्वज्ञत्वंसर्वशक्तित्वंचभवतीतिप्रसिद्धं सर्वज्ञस्यनाविदितंकिंचिदस्तीत्यर्थः प्रधानात्मनःकारणात्मनस्तद्भूमेःकृत्यमितिवाऽर्थः ४३

ज्ञानिनस्ततआधिक्यमाह पापानामितियस्तुमानवोज्ञानीनित्यमविनाशिवस्तुब्रह्माख्यंविभूयात्त्वमसीतिशास्त्रात्प्रत्यगात्मत्वेनावधारयेत्सपापानांकर्मणां कर्मणिषष्ठी तानिसुखेयथेष्टचामरन्नपि मुच्यतएवेत्यर्थः । नलिप्यतेकर्मणापापकेनहत्वाऽपिसइमाल्लोकान्नहंतिननिबध्यते'इत्यादिशास्त्रात् ४ इदंपदमप्राप्तोमोक्षेच्छयाधर्ममेवसेवेतेत्याह तद्वाइति यःपुरुषोऽनर्थबुद्धिर्नास्त्यर्थेमोक्षेबुद्धिर्यस्यसतथाभूतःसन्स्वर्गाद्यर्थंधर्मंसेवते । तत्सेवनंनृशंसमसत्यंचमुमुक्षाहीनत्वादनित्यफलत्वाच । विविदिषंतियज्ञेनदानेनेत्यादिश्रुतिसिद्धंधर्मस्यमोक्षहेतुत्वंपरित्यज्यकाम्यधर्मंकृतआत्मानंनानादुःखमयेसंसारेपातयित्वाघ्नंतीत्यर्थः । एवमनीशस्याजितेंद्रियस्यार्थोधनमपिनृशंसमसत्यंच । यत्तुमोक्षार्थंकर्मकरणंतदार्जवंकर्मणामुचितंफलं । तदेवसमाधिर्योगसिद्धिमूलं । तदार्यंतदेवगम्यंप्राप्यंज्ञानसाधनमित्यर्थः । ऋगतौअस्मात्ऋहलोर्ण्यत् । द्वयोरपियोगज्ञानमार्गयोर्मूलंनिष्कामधर्मएवेत्यर्थः ५ केनकतरस्यांदिशिप्रहितोऽसीत्यन्वयः ६ विप्रहीणश्च्युतः । उक्त्वाआपृच्छ्य । वोयुष्मान् ७ । ८

पापानांकर्मणांनित्यंबिभ्यायद्यस्तुमानवः ॥ सुखमप्याचरन्नित्यंसोऽत्यंतंसुखमेधते ४ तद्वैनृशंसंतदसत्यमाहुर्यःसेवतेधर्ममनर्थबुद्धिः ॥ अर्थोऽप्यनीशस्यतथैव राजंस्तदार्जवंससमाधिस्तदार्यम् ५ ॥ अष्टकउवाच ॥ केनासिदूतःप्रहितोऽसिराजन्युवास्रग्वीदर्शनीयःसुवर्चाः ॥ कुतआयातःकतरस्यांदिशित्वमुताहो स्वित्पार्थिवंस्थानमस्ति ६ ॥ ययातिरुवाच ॥ इमंभौमंनरकंक्षीणपुण्यःप्रवेष्टुमुर्वींगगनाद्विप्रहीणः ॥ उक्त्वाऽहंवःप्रपतिष्याम्यनंतरंत्वरंतिमांलोकपाब्राह्मणाये ७ सतांसकाशेतुवृतःप्रपातस्तेसंगतागुणवंतस्तुसर्वे ॥ शक्राच्चलब्धोहिवरोमयैषपतिष्यताभूमितलंनरेंद्र ८ ॥ अष्टकउवाच ॥ पृच्छामित्वांमाप्रपतप्रपातंयदि लोकाःपार्थिवसंतिमेऽत्र ॥ यद्यंतरिक्षेयदिवादिविस्थिताःक्षेत्रज्ञंत्वांतस्यधर्मस्यमन्ये ९ ॥ययातिरुवाच॥ यावत्पृथिव्यांविहितंगवाश्वंसहारण्यैःपशुभिःपार्वतैश्च॥ तावल्लोकादिवितेसंस्थितावैतथाविजानीहिनरेंद्रसिंह १० ॥ अष्टकउवाच ॥ तांस्तेददामिमाप्रपतप्रपातंयेमेलोकादिविराजेंद्रसंति ॥ यद्यंतरिक्षेयदिवादिविश्रिता स्तानाक्रमक्षिप्रमपेतमोहः ११ ॥ ययातिरुवाच ॥ नास्मद्विधोब्राह्मणोब्रह्मविच्चप्रतिग्रहेवर्ततेराजमुख्य ॥ यथाप्रदेयंसततंद्विजेभ्यस्तथाऽददंपूर्वमहंनरेंद्र १२ नाब्राह्मणःकृपणोजातुजीवेद्याच्ञाऽपिस्याद्ब्राह्मणीवीरपत्नी ॥ सोऽहंनैवाकृतपूर्वंचरेयंविधित्समानःकिमुतत्रसाधु १३ ॥ प्रतर्दनउवाच ॥ पृच्छामित्वांस्पृहणी यरूपप्रतर्दनोऽहंयदिमेसंतिलोकाः ॥ यद्यंतरिक्षेयदिवादिविश्रिताःक्षेत्रज्ञंत्वांतस्यधर्मस्यमन्ये १४ ॥ ययातिरुवाच ॥ संतिलोकाबहवस्तेनरेंद्रअप्येकैकः सप्तसप्ताप्यहानि ॥ मधुच्युतोघृतपृक्ताविशोकास्तेनांतवंतःप्रतिपालयंति १५ ॥ प्रतर्दनउवाच ॥ तांस्तेददानिमाप्रपतप्रपातंयेमेलोकास्तवतेवैभवंतु ॥ यद्यंतरिक्षेयदिवादिविश्रितास्तानाक्रमक्षिप्रमपेतमोहः १६

प्रपातंपतित्वामाप्रपतपातंमाप्राप्नुहीत्यर्थः । कपादित्वादनुप्रयोगःसमूलघातंन्यवधीदरींश्चेत्यादिवत् । लोकाभोग्यविषयाः । दिविमेरुपृष्ठे । अंतरिक्षेनक्षत्रमंडलादौ । क्षेत्रंसिद्धंस्थानंतदभिज्ञं ९ १० आक्रमआक्रमस्व ११ ब्राह्मणोऽपिब्रह्मविद्वेदविदेवप्रतिग्रहेवर्तेतनत्वन्यः अस्मद्विधस्तुनैववर्तेतेत्यर्थः १२ कृपणोयाञ्चादैन्ययुक्तः । वीरस्यविद्ययादिग्विजयिनःपत्नी । तत्रकर्मभूमौसाधु सत्कर्मविधित्समानःकर्तुमिच्छन्किमुकथंचरेयंनैवकुर्यामित्यर्थः । विवित्समानइतिपाठेतत्रसर्गेसाधुर्लब्धुमिच्छन् १३ । १४ प्रत्येकंसप्तसप्ताप्यहानिसेविताःसंतोनांतवंतः । मधुच्युतः सुखस्रवाः घृतपृक्तास्तेजोयुक्ताः । तेत्वांप्रतिपालयंतिप्रतीक्षंते १५ । १६

नृशंसंनिंद्यं १७ । १८ अन्यैराजभिर्यत्प्रतिग्रहाख्यंनकृतंतदपूर्वंप्रथममहमेवकथंकुर्यामितिभावः १९ ॥ इति आदिपर्वणि नैलकंठीये भारतभावदीपे द्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ ९३ ॥ पृच्छामीति १ यत्प्रान् तपतेप्रकाशयति २ । ३ शिशुकात्शिशुमारप्रधानात्कालचक्रात्शंकमानः । 'अहश्चरात्रिश्चउभेचसंध्येधर्मश्चजानातिनरस्यवृत्तं'इत्युक्तेः । मिथ्याक्रियात्मकंकापट्यं

॥ ययातिरुवाच ॥ नतुल्यतेजाःसुकृतंकामयेतयोगक्षेमंपार्थिवपार्थिवःसन् ॥ दैवादेशादापदंप्राप्यविद्वांश्चरेन्नृशंसंनहिजातुराजा १७ धर्म्यंमार्गंयतमानोयश स्यंकुर्यान्नृपोधर्ममवेक्षमाणः ॥ नमद्विधोधर्मबुद्धिःप्रजानन्कुर्यादेवंकृपणंमांयथाऽऽत्थ १८ कुर्यादपूर्वंनकृतंयदन्यैर्विधित्समानःकिमुतत्रसाधु ॥ ब्रुवाणमेवंनृप तिंययातिंनृपोत्तमोवसुमानब्रवीत्तम् १९ ॥ इति श्रीमहाभारते आदिपर्वणि संभवपर्वणि उत्तरयायाते द्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ वसुमानुवाच ॥ पृच्छामित्वांवसुमानौषदश्विर्यद्यस्तिलोकोदिविमेनरेंद्र ॥ यद्यंतरिक्षेप्रथितोमहात्मन्क्षेत्रज्ञंत्वांतस्यधर्मस्यमन्ये १ ॥ ययातिरुवाच ॥ यदंतरिक्षंपृथिवीदि शश्चयत्तेजसातपतेभानुमांश्च ॥ लोकास्तावंतोदिविसंस्थितावैतेनांतवंतःप्रतिपालयंति २ ॥ वसुमानुवाच ॥ तांस्तेददानिमाप्रपतप्रपातंयेमेलोकास्तवतेवैभ वंतु ॥ क्रीणीष्वैतांस्तृणकेनापिराजन्प्रतिग्रहस्तेयदिधीमन्प्रदुष्टः ३ ॥ ययातिरुवाच ॥ नामिथ्याऽहंविक्रयंवैस्मरामिवृथागृहीतंशिशुकाच्छंकमानः ॥ कुर्यां नचैवाकृतपूर्वमन्यैर्विधित्समानःकिमुतत्रसाधु ४ ॥ वसुमानुवाच ॥ तांस्त्वंलोकान्प्रतिपद्यस्वराजन्मयादत्तान्यदिनेष्टःक्रयस्ते ॥ अहंनतान्वैप्रतिगंतानरेंद्र सर्वेलोकास्तवतेवैभवंतु ५ ॥ शिबिरुवाच ॥ पृच्छामित्वांशिबिरौशीनरोऽहंममापिलोकायदिसंतीहतात ॥ यद्यंतरिक्षेयदिवादिविश्रिताःक्षेत्रज्ञंत्वांतस्यधर्मस्यम न्ये ६ ॥ ययातिरुवाच ॥ यत्त्वंवाचाहृदयेनापिसाधून्परीप्समानान्नावमंस्थानरेंद्र ॥ तेनानंतादिविलोकाःश्रितास्तेविद्युद्रूपाःस्वनवंतोमहांतः ७ ॥ शिबि रुवाच ॥ तांस्त्वंलोकान्प्रतिपद्यस्वराजन्मयादत्तान्यदिनेष्टःक्रयस्ते ॥ नचाहंतान्प्रतिपत्स्येहदत्त्वायत्रगत्वानानुशोचंतिधीराः ८ ॥ ययातिरुवाच ॥ यथा त्वमिंद्रप्रतिमप्रभावस्तेचाप्यनंतानरदेवलोकाः ॥ तथाऽद्यलोकेनरमेऽन्यदत्तेतस्माच्छिबेनाभिनंदामिदेयम् ९ ॥ अष्टकउवाच ॥ नचेदेकैकशोराजँल्लोकान्नःप्र तिनंदसि ॥ सर्वेप्रदायभवतेगंतारोनरकंवयम् १० ॥ ययातिरुवाच ॥ यदर्होऽहंतद्यतध्वंसंतःसत्याभिनंदिनः ॥ अहंतन्नाभिजानामियत्कृतंनमयापुरा ११ ॥ अष्टकउवाच ॥ कस्यैतेप्रतिदृश्यंतेरथाःपंचहिरण्मयाः ॥ यानारुह्यनरोलोकानभिवांछतिशाश्वतान् १२ ॥ ययातिरुवाच ॥ युष्मानेतेवहिष्यंतिरथाः पंचहिरण्मयाः ॥ उच्चैःसंतःप्रकाशंतेज्वलंतोऽग्निशिखाइव १३ ॥ अष्टकउवाच ॥ आतिष्ठस्वरथान्राजन्विक्रमस्वविहायसम् ॥ वयमप्यनुयास्यामोयदाका लोभविष्यति १४ ॥ ययातिरुवाच ॥ सर्वैरिदानींगंतव्यंसहस्वर्गजितोवयम् ॥ एषनोविरजःपंथादृश्यतेदेवसद्मनः १५

दुस्तरमितिभावः । 'शिशुकःशिशुमारेस्यात्'इतिमेदिनी । शिशुकान्मंदबालकादितिवा ४ । ५ । ६ परीप्समानान्याचकान् नावमंस्थानावमानंकृतवानसि स्वनवंतःप्रख्याताइत्यर्थः ७ । ८ ९ गंतारोमृत्वाप्राप्स्यामः नरकंभूलोकं १० यतध्वंकर्तुं नाभिजानामिनांगीकरोमि ११ । १२ प्रकाशंतेदृश्यंते । ज्वलंतोदीप्यमानाः १३ । १४ । १५

१६ । १७ देवयानायब्रह्मलोकमार्गमाप्तयेयावत्सर्वस्वमददत्सर्वत्यागीत्यर्थः अन्येपितृयानेनैवगताइत्यर्थोऽर्थोज्ञेयं १८ सौम्यमक्रूरत्वं विधित्सापालनेच्छा १९ सत्यमेवश्रेयःसाधनमितिविधातुं
पूर्वोक्तप्रश्नोत्तरेअनुवदति अथाष्टकइत्यादिना २० । २१ प्रकाशंप्रागुक्तमपिस्पष्टतरं २२ छादनंजीविकात्वेनपरिधानं अतीतफलत्वादस्यधर्मस्यस्वमुखेनकीर्तनेनदोषः । अन्यथाधर्मःक्षरतिकीर्तनादि

॥ वैशंपायनउवाच ॥ तेऽधिरुह्यरथान्सर्वेप्रयातान्नृपसत्तमाः ॥ आक्रमंतोदिवंभाभिर्धर्मेणावृत्यरोदसी १६ ॥ अष्टकउवाच ॥ अहंमन्येपूर्वमेकोऽस्मिगंतास
खाचेंद्रःसर्वथामेमहात्मा ॥ कस्मादेवंशिबिरौशीनरोऽयमेकोऽत्यगात्सर्ववेगेनवाहान् १७ ॥ ययातिरुवाच ॥ अददद्देवयानाययावद्वित्तमविंदत ॥ उशीनरस्य
पुत्रोऽयंतस्माच्छ्रेष्ठोहिवःशिबिः १८ दानंतपःसत्यमथाऽपिधर्मोन्हीःश्रीःक्षमासौम्यमथोविधित्सा ॥ राजन्नेतान्यप्रमेयाणिराज्ञःशिबेःस्थितान्यप्रतिमस्यबुद्ध्या
१९ एवंवृत्तोन्हीनिषेवश्चयस्मात्तस्माच्छिबिरत्यगाद्वैरथेन ॥ वैशंपायनउवाच ॥ अथाष्टकःपुनरेवान्वपृच्छन्मातामहंकौतुकेनेंद्रकल्पम् २० पृच्छामित्वां
नृपतेब्रूहिसत्यंकुतश्चकश्चासिसुतश्चकस्य ॥ कृतंत्वयायद्धिनतस्यकर्तालोकेत्वदन्यःक्षत्रियोब्राह्मणोवा २१ ॥ ययातिरुवाच ॥ ययातिरस्मिनहुषस्यपुत्रःपूरोः
पितासार्वभौमस्त्विहासम् ॥ गुह्यंचार्थंमामकेभ्योब्रवीमिमातामहोहंभवतांप्रकाशम् २२ सर्वामिमांपृथिवींनिर्जिगायप्रादामहंछादनंब्राह्मणेभ्यः ॥ मेध्यानश्वाने
कशतान्सुरूपांस्तदादेवाःपुण्यभाजोभवंति २३ अदामहंपृथिवींब्राह्मणेभ्यःपूर्णामिमामखिलांवाहनेन ॥ गोभिःसुवर्णेनधनैश्चमुख्यैस्तदाऽददंगाःशतमर्बुदानि
२४ सत्येनमेद्यौश्चवसुंधराचतथैवाग्निर्ज्वलतेमानुषेषु ॥ नमेवृथाव्याहृतमेववाक्यंसत्यंहिसंतःप्रतिपूजयंति २५ यदष्टकप्रब्रवीमीहसत्यंप्रतर्दनंचौपदश्वितथैव ॥
सर्वेचलोकामुनयश्चदेवाःसत्येनपूज्याइतिमेमनोगतम् २६ योनःस्वर्गजितःसर्वान्यथावृत्तंनिवेदयेत् ॥ अनसूयुर्द्विजाग्र्येभ्यःसलभेन्नःसलोकताम् २७
॥ वैशंपायनउवाच ॥ एवंराजासमहात्माह्यतीवस्वैर्दौहित्रैस्तारितोमित्रसाहः ॥ त्यक्त्वामहींपरमोदारकर्मास्वर्गंगतःकर्मभिर्व्याप्यपृथ्वीम् २८ ॥ इति श्रीम
हाभारते आदिपर्वणि संभवपर्वणि उत्तरयायातसमाप्तौत्रिनवतितमोऽध्यायः ॥ ९३ ॥ ॥ जनमेजयउवाच ॥ भगवन्श्रोतुमिच्छामिपूरोर्वंशकरान्नृपान् ॥
यद्वीर्यान्यादृशांश्चापियावतोयत्पराक्रमान् १ नह्यस्मिन्शीलहीनोवानिर्वीर्योवानराधिपः ॥ प्रजाविरहितोवाऽपिभूतपूर्वःकथंचन २ तेषांप्रथितवृत्तानांराज्ञांवि
ज्ञानशालिनाम् ॥ चरितंश्रोतुमिच्छामिविस्तरेणतपोधन ३ ॥ वैशंपायनउवाच ॥ हंततेकथयिष्यामियन्मांत्वंपरिपृच्छसि ॥ पूरोर्वंशधरान्वीरान्छक्रप्रतिम
तेजसः ॥ भूरिद्रविणविक्रांतान्सर्वलक्षणपूजितान् ४ प्रवीरेश्वररौद्राश्वास्त्रयःपुत्रामहारथाः ॥ पूरोःपौष्टयामजायंतप्रवीरोवंशकृत्ततः ५ मनस्युरभवत्तस्माच्छू
रसेनीसुतःप्रभुः ॥ पृथिव्याश्चतुरंतायागोप्ताराजीवलोचनः ६ शक्तःसंहननोवाग्मीसौवीरीतनयास्त्रयः ॥ मनस्योरभवन्पुत्राःशूराःसर्वेमहारथाः ७ 

त्युक्तेरश्रेयसेस्यात् । प्रस्थेदत्वाविपिर्नंब्राह्मणेभ्यइतिपाठेब्राह्मणेभ्योदत्वाविपिर्नंवनंप्रस्थेमतस्थेऽहंप्रस्थानंकृतवानस्मि अभ्यासलोपआर्षः । मेध्यानश्वान्यदादेवेभ्यउत्सृजतितदादेवास्तंपुण्यवंतं
भजंतीत्यर्थः २३ । २४ । २५ । २६ । २७ । २८ ॥ इतिआदिपर्वणिनी०भारतभावदीपे त्रिनवतितमोऽध्यायः ॥ ९३ ॥ भगवन्निति १ । २ । ३ । ४ । ५ चतुरंतायाश्चतुःसमुद्रावच्छिन्नायाः ६।७

८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० वितथेविगतस्तथाभावोजनकसादृश्यंयत्रतत्तादृशंपुत्रजन्म २१ । २२ । २३ । २४ । २५ सवैःसवसंज्ञैर्यज्ञैः २६ । २७

अन्वग्भानुप्रभृतयोमिश्रकेश्यांमनस्विनः ॥ रौद्राश्वस्यमहेष्वासादशाप्सरसिसूनवः ८ यज्वानोजज्ञिरेशूराःप्रजावंतोबहुश्रुताः ॥ सर्वेसर्वास्त्रविद्वांसःसर्वेधर्मपरा
यणाः ९ ऋचेयुरथकक्षेयुःकृकणेयुश्चवीर्यवान् ॥ स्थंडिलेयुर्वनेयुश्चजलेयुश्चमहायशाः १० तेजेयुर्बलवान्धीमान्सत्येयुश्चेंद्रविक्रमः ॥ धर्मेयुःसन्नतेयुश्चदशमोदे
वविक्रमः ११ अनाधृष्टिरभूत्तेषांविद्वान्भुवितथैकराट् ॥ ऋचेयुरथविक्रांतोदेवानामिववासवः १२ अनाधृष्टिसुतस्त्वासीद्राजसूयाश्वमेधकृत् ॥ मतिनारइति
ख्यातोराजापरमधार्मिकः १३ मतिनारसुताराजंश्चत्वारोऽमितविक्रमाः ॥ तंसुर्महानतिरथोद्रुह्युश्चाप्रतिमद्युतिः १४ तेषांतंसुर्महावीर्यःपौरववंशमुद्वहन् ॥ आ
जहारयशोदीप्तंजिगायचवसुंधराम् १५ ईलिनंतुसुतंतंसुर्जनयामासवीर्यवान् ॥ सोऽपिकृत्स्नामिमांभूमिंविजिग्येजयतांवरः १६ रथंतर्यांसुतान्पंचपंचभूतोपमां
स्ततः ॥ ईलिनोजनयामासदुष्यंतप्रभृतीन्नृपान् १७ दुष्यंतंशूरभीमौचप्रवसुंवसुमेवच ॥ तेषांश्रेष्ठोभवद्राजादुष्यंतोजनमेजय १८ दुष्यंताद्भरतोजज्ञेविद्वान्शा
कुंतलोनृपः ॥ तस्माद्भरतवंशस्यविप्रतस्थेमहद्यशः १९ भरतस्तिसृषुस्त्रीषुनवपुत्रानजीजनत् ॥ नाभ्यनंदततान्राजानानुरूपाममेत्युत २० ततस्तान्मातरः
क्रुद्धाःपुत्रान्निन्युर्यमक्षयम् ॥ ततस्तस्यनरेंद्रस्यवितथंपुत्रजन्मतत् २१ ततोमहद्भिःक्रतुभिरीजानोभरतस्तदा ॥ लेभेपुत्रंभरद्वाजाद्भुमन्युंनामभारत २२ ततः
पुत्रिणमात्मानंज्ञात्वापौरवनंदनः ॥ भुमन्युंभरतश्रेष्ठयौवराज्येऽभ्यषेचयत् २३ ततोदिविरथोनामभुमन्योरभवत्सुतः ॥ सुहोत्रश्चसुहोताचसुहविःसुयजुस्तथा
२४ पुष्करिण्यामृचीकश्चभुमन्योरभवन्सुताः ॥ तेषांज्येष्ठःसुहोत्रस्तुराज्यमापमहीक्षिताम् २५ राजसूयाश्वमेधाद्यैःसोऽयजद्बहुभिःसवैः ॥ सुहोत्रःपृथिवींकृ
त्स्नांबुभुजेसागरांबराम् २६ पूर्णांहस्तिगवाश्वैश्चबहुरत्नसमाकुलाम् ॥ ममज्जेवमहीतस्यभूरिभारावपीडिता २७ हस्त्यश्वरथसंपूर्णामनुष्यकलिलाभृशम् ॥ सु
होत्रेराजनितदाधर्मतःशासतिप्रजाः २८ चैत्ययूपांकिताचासीद्भूमिःशतसहस्रशः ॥ प्रवृद्धजनसस्याचसर्वदेवव्यरोचत २९ ऐक्ष्वाकीजनयामाससुहोत्रात्पृथिवीप
तेः ॥ अजमीढंसुमीढंचपुरुमीढंचभारत ३० अजमीढोवरस्तेषांतस्मिन्वंशःप्रतिष्ठितः ॥ षट्पुत्रान्सोऽप्यजनयत्तिसृषुस्त्रीषुभारत ३१ ऋक्षंधूमिन्यथानीलीदु
ष्यंतपरमेष्ठिनौ ॥ केशिन्यजनयज्जन्हुंसुतौव्रजनरूपिणौ ३२ तथेमेसर्वपंचालादुष्यंतपरमेष्ठिनोः ॥ अन्वयाःकुशिकाराजन्जन्होरमिततेजसः ३३ व्रजनरूपि
णयोर्ज्येष्ठमृक्षमाहुर्जनाधिपम् ॥ ऋक्षात्संवरणोजज्ञेराजन्वंशकरःसुतः ३४ आर्क्षेसंवरणेराजन्प्रशासतिवसुंधराम् ॥ संक्षयःसुमहानासीत्प्रजानामितिनःश्रुतम्
३५ व्यशीर्यतततोराष्ट्रंक्षयैर्नानाविधैस्तदा ॥ क्षुन्मृत्युभ्यामनावृष्ट्याव्याधिभिश्चसमाहतम् ३६ अभ्यघ्नन्भारतांश्चैवसपत्नानांबलानिच ॥ चालयन्वसुधां
चेमांबलेनचतुरंगिणा ३७ अभ्ययात्तंचपांचाल्योविजित्यतरसामहीम् ॥ अक्षौहिणीभिर्दशभिःसएनंसमरेजयत् ३८

२८ । २९ । ३० । ३१ । ३२ । ३३ व्रजनरूपिणयोरित्यक्षराधिक्यमार्षं ३४ आर्क्षेऋक्षपुत्रे ३५ क्षयैर्नाशहेतुभिःक्षुत्प्रभृतिभिः ३६ । ३७ अभ्ययात्संवरणं एनंसंवरणमेव ३८

१६ । १७ देवयानायब्रह्मलोकमार्गेप्राप्तयेयावत्सर्वस्वमददत्सर्वत्यागीत्यर्थः अन्येपितृयानेनैवगताइत्यर्थोज्ञेयः १८ सौम्यमक्रूरत्वं विधित्साप्रालनेच्छा १९ सत्यमेवश्रेयःसाधनमितिविधातुं
पूर्वोक्तप्रश्नोत्तरेअनुवदति अथाष्टकइत्यादिना २० । २१ प्रकाशंप्रागुक्तमपिस्पष्टतरं २२ छाद्मंजीविकात्वेनपरिधानं अतीतफलत्वादस्यधर्मस्यस्वमुखेनकीर्तनेनदोषः । अन्यथाधर्मःक्षरतिकीर्तनादि

॥ वैशंपायनउवाच ॥ तेऽधिरुह्यरथान्सर्वेप्रयातान्नृपसत्तमाः ॥ आक्रमंतोदिवंभाभिर्धर्मेणावृत्यरोदसी १६ ॥ अष्टकउवाच ॥ अहंमन्येपूर्वमेकोऽस्मिगंतास
खाचेंद्रःसर्वथामेमहात्मा ॥ कस्मादेवंशिबिरौशीनरोऽयमेकोऽत्यगात्सर्ववेगेनवाहान् १७ ॥ ययातिरुवाच ॥ अददद्देवयानाययावद्वित्तमविंदत ॥ उशीनरस्य
पुत्रोऽयंतस्माच्छ्रेष्ठोहिवःशिबिः १८ दानंतपःसत्यमथाऽपिधर्मोन्हीःश्रीःक्षमासौम्यमथोविधित्सा ॥ राजन्नेतान्यप्रमेयाणिराज्ञःशिबेःस्थितान्यप्रतिमस्यबुद्ध्या
१९ एवंवृत्तोन्हीनिषेवश्चयस्मात्तस्माच्छिबिरत्यगाद्वैरथेन ॥ वैशंपायनउवाच ॥ अथाष्टकःपुनरेवान्वपृच्छन्मातामहंकौतुकेनेंद्रकल्पम् २० पृच्छामित्वां
नृपतेब्रूहिसत्यंकुतश्चकश्चासिसुतश्चकस्य ॥ कृतंत्वयायद्धिनतस्यकर्तालोकेत्वदन्यःक्षत्रियोब्राह्मणोवा २१ ॥ ययातिरुवाच ॥ ययातिरस्मिनहुषस्यपुत्रःपूरोः
पितासार्वभौमस्त्विहासम् ॥ गुह्यंचार्थंमामकेभ्योब्रवीमिमातामहोहंभवतांप्रकाशम् २२ सर्वामिमांपृथिवींनिर्जिगायप्रादामहंछादनंब्राह्मणेभ्यः ॥ मेध्यानश्वाने
कशतान्सुरूपांस्तदादेवाःपुण्यभाजोभवंति २३ अदामहंपृथिवींब्राह्मणेभ्यःपूर्णामिमामखिलांवाहनेन ॥ गोभिःसुवर्णेनधनैश्चमुख्यैस्तदाऽददंगाःशतमर्बुदानि
२४ सत्येनमेद्यौश्चवसुंधराचतथैवाग्निर्ज्वलतेमानुषेषु ॥ नमेवृथाव्याहृतमेववाक्यंसत्यंहिसंतःप्रतिपूजयंति २५ यदष्टकप्रब्रवीमीहसत्यंप्रतर्दनंचौपदश्वितथैव ॥
सर्वेचलोकामुनयश्चदेवाःसत्येनपूज्याइतिमेमनोगतम् २६ योनःस्वर्गजितःसर्वान्यथावृत्तंनिवेदयेत् ॥ अनसूयुर्द्विजाग्र्येभ्यःसलभेन्नःसलोकताम् २७
॥ वैशंपायनउवाच ॥ एवंराजासमहात्माह्यतीवस्वैर्दौहित्रैस्तारितोमित्रसाहः ॥ त्यक्त्वामहींपरमोदारकर्मास्वर्गंगतःकर्मभिर्व्याप्यपृथ्वीम् २८ ॥ इति श्रीम
हाभारते आदिपर्वणि संभवपर्वणि उत्तरयायातसमाप्तौत्रिनवतितमोऽध्यायः ॥ ९३ ॥ ॥ जनमेजयउवाच ॥ भगवन्श्रोतुमिच्छामिपूरोर्वंशकरान्नृपान् ॥
यद्वीर्यान्याद्दशांश्चापियावतोयत्पराक्रमान् १ नह्यस्मिन्शीलहीनोवानिर्वीर्योवानराधिपः ॥ प्रजाविरहितोवाऽपिभूतपूर्वःकथंचन २ तेषांप्रथितवृत्तानांराज्ञांवि
ज्ञानशालिनाम् ॥ चरितंश्रोतुमिच्छामिविस्तरेणतपोधन ३ ॥ वैशंपायनउवाच ॥ हंततेकथयिष्यामियन्मांत्वंपरिपृच्छसि ॥ पूरोर्वंशधरान्वीराञ्छक्रप्रतिम
तेजसः ॥ भूरिद्रविणविक्रांतान्सर्वलक्षणपूजितान् ४ प्रवीरेश्वररौद्राश्वास्त्रयःपुत्रामहारथाः ॥ पूरोःपौष्ट्यामजायंतप्रवीरोवंशकृत्ततः ५ मनस्युरभवत्तस्माच्छू
रसेनीसुतःप्रभुः ॥ पृथिव्याश्चतुरंतायागोप्ताराजीवलोचनः ६ शक्तःसंहननोवाग्मीसौवीरीतनयास्त्रयः ॥ मनस्योरभवन्पुत्राःशूराःसर्वेमहारथाः ७ ॥ ९९ ॥

त्युक्तेरश्रेयसेस्यात् । प्रस्थेदत्वाविपिनंब्राह्मणेभ्यइतिपाठेब्राह्मणेभ्योदत्वाविपिनंवनंप्रस्थेमतस्थेऽहंप्रस्थानंकृतवानस्मि अभ्यासलोपआर्षः । मेध्यानश्वान्यदादेवेभ्यउत्सृजतितदादेवास्तंपुण्यवंतं
भजंतीत्यर्थः २३ । २४ । २५ । २६ । २७ । २८ ॥ इतिआदिपर्वणिनी०भारतभावदीपे त्रिनवतितमोऽध्यायः ॥ ९३ ॥ भगवन्निति १ । २ । ३ । ४ । ५ चतुरंतायाश्चतुःसमुद्रावच्छिन्नायाः ६।७

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० वितथंविगतस्तथाभावोजनकसादृश्यंयत्रतत्ताद्दशंपुत्रजन्म २१ । २२ । २३ । २४ । २५ सवैःसवसंज्ञैर्यज्ञैः २६ । २७

अन्वग्भानुप्रभृतयोमिश्रकेश्यांमनस्विनः ॥ रौद्राश्वस्यमहेष्वासादशाप्सरसिसूनवः ८ यज्वानोजज्ञिरेशूराःप्रजावंतोबहुश्रुताः ॥ सर्वेसर्वास्त्रविद्वांसःसर्वेधर्मपरा
यणाः ९ ऋचेयुरथकक्षेयुःकृकणेयुश्चवीर्यवान् ॥ स्थंडिलेयुर्वनेयुश्चजलेयुश्चमहायशाः १० तेजेयुर्बलवान्धीमान्सत्येयुश्चेंद्रविक्रमः ॥ धर्मेयुःसन्नतेयुश्चदशमोदे
वविक्रमः ११ अनाधृष्टिरभूत्तेषांविद्वान्भुवितथैकराट् ॥ ऋचेयुरथविक्रांतोदेवानामिववासवः १२ अनाधृष्टिसुतस्त्वासीद्राजसूयाश्वमेधकृत् ॥ मतिनारइति
ख्यातोराजापरमधार्मिकः १३ मतिनारसुताराजंश्चत्वारोऽमितविक्रमाः ॥ तंसुर्महानतिरथोद्रुह्युश्चाप्रतिमद्युतिः १४ तेषांतंसुर्महावीर्यःपौरववंशमुद्वहन् ॥ आ
जहारयशोदीप्तंजिगायचवसुंधराम् १५ ईलिनंतुसुतंतंसुर्जनयामासवीर्यवान् ॥ सोऽपिकृत्स्नामिमांभूमिंविजिग्येजयतांवरः १६ रथंतर्यांसुतान्पंचपंचभूतोपमां
स्ततः ॥ ईलिनोजनयामासदुष्यंतप्रभृतीन्नृपान् १७ दुष्यंतंशूरभीमौचप्रवसुंवसुमेवच ॥ तेषांश्रेष्ठोभवद्राजादुष्यंतोजनमेजय १८ दुष्यंताद्भरतोजज्ञेविद्वान्शा
कुंतलोनृपः ॥ तस्माद्भरतवंशस्यविप्रतस्थेमहद्यशः १९ भरतस्तिसृषुस्त्रीषुनवपुत्रानजीजनत् ॥ नाभ्यनंदततान्राजानानुरूपाममेत्युत २० ततस्तान्मातरः
क्रुद्धाःपुत्रान्निन्युर्यमक्षयम् ॥ ततस्तस्यनरेंद्रस्यवितथंपुत्रजन्मतत् २१ ततोमहद्भिःक्रतुभिरीजानोभरतस्तदा ॥ लेभेपुत्रंभरद्वाजाद्भुमन्युंनामभारत २२ ततः
पुत्रिणमात्मानंज्ञात्वापौरवनंदनः ॥ भुमन्युंभरतश्रेष्ठयौवराज्येऽभ्यषेचयत् २३ ततोदिविरथोनामभुमन्योरभवत्सुतः ॥ सुहोत्रश्चसुहोताचसुहविःसुयजुस्तथा
२४ पुष्करिण्यामृचीकश्चभुमन्योरभवन्सुताः ॥ तेषांज्येष्ठःसुहोत्रस्तुराज्यमापमहीक्षिताम् २५ राजसूयाश्वमेधाद्यैःसोऽयजद्बहुभिःसवैः ॥ सुहोत्रःपृथिवींकृ
त्स्नांबुभुजेसागरांबराम् २६ पूर्णांहस्तिगजाश्वैश्चबहुरत्नसमाकुलाम् ॥ ममज्जेवमहीतस्यभूरिभारावपीडिता २७ हस्त्यश्वरथसंपूर्णामनुष्यकलिलाभृशम् ॥ सु
होत्रेराजनितदाधर्मतःशासतिप्रजाः २८ चैत्ययूपांकिताचासीद्भूमिःशतसहस्रशः ॥ प्रवृद्धजनसस्याचसर्वदैवव्यरोचत २९ ऐक्ष्वाकीजनयामाससुहोत्रात्पृथिवीप
ते ॥ अजमीढंसुमीढंचपुरुमीढंचभारत ३० अजमीढोवरस्तेषांतस्मिन्वंशःप्रतिष्ठितः ॥ षट्पुत्रान्सोऽप्यजनयत्तिसृषुस्त्रीषुभारत ३१ ऋक्षंधूमिन्यथानीलीदु
ष्यंतपरमेष्ठिनौ ॥ केशिन्यजनयज्जन्हुंसुतौव्रजनरूपिणौ ३२ तथेमेसर्वपंचालादुष्यंतपरमेष्ठिनोः ॥ अन्वयाःकुशिकाराजन्जन्होरमिततेजसः ३३ व्रजनरूपि
णयोर्ज्येष्ठमृक्षमाहुर्जनाधिपम् ॥ ऋक्षात्संवरणोजज्ञेराजन्वंशकरःसुतः ३४ आर्क्षेसंवरणेराजन्प्रशासतिवसुंधराम् ॥ संक्षयःसुमहानासीत्प्रजानामितिनःश्रुतम्
३५ व्यशीर्यतततोराष्ट्रंक्षयैर्नानाविधैस्तदा ॥ क्षुन्मृत्युभ्यामनावृष्ट्याव्याधिभिश्चसमाहतम् ३६ अभ्यघ्नन्भारतांश्चैवसपत्नानांबलानिच ॥ चालयन्वसुधां
चेमांबलेनचतुरंगिणा ३७ अभ्ययात्तंचपांचाल्योविजित्यतरसामहीम् ॥ अक्षौहिणीभिर्दशभिःसएनंसमरेजयत् ३८

२८ । २९ । ३० । ३१ । ३२ । ३३ व्रजनरूपिणयोरित्यक्षराधिक्यमार्षं ३४ आर्क्षेऋक्षपुत्रे ३५ क्षयैर्नाशहेतुभिःक्षुत्प्रभृतिभिः ३६ । ३७ अभ्ययात्संवरणं एनंसंवरणमेव ३८

पलायत वद्धभावआर्षः ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ ओमित्यंगीकारे विषाणवत्गिरिशृंगवच्छ्रेष्ठभूतं ४६ बलिभृतःकरदान् ४७ सौरीसूर्यकन्या ४८ । ४९ । ५० । ५१ अश्ववतए

ततःसदारःसामात्यःसपुत्रःससुहृज्जनः ॥ राजासंवरणस्तस्मात्पलायतमहाभयात् ३९ सिंधोर्नदस्यमहतोनिकुंजेन्यवसत्तदा ॥ नदीविषयपर्यंतेपर्वतस्यसमीपतः ४० तत्रावसन्बहून्कालान्भारतादुर्गमाश्रिताः ॥ तेषांनिवसतांतत्रसहस्रंपरिवत्सरान् ४१ अथाभ्यगच्छद्भरतान्वसिष्ठोभगवानृषिः ॥ तमागतंप्रयत्नेनप्रत्युद्गम्याभिवाद्यच ४२ अर्घ्यमभ्याहरंस्तस्मैतेसर्वेभारतास्तदा ॥ निवेद्यसर्वमृषयेसत्कारेणसुवर्चसे ४३ तमासनेचोपविष्टंराजावव्रेस्वयंतदा ॥ पुरोहितोभवान्नोऽस्तुराज्यायप्रयतेमहि ४४ ओमित्येवंवसिष्ठोऽपिभारतान्प्रत्यपद्यत ॥ अथाभ्यषिंचत्साम्राज्येसर्वक्षत्रस्यपौरवम् ४५ विषाणभूतंसर्वस्यांपृथिव्यामितिनःश्रुतम् ॥ भरताध्युषितंपूर्वंसोऽध्यतिष्ठत्पुरोत्तमम् ४६ पुनर्बलिभृतश्चैवचक्रेसर्वमहीक्षितः ॥ ततःसपृथिवींप्राप्यपुनरीजेमहाबलः ४७ आजमीढोमहायज्ञैर्बहुभिर्भूरिदक्षिणैः ॥ ततःसंवरणात्सौरीतपतीसुषुवेकुरुम् ४८ राजत्वेतंप्रजाःसर्वाधर्मज्ञइतिवव्रिरे ॥ तस्यनाम्नाऽभिविख्यातंपृथिव्यांकुरुजांगलम् ॥ कुरुक्षेत्रंसतपसापुण्यंचक्रेमहातपाः ॥ अश्ववंतमभिष्यंतंतथाचैत्ररथंमुनिम् ५० जनमेजयंचविख्यातंपुत्रांश्चास्यानुशुश्रुम ॥ पंचैतान्वाहिनीपुत्रान्व्यजायतमनस्विनी ५१ अविक्षितःपरिक्षित्तुशबलाश्वस्तुवीर्यवान् ॥ आदिराजोविराजश्चशाल्मलिश्चमहाबलः ५२ उच्चैःश्रवाभंगकारेजितारिश्चाष्टमःस्मृतः ॥ एतेषामन्ववायेतुख्यातास्तेकर्मजैर्गुणैः ॥ जनमेजयादयःसप्ततथैवान्येमहारथाः ५३ परीक्षितोऽभवन्पुत्राःसर्वेधर्मार्थकोविदाः ॥ कक्षसेनोग्रसेनौतुचित्रसेनश्चवीर्यवान् ५४ इंद्रसेनःसुषेणश्चभीमसेनश्चनामतः ॥ जनमेजयस्यतनयाभुविख्यातामहाबलाः ५५ धृतराष्ट्रःप्रथमजःपांडुर्बाल्हीकएवच ॥ निषधश्चमहातेजास्तथाजांबूनदोबली ५६ कुंडोदरःपदातिश्चवसातिश्चाष्टमःस्मृतः ॥ सर्वेधर्मार्थकुशलाःसर्वभूतहितेरताः ५७ धृतराष्ट्रोऽथराजाऽऽसीत्तस्यपुत्रोऽथकुंडिकः ॥ हस्तीवितर्कःक्राथश्चकुंडिनश्चापिपंचमः ५८ हविःश्रवास्तथेंद्राभोभुमन्युश्चापराजितः ॥ धृतराष्ट्रसुतानांतुत्रीनेतान्प्रथितान्भुवि ५९ प्रतीपंधर्मनेत्रंचसुनेत्रंचापिभारत ॥ प्रतीपःप्रथितस्तेषांबभूवाप्रतीमोभुवि ६० प्रतीपस्यत्रयःपुत्राजज्ञिरेभरतर्षभ ॥ देवापिःशांतनुश्चैवबाल्हीकश्चमहारथः ६१ देवापिश्चप्रवव्राजतेषांधर्महितेप्सया ॥ शांतनुश्चमहींलेभेबाल्हीकश्चमहारथः ६२ भरतस्यान्वयेजाताःसत्ववंतोनराधिपाः ॥ देवर्षिकल्पानृपतेबहवोराजसत्तमाः ६३ एवंविधाश्चाप्यपरेदेवकल्पामहारथाः ॥ जातामनोरन्ववायेऐलवंशविवर्धनाः ६४ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वणिपूरुवंशानुकीर्तने चतुर्नवतितमोऽध्यायः ॥ ९४ ॥ ॥ जनमेजयउवाच ॥ श्रुतस्त्वत्तोमयाब्रह्मन्पूर्वेषांसंभवोमहान् ॥ उदाराश्चापिवंशेऽस्मिन्राजानोमेपरिश्रुताः १

वाविक्षिदितिसंज्ञांतरं ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ सुतानांकुंडिकादीनांमध्येप्रथितानाहुरितिशेषः सुतानाहुरितिपाठेतुएतांस्तेभ्योन्यान्वक्ष्यमाणान्प्रथितानाहुरितिव्याख्येयं ५९ । ६० । ६१ । ६२ । ६३ । ६४ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपे चतुर्नवतितमोऽध्यायः ॥ ९४ ॥ ॥ ७ ॥ ॥ श्रुतइति १

॥ ९६ ॥

२ । ३ । ४ गुणादातृत्वादयः । प्रभावोदेवतादिवशित्वं । वीर्यंशारीरंबलं । ओजोमानसंसाम र्थ्यंधैर्यादि । सत्वमदीनत्वं । उत्साहःप्रयतमानता ५ । ६ 'अदितेर्दक्षोऽजायतदक्षाद्दऽदितिः'इतिपरिश्रुत

किंतुलघ्वर्थसंयुक्तंप्रियाख्यानंनमामति ॥ प्रीणात्यतोभवान्भूयोविस्तरेणब्रवीतुमे २ एतामेवकथांदिव्यामाप्रजापतितोमनोः ॥ तेषामाजननंपुण्यंकस्यनप्रीतिमावहेत् ३ सद्धर्मगुणमाहात्म्यैरभिवर्धितमुत्तमम् ॥ विष्टभ्यलोकांस्त्रीनेषांयशःस्फीतमवस्थितम् ४ गुणप्रभाववीर्यौजःसत्वोत्साहवतामहम् ॥ नतृप्यामिकथांशृण्वन्नमृतास्वादसंमिताम् ५ ॥ वैशंपायनउवाच ॥ शृणुराजन्पुरासम्यङ्मयाद्वैपायनाच्छ्रुतम् ॥ प्रोच्यमानंमयाकृत्स्नंस्ववंशजननंशुभम् ६ दक्षाददितिरदितेर्विवस्वान्विवस्तोमनुर्मनोरिलाइलायाःपुरूरवाःपुरूरवसआयुरायुषोनहुषोनहुषाद्ययातिर्ययातेर्द्वेभार्येबभूवतुः ७ उशनसोदुहितादेवयानीवृषपर्वणश्चदुहिताशर्मिष्ठानाम ८ अत्रानुवंशश्लोकोभवति ॥ यदुंचतुर्वसुंचैवदेवयानीव्यजायत ॥ द्रुह्युंचानुंचपूरुंचशर्मिष्ठावार्षपर्वणी ९ तत्रयदोर्यादवाःपूरोःपौरवाः १० पूरोस्तुभार्याकौसल्यानामतस्यामस्यजज्ञेजनमेजयोनामयस्त्रीनश्वमेधानाजहारविश्वजिताचेष्ट्वावनंविवेश ११ जनमेजयःखल्वनंतांनामोपयेमेमाधवींतस्यामस्यजज्ञेप्राचिन्वान्यःप्राचींदिशंजिगाययावत्सूर्योदयात्ततस्तस्यप्राचिन्वत्त्वम् १२ प्राचिन्वान्खल्वश्मकीमुपयेमेयादवींतस्यामस्यजज्ञेसंयातिः १३ संयातिःखलुदृषद्वतोदुहितरंवरांगींनामोपयेमेतस्यामस्यजज्ञेअहंयातिः १४ अहंयातिःखलुकृतवीर्यदुहितरमुपयेमेभानुमतींनामतस्यामस्यजज्ञेसार्वभौमः १५ सार्वभौमःखलुजित्वाजहारकैकेयींसुनंदांनामतामुपयेमेतस्यामस्यजज्ञेजयत्सेनोनाम १६ जयत्सेनःखलुवैदर्भीमुपयेमेसुश्रवांनामतस्यामस्यजज्ञेअवाचीनः १७ अवाचीनोऽपिवैदर्भींमपरामेवोपयेमेमर्यादांनामतस्यामस्यजज्ञेअरिहः १८ अरिहःखल्वांगीमुपयेमेतस्यामस्यजज्ञेमहाभौमः १९ महाभौमःखलुप्रासेनजितिमुपयेमेसुयज्ञांनामतस्यामस्यजज्ञेअयुतनायीयःपुरुषमेधानामयुतमानयत्तेनास्यायुतनायित्वम् २० अयुतनायीखलुपृथुश्रवसोदुहितरमुपयेमेकामांनामतस्यामस्यजज्ञेअक्रोधनः २१ सखलुकालिंगींकरंभांनामोपयेमेतस्यामस्यजज्ञेदेवातिथिः २२ देवातिथिःखलुवैदेहीमुपयेमेमर्यादांनामतस्यामस्यजज्ञेऽरिहोनाम २३ अरिहःखल्वांगेयीमुपयेमेसुदेवांनामतस्यांपुत्रमजीजनदृक्षम् २४ ऋक्षःखलुतक्षकदुहितरमुपयेमेज्वालांनामतस्यांपुत्रंमतिनारंनामोत्पादयामास २५ मतिनारःखलुसरस्वत्यांगुणसमन्वितंद्वादशवार्षिकंसत्रमाहरत् ॥ समाप्तेचसत्रेसरस्वत्यभिगम्यतंभर्तारंवरयामासतस्यांपुत्रमजीजनत्तंसुंनाम २६ अत्रानुवंशश्लोकोभवति ॥ तंसुंसरस्वतीपुत्रंमतिनारादजीजनत् ॥ ईलिनंजनयामासकालिंग्यांतंसुरात्मजम् २७ ईलिनस्तुरथंतर्यांदुष्यंताद्यान्पंचपुत्रानजीजनत् २८ दुष्यंतःखलुविश्वामित्रदुहितरंशकुंतलांनामोपयेमेतस्यामस्यजज्ञेभरतः २९ अत्रानुवंशश्लोकौभवतः ॥ भस्त्रामातापितुःपुत्रोयेनजातःसएवसः ॥भरस्वपुत्रंदुष्यंतमाऽवमंस्थाःशकुंतलाम् ३०

३३ योःसृष्टिक्रमयोरंत्यमाह दक्षाददितिरिति । आयस्तुहरिवंशेवक्ष्यते । अदितेर्दक्षोद्वादशइति । अनयोश्चपक्षयोःकल्पभेदेनव्यवस्था ७ । ८ । ९ । १० । ११ यावत्सूर्योदयादुदयाचलपर्यंतं । एकेनैवाह्ना इतिभावः १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३०

३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९

रेतोधाःपुत्रउन्नयतिनरदेवयमक्षयात् ॥ त्वंचास्यधातागर्भस्यसत्यमाहशकुंतला ३१ ततोऽस्यभरतत्वंभरतःखलुकाशेयीमुपयेमेसार्वसेनींसुनंदांनामतस्यामस्यज
॥ ९७ ॥ ज्ञेभुमन्युः ३२ भुमन्युःखलुदाशार्हीमुपयेमेविजयांनामतस्यामस्यजज्ञेसुहोत्रः ३३ सुहोत्रःखल्विक्ष्वाकुकन्यामुपयेमेसुवर्णांनामतस्यामस्यजज्ञेहस्ती ॥ यइदं
हास्तिनपुरंस्थापयामास एतदस्यहास्तिनपुरत्वम् ३४ हस्तीखलुत्रैगर्तीमुपयेमेयशोधरांनामतस्यामस्यजज्ञेविकुंठनोनाम ३५ विकुंठनःखलुदाशार्हीमु ॥ ९५ ॥
पयेमेसुदेवांनामतस्यामस्यजज्ञेअजमीढोनाम ३६ अजमीढस्यचतुर्विंशंपुत्रशतंबभूवकैकेय्यांगांधार्यांविशालायामृक्षायांचेतिपृथक्पृथग्वंशधरान्नृपतयः ॥
तत्रवंशकरःसंवरणः ३७ संवरणःखलुवैवस्वतींतपतींनामोपयेमेतस्यामस्यजज्ञेकुरुः ३८ कुरुःखलुदाशार्हीमुपयेमेशुभांगींनामतस्यामस्यजज्ञेविदूरः ३९
विदूरस्तुमाधवीमुपयेमेसंप्रियांनामतस्यामस्यजज्ञेअनश्वानाम ४० अनश्वाखलुमागधीमुपयेमेअमृतांनामतस्यामस्यजज्ञेपरीक्षित् ४१ परीक्षित्खलुबाहुदामुपये
मेसुयशांनामतस्यामस्यजज्ञेभीमसेनः ४२ भीमसेनःखलुकैकेयीमुपयेमेकुमारींनामतस्यामस्यजज्ञेप्रतिश्रवानाम ४३ प्रतिश्रवसःप्रतीपःखलुशैब्यामुपयेमेसुनंदां
नामतस्यांपुत्रानुत्पादयामासदेवापिंशांतनुंबाल्हीकंचेति ४४ देवापिःखलुबालएवारण्यंविवेश शांतनुस्तुमहीपालोबभूव ४५ अत्रानुवंशश्लोकोभवति ॥
यंयंकराभ्यांस्पृशतिजीर्णंससुखमश्नुते ॥ पुनर्युवाचभवतितस्मात्तंशांतनुंविदुः ॥ इतितदस्यशांतनुत्वम् ४६ शांतनुःखलुगंगांभागिरथीमुपयेमेतस्यामस्य
जज्ञेदेवव्रतोनामयमाहुर्भीष्ममिति ४७ भीष्मःखलुपितुःप्रियचिकीर्षयासत्यवतींमातरमुदवाहयत्यामाहुर्गंधकालीमिति ४८ तस्यांपूर्वंकानीनोगर्भःपराशराद्दै
पायनोऽभवत् ॥ तस्यामेवशांतनोरन्यौद्वौपुत्रौबभूवतुः ४९ विचित्रवीर्यश्चित्रांगदश्च तयोरप्राप्तयौवनएवचित्रांगदोगंधर्वेणहतःविचित्रवीर्यस्तुराजासीत् ५०
विचित्रवीर्यःखलुकौसल्यात्मजेंऽबिकांबालिकेकाशिराजदुहितराउपयेमे ५१ विचित्रवीर्यस्त्वनपत्यएवविदेहत्वंप्राप्तस्ततःसत्यवत्यचिंतयन्मादौष्यंतोवंशउच्छे
दंव्रजेदिति ५२ साद्वैपायनमृषिंमनसाचिंतयामास सतस्याःपुरतःस्थितःकिंकरवाणीति ५३ सातमुवाचभ्रातातवानपत्यएवस्वर्यातोविचित्रवीर्यःसाध्वप
त्यंतस्योत्पादयेति ५४ सतथेत्युक्त्वात्रीन्पुत्रानुत्पादयामास धृतराष्ट्रंपांडुंविदुरंचेति ५५ तत्रधृतराष्ट्रस्यराज्ञःपुत्रशतंबभूवगांधार्यांवरदानाद्द्वैपायनस्य ५६ ॥ ९७ ॥
तेषांधृतराष्ट्रस्यपुत्राणांचत्वारःप्रधानाबभूवुः दुर्योधनोदुःशासनोविकर्णश्चित्रसेनश्चेति ५७ पांडोस्तुद्वेभार्येबभूवतुःकुंतीपृथानाममाद्रीचेत्युभेस्त्रीरत्ने ५८
अथपांडुर्मृगयांचरन्मैथुनगतमृषिमपश्यन्मृग्यांवर्तमानंतथैवाद्भुतमनासादितकामरसमतृप्तंचबाणेनाजघान ५९

६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४

सबाणविद्धउवाचपांडुंचरताधर्ममिमंयेनत्वयाऽभिज्ञेनकामरसस्याहमनवाप्तकामरसोनिहतस्तस्मात्त्वमप्येतामवस्थामासाद्यानवाप्तकामरसःपंचत्वमाप्स्यसिक्षिप्र
मेवेतिसविवर्णरूपस्तथापांडुःशापंपरिहरमाणोनोपासर्पतभार्येवाक्यंचोवाच ६० स्वचापल्यादिदंप्राप्तवानहंशृणोमिचनानपत्यस्यलोकाःसंतीति ॥ सात्वं
मदर्थेपुत्रानुत्पादयेतिकुंतीमुवाचसातथोक्तापुत्रानुत्पादयामास ॥ धर्माद्युधिष्ठिरंमारुताद्भीमसेनंशक्रादर्जुनमिति ६१ ॥ तांसंहृष्टःपांडुरुवाच ॥ इयंतेसपत्न्यनप
त्यासाध्वस्याअपत्यमुत्पाद्यतामिति ॥ एवमस्त्वितिकुंतीतांविद्यांमाद्र्याःप्रायच्छत् ६२ माद्र्यामश्विभ्यांनकुलसहदेवावुत्पादितौ ६३ माद्रींखल्वलंकृतांदृष्ट्वापां
डुर्भावंचक्रेसतांस्पृष्ट्वैवविदेहत्वंप्राप्तः ६४ तत्रैनंचिताग्निस्थंमाद्रीसमन्वारुरोह उवाचकुंतींयमयोरप्रमत्तयात्वयाभवितव्यमिति ६५ ततस्तेपांडवाःकुंत्यास
हिताहास्तिनपुरमानीयतापसैर्भीष्मस्यचविदुरस्यचनिवेदिताः ॥ सर्ववर्णानांचनिवेद्यांतर्हितास्तापसाबभूवुःप्रेक्षमाणानांतेषाम् ६६ तच्चवाक्यमुपश्रुत्यभगव
तामंतरिक्षात्पुष्पवृष्टिःपपातदेवदुंदुभयश्चप्रणेदुः ६७ प्रतिगृहीताश्चपांडवाःपितुर्निधनमावेदयंतस्तस्यौर्ध्वदेहिकंन्यायतश्चकृतवंतस्तांस्तत्रनिवसतःपांडवा
न्बाल्यात्प्रभृतिदुर्योधनोनामर्षयत् ६८ पापाचारोराक्षसींबुद्धिमाश्रितोऽनेकैरुपायैरुद्धर्तुंचव्यवसितोभावित्वाच्चार्थस्यनशकितास्तेसमुद्धर्तुम् ६९ ततश्चधृतरा
ष्ट्रेणव्याजेनवारणावतमनुप्रेषितागमनमरोचयन् ७० तत्रापिजतुगृहेदग्धुंसमारब्धानशकिताविदुरमंत्रितेनेति ७१ तस्माच्चहिडिंबमंतराहत्वाएकचक्रांगताः ७२
तस्यामप्येकचक्रायांबकंनामरक्षसंहत्वापांचालनगरमधिगताः ७३ तत्रद्रौपदींभार्यामविंदन्स्वविषयंचाभिजग्मुः ७४ कुशलिनःपुत्रांश्चोत्पादयामासुः प्रतिविंध्यं
युधिष्ठिरःसुतसोमंवृकोदरःश्रुतकीर्तिमर्जुनःशतानीकंनकुलःश्रुतकर्माणंसहदेवइति ७५ युधिष्ठिरस्तुगोवासनस्यशैब्यस्यदेविकांनामकन्यांस्वयंवरालेभे तस्यां
पुत्रंजनयामासयौधेयंनाम ७६ भीमसेनोऽपिकाश्यांबलंधरांनामोपयेमेवीर्यशुल्कांतस्यांपुत्रंसर्वगंनामोत्पादयामास ७७ अर्जुनःखलुद्वारवतींगत्वाभगिनींवासुदे
वस्यसुभद्रांभद्रभाषिणींभार्यामुदावहत् ॥ स्वविषयंचाभ्याजगामकुशलीतस्यांपुत्रमभिमन्युमतीवगुणसंपन्नंदयितंवासुदेवस्याजनयत् ७८ नकुलस्तुचैद्यांकरेणुम
तींनामभार्यामुदावहत्तस्यांपुत्रंनिरमित्रंनामाजनयत् ७९ सहदेवोऽपिमाद्रीमेवस्वयंवरेविजयांनामोपयेमेभद्रराजस्यद्युतिमतोदुहिरंतस्यांपुत्रमजनयत्सुहोत्रंनाम ८०
भीमसेनस्तुपूर्वमेवहिडिंबायांराक्षसंघटोत्कचंपुत्रमुत्पादयामास ८१ इत्येतएकादशपांडवानांपुत्रास्तेषांवंशकरोऽभिमन्युः ८२ सविराटस्यदुहितरमुपयेमेउत्तरां
नाम ॥ तस्यामस्यपरासुर्गर्भोऽभवत्तमुत्संगेनप्रतिजग्राहपृथानियोगात्पुरुषोत्तमस्यवासुदेवस्यषाण्मासिकंगर्भमहमेनंजीवयिष्यामीति ८३ सभवतावासुदेवेनासं
जातबलवीर्यपराक्रमोऽकालजातोऽस्त्राग्निनादग्धस्तेजसास्वेनसंजीवितः ॥ जीवयित्वाचैनमुवाचपरिक्षीणेकुलेजातोभवत्वयंपरिक्षिन्नामेति ८४

८५ । ८६ । ८७ । ८८ । ८९ । ९० ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे पंचनवतितमोऽध्यायः ॥ ९५ ॥ भीष्मोत्पत्तिवक्तुंतत्पितुःशांतनोरुत्पत्तिमाह इक्ष्वाकुवंशेति १ । २ । ३

परिक्षित्खलुमाद्रवतींनामोपयेमेत्वन्मातरंतस्यांभवान्जनमेजयः ८५ भवतोवपुष्टमायांद्वौपुत्रौजज्ञाते शतानीकःशंकुकर्णश्चशतानीकस्यवैदेह्यांपुत्रउत्पन्नोऽश्व
मेधदत्तइति ८६ एषपूरोर्वंशःपांडवानांचकीर्तितोधन्यःपुण्यःपरमपवित्रःसततंश्रोतव्योब्राह्मणैर्नियमवद्भिरनंतरंक्षत्रियैःस्वधर्मनिरतैःप्रजापालनतत्परैर्वैश्यैरपि
चश्रोतव्योऽधिगम्यश्चतथाशूद्रैरपित्रिवर्णशुश्रूषुभिःश्रद्दधानैरिति ८७ इतिहासमिमंपुण्यमशेषतःश्रावयिष्यंतियेनराःश्रोष्यंतिवानियतात्मानोविमत्सरामैत्रावेद
परास्तेऽपिस्वर्गजितःपुण्यलोकाभवंतिसततंदेवब्राह्मणमनुष्याणांमान्याःसंपूज्याश्च ८८ परंहीदंभारतंभगवताव्यासेनप्रोक्तंपावनंयेब्राह्मणादयोवर्णाःश्रद्दधाना
अमत्सरामैत्रावेदसंपन्नाःश्रोष्यंतितेऽपिस्वर्गजितःसुकृतिनोऽशोच्याःकृताकृतेभवंति ८९ भवतिचात्रश्लोकः ॥ इदंहिवेदैःसमितंपवित्रमपिचोत्तमं ॥ धन्यंयश
स्यमायुष्यंश्रोतव्यंनियतात्मभिः ९० ॥ इतिश्रीमहाभारते आदिपर्वणि संभवपर्वणि पूरुवंशानुकीर्त्तने पंचनवतितमोऽध्यायः ॥ ९५ ॥ वैशंपायनउवाच ॥
इक्ष्वाकुवंशप्रभवोराजाऽऽसीत्पृथिवीपतिः ॥ महाभिषइतिख्यातःसत्यवाक्सत्यविक्रमः १ सोऽश्वमेधसहस्रेणराजसूयशतेनच ॥ तोषयामासदेवेशंस्वर्गंलेभेततः
प्रभुः २ ततःकदाचिद्ब्रह्माणमुपासांचक्रिरेसुराः ॥ तत्रराजर्षयोह्यासन्सचराजामहाभिषः ३ अथगंगासरिच्छ्रेष्ठासमुपायात्पितामहम् ॥ तस्यावासःसमुद्भूतंमारु
तेनशशिप्रभम् ४ ततोऽभवन्सुरगणाःसहसाऽवाङ्मुखास्तदा ॥ महाभिषस्तुराजर्षिरशंकोदृष्टवान्नदीम् ५ सोऽपध्यातोभगवताब्रह्मणातुमहाभिषः ॥ उक्तश्चजातो
मर्त्येषुपुनर्लोकानवाप्स्यसि ६ ययाहृतमनाश्चासिगंगयात्वंहिदुर्मते ॥ सातेवैमानुषेलोकेविप्रियाण्याचरिष्यति ७ यदातेभवितामन्युस्तदाशापाद्विमोक्ष्यसे ॥
॥ वैशंपायनउवाच ॥ सचिंतयित्वानृपतिर्नृपानन्यांस्तपोधनान् ८ प्रतीपंरोचयामासपितरंभूरितेजसम् ॥ महाभिषंतुतंदृष्ट्वानदीधैर्याच्च्युतंनृपम् ९ तमेव
मनसाध्यायंत्युपावर्त्तत्सरिद्वरा ॥ सातुविध्वस्तवपुषःकश्मलाभिहतान्नृप १० ददर्शपथिगच्छंतीवसून्देवान्दिवौकसः ॥ तथारूपांश्चतान्दृष्ट्वापप्रच्छसरितांवरा
११ किमिदंनष्टरूपाःस्थकच्चित्क्षेमंदिवौकसाम् ॥ तामूचुर्वसवोदेवाःशप्ताःस्मोवैमहानदि १२ अल्पेऽपराधेसंरंभाद्वसिष्ठेनमहात्मना ॥ विमूढाहिवयंसर्वेप्रच्छन्नमृ
षिसत्तमम् १३ संध्यांवसिष्ठमासीनंतमत्यभिसृताःपुरा ॥ तेनकोपाद्वयंशप्तायोनौसंभवतेतिह १४ नतच्छक्यंनिवर्त्तयितुंयदुक्तंब्रह्मवादिना ॥ त्वमस्मान्मानुषी
भूत्वासृजपुत्रान्वसून्भुवि १५ नमानुषीणांजठरंप्रविशेमवयंशुभे ॥ इत्युक्तातैश्चवसुभिस्तथेत्युक्त्वाऽब्रवीदिदम् १६ ॥ गंगोवाच ॥ मर्त्येषुपुरुषश्रेष्ठःकोवःकर्त्ताभ
विष्यति ॥ वसवऊचुः ॥ प्रतीपस्यसुतोराजाशांतनुर्लोकविश्रुतः ॥ भवितामानुषेलोकेसनःकर्त्ताभविष्यति १७ ॥ गंगोवाच ॥ ममाप्येवंमतंदेवायथामांवदता
नघाः ॥ प्रियंतस्यकरिष्यामियुष्माकंचैतदीप्सितम् १८

४ । ५ अपध्यातः शप्तः ६ । ७ । ८ । ९ विध्वस्तवपुषोदिवश्च्युतत्वात् १० । ११ । १२ । १३ अत्यभिसृताअतिक्रांतवंतःवक्ष्यमाणेनतद्धेनुहरणेनेतिशेषः १४ सृजउत्पादय १५ । १६ । १७ । १८

नचिरकालंशीघ्रं नोऽस्माकं १९ । २० तुरीयार्धमष्टमांशं एवमष्टभिरष्टमांशैरेकोयोभवितायोमुख्योऽपराधी २१ । २२ । २३ ॥ इति आ० नीलकंठीये भारतभावदीपे षण्णवतितमोऽध्यायः ॥ ९६ ॥

॥ वसवऊचुः ॥ जाताःकुमारान्स्वानप्सुप्रक्षेप्तुंवैत्वमर्हसि ॥ यथानचिरकालंनोनिष्कृतिःस्यात्त्रिलोकगे १९ ॥ गंगोवाच ॥ एवमेतत्करिष्यामिपुत्रस्तस्यविधी
यताम् ॥ नास्यमोघःसंगमःस्यात्पुत्रहेतोर्मयासह २० ॥ वसवऊचुः ॥ तुरीयार्धंप्रदास्यामोवीर्यस्यैकैकशोवयम् ॥ तेनवीर्येणपुत्रस्तेभवितातस्यचेप्सितः २१ नसं
पत्स्यतिमर्त्येषुपुनस्तस्यतुसंततिः ॥ तस्मादपुत्रःपुत्रस्तेभविष्यतिसवीर्यवान् २२ एवंतेसमयंकृत्वागंगयावसवःसह ॥ जग्मुःसंहृष्टमनसोयथासंकल्पमंजसा २३
॥ इतिश्रीमहाभारते आदिपर्वणि संभवपर्वणि महाभिषोपाख्याने षण्णवतितमोऽध्यायः ॥ ९६ ॥ वैशंपायनउवाच ॥ ततःप्रतीपोराजासीत्सर्वभूतहितः
सदा ॥ निषसादसमाबह्वीर्गंगाद्वारगतोजपन् १ तस्यरूपगुणोपेतागंगास्त्रीरूपधारिणी ॥ उत्तीर्यसलिलात्तस्माल्लोभनीयतमाकृतिः २ अधीयानस्यराजर्षेर्दि
व्यरूपामनस्विनी ॥ दक्षिणंशालसंकाशमूरुंभेजेशुभानना ३ प्रतीपस्तुमहीपालस्तामुवाचयशस्विनीम् ॥ करोमिकिंतेकल्याणिप्रियंयत्तेऽभिकांक्षितम् ४
॥ स्त्र्युवाच ॥ त्वामहंकामयेराजन्भजमानांभजस्वमम् ॥ त्यागःकामवतीनांहिस्त्रीणांसद्भिर्विगर्हितः ५ ॥ प्रतीपउवाच ॥ नाहंपरस्त्रियंकामाद्गच्छेयंवरवर्णि
नि ॥ नचासवर्णांकल्याणिधर्म्यमेतद्धिमेव्रतम् ६ ॥ स्त्र्युवाच ॥ नाश्रेयस्यऽस्मिनागम्यानवक्तव्याचकर्हिचित् ॥ भजंतींभजमांराजन्दिव्यांकन्यांवरस्त्रियम् ७
॥ प्रतीपउवाच ॥ त्वयानिवृत्तमेतत्तुयन्मांचोदयसिप्रियम् ॥ अन्यथाप्रतिपन्नंमांनाशयेद्धर्मविप्लवः ८ प्राप्यदक्षिणमूरुंमेत्वमाश्लिष्टावरांगने ॥ अपत्यानांस्नुषा
णांचभीरुविद्ध्येतदासनम् ९ सव्योरुःकामिनीभोग्यस्त्वयासचविवर्जितः ॥ तस्मादहंनाचरिष्येत्वयिकामंवरांगने १० स्नुषामेभवसुश्रोणिपुत्रार्थेत्वांवृणोम्यहम् ॥
स्नुषापक्षंहिवामोरुत्वमागम्यसमाश्रिता ११ ॥ स्त्र्युवाच ॥ एवमप्यस्तुधर्मज्ञसंयुज्येयंसुतेनते ॥ त्वद्भक्त्यातुभजिष्यामिप्रख्यातंभारतंकुलम् १२ पृथिव्यांपा
र्थिवायेचतेषांयूयंपरायणम् ॥ गुणानहिमयाशक्यावक्तुंवर्षशतैरपि १३ कुलस्ययेवःप्रथितास्तत्साधुत्वमथोत्तमम् ॥ समयेनेहधर्मज्ञआचरेयंचयद्विभो १४ तत्सर्व
मेवपुत्रस्तेनमीमांसेतकर्हिचित् ॥ एवंवसंतीपुत्रेतेवर्धयिष्याम्यहंरतिम् १५ पुत्रैःपुण्यैःप्रियैश्चैवस्वर्गंप्राप्स्यतितेसुतः ॥ वैशंपायनउवाच ॥ तथेत्युक्त्वातुसारा
जंस्तत्रैवांतरधीयत १६ पुत्रजन्मप्रतीक्षन्वैसराजातदधारयत् ॥ एतस्मिन्नेवकालेतुप्रतीपःक्षत्रियर्षभः १७ तपस्तेपेसुतस्यार्थेसभार्यःकुरुनंदन ॥ तयोःसमभव
त्पुत्रोवृद्धयोःसमहाभिषः १८ शांतस्यजज्ञेसंतानस्तस्मादासीत्सशांतनुः ॥ संस्मरंश्चाक्षयाँल्लोकान्विजितान्स्वेनकर्मणा १९ पुण्यकर्मकृदेवासीच्छांतनुःकुरुसत्त
मः ॥ प्रतीपःशांतनुंपुत्रंयौवनस्थंततोऽन्वशात् २० पुरामांस्त्रीसमभ्यागाच्छांतनोभूतयेतव ॥ त्वामाव्रजेद्यदिरहःसापुत्रवरवर्णिनी २१

ततइति १ । २ । ३ । ४ । ५ । ६ दिव्यांदिविभवां ७ त्वयाहेतुभूतया निवृत्तंनिरस्तं ८ आश्लिष्टासंगता ९ । १० । ११ । १२ । १३ समयेननियमेन १४ नमीमांसेतनविचारयेत् १५ । १६ । १७
१८ शांतनुशब्दव्युत्पत्तिमाह शांतस्येति शांतस्योपरतस्यवंशस्यसंतानोविस्तारइतिशांततनुः तकारलोपेनशांतनुरितिनाम संस्मरन्निति व्यवहितमपिज्ञानबलेनजानातीत्यर्थः १९ । २० । २१

नानुयोक्तव्यानप्रष्टव्या २२ । २३ । २४ । २५ । २६ । २७ सर्वत्ररूपौदार्यादावनिंद्यां २८ । २९ । ३० । ३१ । ३२ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे सप्तनवतितमोऽध्यायः ॥९७॥

॥ ९९ ॥ कामयानाऽभिरूपाढ्यादिव्यस्त्रीपुत्रकाम्यया ॥ सात्वयानानुयोक्तव्याकाऽसिकस्यासिचांगने २२ यच्चकुर्यान्नतत्कर्मसाप्रष्टव्यात्वयाऽनघ ॥ मन्नियोगाद्भजंतीं

तांभजेथाइत्युवाचतम् २३ ॥ वैशंपायनउवाच ॥ एवंसंदिश्यतनयंप्रतीपःशांतनुंतदा ॥ स्वेचराज्येऽभिषिच्यैनंवनंराजाविवेशह २४ सराजाशांतनुर्धीमा ॥ ९८ ॥

न्देवराजसमद्युतिः ॥ बभूवमृगयाशीलःसततंवनगोचरः २५ समृगान्महिषांश्चैवविनिघ्नन्राजसत्तमः ॥ गंगामनुचचारैकःसिद्धचारणसेविताम् २६ सकदा

चिन्महाराजददर्शपरमांस्त्रियम् ॥ जाज्वल्यमानांवपुषासाक्षाच्छ्रियमिवापराम् २७ सर्वानवद्यांसुदतींदिव्याभरणभूषिताम् ॥ सूक्ष्मांबरधरामेकांपद्मोदरसम

प्रभाम् २८ तांदृष्ट्वाहृष्टरोमाऽभूद्विस्मितोरूपसंपदा ॥ पिबन्निवचनेत्राभ्यांनातृप्यतनराधिपः २९ साचदृष्ट्वैवराजानंविचरंतंमहाद्युतिम् ॥ स्नेहादागतसौहार्दा

नातृप्यतविलासिनी ३० तामुवाचततोराजासांत्वयन्श्लक्ष्णयागिरा ॥ देवीवादानवीवात्वंगंधर्वीचाथवाऽप्सराः ३१ यक्षीवापन्नगीवाऽपिमानुषीवासुमध्यमे ॥

याचेत्वांसुरगर्भाभेभार्यामेभवशोभने ३२ ॥ इति श्रीमहाभारते आदिपर्वणिसंभवपर्वणि शांतनूपाख्यानेसप्तनवतितमोऽध्यायः ॥ ९७ ॥ वैशंपायनउवाच ॥

एतच्छ्रुत्वावचोराज्ञःसस्मितंमृदुवल्गुच ॥ वसूनांसमयंस्मृत्वाऽथाभ्यगच्छदनिंदिता १ उवाचचैवराज्ञःसाल्हादयंतीमनोगिरा ॥ भविष्यामिमहीपालमहिषी

तेवशानुगा २ यत्तुकुर्यामहंराजन्शुभंवायदिवाऽशुभम् ॥ नतद्वारयितव्याऽस्मिनवक्तव्यातथाऽप्रियम् ३ एवंहिवर्तमानेऽहंत्वयिवत्स्यामिपार्थिव ॥ वारितावि

प्रियंचोक्तात्यजेयंत्वामसंशयम् ४ तथेतिसायदातूक्तातदाभरतसत्तम ॥ प्रहर्षमतुलंलेभेप्राप्यतंपार्थिवोत्तमम् ५ आसाद्यशांतनुस्तांचबुभुजेकामतोवशी ॥

नप्रष्टव्येतिमन्वानोनसतांकिंचिदूचिवान् ६ सतस्याःशीलवृत्तेनरूपौदार्यगुणेनच ॥ उपचारेणचरहस्तुतोषजगतीपतिः ७ दिव्यरूपाहिसादेवीगंगात्रिपथगा

मिनी ॥ मानुषंविग्रहंकृत्वाश्रीमंतंवरवर्णिनी ८ भाग्योपनतकामस्यभार्याचोपनताऽभवत् ॥ शांतनोर्नृपसिंहस्यदेवराजसमद्युतेः ९ संभोगस्नेहचातुर्यैर्हावलास्य

मनोहरैः ॥ राजानंरमयामासयथारेमेतथैवसः १० सराजारतिसक्तत्वादुत्तमस्त्रीगुणैर्हृतः ॥ संवत्सरानृतून्मासानबुबुधेनबहून्गतान् ११ रममाणस्तयासार्धंयथा

कामंनरेश्वरः ॥ अष्टावजनयत्पुत्रांस्तस्याममरसन्निभान् १२ जातंजातंचसापुत्रंक्षिपत्यंभसिभारत ॥ प्रीणाम्यहंत्वामित्युक्त्वागंगास्रोतस्यमज्जयत् १३ तस्यतन्न

प्रियंराज्ञःशांतनोरभवत्तदा ॥ नचतांकिंचनोवाचत्यागाद्भीतोमहीपतिः १४ अथैनामष्टमेपुत्रेजातेप्रहसतीमिव ॥ उवाचराजादुःखार्तःपरीप्सन्पुत्रमात्मनः १५ ॥ ९९ ॥

मावधीःकस्यकाऽसीतिकिंहिनत्सिसुतानिति ॥ पुत्रघ्निसुमहत्पापंसंप्राप्तंतेसुगर्हितम् १६ ॥ स्त्र्युवाच ॥ पुत्रकामनतेहन्मिपुत्रंपुत्रवतांवर ॥ जीर्णस्तुममवा

सोऽयंयथासमयःकृतः १७ एतदिति अनिंदितागंगा १ राज्ञःशांतनोः २ । ३ । ४ । ५ । ६ । ७ । ८ भाग्योपनतकामस्यशुभादृष्टेनप्राप्ताभिलषितस्य ९ हावःशृंगारजोभावः लास्यं

सुकुमारनृत्यं १० । ११ पाठांतरेअमराणामपिवर्णिनश्चित्रकरान् १२ प्रीणामिमानुषदेहवियोजनेनप्रीणयामि त्वांदेवतारूपं स्रोतसिमज्जाहे १३ । १४ । १५ तेत्वया १६ । १७

१८ । १९ धात्रीगर्भधारिणी २० तज्जननीहेतोर्ब्रह्मसभायांमयित्वदभिलाषात् २१ संश्रुतोंगीकृतः २२ आपवस्यवसिष्ठस्य २३ एषपुत्रोमेमयाअष्टानांवसूनांसन्निधीकृतस्त्वदर्थंसंप्रार्थितः किंभूतः

वसूनांपर्यायारूपांतराण्येकैकस्याष्टमांशप्रदानात् तेषांवासःस्थानंसर्वेषामंशैर्वृद्धितोऽयंमयात्वदर्थंप्रार्थितइत्यर्थः २४ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपे अष्टनवतितमोऽध्यायः ॥ ९८ ॥

अहंगंगाजन्हुसुतामहर्षिगणसेविता ॥ देवकार्यार्थसिद्धयर्थमुषिताऽहंत्वयासह १८ इमेऽष्टौवसवोदेवमहाभागामहौजसः ॥ वसिष्ठशापदोषेणमानुषत्वमुपागताः

१९ तेषांजनयितानान्यस्त्वदृतेभुविविद्यते ॥ मद्विधामानुषीधात्रीलोकेनास्तीहकाचन २० तस्मात्तज्जननीहेतोर्मानुषत्वमुपागता ॥ जनयित्वावसूनष्टौजिता

लोकास्त्वयाऽक्षयाः २१ देवानांसमयस्त्वेषवसूनांसंश्रुतोमया ॥ जातंजातंमोक्षयिष्येजन्मतोमानुषादिति २२ तत्तेशापाद्विनिर्मुक्ताआपवस्यमहात्मनः ॥ स्व

स्तितेऽस्तुगमिष्यामिपुत्रंपाहिमहाव्रतम् २३ एषपर्यायवासोमेवसूनांसन्निधीकृतः ॥ मत्प्रसूतंविजानीहिगंगादत्तमिमंसुतम् २४ ॥ इतिश्रीमहाभारते आदि

पर्वणि संभ० भीष्मोत्पत्तावष्टनवतितमोऽध्यायः ॥ ९८ ॥ शांतनुरुवाच ॥ आपवोनामकोन्वेषवसूनांकिंचदुष्कृतम् ॥ यस्याभिशापात्तेसर्वेमानुषींयोनिमागताः

१ अनेनचकुमारेणत्वयादत्तेनकिंकृतम् ॥ यस्यचैवकृतेनायंमानुषेषुनिवत्स्यति २ ईशावैसर्वलोकस्यवसवस्तेचवैकथम् ॥ मानुषेषूदपद्यंततन्ममाचक्ष्वजान्हवि ३

॥ वैशंपायनउवाच ॥ एवमुक्तातदागंगाराजानमिदमब्रवीत् ॥ भर्तारंजान्हवीदेवीशांतनुंपुरुषर्षभ ४ ॥ गंगोवाच ॥ यंलेभेवरुणःपुत्रंपुराभरतसत्तम ॥ वसिष्ठना

मासमुनिःख्यातआपवइत्युत ५ तस्याश्रमपदंपुण्यंमृगपक्षिसमन्वितम् ॥ मेरोःपार्श्वेनगेंद्रस्यसर्वर्तुकुसुमावृतम् ६ सवारुणिस्तपस्तेपेतस्मिन्भरतसत्तम ॥ व

नेपुण्यकृतांश्रेष्ठःस्वादुमूलफलोदके ७ दक्षस्यदुहितायातुसुरभीत्यभिशब्दिता ॥ गांप्रजातातुसादेवीकश्यपाद्भरतर्षभ ८ अनुग्रहार्थंजगतःसर्वकामदुहांवरा ॥

तांलेभेगांतुधर्मात्माहोमधेनुंसवारुणिः ९ सातस्मिंस्तापसारण्येवसंतीमुनिसेविते ॥ चचारपुण्येरम्येचगौरपेतभयातदा १० अथतद्वनमाजग्मुःकदाचिद्भरतर्षभ ॥

पृथ्वाद्यावसवःसर्वेदेवादेवर्षिसेवितम् ११ तेसदारावनंतच्चव्यचरंतसमंततः ॥ रेमिरेरमणीयेषुपर्वतेषुवनेषुच १२ तत्रैकस्याथभार्यातुवसोर्वासवविक्रम ॥ संचरंतीव

नेतस्मिन्गांददर्शसुमध्यमा १३ नंदिनींनामराजेंद्रसर्वकामधुगुत्तमाम् ॥ साविस्मयसमाविष्टाशीलद्रविणसंपदा १४ द्यवेदर्शयामासतांगांगोवृषभेक्षण ॥ आ

पीनांचसुदोग्ध्रींचसुवालधिखुरांशुभाम् १५ उपपन्नांगुणैःसर्वैःशीलेनानुत्तमेनच ॥ एवंगुणसमायुक्तांवसवेवसुनंदिनी १६ दर्शयामासराजेंद्रपुरापौरवनंदन ॥

द्यौस्तदातांतुदृष्ट्वैवगांगजेंद्रेंद्रविक्रम १७ उवाचराजंस्तांदेवींतस्यारूपगुणान्वदन् ॥ एषागौरुत्तमादेवीवारुणेरसितेक्षणा १८ ऋषेस्तस्यवरारोहेयस्येदंवनमुत्त

मम् ॥ अस्याःक्षीरंपिबेन्मर्त्यःस्वादुयोवैसुमध्यमे १९ दशवर्षसहस्राणिसजीवेत्स्थिरयौवनः ॥ एतच्छ्रुत्वातुसादेवीनृपोत्तमसुमध्यमा २० तमुवाचानवद्यांगी

३४ भर्तारंदीप्ततेजसम् ॥ अस्तिमेमानुषेलोकेनरदेवात्मजासखी २१

आपवोनामेति १।२ । ३ । ४ । ५ । ६ । ७ गांप्रजातानंदिनींजनितवती ८ । ९ ।१०।११ । १२ । १३ । १४ द्यवेद्युसंज्ञायवसवे वाल्धिःपुच्छं १५ वसुनंदिनीवसुप्रिया १६।१७।१८। १९।२०।२१

२२ । २३ । २४ । २५ । २६ । २७ प्रपातोवसिष्ठशापरूपोभृगुपतनंवा । नतर्कितःरागांधत्वात् २८ । २९ । ३० । ३१ सुवालधिंसुपुच्छां ३२ । ३३ । ३४ । ३५ । ३६ । ३७

नाम्नाजितवतीनामरूपयौवनशालिनी ॥ उशीनरस्यराजर्षेःसत्यसंधस्यधीमतः २२ दुहिताप्रथितालोकेमानुषेरूपसंपदा ॥ तस्याहेतोर्महाभागसवत्सांगांममे

॥१००॥ प्सिताम् २३ आनयस्वामरश्रेष्ठत्वरितंपुण्यवर्धन ॥ यावदस्याःपयःपीत्वासासखीमममानद २४ मानुषेषुभवत्वेकाजरारोगविवर्जिता ॥ एतन्ममहाभागकर्तु अ०

मर्हस्यनिंदित २५ प्रियंप्रियतरंह्यस्मान्नास्तिमेऽन्यत्कथंचन ॥ एतच्छ्रुत्वावचस्तस्यादेव्याःप्रियचिकीर्षया २६ पृथ्वाद्यैर्भ्रातृभिःसार्धंद्यौस्तदातांजहारगाम् ॥ ॥ ९९ ॥

तयाकमलपत्राक्ष्यानियुक्तोद्यौस्तदानृप २७ ऋषेस्तस्यतपस्तीव्रंनशशाकनिरीक्षितुम् ॥ हृतागौःसातदातेनप्रपातस्तुनतर्कितः २८ अथाश्रमपदंप्राप्तः

फलान्यादायवारुणिः ॥ नचापश्यत्सगांतत्रसवत्सांकाननोत्तमे २९ ततःसमृगयामासवनेतस्मिंस्तपोधनः ॥ नाध्यागमच्चमृगयंस्तांगांमुनिरुदारधीः ३० ज्ञा

त्वातथाऽपनीतांतांवसुभिर्दिव्यदर्शनः ॥ ययौक्रोधवशंसद्यःशशापचवसूंस्तदा ३१ यस्मान्मेवसवोजह्रुर्गांवैदोग्ध्रींसुवालधिम् ॥ तस्मात्सर्वेजनिष्यंतिमानुषेषु

नसंशयः ३२ एवंशशापभगवान्वसूंस्तान्भरतर्षभ ॥ वशंक्रोधस्यसंप्राप्तआपवोमुनिसत्तमः ३३ शप्त्वाचतान्महाभागस्तपस्येवमनोदधे ॥ एवंसशप्तवान्राज

न्वसूनष्टौतपोधनः ३४ महाप्रभावोब्रह्मर्षिर्देवान्क्रोधसमन्वितः ॥ अथाश्रमपदंप्राप्तास्तेवैभूयोमहात्मनः ३५ शप्ताःस्मइतिजानंतऋषिंतमुपचक्रमुः ॥ प्रसाद

यंतस्तमृषिंवसवःपार्थिवर्षभ ३६ लेभिरेनचतस्मात्तेप्रसादमृषिसत्तमात् ॥ आपवात्पुरुषव्याघ्रसर्वधर्मविशारदात् ३७ उवाचचसधर्मात्माशप्तायूयंधरादयः ॥

अनुसंवत्सरात्सर्वेशापमोक्षमवाप्स्यथ ३८ अयंतुयत्कृतेयूयंमयाशप्ताःसवत्स्यति ॥ द्यौस्तदामानुषेलोकेदीर्घकालंस्वकर्मणः ३९ नान्नृतंतच्चिकीर्षामिक्रुद्धोयु

ष्मान्यदब्रुवम् ॥ नप्रजास्यतिचाप्येषमानुषेषुमहामनाः ४० भविष्यतिचधर्मात्मासर्वशास्त्रविशारदः ॥ पितुःप्रियहितेयुक्तःस्त्रीभोगान्वर्जयिष्यति ४१ एवमु

क्त्वावसून्सर्वान्सजगाममहानृषिः ॥ ततोमामुपजग्मुस्तेसमेतावसवस्तदा ४२ अयाचंतचमांराजन्वरंसचमयाकृतम् ॥ जातान्जातान्प्रक्षिपास्मान्स्वयंगंगेत्वमं

भसि ४३ एवंतेषामहंसम्यक्शप्तानांराजसत्तम ॥ मोक्षार्थंमानुषाल्लोकाद्यथावत्कृतवत्यहम् ४४ अयंशापादृषेस्तस्यएकएवनृपोत्तम ॥ द्यौराजन्मानुषेलोकेचि

रंवत्स्यतिभारत ४५ ॥ वैशंपायनउवाच ॥ एतदाख्यायसादेवीतत्रैवांतरधीयत ॥ आदायचकुमारंतंजगामाथयथेप्सितम् ४६ सतुदेवव्रतोनामगांगेयइतिचा

भवत् ॥ द्युनामाशांतनोःपुत्रःशांतनोरधिकोगुणैः ४७ शांतनुश्चापिशोकार्तोजगामस्वपुरंततः ॥ तस्याहंकीर्तयिष्यामिशांतनोरधिकान्गुणान् ४८ महाभाग्यं

चनृपतेर्भारतस्यमहात्मनः ॥ यस्येतिहासोद्युतिमान्महाभारतमुच्यते ४९ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वणिआपवोपाख्यानेनवनवतितमोऽध्यायः ॥ ९९ ॥१००॥

३८ । ३९ नप्रजास्यत्यात्मनःप्रजेच्छांनकरिष्यति क्यजंतोर्यं ४० स्त्रत्रहेतुःपितुरिति ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे नवनवतितमोऽध्यायः ॥ ९९ ॥ ॥ ७ ॥

सराजेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ पुटभेदनेपत्तने । 'पत्तनंपुटभेदनं'इत्यमरः १२ दानंवहिर्वेदि । धर्मःस्वाचारः । तपोजपोपवासादि । योगआत्मानुसंधानं ।

॥ वैशंपायनउवाच ॥ सराजाशांतनुर्धीमान्देवराजर्षिसत्कृतः ॥ धर्मात्मासर्वलोकेषुसत्यवागितिविश्रुतः १ दमोदानंक्षमाबुद्धिर्ह्रीर्धृतिस्तेजउत्तमम् ॥ नित्या

न्यासन्महासत्वेशांतनौपुरुषर्षभे २ एवंसगुणसंपन्नोधर्मार्थकुशलोनृपः ॥ आसीद्भरतवंशस्यगोप्तासर्वजनस्यच ३ कंबुग्रीवःपृथुव्यंसोमत्तवारणविक्रमः ॥ अन्वि

तःपरिपूर्णार्थैःसर्वैर्नृपतिलक्षणैः ४ तस्यकीर्तिमतोवृत्तमवेक्ष्यसततंनराः ॥ धर्मएवपरःकामादर्थाच्चेतिव्यवस्थिताः ५ एतान्यासन्महासत्वेशांतनौपुरुषर्षभे ॥

नचास्यसदृशःकश्चिद्धर्मतःपार्थिवोऽभवत् ६ वर्तमानंहिधर्मेषुसर्वधर्मभृतांवरम् ॥ तंमहीपामहीपालंराजराज्येऽभ्यषेचयन् ७ वीतशोकभयाबाधाःसुखस्वप्नप्रति

बोधनाः ॥ पतिंभारतगोप्तारंसमपद्यंतभूमिपाः ८ तेनकीर्तिमताशिष्टाःशक्रप्रतिमतेजसा ॥ यज्ञदानक्रियाशीलाःसमपद्यंतभूमिपाः ९ शांतनुप्रमुखैर्गुप्तेलोके

नृपतिभिस्तदा ॥ नियमात्सर्ववर्णानांधर्मोत्तरमवर्तत १० ब्रह्मपर्यचरत्क्षत्रंविशःक्षत्रमनुव्रताः ॥ ब्रह्मक्षत्रानुरक्ताश्चशूद्राःपर्यचरन्विशः ११ सहास्तिनपुरेरम्ये

कुरूणांपुटभेदने ॥ वसन्सागरपर्यंतामन्वशासद्वसुंधराम् १२ सदेवराजसदृशोधर्मज्ञःसत्यवागृजुः ॥ दानधर्मतपोयोगाच्छ्रियापरमयायुतः १३ अरागद्वेषसंयुक्तः

सोमवत्प्रियदर्शनः ॥ तेजसासूर्यकल्पोऽभूद्वायुवेगसमोजवे ॥ अंतकप्रतिमःकोपेक्षमयापृथिवीसमः १४ वधःपशुवराहाणांतथैवमृगपक्षिणाम् ॥ शांतनौपृथि

वीपालेनावर्ततत्तथानृप १५ ब्रह्मधर्मोत्तरेराज्येशांतनुर्विनयात्मवान् ॥ समंशशासभूतानिकामरागविवर्जितः १६ देवर्षिपितृयज्ञार्थमारभ्यंतततदाक्रियाः ॥ नचा

धर्मेणकेषांचित्प्राणिनामभवद्वधः १७ असुखानामनाथानांतिर्यग्योनिषुवर्ततम् ॥ सएवराजासर्वेषांभूतानामभवत्पिता १८ तस्मिन्कुरुपतिश्रेष्ठेराजराजेश्वरे

सति ॥ श्रितावागभवत्सत्यंदानधर्माश्रितंमनः १९ ससमाःषोडशाष्टौचचतस्रोऽष्टौतथाऽपराः ॥ रतिमप्राप्नुवन्स्त्रीषुबभूववनगोचरः २० तथारूपस्तथाचार

स्तथावृत्तस्तथाश्रुतः ॥ गांगेयस्तस्यपुत्रोऽभून्नाम्नादेवव्रतोवसुः २१ सर्वास्त्रेषुसनिष्णातःपार्थिवेष्वितरेषुच ॥ महाबलोमहासत्वोमहावीर्योमहारथः २२ सकदा

चिन्मृगंविध्यन्गंगामनुसरन्नदीम् ॥ भागीरथीमल्पजलांशांतनुर्दृष्टवान्नृपः २३ तांदृष्ट्वाचिंतयामासशांतनुःपुरुषर्षभः ॥ स्यंदतेकिंन्वियंनाद्यसरिच्छ्रेष्ठायथापुरा

२४ ततोनिमित्तमन्विच्छन्ददर्शसमहामनाः ॥ कुमारंरूपसंपन्नंबृहंतंचारुदर्शनम् २५ दिव्यमस्त्रंविकुर्वाणंयथादेवंपुरंदरम् ॥ कृत्स्नांगंगांसमावृत्यशरैस्तीक्ष्णै

रवस्थितम् २६ तांशरैराचितांदृष्ट्वानदींगंगांतदंतिके ॥ अभवद्विस्मितोराजादृष्ट्वाकर्मातिमानुषम् २७ जातमात्रंपुरादृष्टातंपुत्रंशांतनुस्तदा ॥ नोपलेभेस्मृतिं

धीमानभिज्ञातुंतमात्मजम् २८ सतुतंपितरंदृष्ट्वामोहयामाससमायया ॥ संमोह्यतुततःक्षिप्रंतत्रैवांतरधीयत २९

एतच्चतुष्टयात् १३ । १४ । १५ ब्रह्मधर्मोत्तरेअहिंसाधर्मप्रधाने । विनयात्मवान्विनयवानात्मवान्जितचित्तश्च १६ । १७ । १८ वाक्सत्यंश्रिताऽभवत् १९ षोडशादीनांसंकलनेषट्त्रिंशत्समाःवर्षाणि २० । २१ अस्त्रेषुमंत्रमयेषुशस्त्रेषु पार्थिवेषुधनुर्बाणगदादिपृथिवीविकारेषुशस्त्रेषु २२ शरसंधानेनगंगाप्रवाहस्यनिरोधादल्पजलां २३ स्यंदतेप्रस्रवति २४ । २५ । २६ । २७ अभिज्ञातुंपरिवेत्तुं २८ । २९

३० । ३१ । ३२ । ३३ । ३४ अधिजगेअधीतवान् ३५ उशनाः शुक्रः ३६ अंगिरसःपुत्रोबृहस्पतिः ३७ । ३८ । ३९ । ४० । ४१ सोऽऽत्मानंसआत्मानं ४२ । ४३ । ४४ । ४५ । ४६

तदद्भुतंततोदृष्ट्वातत्रराजासशांतनुः ॥ शंकमानःसुतंगंगामब्रवीद्दर्शयेतिह ३० दर्शयामासतंगंगाबिभ्रतीरूपमुत्तमम् ॥ गृहीत्वादक्षिणेपाणौतंकुमारमलंकृतम्
३१ अलंकृतामाभरणैर्विरजोंबरसंवृताम् ॥ दृष्टपूर्वामपिसतांनाभ्यजानात्सशांतनुः ३२ ॥ गंगोवाच ॥ यंपुत्रमष्टमंराजंस्त्वंपुरामय्यविंदथाः ॥ सचायंपुरुषव्या
घ्रसर्वास्त्रविदुत्तमः ३३ गृहाणेमंमहाराजमयासंवर्धितंसुतम् ॥ आदायपुरुषव्याघ्रनयस्वैनंगृहंविभो ३४ वेदानधिजगेसांगान्वसिष्ठादेषवीर्यवान् ॥ कृतास्त्रः
परमेष्वासोदेवराजसमोयुधि ३५ सुराणांसंमतोनित्यमसुराणांचभारत ॥ उशनावेदयच्छास्त्रमयंतद्वेदसर्वशः ३६ तथैवांगिरसःपुत्रःसुरासुरनमस्कृतः ॥ यद्वे
दशास्त्रंतच्चापिकृत्स्नमस्मिन्प्रतिष्ठितम् ३७ तवपुत्रेमहाबाहौसांगोपांगंमहात्मनि ॥ ऋषिःपरैरनाधृष्योजामदग्न्यःप्रतापवान् ३८ यदस्त्रंवेदरामश्चतदेतस्मि
न्प्रतिष्ठितम् ॥ महेष्वासमिमंराजन्राजधर्मार्थकोविदम् ३९ मयादत्तंनिजंपुत्रंवीरंवीरगृहंनय ॥ वैशंपायनउवाच ॥ तयैवंसमनुज्ञातःपुत्रमादायशांतनुः
४० भ्राजमानंयथाऽऽदित्यमाययौस्वपुरंप्रति ॥ पौरवस्तुपुरींगत्वापुरंदरपुरोपमाम् ४१ सर्वकामसमृद्धार्थंमेनेसोऽऽत्मानमात्मना ॥ पौरवेषुततःपुत्रंराज्यार्थ
मभयप्रदम् ४२ गुणवंतंमहात्मानंयौवराज्येऽभ्यषेचयत् ॥ पौरवाञ्शांतनोःपुत्रःपितरंचमहायशाः ४३ राष्ट्रंचरंजयामासवृत्तेनभरतर्षभ ॥ सतथासहपुत्रे
णरममाणोमहीपतिः ४४ वर्तयामासवर्षाणिचत्वार्यमितविक्रमः ॥ सकदाचिद्वनंयातोयमुनामभितोनदीम् ४५ महीपतिरनिर्देश्यमाजिघ्रद्गंधमुत्तमम् ॥ त
स्यप्रभवमन्विच्छन्विचचारसमंततः ४६ सददर्शतदाकन्यांदाशानांदेवरूपिणीम् ॥ तामपृच्छत्सदृष्ट्वैवकन्यामसितलोचनाम् ४७ कस्यत्वमसिकाचासिकिंच
भीरुचिकीर्षसि ॥ साऽब्रवीद्दाशकन्याऽस्मिधर्मार्थंवाहयेतरीम् ४८ पितुर्नियोगाद्भद्रंतेदाशराज्ञोमहात्मनः ॥ रूपमाधुर्यगंधैस्तांसंयुक्तांदेवरूपिणीम् ४९
समीक्ष्यराजादाशेयींकामयामासशांतनुः ॥ सगत्वापितरंतस्यावरयामासतांतदा ५० पर्यपृच्छत्ततस्तस्याःपितरंसोऽऽत्मकारणात् ॥ सचतंप्रत्युवाचेदंदाश
राजोमहीपतिम् ५१ जातमात्रैवमेदेयावरायवरवर्णिनी ॥ हृदिकामस्तुमेकश्चित्तंनिबोधजनेश्वर ५२ यदीमांधर्मपत्नींत्वंमत्तःप्रार्थयसेऽनघ ॥ सत्यवागसिसत्येन
समयंकुरुमेततः ५३ समयेनप्रदद्यांतेकन्यामहमिमांनृप ॥ नहिमेत्वत्समःकश्चिद्वरोजातुभविष्यति ५४ ॥ शांतनुरुवाच ॥ श्रुत्वातववरंदाशव्यवस्येयमहंतव ॥
दातव्यंचेत्प्रदास्यामिनत्वदेयंकथंचन ५५ ॥ दाशउवाच ॥ अस्यांजायेतयःपुत्रःसराजापृथिवीपते ॥ त्वदूर्ध्वमभिषेक्तव्योनान्यःकश्चनपार्थिव ५६
॥ वैशंपायनउवाच ॥ नाकामयततंदातुंवरंदाशायशांतनुः ॥ शरीरजेनतीव्रेणदह्यमानोऽपिभारत ५७

दाशानांधीवराणां ४७ तरिंनावं ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ व्यवस्येयंविनिश्चिनुयांदेयंनवेति ५५ । ५६ शरीरजेनकामेन ५७



५८ । ५९ । ६० हरिणःपांडुगात्रः ६१ । ६२ । ६३ । ६४ । ६५ । ६६ विद्यासंतानेशिष्यप्रशिष्यद्वारा ६७ एवमिति एतत्संतानस्यश्रेयःसाधनत्वंमनुष्येषुतदन्यासुप्रजासुपश्वादिषुचम
सिद्धं । 'नापुत्रस्यलोकोऽस्तीतितत्सर्वेपशवोविदुः । तस्मात्तुपुत्रोमातरंस्वसारंचाधिरोहति'इतिमंत्रलिंगात् ६८ अपत्यंश्रेयःसाधनमितियत्तत्रमेसंशयोनास्ति तस्मान्मंदपालवत्यथाकथंचित्प्रजोत्पा

सचिंतयन्नेवतदादाशकन्यांमहीपतिः ॥ प्रत्ययाद्धास्तिनपुरंकामोपहतचेतनः ५८ ततःकदाचिच्छोचंतंशांतनुंध्यानमास्थितम् ॥ पुत्रोदेवव्रतोऽभ्येत्यपितरं
वाक्यमब्रवीत् ५९ सर्वतोभवतःक्षेमंविधेयाःसर्वपार्थिवाः ॥ तत्किमर्थमिहाभीक्ष्णंपरिशोचसिदुःखितः ६० ध्यायन्निवचमांराजन्नाभिभाषसिकिंचन ॥ नचाश्वे
नविनिर्यासिविवर्णोहरिणःकृशः ६१ व्याधिमिच्छामितेज्ञातुंप्रतिकुर्यांहितत्रवै ॥ एवमुक्तःसपुत्रेणशांतनुःप्रत्यभाषत ६२ असंशयंध्यानपरोयथावत्सतथाशृणु ॥
अपत्यंनस्त्वमेवैकःकुलेमहतिभारत ६३ शस्त्रनित्यश्चसततंपौरुषेपर्यवस्थितः ॥ अनित्यतांचलोकानामनुशोचामिपुत्रक ६४ कथंचित्तवगांगेयविपत्तौनास्ति
नःकुलम् ॥ असंशयंत्वमेवैकःशतादपिवरःसुतः ६५ नचाप्यहंवृथाभूयोदारान्कर्तुमिहोत्सहे ॥ संतानस्याविनाशायकामयेभद्रमस्तुते ६६ अनपत्यतैकपुत्र
त्वमित्याहुर्धर्मवादिनः ॥ अग्निहोत्रंत्रयीविद्यासंतानमपिचाक्षयम् ६७ सर्वाण्येतान्यपत्यस्यकलांनार्हंतिषोडशीम् ॥ एवमेतन्मनुष्येषुतच्चसर्वप्रजास्विति ६८
यदपत्यंमहाप्राज्ञतत्रमेनास्तिसंशयः ॥ एषात्रयीपुराणानांदेवतानांचशाश्वती ६९ त्वंचशूरःसदामर्षीशस्त्रनित्यश्चभारत ॥ नान्यत्रयुद्धात्तस्मात्तेनिधनंविद्यते
क्वचित् ७० सोऽस्मिसंशयमापन्नस्त्वयिशांतेकथंभवेत् ॥ इतितेकारणंतातदुःखस्योक्तमशेषतः ७१ ॥ वैशंपायनउवाच ॥ ततस्तत्कारणंराज्ञोज्ञात्वासर्वमशे
षतः ॥ देवव्रतोमहाबुद्धिःप्रज्ञयाचान्वचिंतयत् ७२ अभ्यगच्छत्तदैवाशुवृद्धामात्यंपितुर्हितम् ॥ तमपृच्छत्तदाऽभ्येत्यपितुस्तच्छोककारणम् ७३ तस्मैसकुरु
मुख्याययथावत्परिपृच्छते ॥ वरंशशंसकन्यांतामुद्दिश्यभरतर्षभ ७४ ततोदेवव्रतोवृद्धैःक्षत्रियैःसहितस्तदा ॥ अभिगम्यदाशराजंकन्यांवव्रेपितुःस्वयम् ७५ तं
दाशःप्रतिजग्राहविधिवत्प्रतिपूज्यच ॥ अब्रवीच्चैनमासीनंराजसंसदिभारत ७६ त्वमेवनाथःपर्याप्तःशांतनोर्भरतर्षभ ॥ पुत्रःशस्त्रभृतांश्रेष्ठःकिंतुवक्ष्यामितेवचः
७७ कोहिसंबंधकंश्लाघ्यमीप्सितंयौनमीदृशम् ॥ अतिक्रामन्नतप्येतसाक्षादपिशतक्रतुः ७८ अपत्यंचैतदार्यस्ययोयुष्माकंसमोगुणैः ॥ यस्यशुक्रात्सत्यवतीसंभू
तावरवर्णिनी ७९ तेनमेबहुशस्तातपितातेपरिकीर्तितः ॥ अर्हःसत्यवतींवोढुंधर्मज्ञःसनराधिपः ८० असितोह्यपिदेवर्षिःप्रत्याख्यातःपुरामया ॥ सत्यवत्या
भृशंचार्थीसआसीदृषिसत्तमः ८१ कन्यापितृत्वात्किंचित्तुवक्ष्यामित्वांनराधिप ॥ बलवत्सपत्नतामत्रदोषंपश्यामिकेवलम् ८२ यस्यहित्वंसपत्नःस्यागंधर्वस्यासुर
स्यवा ॥ नसजातुचिरंजीवेत्त्वयिक्रुद्धेपरंतप ८३ एतावानत्रदोषोहिनान्यःकश्चनपार्थिव ॥ एतज्जानीहिभद्रंतेदानादानेपरंतप ८४




दनंकर्तव्यमितिभावः त्रयीवेदः । सोऽयंलोकःपुत्रेणैवजय्योनान्येनकर्मणा । कर्मणापितृलोकोविद्ययादेवलोकइत्यादिः । पुराणानांमूलभूता देवतानांप्रमाणभूता ६९ । ७० । ७१
७२ । ७३ वरंवरणीयं ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४

८५ । ८६ । ८७ । ८८ । ८९ कौमारिकाणांकुमारीस्नेहवतां ९० । ९१ । ९२ । ९३ । ९४ । ९५ । ९६ । ९७ भीष्मोऽयं भयंकरकर्मकारित्वात् ९८ । ९९ । १०० । १ । २ । १०३

॥१०२॥ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुगांगेयस्तद्युक्तंप्रत्यभाषत ॥ शृण्वतांभूमिपालानांपितुरर्थायभारत ८५ इदंमेव्रतमादत्स्वसत्यंसत्यवतांवर ॥ नैवजातोनवाऽजा
तईदृशंवकुमुत्सहेत् ८६ एवमेतत्करिष्यामियथात्वमनुभाषसे ॥ योऽस्यांजनिष्यतेपुत्रःसनोराजाभविष्यति ८७ इत्युक्तःपुनरेवाथतंदाशःप्रत्यभाषत ॥ चिकी ॥१०१॥
र्षुर्दुष्करंकर्मराज्यार्थेभरतर्षभ ८८ त्वमेवनाथःसंप्राप्तःशांतनोरमितद्युते ॥ कन्यायाश्चैवधर्मात्मन्प्रभुर्दानायचेश्वरः ८९ इदंतुवचनंसौम्यकार्यंचैवनिबोधमे ॥
कौमारिकाणांशीलेनवक्ष्याम्यहमरिंदम ९० यत्त्वयासत्यवत्यर्थेसत्यधर्मपरायण ॥ राजमध्येप्रतिज्ञातमनुरूपंतवैवतत् ९१ नान्यथातन्महाबाहोसंशयोऽत्रन
कश्चन ॥ तवापत्यंभवेद्यत्तुतत्रनःसंशयोमहान् ९२ ॥ वैशंपायनउवाच ॥ तस्यैतन्मतमाज्ञायसत्यधर्मपरायणः ॥ प्रत्यजानात्तदाराजन्पितुःप्रियचिकीर्षया
९३ ॥ गांगेयउवाच ॥ दाशराजनिबोधेदंवचनंमेनृपोत्तम ॥ शृण्वतांभूमिपालानांयद्ब्रवीमिपितुःकृते ९४ राज्यंतावत्पूर्वमेवमयात्यक्तंनराधिपाः ॥ अपत्य
हेतोरपिचकरिष्येऽद्यविनिश्चयम् ९५ अद्यप्रभृतिमेदाशब्रह्मचर्यंभविष्यति ॥ अपुत्रस्यापिमेलोकाभविष्यंत्यक्षयादिवि ९६ ॥ वैशंपायनउवाच ॥ तस्यत
द्वचनंश्रुत्वासंप्रहृष्टतनूरुहः ॥ ददानीत्येवतंदाशोधर्मात्माप्रत्यभाषत ९७ ततोऽन्तरिक्षेऽप्सरसोदेवाःसर्षिगणास्तदा ॥ अभ्यवर्षंतकुसुमैर्भीष्मोऽयमिति
चाब्रुवन् ९८ ततःसपितुरर्थायतामुवाचयशस्विनीम् ॥ अधिरोहरथंमातर्गच्छावःस्वगृहानिति ९९ ॥ वैशंपायनउवाच ॥ एवमुक्त्वातुभीष्मस्तांरथ
मारोप्यभाविनीम् ॥ आगम्यहास्तिनपुरंशांतनोःसंन्यवेदयत् १०० तस्यतद्दुष्करंकर्मप्रशशंसुर्नराधिपाः ॥ समेताश्चपृथक्चैवभीष्मोयमितिचाब्रुवन् १
तच्छ्रुत्वादुष्करंकर्मकृतंभीष्मेणशांतनुः ॥ स्वच्छंदमरणंतुष्टोददौतस्मैमहात्मने २ नतेमृत्युःप्रभवितायावज्जीवितुमिच्छसि ॥ त्वत्तोह्यनुज्ञांसंप्राप्यमृत्युःप्र
भविताऽनघ १०३ ॥ इति श्रीमहाभारते आदिपर्वणि संभवपर्वणि सत्यवतीलाभोपाख्याने शततमोऽध्यायः ॥ १०० ॥ ॥ ७ ॥
॥ वैशंपायनउवाच ॥ ततोविवाहेनिर्वृत्तेसराजाशांतनुर्नृपः ॥ तांकन्यांरूपसंपन्नांस्वगृहेसंन्यवेशयत् १ ततःशांतनवोधीमान्सत्यवत्यामजायत ॥ वीरश्चित्रां
गदोनामवीर्यवान्पुरुषेश्वरः २ अथापरंमहेष्वासंसत्यवत्यांसुतंप्रभुः ॥ विचित्रवीर्यंराजानंजनयामासवीर्यवान् ३ अप्राप्तवतितस्मिंस्तुयौवनंपुरुषर्षभे ॥ सराजा
शांतनुर्धीमान्कालधर्ममुपेयिवान् ४ स्वर्गतेशांतनौभीष्मश्चित्रांगदमरिंदमम् ॥ स्थापयामासवैराज्येसत्यवत्यामतेस्थितः ५ सतुचित्रांगदःशौर्यात्सर्वांश्चिक्षेपपा ॥१०२॥
र्थिवान् ॥ मनुष्यंनहिमेनेसकंचित्सदृशमात्मनः ६ तंक्षिपंतंसुरांश्चैवमनुष्यानसुरांस्तथा ॥ गंधर्वराजोबलवांस्तुल्यनामाऽभ्ययात्तदा ७ तेनास्यसुमहद्युद्धंकुरु
क्षेत्रेबभूवह ॥ तयोर्बलवतोस्तत्रगंधर्वकुरुमुख्ययोः ॥ नद्यास्तीरेसरस्वत्याःसमास्तिस्रोऽभवद्रणः ८

॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपे शततमोऽध्यायः ॥ १०० ॥ ॥ ७ ॥ ॥ ७ ॥ ततइति १ । २ । ३ कालधर्मंमृत्युं ४ । ५ । ६ तुल्यनामाचित्रांगदनामा ७ । ८

९ अंतायकृत्वाअंतंकृत्वायुद्धंकृत्वेत्यर्थः १० । ११ । १२ । १३ । १४ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे एकाधिकशततमोऽध्यायः ॥ १०१ ॥ ॥ ७ ॥ हतेइति १ । २

तस्मिन्विमर्देतुमुलेशस्त्रवर्षसमाकुले ॥ मायाधिकोऽवधीद्वीरंगंधर्वःकुरुसत्तमम् ९ सहत्वातुनरश्रेष्ठंचित्रांगदमरिंदमम् ॥ अंतायकृत्वागंधर्वोदिवमाचक्रमेततः १०
तस्मिन्पुरुषशार्दूलेनिहतेभूरितेजसि ॥ भीष्मःशांतनवोराजाप्रेतकार्याण्यकारयत् ११ विचित्रवीर्यंचतदाबालमप्राप्तयौवनम् ॥ कुरुराज्येमहाबाहुरभ्यषिंचदनं
तरम् १२ विचित्रवीर्यःसतदा भीष्मस्यवचनेस्थितः ॥ अन्वशासन्महाराजपितृपैतामहंपदम् १३ सधर्मशास्त्रकुशलंभीष्मंशांतनवंनृपः ॥ पूजयामासधर्मेणसचै
नंप्रत्यपालयत् १४ ॥ इति श्रीमहाभारते आदिपर्वणि संभवपर्वणि चित्रांगदोपाख्याने एकाधिकशततमोऽध्यायः ॥ १०१ ॥ ॥ ७ ॥ ॥ वैशंपायन
उवाच ॥ हतेचित्रांगदेभीष्मोबालेभ्रातरिकौरव ॥ पालयामासतद्राज्यंसत्यवत्यामतेस्थितः १ संप्राप्तयौवनंदृष्ट्वाभ्रातरंधीमतांवरः ॥ भीष्मोविचित्रवीर्यस्यविवा
हायाकरोन्मतिम् २ अथकाशिपतेर्भीष्मःकन्यास्तिस्रोऽप्सरोपमाः ॥ शुश्रावसहिताराजन्वृण्वानावैस्वयंवरम् ३ ततःसरथिनांश्रेष्ठोरथेनैकेनशत्रुजित् ॥ जगामानु
मतेमातुःपुरींवाराणसींप्रभुः ४ तत्रराज्ञःसमुदितान्सर्वतःसमुपागतान् ॥ ददर्शकन्यास्ताश्चैवभीष्मःशांतनुनंदनः ५ कीर्त्यमानेषुराज्ञांतुतदानामसुसर्वशः ॥ ए
काकिनंतदाभीष्मंवृद्धंशांतनुनंदनम् ६ सोद्वेगाइवतंदृष्ट्वाकन्याःपरमशोभनाः ॥ अपाक्रामंतताःसर्वावृद्धइत्येवचिंतया ७ वृद्धःपरमधर्मात्मावलीपलितधारणः ॥
किंकारणमिहायातोनिर्लज्जोभरतर्षभः ८ मिथ्याप्रतिज्ञोलोकेषुकिंवदिष्यतिभारत ॥ ब्रह्मचारीतिभीष्मोहिवृथैवप्रथितोभुवि ९ इत्येवंप्रब्रुवंतस्तेहसंतिस्मनृपा
धमाः ॥ वैशंपायनउवाच ॥ क्षत्रियाणांवचःश्रुत्वाभीष्मश्चुक्रोधभारत १० भीष्मस्तदास्वयंकन्यावरयामासताःप्रभुः ॥ उवाचचमहीपालान्राजन्जलदनिः
स्वनः ११ रथमारोप्यताःकन्याभीष्मःप्रहरतांवरः ॥ आहूयदानंकन्यानांगुणवद्भ्यःस्मृतंबुधैः १२ अलंकृत्ययथाशक्तिप्रदायचधनान्यपि ॥ प्रयच्छंत्यपरेक
न्यांमिथुनेनगवामपि १३ वित्तेनकथितेनान्येबलेनान्येऽनुमान्यच ॥ प्रमत्तामुपयंत्यन्येस्वयमन्येचविंदते १४ आर्षंविधिंपुरस्कृत्यदारान्विंदंतिचापरे ॥ अष्टमं
तमथोवित्तविवाहंकविभिर्वृतम् १५ स्वयंवरंतुराजन्याःप्रशंसंत्युपयांतिच ॥ प्रमथ्यतुहृतामाहुर्ज्यायसींधर्मवादिनः १६ तइमाःपृथिवीपालाजिहीर्षामिबलादितः ॥
तेयतध्वंपरंशक्त्याविजयायेतरायवा १७ स्थितोऽहंपृथिवीपालायुद्धायकृतनिश्चयः ॥ एवमुक्त्वामहीपालान्काशिराजंचवीर्यवान् १८ सर्वाःकन्याःसकौरव्योरथमारो
प्यचस्वकम् ॥ आमंत्र्यचसतान्प्रायाच्छीघ्रंकन्याःप्रगृह्यताः १९ ततस्तेपार्थिवाःसर्वेसमुत्पेतुरमर्षिताः ॥ संस्पृशंतःस्वकान्बाहून्दशंतोदशनच्छदान् २० तेषामा
३५ भरणान्याशुत्वरितानांविमुंचताम् ॥ आमुंचतांचवर्माणिसंभ्रमःसुमहानभूत् २१ ताराणामिवसंपातोबभूवजनमेजय ॥ भूषणानांचसर्वेषांकवचानांचसर्वशः २२

३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ आहूयेतिब्राह्मः १२ मिथुनेनगृहीतेनेत्यार्षः १३ वित्तेनेत्यासुरः । बलेनेतिराक्षसः । अनुमान्येतिगांधर्वः । प्रमत्तामितिपैशाचः । स्वयमन्येइति
प्राजापत्यः १४ आर्षविधियज्ञं तेनदैवउक्तः एतेऽष्टौविवाहाः प्रागव्याख्याताः । अधर्मराक्षसविवाहं १५ प्रशंसंतिस्वयंवरमिति १६ । १७ । १८ । १९ । २० । २१ । २२

प्रकीर्यद्भिर्भूषणैरुपलक्षिताअनुसस्रुरितितृतीयेनान्वयः २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ अभ्यान्प्रतितस्यरथचारिणोलाघवंशीघ्र्यपरघ्नजादिच्छेदेयत्ततत्शत्रवोऽप्यपूजयन्निति

सवर्मभिर्भूषणैश्चप्रकीर्यद्भिरितस्ततः ॥ सक्रोधामर्षजिह्मभ्रूकषायीकृतलोचनाः २३ सूतोपक्लृप्तान्रुचिरान्सदश्वैरुपकल्पितान् ॥ रथानास्थायतेवीराःसर्वप्रहरणा
न्विताः २४ प्रयांतमथकौरव्यमनुसस्रुरुदायुधाः ॥ ततःसमभवद्युद्धंतेषांतस्यचभारत ॥ एकस्यचबहूनांचतुमुलंलोमहर्षणम् २५ तेत्विषून्दशसाहस्रांस्तस्मि
न्युगपदाक्षिपन् ॥ अप्राप्तांश्चैवतानाशुभीष्मःसर्वांस्तथाऽन्तरा २६ अच्छिनच्छरवर्षेणमहतालोमवाहिना ॥ ततस्तेपार्थिवाःसर्वेसर्वतःपरिवार्यतम् २७ ववृषुःशरव
र्षेणवर्षेणेवाद्रिमंबुदाः ॥ सतंबाणमयंवर्षंशरैरावार्यसर्वतः २८ ततःसर्वान्महीपालान्पर्यविध्यत्रिभिस्त्रिभिः ॥ एकैकस्तुततोभीष्मंराजन्विव्याधपंचभिः २९ सच
तान्प्रतिविव्याधद्वाभ्यांद्वाभ्यांपराक्रमन् ॥ तद्युद्धमासीत्तुमुलंघोरंदेवासुरोपमम् ३० पश्यतांलोकवीराणांशरशक्तिसमाकुलम् ॥ सधनूंषिध्वजाग्राणिवर्माणिच
शिरांसिच ३१ चिच्छेदसमरेभीष्मःशतशोऽथसहस्रशः ॥ तस्यातिपुरुषानन्यांल्लाघवंरथचारिणः ३२ रक्षणंचात्मनःसंख्येशत्रवोऽप्यभ्यपूजयन् ॥ तान्विनि
र्जित्यतुरणेसर्वशस्त्रभृतांवरः ३३ कन्याभिःसहितःप्रायाद्भारतोभारतान्प्रति ॥ ततस्तंपृष्ठतोराजन्शाल्वराजोमहारथः ३४ अभ्यगच्छदमेयात्माभीष्मंशांतनवं
रणे ॥ वारणंजघनेभिंदन्दंताभ्यामपरोयथा ३५ वासितामनुसंप्राप्तोयूथपोबलिनांवरः ॥ स्त्रीकामस्तिष्ठतिष्ठेतिभीष्ममाहसपार्थिवः ३६ शाल्वराजोमहाबाहुरमर्षे
णप्रचोदितः ॥ ततःसपुरुषव्याघ्रोभीष्मःपरबलार्दनः ३७ तद्वाक्याकुलितःक्रोधाद्विधूमोऽग्निरिवज्वलन् ॥ विततेषुधनुष्पाणिर्विकुंचितललाटभृत् ३८ क्षत्रधर्मं
समास्थायव्यपेतभयसंभ्रमः ॥ निवर्तयामासरथंशाल्वंप्रतिमहारथः ३९ निवर्तमानंतंदृष्ट्वाराजानःसर्वएवते ॥ प्रेक्षकाःसमपद्यंतभीष्मशाल्वसमागमे ४० तौ
वृषाविवनर्दंतौबलिनौवासितांतरे ॥ अन्योन्यमभिवर्तेतांबलविक्रमशालिनौ ४१ ततोभीष्मंशांतनवंशरैःशतसहस्रशः ॥ शाल्वराजोनरश्रेष्ठःसमवाकिरदाशुगैः
४२ पूर्वमभ्यर्दितंदृष्ट्वाभीष्मंशाल्वेनतेनृपाः ॥ विस्मिताःसमपद्यंतसाधुसाध्वितिचाब्रुवन् ४३ लाघवंतस्यतेदृष्ट्वासमरेसर्वपार्थिवाः ॥ अपूजयंतसंहृष्टावाग्भिः
शाल्वंनराधिपम् ४४ क्षत्रियाणांततोवाचःश्रुत्वापरपुरंजयः ॥ क्रुद्धःशांतनवोभीष्मस्तिष्ठतिष्ठेत्यभाषत ४५ सारथिंचाब्रवीत्क्रुद्धोयाहियत्रैषपार्थिवः ॥ याव
देनंनिहन्म्यद्यभुजंगमिवपक्षिराट् ४६ ततोऽस्त्रंवारुणंसम्यग्योजयामासकौरवः ॥ तेनाश्वांश्चतुरोऽमृद्नाच्छाल्वराजस्यभूपते ४७ अस्त्रैरस्त्राणिसंवार्यशाल्वराज
स्यकौरवः ॥ भीष्मोनृपतिशार्दूलन्यवधीत्तस्यसारथिम् ४८ अस्त्रेणचास्याथैंद्रेणन्यवधीत्तुरगोत्तमान् ॥ कन्याहेतोर्नरश्रेष्ठभीष्मःशांतनवस्तदा ४९ जित्वा
विसर्जयामासजीवंतंनृपसत्तमम् ॥ ततःशाल्वःस्वनगरंप्रययौभरतर्षभ ५० ॥१०३॥

संबंधः ३२ । ३३ । ३४ वासितांकरिणींप्राप्तंवारणंयथाऽपरोऽनुप्राप्तोजघनेभिंदन्नितिसंबंधः । 'वासितास्त्रीकरेण्वोश्च'इत्यमरः ३५ । ३६ । ३७ । ३८ । ३९ । ४० वृषौरेतःसेक्तारौगजौ गोवृषा
वेववा तत्साहचर्याद्वासितापुष्पिणीगोस्तदंतरेतन्निमित्तं ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ जीवंतंप्राणमात्रावशेषितं ५०

५१ । ५२ । ५३ । ५४ । ५५ काश्यस्यकाशिराजस्य ५६ अनुजाःकनिष्ठाः ५७ । ५८ । ५९ । ६० । ६१ । ६२ तस्यवैवाहिकस्यकर्मणःकाले ६३ । ६४ । ६५ । ६६ बृहत्यौचतेश्यामे

स्वराज्यमन्वशाच्चैवधर्मेणनृपतिस्तदा ॥ राजानोयेचतत्रासन्स्वयंवरदिदृक्षवः ५१ स्वान्येवतेऽपिराष्ट्राणिजग्मुःपरपुरंजयाः ॥ एवंविजित्यताःकन्याभीष्मः
प्रहरतांवरः ५२ प्रययौहास्तिनपुरंयत्रराजासकौरवः ॥ विचित्रवीर्योधर्मात्माप्रशास्तिवसुधामिमाम् ५३ यथापिताऽस्यकौरव्यःशांतनुर्नृपसत्तमः ॥ सोऽचिरे
णैवकालेनअत्यक्रामन्नराधिप ५४ वनानिसरितश्चैवशैलांश्चविविधान्द्रुमान् ॥ अक्षतःक्षपयित्वाऽरीन्संख्येसंख्येयविक्रमः ५५ आनयामासकाश्यस्यसुताःसागरगा
सुतः ॥ स्नुषाइवसधर्मात्माभगिनीरिवचानुजाः ५६ यथादुहितरश्चैवपरिगृह्यययौकुरून् ॥ आनिन्येसमहाबाहुर्भ्रातुःप्रियचिकीर्षया ५७ ताःसर्वगुणसंपन्ना
भ्राताभ्रात्रेयवीयसे ॥ भीष्मोविचित्रवीर्यायप्रददौविक्रमाहृताः ५८ एवंधर्मेणधर्मज्ञःकृत्वाकर्मातिमानुषम् ॥ भ्रातुर्विचित्रवीर्यस्यविवाहायोपचक्रमे ५९ सत्य
वत्यासहमिथःकृत्वानिश्चयमात्मवान् ॥ विवाहंकारयिष्यंतंभीष्मंकाशिपतेःसुता ॥ ज्येष्ठातासामिदंवाक्यमब्रवीद्धसतीतदा ६० मयासौभपतिःपूर्वंमनसाभिवृतः
पतिः ॥ तेनचास्मिवृतापूर्वमेषकामश्चमेपितुः ६१ मयावरयितव्योऽभूच्छाल्वस्तस्मिन्स्वयंवरे ॥ एतद्विज्ञायधर्मज्ञधर्मतत्त्वंसमाचर ६२ एवमुक्तस्तयाभीष्मः
कन्ययाविप्रसंसदि ॥ चिंतामभ्यगमद्वीरोयुक्तांतस्यैवकर्मणः ६३ विनिश्चित्यसधर्मज्ञोब्राह्मणैर्वेदपारगैः ॥ अनुजज्ञेतदाज्येष्ठामंबांकाशिपतेःसुताम् ६४ अंबिकां
बालिकेभार्येप्रादाद्भ्रात्रेयवीयसे ॥ भीष्मोविचित्रवीर्यायविधिदृष्टेनकर्मणा ६५ तयोःपाणीगृहीत्वातुरूपयौवनदर्पितः ॥ विचित्रवीर्योधर्मात्माकामात्मासमपद्यत ६६
तेचापिबृहतीश्यामेनीलकुंचितमूर्धजे ॥ रक्ततुंगनखोपेतेपीनश्रोणिपयोधरे ६७ आत्मनःप्रतिरूपोऽसौलब्धःपतिरितिस्थिते ॥ विचित्रवीर्यंकल्याण्यौपूजयामा
सतुःशुभे ६८ सचाश्विरूपसदृशोदेवतुल्यपराक्रमः ॥ सर्वासामेवनारीणांचित्तप्रमथनोरहः ६९ ताभ्यांसहसमाःसप्तविहरन्पृथिवीपतिः ॥ विचित्रवीर्यस्तरुणोय
क्ष्मणासमगृह्यत ७० सुहृदांयतमानानामाप्तैःसहचिकित्सकैः ॥ जगामास्तमिवादित्यःकौरव्योयमसादनम् ७१ धर्मात्मासतुगांगेयश्चिंताशोकपरायणः ॥
प्रेतकार्याणिसर्वाणितस्यसम्यगकारयत् ७२ राज्ञोविचित्रवीर्यस्यसत्यवत्यामतेस्थितः ॥ ऋत्विग्भिःसहितोभीष्मःसर्वैश्चकुरुपुंगवैः ७३ ॥ इति श्रीमहाभारते
आदिपर्वणि संभवपर्वणि विचित्रवीर्योपरमे द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ ततःसत्यवतीदीनाकृपणापुत्रगृद्धिनी ॥
पुत्रस्यकृत्वाकार्याणिस्नुषाभ्यांसहभारत १ समाश्वास्यस्नुषेतेचभीष्मंशस्त्रभृतांवरम् ॥ धर्मंचपितृवंशंचमातृवंशंचभाविनी ॥ प्रसमीक्ष्यमहाभागागांगेयंवा
क्यमब्रवीत् २ शांतनोर्धर्मनित्यस्यकौरव्यस्ययशस्विनः ॥ त्वयिपिंडश्चकीर्तिश्चसंतानंचप्रतिष्ठितम् ३

चर्मोद्वेअप्रसूतेच बृहतीपुष्पवद्रक्तश्यामेइत्यन्ये ६७ स्थितेतत्रैवनिष्ठावत्यौ ६८ । ६९ । ७० । ७१ । ७२ । ७३ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे द्व्यधिकश
ततमोऽध्यायः ॥ १०२ ॥ ॥ ७ ॥ ततइति १ । २ । ३

४ इतरेणविस्तरेण ५ । ६ आश्वस्यविश्वासंप्राप्य ७ । ८ । ९ । १० राज्येचैवराज्यएववाआत्मानमभिषिच्यस्वअभिषेचय कुरुब्रह्मचर्यसंकल्पात्प्रभृतित्यक्तान् संतत्यर्थमंगीकुरु मानिमज्जीर्मानिम

यथाकर्मशुभंकृत्वास्वर्गोपगमनंध्रुवम् ॥ यथाचायुर्ध्रुवंसत्येत्वयिधर्मस्तथाध्रुवः ४ वेत्थधर्मांश्चधर्मज्ञसमासेनेतरेणच ॥ विविधास्त्वंश्रुतीर्वेत्थवेदांगानिचसर्वशः ५
व्यवस्थानंचतेधर्मेकुलाचारंचलक्षये ॥ प्रतिपत्तिंचकृच्छ्रेषुशुक्रांगिरसयोरिव ६ तस्मात्सुभृशमाश्वस्यत्वयिधर्मभृतांवर ॥ कार्येत्वांविनियोक्ष्यामितच्छ्रुत्वाकर्तु
मर्हसि ७ममपुत्रस्तवभ्रातावीर्यवान्सुप्रियश्चते ॥ बालएवगतःस्वर्गमपुत्रःपुरुषर्षभ ८ इमेमहिष्यौभ्रातुस्तेकाशिराजसुतेशुभे ॥ रूपयौवनसंपन्नेपुत्रकामेचभा
रत ९ तयोरुत्पादयापत्यंसंतानायकुलस्यनः ॥ मन्नियोगान्महाबाहोधर्मंकर्तुमिहार्हसि १० राज्येचैवाभिषिच्यस्वभारताननुशाधिच ॥ दारांश्चकुरुधर्मेणमानि
मज्जीःपितामहान् ११ ॥ वैशंपायनउवाच ॥ तथोच्यमानोमात्राससुहृद्भिश्चपरंतपः ॥ इत्युवाचाथधर्मात्माधर्म्यमेवोत्तरंवचः १२ असंशयंपरोधर्मस्त्वयामा
तरुदाहृतः ॥ त्वमपत्यंप्रतिचमेप्रतिज्ञांवेत्थवैपराम् १३ जानासिचयथावृत्तंशुल्कहेतोस्त्वदंतरे ॥ ससत्यवतिसत्यंतेप्रतिजानाम्यहंपुनः १४ परित्यजेयंत्रैलो
क्यंराज्यंदेवेषुवापुनः ॥ यद्वाऽप्यधिकमेताभ्यांनतुसत्यंकथंचन १५ त्यजेच्चपृथिवीगंधमापश्चरसमात्मनः ॥ ज्योतिस्तथात्यजेद्रूपंवायुःस्पर्शगुणंत्यजेत् १६
प्रभांसमुत्सृजेदर्कोधूमकेतुस्तथोष्मताम् ॥ त्यजेच्छब्दंतथाऽऽकाशंसोमःशीतांशुतांत्यजेत् १७ विक्रमंवृत्रहाजह्याद्धर्मंजह्याच्चधर्मराट् ॥ नत्वहंसत्यमुत्स्रष्टुंव्यव
सेयंकथंचन १८ एवमुक्तातुपुत्रेणभूरिद्रविणतेजसा ॥ मातासत्यवतीभीष्ममुवाचतदनंतरम् १९ जानामितेस्थितिंसत्येपरांसत्यपराक्रम ॥ इच्छन्सृजेथास्त्रीँल्लो
कानन्यांस्त्वंस्वेनतेजसा २० जानामिचैवंसत्यंतन्मदर्थेयच्चभाषितम् ॥ आपद्धर्मंत्वमावेक्ष्यवहपैतामहींधुरम् २१ यथातेकुलतंतुश्चधर्मश्चनपराभवेत् ॥ सुहृदश्च
प्रहृष्येरंस्तथाकुरुपरंतप २२ लालप्यमानांतामेवंकृपणांपुत्रगृद्धिनीम् ॥ धर्मादपेतंब्रुवतींभीष्मोभूयोऽब्रवीदिदम् २३ राज्ञिधर्मानवेक्षस्वमानःसर्वान्व्यनीनशः ॥
सत्याच्च्युतिःक्षत्रियस्यनधर्मेषुप्रशस्यते २४ शांतनोरपिसंतानंयथास्यादक्षयंभुवि ॥ तत्तेधर्मंप्रवक्ष्यामिक्षात्रंराज्ञिसनातनम् २५ श्रुत्वातंप्रतिपद्यस्वप्राज्ञैःसह
पुरोहितैः ॥ आपद्धर्मार्थकुशलैर्लोकतंत्रमवेक्ष्यच २६ ॥ इति श्रीम० आ० सं० भीष्मसत्यवतीसंवादेत्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ भीष्मउवाच ॥
जामदग्न्येनरामेणपितुर्वधममृष्यता ॥ राजापरशुनापूर्वंहैहयाधिपतिर्हतः १ शतानिदशबाहूनांनिकृत्तान्यर्जुनस्यवै ॥ लोकस्याचरितोधर्मस्तेनातिकिलदुश्चरः २
पुनश्चधनुरादायमहास्त्राणिप्रमुंचता ॥ निर्दग्धंक्षत्रमसकृद्रथेनजयतामहीम् ३ एवमुच्चावचैरस्त्रैर्भार्गवेणमहात्मना ॥ त्रिःसप्तकृत्वःपृथिवीकृतानिःक्षत्रियापुरा ४
एवंनिःक्षत्रियेलोकेकृतेतेनमहर्षिणा ॥ ततःसंभूयसर्वाभिःक्षत्रियाभिःसमंततः ५ उत्पादितान्यपत्यानिब्राह्मणैर्वेदपारगैः ॥ पाणिग्राहस्यतनयइतिवेदेषुनिश्चितम् ६

जय ११ । १२ । १३ त्वदंतरेत्वन्निमित्तं १४ । १५ । १६ । १७ । १८ भूरिद्रविणतेजसाबहुबलोत्साहवता १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ जामदग्न्येनेति १ नि[illegible]छिन्नानि २ । ३ । ४ । ५ ब्राह्मणैःसंभूयसंगंकृत्वोत्पादितानीतिसंबंधः ६

ननुकथंतर्हि'माताभस्त्रापितुःपुत्रोयेनजातःसएवसः'इत्युक्तं । 'अन्योदर्योमनसामंतवाउ'इतिश्रुतेरन्योदर्योमनसाऽपिनमंतव्योममायंपुत्रइतितन्निर्वचनात्'नशेषोअग्नेअन्यजातमस्ति'इतिश्रुतेश्चान्यक्षेत्रेऽन्यस्मात्स्वस्माद्वाजातःशेषशब्दितोनस्वपुत्रःकिंतुक्षेत्रपतेरेवेतिनिश्चयात् । तेनदत्तक्रीतान्यक्षेत्रजादीनामपुत्रत्वंसिद्धमतआह धर्ममिति धर्मममायंपुत्रोभविष्यतीत्यभिलापं । अथखलुक्रतुमयःपुरुषइतिसंकल्पप्राधान्यश्रुतेःस्त्रीपुंसयोर्मध्येयस्यसंकल्पोदृढस्तस्यैवपुत्रइत्यर्थः । माताभस्त्रेतितुविवाहविषयं । नन्वेवंशालिक्षेत्रेयवबीजादपिशाल्यंकुरोत्पत्तिःस्यादितिचेन्न दावाग्निदग्धात्कदलीकांडादपिवेत्रांकुरोत्पत्तिदृष्टेःश्रमस्तकेन्युसगोधूमयावनालादेःपलांडुलशुनांकुरोत्पत्तिदृष्टेश्चभावनाविशेषजन्यधर्मस्यैवविशेषाधायकत्वाभ्युपगमात् । धनादिनोपनिमंत्रणाक्षेत्रपतेरेवसासंततिर्नेविप्रस्य

धर्ममनसिसंस्थाप्यब्राह्मणांस्ताःसमभ्ययुः ॥ लोकेऽप्याचरितोदृष्टःक्षत्रियाणांपुनर्भवः ७ ततःपुनःसमुदितंक्षत्रंसमभवत्तदा ॥ इमंचैवात्रवक्ष्येऽहमितिहासंपुरा
तनम् ८ अथोतथ्यइतिख्यातआसीद्धीमानृषिःपुरा ॥ ममतानामतस्यासीद्भार्यापरमसंमता ९ उतथ्यस्ययवीयांस्तुपुरोधास्त्रिदिवौकसाम् ॥ बृहस्पतिर्बृ
हत्तेजाममतामन्वपद्यत १० उवाचममतातंतुदेवरंवदतांवरम् ॥ अंतर्वत्नीत्वहंभ्रात्राज्येष्ठेनारम्यतामिति ११ अयंचमेमहाभागकुक्षावेवबृहस्पते ॥ औतथ्योवे
दमत्रापिषडंगंप्रत्यधीयत १२ अमोघरेतास्त्वंचापिद्वयोर्नास्त्यत्रसंभवः ॥ तस्मादेवंगतेत्वद्यउपारमितुमर्हसि १३ एवमुक्तस्तदासम्यग्बृहस्पतिरुदारधीः ॥
कामात्मानंतदाऽऽत्मानंनशशाकनियच्छितुम् १४ सबभूवततःकामीतयासार्धमकामया ॥ उत्सृजंतंतुतंरेतःसगर्भस्थोऽभ्यभाषत १५ भोस्तातमागमःकामंद्व
योर्नास्तीहसंभवः ॥ अल्पावकाशोभगवन्पूर्वंचाहमिहागतः १६ अमोघरेताश्चभवान्नपीडांकर्तुमर्हति ॥ अश्रुत्वैवतुतद्वाक्यंगर्भस्थस्यबृहस्पतिः १७ जगाममै
थुनायैवममतांचारुलोचनाम् ॥ शुक्रोत्सर्गंततोबुद्ध्वातस्यागर्भगतोमुनिः १८ पद्भ्यामारोधयन्मार्गंशुक्रस्यचबृहस्पतेः ॥ स्थानमप्राप्तमथतच्छुक्रंप्रतिहतंतदा
१९ पपातसहसाभूमौततःक्रुद्धोबृहस्पतिः ॥ तंदृष्ट्वापतितंशुक्रंशशापसरुषाऽन्वितः २० उतथ्यपुत्रंगर्भस्थंनिर्भर्त्स्यभगवानृषिः ॥ यन्मांत्वमीदृशेकालेसर्वभूते
प्सितेसति २१ एवमात्थवचस्तस्मात्तमोदीर्घंप्रवेक्ष्यसि ॥ सवैदीर्घतमानामशापादृषिरजायत २२ बृहस्पतेर्बृहत्कीर्तेर्बृहस्पतिरिवौजसा ॥ जात्यंधोवेदवित्प्राज्ञः
पत्नींलेभेसविद्यया २३ तरुणींरूपसंपन्नांप्रद्वेषींनामब्राह्मणीम् ॥ सपुत्राञ्जनयामासगौतमादीन्महायशाः २४ ऋषेरुतथ्यस्यतदासंतानकुलवृद्धये ॥ धर्मात्मा
चमहात्माचवेदवेदांगपारगः २५ गोधर्मंसौरभेयाच्चसोऽधीत्यनिखिलंमुनिः ॥ प्रावर्ततततदाकर्तुंश्रद्धावांस्तमशंकया २६ ततोवितथमर्यादंतंदृष्ट्वामुनिसत्तमाः ॥
क्रुद्धामोहाभिभूतास्तेसर्वेतत्राश्रमौकसः २७ अहोऽयंभिन्नमर्यादोनाश्रमेवस्तुमर्हति ॥ तस्मादेनंवयंसर्वेपापात्मानंत्यजामहे २८

लोकेपीति कल्माषपादक्षेत्रेमदयंत्यांवसिष्ठेनपुत्राउत्पादिताइतिलोकेऽप्याचरितोऽनुष्ठितोदृष्टःक्षत्रियाणांभवउत्पत्तिर्ब्राह्मणेभ्यइतिशेषः ७ । ८ । ९ अन्वपद्यतउपगतवान् १० आरम्यतामुपरम्यतां ११ । १२ । १३ आत्मानंचित्तं नियच्छितुंनियंतुं १४ तयाकामनिग्रहाशक्तया १५ कामंमैथुनंमागमः १६ । १७ । १८ । १९ तंशशापेतिसंबंधः २० । २१ दीर्घतमःअंधत्वं २२ । २३ । २४ सम्यक्तानंविस्तारोयस्यतस्यकुलस्यवृद्धयेविस्तीर्णस्यापिवृद्धयेइत्यर्थः २५ गोधर्मंप्रकाशमैथुनंसौरभेयात्कामधेनुपुत्रादधीत्याधिगम्य २६ मोहाभिभूतत्वमपापेपापदर्शित्वात् २७ । २८

पुत्रलाभालब्धपुत्रा । तदागोधर्मकाले । ननुतोषतेमुनयःपत्नीचतंत्यक्तवंतइत्यर्थः यतःअतएवप्रद्वेषीतितस्यानाम २९ द्वेक्षिद्वेषकरोपि पतिःपालनादुपसंगम्यः । भरणादन्नादिनाभर्ताच ३०
अहंतुमत्युतत्वद्भरणाशक्तासतीनभरेयं तदातदेव लुप्तोपमा पूर्ववदित्यर्थः ३१ । ३२ धनमर्थश्चोपभोगादिः ३३ नभरेयंयथापुरा भर्त्रैतरंकरिष्यामीत्याशयः ३४ एकएवेति । ननुयदेकस्मिन्यू
पेद्वेरशनेपरिव्ययतितस्मादेकोद्वेजायेविंदतेयन्नेकांरशनांद्वयोर्यूपयोःपरिव्ययतितस्मान्नेकाद्वौपतीविंदतइत्यार्थवादिकनिषेधविधेरेकस्याःपतिद्वयस्याप्राप्तत्वात्कथमियंदीर्घतमसामर्यादाक्रियतेइतिचेत्त्राह
स्मृतेइति । तस्मादेकस्यबह्वचोजायाभवंतिनैकस्यैबहवःसहपतयइति श्रुत्यंतरेसहशब्दात्पर्यायेणानेकपतित्वप्रसंजनाद्रागतःप्राप्तत्वाचतन्निषेधोपपत्तिः सहशब्दोऽपिरागतःप्राप्तानुवादएवनवि

इत्यन्योऽन्यंसमाभाष्यतेदीर्घतमसंमुनिम् ॥ पुत्रलाभाचसापत्नीनतुतोषपतिंतदा २९ प्रद्विषंतींपतिभार्यांकिंमांद्वेक्षीतिचाब्रवीत ॥ प्रद्वेष्युवाच ॥ भार्यायाभरणाद्भर्तापालनाच्चपतिःस्मृतः ३० अहंत्वद्भरणाशक्ताजात्यंधंससुतंतदा ॥ नित्यकालंश्रमेणार्तानभरेयंमहातपः ३१ ॥ भीष्मउवाच ॥ तस्यास्तद्वचनंश्रुत्वाऋषिःकोपसमन्वितः ॥ प्रत्युवाचततःपत्नींप्रद्वेषींससुतांतदा ३२ नीयतांक्षत्रियकुलेधनार्थश्चभविष्यति ॥ प्रद्वेष्युवाच ॥ त्वयादत्तंधनंविप्रनेच्छेयंदुःखकारणम् ३३ यथेष्टंकुरुविप्रेंद्रनभरेयंपुरायथा ॥ दीर्घतमाउवाच ॥ अद्यप्रभृतिमर्यादामयालोकेप्रतिष्ठिता ३४ एकएवपतिर्नार्यायावज्जीवंपरायणम् ॥ मृतेजीवतिवातस्मिन्नापरंप्राप्नुयान्नरम् ३५ अभिगम्यपरंनारीपतिष्यतिनसंशयः ॥ अपतीनांतुनारीणामद्यप्रभृतिपातकम् ३६ यद्यस्तिचेद्धनंसर्वंवृथाभोगाभवंतुताः ॥ अकीर्तिःपरिवादाश्चनित्यंतासांभवंतुवै ३७ इतितद्वचनंश्रुत्वाब्राह्मणीभृशकोपिता ॥ गंगायांनीयतामेषपुत्राइत्येवमब्रवीत ३८ लोभमोहाभिभूतास्तेपुत्रास्तंगौतमादयः ॥ बद्धोडुपेपरिक्षिप्यगंगायांसमवासृजन् ३९ कस्मादंधश्चवृद्धश्चभर्तव्योऽयमितिस्मते ॥ चिंतयित्वाततःक्रूराःप्रतिजग्मुरथोग्रहान् ४० सोऽनुस्रोतस्तदाविप्रःप्लवमानोयदृच्छया ॥ जगामसुबहून्देशानंधस्तेनोडुपेनह ४१ तंतुराजाबलिर्नामसर्वधर्मविदांवरः ॥ अपश्यन्मज्जनगतःस्रोतसाऽभ्याशमागतम् ४२ जग्राहचैनंधर्मात्माबलिःसत्यपराक्रमः ॥ ज्ञात्वाचैवंसवव्रेऽथपुत्रार्थेभरतर्षभ ४३ संतानार्थंमहाभागभार्यासुममानद ॥ पुत्रान्धर्मार्थकुशलानुत्पादयितुमर्हसि ४४ एवमुक्तःसतेजस्वीतंतथेत्युक्तवानृषिः ॥ तस्मैसराजास्वांभार्यांसुदेष्णांप्राहिणोत्तदा ४५ अंधंवृद्धंचतंमत्वानसादेवीजगामह ॥ स्वांतुधात्रेयिकांतस्मैवृद्धायप्राहिणोत्तदा ४६ तस्यांकाक्षीवदादीन्सशूद्रयोनावृषिस्तदा ॥ जनयामासधर्मात्मापुत्रानेकादशैवतु ४७ काक्षीवदादीन्पुत्रांस्तान्दृष्ट्वासर्वानधीयतः ॥ उवाचतमृषिंराजाममेमइतिभारत ४८ नेत्युवाचमहर्षिस्तंममेमइतिचाब्रवीत् ॥ शूद्रयोनौमयाहीमेजाताःकाक्षीवदादयः ४९

धायकः अन्यथाविहितप्रतिषिद्धत्वादनेकपतित्वेविकल्पःस्यात् । कथंतर्हिद्रौपद्याःपंचपांडवामारिषायाश्चदशप्राचेतसइदानींतनानांनीचानांचद्वित्रादयःपतयोदृश्यंतइतिचेन्न । नदेवचरितंचरेदितिन्याये नदेवताकल्पेपुपर्यनुयोगायोगात् । नीचानांपशुप्रायाणांचाचारस्याप्रामाण्याच्चअधिकारिविषयत्वाच्चनियोगस्येतिदिक् ३५ । ३६ भोगःपुंयोगः । वृथाऐहिकमतिष्ठाकरसंततिशून्यः । प्रत्युतान्यथेवतत्स्यादित्याहाकीर्तिश्चेति ३७ । ३८ उडुपेप्लवे । 'उडुपंतुप्लवःकोलः'इत्यमरः ३९ । ४० । ४१ मज्जनगतःस्नानार्थंगतः स्रोतसाप्रवाहेण अभ्याशंसमीपं ४२ । ४३ । ४४ । ४५ धात्रेयिकांदासीं ४६ । ४७ । ४८ । ४९



५० । ५१ अंगेषुस्पृष्टास्वरूपज्ञानार्थमितिभावः संघिरार्षः ५२ । ५३ । ५४ । ५५ यथेप्सितंब्राह्मणेभ्योवंशवृद्धिमित्यर्थः ५६ ॥ इतिआदिपर्वणि नीलकंठीयेभारतभावदीपे चतुरधिकशततमोऽध्यायः ॥ १०४ ॥ ॥ ७ ॥ ॥ पुनरिति १ । २ संसज्जमानयास्खलन्वत्या ३ विश्वासादंतरंगत्वबुद्धेः । संतानायविस्ताराय ४ आपद्धर्ममवेक्ष्येतिशेषः धर्मोधर्मरक्षकः ५ सत्यंवचन

अंधंवृद्धंचमांदृष्ट्वासुदेष्णामहिषीतव ॥ अवमन्यददौमूढाशूद्रांधात्रेयिकांमम ५० ततःप्रसादयामासपुनस्तमृषिसत्तमम् ॥ बलिःसुदेष्णांस्वांभार्यांतस्मैसप्राहिणोत्पुनः ५१ तांसदीर्घतमांऽगेषुस्पृष्टादेवीमथाब्रवीत ॥ भविष्यंतिकुमारास्तेतेजसाऽऽदित्यवर्चसः ५२ अंगोवंगःकलिंगश्चपुंड्रःसुह्मश्चतेसुताः ॥ तेषांदेशाःसमाख्याताःस्वनामकथिताभुवि ५३ अंगस्यांगोऽभवद्देशोवंगोवंगस्यचस्मृतः ॥ कलिंगविषयश्चैवकलिंगस्यचसस्मृतः ५४ पुंड्रस्यपुंड्राःप्रख्याताःसुह्माःसुह्मस्यचस्मृताः ॥ एवंबलेःपुरावंशःप्रख्यातोवैमहर्षिजः ५५ एवमन्येमहेष्वासाब्राह्मणैःक्षत्रियाभुवि ॥ जाताःपरमधर्मज्ञावीर्यवंतोमहाबलाः ॥ एतच्छ्रुत्वात्वमप्यत्रमातःकुरुयथेप्सितम् ५६ ॥ इतिश्रीमहाभारते आदिपर्वणि संभवपर्वणि भीष्मसत्यवतीसंवादेचतुरधिकशततमोऽध्यायः ॥ १०४ ॥ ॥ भीष्मउवाच ॥ पुनर्भरतवंशस्यहेतुंसंतानवृद्धये ॥ वक्ष्यामिनियतंमातस्तन्मेनिगदतःशृणु १ ब्राह्मणोगुणवान्कश्चिद्धनेनोपनिमंत्र्यताम् ॥ विचित्रवीर्यक्षेत्रेषुयःसमुत्पादयेत्प्रजाः २ ॥ वैशंपायनउवाच ॥ ततःसत्यवतीभीष्मंवाचासंसज्जमानया ॥ विहसंतीवसव्रीडमिदंवचनमब्रवीत ३ सत्यमेतन्महाबाहोयथावदसिभारत ॥ विश्वासात्तेप्रवक्ष्यामिसंतानायकुलस्यनः ४ नतेशक्यमनाख्यातुमापद्धर्मंतथाविधम् ॥ त्वमेवनःकुलेधर्मस्त्वंसत्यंत्वंपरागतिः ५ तस्मान्निशम्यसत्यंमेकुरुष्वयदनंतरम् ॥ धर्मयुक्तस्यधर्मार्थंपितुरासीत्तरीमम ६ साकदाचिदहंतत्रगताप्रथमयौवनम् ॥ अथधर्मविदांश्रेष्ठःपरमर्षिःपराशरः ७ आजगामतरींधीमांस्तरिष्यन्यमुनांनदीम् ॥ सतार्यमाणोयमुनांमामुपेत्याब्रवीत्तदा ८ सांत्वपूर्वंमुनिश्रेष्ठःकामार्तोमधुरंवचः ॥ उक्तंजन्मकुलंमह्यमस्मिदाशसुतेत्यहम् ९ तमहंशापभीताचपितुर्भीताचभारत ॥ वरैरसुलभैरुक्तानप्रत्याख्यातुमुत्सहे १० अभिभूयसमांबालांतेजसावशमानयत ॥ तमसालोकमावृत्यनौगतामेवभारत ११ मत्स्यगंधोमहानासीत्पुरामम जुगुप्सितः ॥ तमपास्यशुभंगंधमिमंप्रादात्समेमुनिः १२ ततोमामाहसमुनिर्गर्भमुत्सृज्यमामकम् ॥ द्वीपेऽस्याएवसरितःकन्यैवत्वंभविष्यसि १३ पाराशर्योमहायोगीसबभूवमहानृषिः ॥ कन्यापुत्रोममपुराद्वैपायनइतिश्रुतः १४ योव्यस्यवेदांश्चतुरस्तपसाभगवानृषिः ॥ लोकेव्यासत्वमापेदेकार्ष्ण्यात्कृष्णत्वमेवच १५ सत्यवादीशमपरस्तपस्वीदग्धकिल्बिषः ॥ समुत्पन्नःसतुमहान्सहपित्राततोगतः १६

मितिशेषः तरीनौका ६ । ७ । ८ । ९ उक्तामलोभिरित्यर्थः १० बालांपुंयोगमनिच्छंतींबालामिव ११ । १२ मामकंगर्भमुत्सृज्यकन्यैवत्वंभविष्यसीतिमुनिवचनाज्जातापत्यायाअपिकन्यात्वाविनाशात्पुनर्दाशसंसर्गजंहीनवर्णत्वंनाभूत् कन्यात्वावस्थायांकामभक्षादिनिषेधाभावात् । किंचपृथासत्यवत्योरनिच्छंत्योरेवसूर्यपराशराभ्यामपत्योत्पादनंकृतमतोनतयोःकन्यात्वोच्छित्तिरितिभावः १३ । १४ कार्ष्ण्यात्कृष्णत्वात् ईश्वरादनन्यत्वादेवकृष्णत्वमित्यर्थः १५ । १६

व्यक्तंनिःसंशयं १७ । १८ । १९ । २० अनुबध्यतेऽनेनेत्यनुबंधःफलं परिणामेसुखकरमेवार्थादिकंतद्विपर्ययंवाऽर्थनाशादिकंपश्येत् । अत्यल्पदोषानुसंधानेनमहतःफलस्यनाशोनकार्यइत्य
सनियुक्तोमयाव्यक्तंत्वयाचाप्रतिमद्युतिः ॥ भ्रातुःक्षेत्रेषुकल्याणमपत्यंजनयिष्यति १७ सहिमामुक्तवांस्तत्रस्मरेःकृच्छ्रेषुमामिति ॥ तंस्मरिष्येमहाबाहोयदि
भीष्मत्वमिच्छसि १८ तवह्यनुमतेभीष्मनियतंसमहातपाः ॥ विचित्रवीर्यक्षेत्रेषुपुत्रानुत्पादयिष्यति १९ ॥ वैशंपायनउवाच ॥ महर्षेःकीर्तनेतस्यभीष्मः
प्रांजलिरब्रवीत् ॥ धर्ममर्थंचकामंचत्रीनेतान्योऽनुपश्यति २० अर्थमर्थानुबंधंचधर्मंधर्मानुबंधनम् ॥ कामंकामानुबंधंचविपरीतान्पृथक्पृथक् २१ योविचिं
त्यधियाधीरोव्यवस्यतिसबुद्धिमान् ॥ तदिदंधर्मयुक्तंचहितंचैवकुलस्यनः २२ उक्तंभवत्यायच्छ्रेयस्तन्मह्यंरोचतेभृशम् ॥ वैशंपायनउवाच ॥ ततस्तस्मि
न्प्रतिज्ञातेभीष्मेणकुरुनंदन २३ कृष्णद्वैपायनंकालीचिंतयामासवैमुनिम् ॥ सवेदान्विब्रुवन्धीमान्मातुर्विज्ञायचिंतितम् २४ प्रादुर्बभूवाविदितःक्षणेनकुरुनं
दन ॥ तस्मैपूजांततःकृत्वासुतायविधिपूर्वकम् २५ परिष्वज्यचबाहुभ्यांप्रस्नवैरभ्यषिंचत ॥ मुमोचबाष्पंदाशेयीपुत्रंदृष्ट्वाचिरस्यतु २६ तामद्भिःपरिषिच्या
र्तांमहर्षिरभिवाद्यच ॥ मातरंपूर्वजःपुत्रोव्यासोवचनमब्रवीत् २६ भवत्यायदभिप्रेतंतदहंकर्तुमागतः ॥ शाधिमांधर्मतत्त्वज्ञेकरवाणिप्रियंतव २८ तस्मैपूजां
ततोऽकार्षीत्पुरोधाःपरमर्षये ॥ सचतांप्रतिजग्राहविधिवन्मंत्रपूर्वकम् २९ पूजितोमंत्रपूर्वंतुविधिवत्प्रीतिमापसः ॥ तमासनगतंमातापृष्ट्वाकुशलमव्ययम्
३० सत्यवत्यथवीक्ष्यैनमुवाचेदमनंतरम् ॥ मातापित्रोःप्रजायंतेपुत्राःसाधारणाःकवे ३१ तेषांपितायथास्वामीतथामातानसंशयः ॥ विधानविहितःसत्वंय
थामेप्रथमःसुतः ३२ विचित्रवीर्योब्रह्मर्षेतथामेऽवरजःसुतः ॥ यथैवपितृतोभीष्मस्तथात्वमपिमातृतः ३३ भ्राताविचित्रवीर्यस्ययथावापुत्रमन्यसे ॥ अयंशांत
नवःसत्यंपालयन्सत्यविक्रमः ३४ बुद्धिंनकुरुतेऽपत्येतथाराज्याऽनुशासने ॥ सत्वंव्यपेक्षयाभ्रातुःसंतानायकुलस्यच ३५ भीष्मस्यचास्यवचनान्नियोगाच्चम
मानघ ॥ अनुक्रोशाच्चभूतानांसर्वेषांरक्षणायच ३६ आनृशंस्याच्चयद्ब्रूयांतच्छ्रुत्वाकर्तुमर्हसि ॥ यवीयसस्तवभ्रातुर्भार्येसुरसुतोपमे ३७ रूपयौवनसंपन्नेपुत्रका
मेचधर्मतः ॥ तयोरुत्पादयापत्यंसमर्थोह्यसिपुत्रक ३८ अनुरूपंकुलस्यास्यसंतत्याःप्रसवस्यच ॥ व्यासउवाच ॥ वेत्थधर्मंसत्यवतिपरंचापरमेवच ३९
तथातवमहाप्राज्ञेधर्मेप्रणिहितामतिः ॥ तस्मादहंत्वन्नियोगाद्धर्ममुद्दिश्यकारणम् ४० ईप्सितंतेकरिष्यामिदृष्टंह्येतत्सनातनम् ॥ भ्रातुःपुत्रान्प्रदास्यामिमित्राव
रुणयोःसमान् ४१ व्रतंचरेतांतेदेव्यौनिर्दिष्टमिहयन्मया ९ संवत्सरंयथान्यायंततःशुद्धेभविष्यतः ४२ नहिमामव्रतोपेताउपेयात्काचिदंगना ॥ सत्यवत्युवाच ॥ ॥१०६॥
सद्योयथाप्रपद्येतेदेव्यौगर्भंतथाकुरु ४३ अराजकेषुराष्ट्रेषुप्रजाऽनाथाविनश्यति ॥ नश्यंतिचक्रियाःसर्वानास्तिवृष्टिर्नदेवता ४४
भिप्रायः २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ विधानविहितःपूर्वपुण्यप्रसूतः ३२ । ३३ । ३४ व्यपेक्षयास्नेहानुबंधेन ३५ नियोगादाज्ञातः । अनुक्रोशात्
कृपातः ३६ आनृशंस्यादनैष्ठुर्यात् ३७ । ३८ परंधर्मंनिवृत्तिरूपं । अपरंधर्मंप्रवृत्तिरूपं आमुष्मिकमैहिकमितिवा ३९ । ४० । ४१ देव्यौराजभार्ये ४२ । ४३ । ४४

४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ यथाभीष्मेणोक्तंतथामांमापपद्यस्वार्थेनयोजय ५२ उद्वक्ष्यतिधुरंधुरउद्वहनंकरिष्यति ५३ एनांपुरुषांतरस्पर्शमनिच्छंतीमितिसूचयति कथंचिदिति ५४
कथंचाराजकंराष्ट्रंशक्यंधारयितुंप्रभो ॥ तस्माद्गर्भंसमाधत्स्वभीष्मःसंवर्धयिष्यति ४५ ॥ व्यासउवाच ॥ यदिपुत्रःप्रदातव्योमयाभ्रातुरकालिकः ॥ विरूपतां
मेसहतांतयोरेतत्परंव्रतम् ४६ यदिमेसहतेगंधंरूपंवेषंतथावपुः ॥ अद्यैवगर्भंकौसल्याविशिष्टंप्रतिपद्यताम् ४७ ॥ वैशंपायनउवाच ॥ एवमुक्त्वामहातेजा
व्यासःसत्यवतींतदा ॥ शयनेसाचकौसल्याशुचिवस्त्राह्यलंकृता ४८ समागमनमाकांक्षेदितिसोंऽतर्हितोमुनिः ॥ ततोऽभिगम्यसादेवीस्नुषांरहसिसंगताम्
४९ धर्म्यमर्थसमायुक्तमुवाचवचनंहितम् ॥ कौसल्येधर्मतंत्रंत्वांयद्ब्रवीमिनिबोधतत् ५० भरतानांसमुच्छेदोव्यक्तंमद्भाग्यसंक्षयात् ॥ व्यथितांमांचसंप्रेक्ष्यपि
तृवंशंचपीडितम् ५१ भीष्मोबुद्धिमदान्मह्यंकुलस्यास्यविवृद्धये ॥ साचबुद्धिस्त्वय्यधीनापुत्रिप्रापयमांतथा ५२ नष्टंचभारतंवंशंपुनरेवसमुद्धर ॥ पुत्रंजनय
सुश्रोणिदेवराजसमप्रभम् ॥ सहिराज्यधुरंगुर्वीमुद्वक्ष्यतिकुलस्यनः ५३ साधर्मतोऽनुनीयैनांकथंचिद्धर्मचारिणीम् ॥ भोजयामासविप्रांश्चदेवर्षीनतिथींस्तथा
५४ ॥ इति श्रीमहाभारते आदिपर्वणि संभवपर्वणि सत्यवत्युपदेशेपंचाधिकशततमोऽध्यायः ॥ १०५ ॥ ॥ वैशंपायनउवाच ॥ ततःसत्यवतीकालेव
धूंस्नातामृतौतदा ॥ संवेशयंतीशयनेशनैर्वचनमब्रवीत् १ कौसल्येदेवरस्तेऽस्तिसोऽद्यत्वाऽनुप्रवेक्ष्यति ॥ अप्रमत्ताप्रतीक्षैनंनिशीथेह्यागमिष्यति २ श्वश्र्वास्तद्व
चनंश्रुत्वाशयानाशयनेशुभे ॥ साऽचिंतयत्तदाभीष्ममन्यांश्चकुरुपुंगवान् ३ ततोऽम्बिकायांप्रथमंनियुक्तःसत्यवागृषिः ॥ दीप्यमानेषुदीपेषुशरणंप्रविवेशह ४ तस्य
कृष्णस्यकपिलांजटांदीप्तेचलोचने ॥ बभ्रूणिचैवश्मश्रूणिदृष्ट्वादेवीन्यमीलयत् ५ संबभूवतयासार्धंमातुःप्रियचिकीर्षया ॥ भयात्काशिसुतातंतुनाशक्नोदभिवीक्षि
तुम् ६ ततोनिष्क्रांतमागम्यमातापुत्रमुवाचह ॥ अप्यस्यांगुणवान्पुत्रराजपुत्रोभविष्यति ७ निशम्यतद्वचोमातुर्व्यासःसत्यवतीसुतः ॥ नागायुतसमप्राणोवि
द्वान्राजर्षिसत्तमः ८ महाभागोमहावीर्योमहाबुद्धिर्भविष्यति ॥ तस्यचापिशतंपुत्राभविष्यंतिमहात्मनः ९ किंतुमातुःसवैगुण्यादंधएवभविष्यति ॥ तस्यतद्वच
नंश्रुत्वामातापुत्रमथाब्रवीत् १० नांधःकुरूणांनृपतिरनुरूपस्तपोधन ॥ ज्ञातिवंशस्यगोप्तारंपितृणांवंशवर्धनम् ११ द्वितीयंकुरुवंशस्यराजानंदातुमर्हसि ॥ सतथे
तिप्रतिज्ञायनिश्चक्राममहायशाः १२ साऽपिकालेनकौसल्यासुषुवेंऽधंतमात्मजम् ॥ पुनरेवतुसादेवीपरिभाष्यस्नुषांततः १३ ऋषिमावाहयत्सत्यायथापूर्वमरिं
दम ॥ ततस्तेनैवविधिनामहर्षिस्तामपद्यत १४ अंबालिकामथाभ्यागादृषिंदृष्ट्वाचसाऽपितम् ॥ विवर्णापांडुसंकाशासमपद्यतभारत १५ तांभीतांपांडुसंकाशांविष
ण्णांप्रेक्ष्यभारत ॥ व्यासःसत्यवतीपुत्रइदंवचनमब्रवीत् १६ यस्मात्पांडुत्वमापन्नाविरूपंप्रेक्ष्यमामिह ॥ तस्मादेषसुतस्तेवैपांडुरेवभविष्यति १७
॥ इति आदिपर्वणि नैलकंठीये भारतभावदीपे पंचाधिकशततमोऽध्यायः ॥ १०५ ॥ ततइति १ अनुप्रवेक्ष्यतिपुत्ररूपेणतवोदरमागमिष्यति २ साऽचिंतयदित्यनेनगर्भधारणकालेयंपुरुषंस्त्रीचिंतय
तितादृग्गुणःपुत्रोभवतीतिसूचितं ३ शरणंगृहं'शरणंगृहरक्षित्रोः'इत्यमरः ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ सत्यासत्यवती १४ । १५ । १६ । १७

१८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ अभुजिष्याअदासी २७ भ्राता भुजिष्यापुत्रस्यापिभ्रातृत्वंपित्रन्वयात् २८ । २९ प्रलंभमात्मस्थानेदासीनियोजनं ३० । ३१ एतइति से

नामचास्यैतदेवेहभविष्यतिशुभानने ॥ इत्युक्त्वासनिराक्रामद्भगवानृषिसत्तमः १८ ततोनिष्क्रांतमालोक्यसत्यापुत्रमथाब्रवीत् ॥ शशंससपुनर्मात्रेतस्यबालस्य पांडुताम् १९ तंमातापुनरेवान्यमेकंपुत्रमयाचत ॥ तथेतिचमहर्षिस्तांमातरंप्रत्यभाषत २० ततःकुमारंसादेवीप्राप्तकालमजीजनत् ॥ पांडुंलक्षणसंपन्नंदीप्य मानमिवश्रिया २१ यस्यपुत्रामहेष्वासाजज्ञिरेपंचपांडवाः ॥ ऋतुकालेततोज्येष्ठांवधूंतस्मैन्ययोजयत् २२ सातुरूपंचगंधंचमहर्षेःप्रविचिंत्यतम् ॥ नाकरोद्वचनं देव्याभयात्सुरसुतोपमा २३ ततःस्वैर्भूषणैर्दासींभूषयित्वाऽप्सरोपमाम् ॥ प्रेषयामासकृष्णायततःकाशिपतेःसुता २४ सातमृषिमनुप्राप्तंप्रत्युद्गम्याभिवाद्य च ॥ संविवेशाभ्यनुज्ञातासत्कृत्योपचचारह २५ कामोपभोगेनरहस्तस्यांतुष्टिमगादृषिः ॥ तयासहोषितोराजन्महर्षिःसंशितव्रतः २६ उत्तिष्ठन्नब्रवीदेनामभु जिष्याभविष्यसि ॥ अयंचतेशुभेगर्भःश्रेयानुदरमागतः ॥ धर्मात्माभवितालोकेसर्वबुद्धिमतांवरः २७ सजज्ञेविदुरोनामकृष्णद्वैपायनात्मजः ॥ धृतराष्ट्रस्यवैभ्रा तापांडोश्चैवमहात्मनः २८ धर्मोविदुररूपेणशापात्तस्यमहात्मनः ॥ मांडव्यस्यार्थतत्त्वज्ञःकामक्रोधविवर्जितः २९ कृष्णद्वैपायनोऽप्येतत्सत्यवत्यैन्यवेदयत् ॥ प्रलंभमात्मनश्चैवशूद्रायाःपुत्रजन्मच ३० सधर्मस्यानृणोभूत्वापुनर्मात्रासमेत्यच ॥ तस्यैगर्भसमावेद्यतत्रैवांतरधीयत ३१ एतेविचित्रवीर्यस्यक्षेत्रेद्वैपायनाद पि ॥ जज्ञिरेदेवगर्भाभाःकुरुवंशविवर्धनाः ३२ ॥ इति श्रीमहाभारते आदिपर्वणि संभवपर्वणि विचित्रवीर्यसुतोत्पत्तौषडधिकशततमोऽध्यायः ॥ १०६ ॥ ॥ जनमेजयउवाच ॥ किंकृतंकर्मधर्मेणयेनशापमुपेयिवान् ॥ कस्यशापाच्चब्रह्मर्षेःशूद्रयोनावजायत १ ॥ वैशंपायनउवाच ॥ बभूवब्राह्मणःकश्चिन्मांडव्यइति विश्रुतः ॥ धृतिमान्सर्वधर्मज्ञःसत्येतपसिचास्थितः २ सआश्रमपदद्वारिवृक्षमूलेमहातपाः ॥ ऊर्ध्वबाहुर्महायोगीतस्थौमौनव्रतान्वितः ३ तस्यकालेनमहतातस्मिं स्तपसिवर्त्ततः ॥ तमाश्रममनुप्राप्तादस्यवोलोप्त्रहारिणः ४ अनुसार्यमाणाबहुभीरक्षिभिर्भरतर्षभ ॥ तेतस्यावसथेलोप्त्रंदस्यवःकुरुसत्तम ५ निधायचभयाल्ली नास्तत्रैवानागतेबले ॥ तेषुलीनेष्वथोशीघ्रंततस्तद्रक्षिणांबलम् ६ आजगामततोऽपश्यंस्तमृषिंतस्करानुगाः ॥ तमपृच्छंस्ततोराजंस्तथावृत्तंतपोधनम् ७ कतमेनपथायातादस्यवोद्विजसत्तम ॥ तेनगच्छामहेब्रह्मन्यथाशीघ्रतरंवयम् ८ तथातुरक्षिणांतेषांब्रुवतांसतपोधनः ॥ नकिंचिद्वचनंराजन्नब्रवीत्साध्वसाधुवा ९ ततस्तेराजपुरुषाविचिन्वानास्तमाश्रमम् ॥ ददृशुस्तत्रलीनांस्तांश्चौरांस्तद्द्रव्यमेवच १० ततःशंकासमभवद्रक्षिणांतंमुनिंप्रति ॥ संयम्यैनंततोराज्ञेदस्यूंश्चै वन्यवेदयन् ११ तंराजासहतैश्चौरैरन्वशाद्वध्यतामिति ॥ सरक्षिभिस्तैरज्ञातःशूलेप्रोतोमहातपाः १२

प्रत्वंदास्याअपीत्यनेनैवगम्यतइतिकेचित् ३२ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे षडधिकशततमोऽध्यायः ॥ १०६ ॥ ॥ ७ ॥ किंकृतमिति १ । २ । ३ । ४ लोप्त्रंलुप्य तइतिव्युत्पत्त्याचोरापहृतंधनं ५ । ६ । ७ । ८ । ९ । १० संयम्यचोरवन्निगृह्य ११ । १२

१३ । १४ ऋषीन्वेदान्समुपानयत्स्वाधीनानकरोत् चिरंवेदनार्तोऽपिवेदान्नविस्मृतवानित्यर्थः । यद्वाऋषीन्मुनीन्स्वसमीपेउपानयदित्युक्तंतदेवविवृणोति शूलाग्रइत्यादिना १५ दर्शयंतःस्वानिरू पाणिप्रकाशयंतः १६। १७ ॥ इति आ० नी० भा०सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ ततइति दोषतोनकमपिदोषिणंकथयामि स्वकृतमेवभुंजेइत्यर्थः १ ।२। ३। ४ । ५ मूलेदेहांतःप्रविष्टशूलभा गस्यांतिके । 'मूलंवित्तंतिके'इतिमेदिनी ६ व्यचरदाचरत्तपइतिशेषः ७ अणीशूलाग्रंतद्युक्तोमांडव्यः ८ उपालभतगर्हितवान् ९ ।१० ।११ ।१२। १३ दिशोदेशनाःधर्मशास्त्राणि यतोनप्रज्ञास्यंतिबाल

ततस्तेशूलमारोप्यतंमुनिंरक्षिणस्तदा ॥ प्रतिजग्मुर्महीपालंधनान्यादायतान्यथ १३ शूलस्थःसतुधर्मात्माकालेनमहताततः ॥ निराहारोऽपिविप्रर्षिर्मरणंनाभ्य पद्यत १४ धारयामासचप्राणानृषींश्चसमुपानयत् ॥ शूलाग्रेतप्यमानेनतपस्तेनमहात्मना १५ संतापंपरमंजग्मुर्मुनयस्तपसाऽन्विताः ॥ तेरात्रौशकुनाभूत्वास न्निपत्यतुभारत ॥ दर्शयंतोयथाशक्तितमपृच्छन्द्विजोत्तमम् १६ श्रोतुमिच्छामहेब्रह्मन्किंपापंकृतवानसि ॥ येनेहसमनुप्राप्तंशूलेदुःखभयंमहत् १७ ॥ इति श्रीमहाभारते आदिपर्वणि संभ० अणीमांडव्योपाख्याने सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ ॥ वैशंपायनउवाच ॥ ततःसमुनिशार्दूलस्तानुवाचतपोध नान् ॥ दोषतःकंगमिष्यामिनहिमेऽन्योपराध्यति १ तंदृष्ट्वारक्षिणस्तत्रतथाबहुतिथेऽहनि ॥ न्यवेदयंस्तथाराज्ञेयथावृत्तंनराधिप २ श्रुत्वाचवचनंतेषांनिश्चित्यस हमंत्रिभिः ॥ प्रसादयामासतदाशूलस्थमृषिसत्तमम् ३ ॥ राजोवाच ॥ यन्मयाऽपकृतंमोहादज्ञानादृषिसत्तम ॥ प्रसादयेत्वांतत्राहंनमेत्वंक्रोद्धुमर्हसि ४ एवमुक्त स्ततोराज्ञाप्रसादमकरोन्मुनिः ॥ कृतप्रसादंराजातंततःसमवतारयत् ५ अवतार्यचशूलाग्रात्तच्छूलंनिश्चकर्षह ॥ अशक्नुवंश्चनिष्क्रष्टुंशूलंमूलेसचिच्छिदे ६ सतथां तर्गतेनैवशूलेनव्यचरन्मुनिः ॥ तेनातितपसालोकान्विजिग्येदुर्लभान्परैः ७ अणीमांडव्यइतिचततोलोकेषुगीयते ॥ सगत्वासदनंविप्रोधर्मस्यपरमात्मवित् ८ आसनस्थंततोधर्मंदृष्ट्वोपालभतप्रभुः ॥ किंनुतद्दुष्कृतंकर्ममयाकृतमजानता ९ यस्येयंफलनिर्वृत्तिरीदृश्यासादितामया ॥ शीघ्रमाचक्ष्वमेतत्त्वंपश्यमेतपसोबलम् १० ॥ धर्मउवाच ॥ पतंगिकानांपुच्छेषुत्वयेषीकाप्रवेशिता ॥ कर्मणस्तस्यतेप्राप्तंफलमेतत्तपोधन ११ स्वल्पमेवयथादत्तंदानंबहुगुणंभवेत् ॥ अधर्मएवंविप्रर्षेबहु दुःखफलप्रदः १२ ॥ अणीमांडव्यउवाच ॥ कस्मिन्कालेमयातत्तुकृतंब्रूहियथातथम् ॥ तेनोक्तोधर्मराजेनबालभावेत्वयाकृतम् १३ ॥ अणीमांडव्यउवाच ॥ बालोहिद्वादशाद्वर्षाज्जन्मतोयत्करिष्यति ॥ नभविष्यत्यधर्मोऽत्रनप्रज्ञास्यंतिवैदिशः १४ अल्पेऽपराधेऽपिमहान्ममदंडस्त्वयाधृतः ॥ गरीयान्ब्राह्मणवधः सर्वभूतवधादपि १५ शूद्रयोनावतोधर्ममानुषःसंभविष्यसि ॥ मर्यादांस्थापयाम्यद्यलोकेधर्मफलोदयाम् १६ आचतुर्दशकाद्वर्षान्नभविष्यतिपातकम् ॥ परतःकुर्वतामेवदोषएवभविष्यति १७

त्वात् १४ ब्राह्मणवधोब्राह्मणपीडनं १५ मर्यादामिति बालोहीतिहेतुन्यासपूर्वकंद्वादशवर्षपर्यंतंकृताकृतप्रत्यवायोनास्तीत्युत्सर्गउक्तःस्वयंतुवर्षद्वयंतत्राधिकंमचिक्षेप १६ चतुर्दशादूर्ध्वंपापमस्तीति पौराणमतमिदं । वस्तुतस्तूक्तहेतोःपुण्यपापविभागज्ञानपर्यंतमेवपापानुत्पत्तिः । तेनपंचवर्षांतरएवदोषोनास्तीत्यादिवचनंविद्वदभिप्रायं । अन्यथाकलिशेषेअल्पायुष्ट्वेनपापाभावप्रसंगःस्यात् १७

१८ दीर्घदर्शीसर्वकालपरामर्शी शमपरोनिर्वैः १९ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ तेष्विति कुरुजांगलदेशः कुरवःपुरुषाःकुरुक्षेत्रंतेषांवासस्था नं १ देशंस्तौति ऊर्ध्वेति ऊर्ध्वसस्याप्रचुरसस्या २ । ३ कुरूनस्तौति शूराश्चेति ४ । ५ । ६ । ७ स्थानंस्तौति तन्महेति ८ । ९ । १० । ११ । १२ । १३ विसृज्य परराष्ट्रस्थाअपिसुखार्थि

॥ वैशंपायनउवाच ॥ एतेनत्वपराधेनशापात्तस्यमहात्मनः ॥ धर्मोविदुररूपेणशूद्रयोनावजायत १८ धर्मेचार्थेचकुशलोलोभक्रोधविवर्जितः ॥ दीर्घदर्शीशमप रःकुरूणांचहितेरतः १९ ॥ इतिश्रीम०आ० संभ० अणीमांडव्योपाख्याने अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ वैशंपायनउवाच ॥ तेषुत्रिषुकुमारेषुजाते षुकुरुजांगलम् ॥ कुरवोऽथकुरुक्षेत्रंत्रयमेतदवर्धत १ ऊर्ध्वसस्याऽभवद्भूमिःसस्यानिरसवंतिच ॥ यथर्तुवर्षीपर्जन्योबहुपुष्पफलाद्रुमाः २ वाहनानिप्रहृष्टानिमुदि तामृगपक्षिणः ॥ गंधवंतिचमाल्यानिरसवंतिफलानिच ३ वणिग्भिश्चान्वकीर्यंतनगराण्यथशिल्पिभिः ॥ शूराश्चकृतविद्याश्चसंतश्चसुखिनोऽभवन् ४ नाभवन्दस्यवः केचिन्नाधर्मरुचयोजनाः ॥ प्रदेशेष्वपिराष्ट्राणांकृतंयुगमवर्तत ५ धर्मक्रियायज्ञशीलाःसत्यव्रतपरायणाः ॥ अन्योन्यप्रीतिसंयुक्ताव्यवर्धंतप्रजास्तदा ६ मानक्रोध विहीनाश्चनरालोभविवर्जिताः ॥ अन्योऽन्यमभ्यनंदंतधर्मोत्तरमवर्तत ७ तन्महोदधिवत्पूर्णंनगरं वैव्यरोचत ॥ द्वारतोरणनिर्यूहैर्युक्तमभ्रचयोपमैः ८ प्रासादशतसं बाधंमहेंद्रपुरसन्निभम् ॥ नदीषुवनखंडेषुवापीपल्वलसानुषु ॥ काननेषुचरम्येषुविजह्रुर्मुदिताजनाः ९ उत्तरैःकुरुभिःसार्धंदक्षिणाःकुरवस्तथा ॥ विस्पर्धमाना व्यचरंस्तथादेवर्षिचारणैः १० नाभवत्कृपणःकश्चिन्नाभवन्विधवाःस्त्रियः ॥ तस्मिन्जनपदेरम्येकुरुभिर्बहुलीकृते ११ कूपारामसभावाप्योब्राह्मणावसथास्तथा ॥ बभूवुःसर्वर्द्ध्युतास्तस्मिन्राष्ट्रेसदोत्सवाः १२ भीष्मेणधर्मतोराजन्सर्वतःपरिरक्षिते ॥ बभूवरमणीयश्चचैत्ययूपशतांकितः १३ सदेशःपरराष्ट्राणिविमृज्याभिप्रव र्धितः ॥ भीष्मेणविहितंराष्ट्रेधर्मचक्रमवर्तत १४ क्रियमाणेषुकृत्येषुकुमाराणांमहात्मनाम् ॥ पौरजानपदाःसर्वेबभूवुःपरमोत्सुकाः १५ गृहेषुकुरुमुख्यानांपौराणां चनराधिप ॥ दीयतांभुज्यतांचेतिवाचोऽश्रूयंतसर्वशः १६ धृतराष्ट्रश्चपांडुश्चविदुरश्चमहामतिः ॥ जन्मप्रभृतिभीष्मेणपुत्रवत्परिपालिताः १७ संस्कारैःसंस्कृता स्तेतुव्रताध्ययनसंयुताः ॥ श्रमव्यायामकुशलाःसमपद्यंतयौवनम् १८ धनुर्वेदेचवेदेचगदायुद्धेऽसिचर्मणि ॥ तथैवगजशिक्षायांनीतिशास्त्रेषुपारगाः १९ इतिहासपु राणेषुनानाशिक्षासुबोधिताः ॥ वेदवेदांगतत्त्वज्ञाःसर्वत्रकृतनिश्चयाः २० पांडुर्धनुषिविक्रांतोनरेष्वभ्यधिकोऽभवत् ॥ अन्येभ्योबलवानासीद्धृतराष्ट्रोमहीपतिः २१ त्रिषुलोकेषुनत्वासीत्कश्चिद्विदुरसंमितः ॥ धर्मनित्यस्तथाराजन्धर्मेचपरमंगतः २२ प्रनष्टंशांतनोर्वंशंसमीक्ष्यपुनरुद्धृतम् ॥ ततोनिर्वचनंलोकेसर्वराष्ट्रेष्ववर्तत २३ वीरसूनांकाशिसुतेदेशानांकुरुजांगलम् ॥ सर्वधर्मविदांभीष्मःपुराणांगजसाह्वयम् २४ धृतराष्ट्रस्त्वचक्षुष्ट्वाद्राज्यंनप्रत्यपद्यत ॥ पारसवत्वाद्विदुरोराजापांडुर्बभूवह २५ ॥१०८॥

नोऽत्रैवमविष्टाइत्यर्थः १४ । १५ । १६ । १७ श्रमःशास्त्राभ्यासः । व्यायामोबाहुयुद्धाद्यभ्यासः १८ । १९ । २० । २१ धर्मेचपरमात्मदर्शनंगतःप्राप्तः । 'अयंतुपरमोधर्मोयद्योगेनात्मदर्शनं' इतियाज्ञवल्क्योक्तेः २२ निर्वचनंप्रशंसा २३ । २४ पारसवत्वाच्छूद्रायांब्राह्मणाज्जातत्वात् । करणत्वाचेत्यपपाठः । लक्षणयावातथाव्याख्येयं । शूद्रायांकरणोवैश्यादितितन्निर्वचनात् २५

२६ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे नवाधिकशततमोऽध्यायः ॥ १०९ ॥ गुणैरिति १ । २ । ३ । ४ यादवीयादवस्यशूरस्यकुंतिभोजस्यवाअपत्यं ५ । ६ । ७ । ८ । ९ । १०

कदाचिदथगांगेयःसर्वनीतिमतांवरः ॥ विदुरंधर्मतत्त्वज्ञंवाक्यमाहयथोचितम् २६ ॥ इतिश्रीमहाभारते आदिपर्वणि संभवपर्वणि पांडुराज्याभिषेकेनवाधिकशत तमोऽध्यायः ॥ १०९ ॥ भीष्मउवाच ॥ गुणैःसमुदितंसम्यगिदंनःप्रथितंकुलम् ॥ अत्यन्यान्पृथिवीपालान्पृथिव्यामधिराज्यभाक् १ रक्षितंराजभिःपूर्वैर्धर्म विद्भिर्महात्मभिः ॥ नोत्सादमगमच्चेदंकदाचिदिहनःकुलम् २ मयाचसत्यवत्याचकृष्णेनचमहात्मना ॥ समवस्थापितंभूयोयुष्मासुकुलतंतुषु ३ तच्चैतद्वर्धतेभूयः कुलंसागरवद्यथा ॥ तथामयाविधातव्यंत्वयाचैवनसंशयः ४ श्रूयतेयादवीकन्यास्वनुरूपाकुलस्यनः ॥ सुबलस्यात्मजाचैवतथामद्रेश्वरस्यच ५ कुलीनारूपव त्यश्चताःकन्याःपुत्रसर्वशः ॥ उचिताश्चैवसंबंधेतेऽस्माकंक्षत्रियर्षभाः ६ मन्येवरयितव्यास्ताइत्यहंधीमतांवर ॥ संतानार्थंकुलस्यास्ययद्वाविदुरमन्यसे ७ ॥ विदुरउवाच ॥ भवान्पिताभवान्माताभवान्नःपरमोगुरुः ॥ तस्मात्स्वयंकुलस्यास्यविचार्यकुरुयद्धितम् ८ ॥ वैशंपायनउवाच ॥ अथशुश्रावविप्रेभ्योगांधा रींसुबलात्मजाम् ॥ आराध्यवरदंदेवंभगनेत्रहरंहरम् ९ गांधारीकिलपुत्राणांशतंलेभेवरंशुभा ॥ इतिशुश्रावतत्त्वेनभीष्मःकुरुपितामहः १० ततोगांधारराजस्य प्रेषयामासभारत ॥ अचक्षुरितितत्रासीत्सुबलस्यविचारणा ११ कुलंख्यातिंचवृत्तंचबुद्ध्यातुप्रसमीक्ष्यसः ॥ ददौतांधृतराष्ट्रायगांधारींधर्मचारिणीम् १२ गांधारीत्वथशुश्रावधृतराष्ट्रमचक्षुषम् ॥ आत्मानंदित्सितंचास्मैपित्रामात्राचभारत १३ ततःसापट्टमादायकृत्वाबहुगुणंतदा ॥ बबंधनेत्रेस्वेराजन्पतिव्रतपराय णा १४ नाभ्यसूयांपतिमहमित्येवंकृतनिश्चया ॥ ततोगांधारराजस्यपुत्रःशकुनिरभ्ययात् १५ स्वसारंवयसालक्ष्म्यायुक्तामादायकौरवान् ॥ तांतदाधृतराष्ट्राय ददौपरमसत्कृताम् ॥ भीष्मस्यानुमतेचैवविवाहंसमकारयत् १६ दत्त्वासभगिनींवीरोयथार्हंचपरिच्छदम् ॥ पुनरायात्स्वनगरंभीष्मेणप्रतिपूजितः १७ गांधा र्यपिवरारोहाशीलाचारविचेष्टितैः ॥ तुष्टिंकुरूणांसर्वेषांजनयामासभारत १८ वृत्तेनाराध्यतान्सर्वान्गुरून्पतिपरायणा ॥ वाचाऽपिपुरुषानन्यान्सुव्रतानान्वकी र्तयत् १९ ॥ इति श्रीमहाभारते आदिपर्वणि संभवपर्वणि धृतराष्ट्रविवाहे दशाधिकशततमोऽध्यायः ॥ ११० ॥ ॥ ५ ॥ ॥ वैशंपायनउवाच ॥ शूरोनामयदुश्रेष्ठोवसुदेवपिताऽभवत् ॥ तस्यकन्यापृथानामरूपेणाप्रतिमाभुवि १ पितृष्वस्रीयायसतामनपत्यायभारत ॥ अग्र्यमग्रेप्रतिज्ञायस्वस्यापत्यंसस त्यवाक् ॥ २ ॥ अग्रजामथतांकन्यांशूरोऽनुग्रहकांक्षिणे ॥ प्रददौकुंतिभोजायसखासख्येमहात्मने ३ नियुक्तासापितुर्गेहेब्राह्मणातिथिपूजने ॥ उग्रंपर्यचरत्तत्र ब्राह्मणंसंशितव्रतम् ४ निगूढनिश्चयंधर्मेयंतंदुर्वाससंविदुः ॥ तमुग्रंसंशितात्मानंसर्वयत्नैरतोषयत् ५

प्रेषयामासदूतमितिशेषः ११ । १२ दित्सितंदातुमिष्टं १३ बहुगुणंबहुधागुणितं १४ नाभ्यसूयांपत्युरभिभवंनकुर्यां १५ । १६ । १७ । १८ नान्वकीर्तयत्नप्रयुक्तवती १९ ॥ इतिआदिपर्वणि नी० भा० दशाधिकशततमोऽध्यायः ॥ ११० ॥ शूरइति १ अग्र्यंप्रथमं । अग्रेऽग्रतः । पूर्वंप्रतिज्ञायप्रथममपत्यंतुभ्यंदेयमितिप्रतिश्रुत्य २ । ३ । ४ धर्मेनिगूढनिश्चयंबहिःक्रौर्यदर्शनपरत्वात् ५

आपद्धर्मान्ववेक्षयेतिभाविसंतानप्रतिबंधस्यानागतावेक्षणेन । अभिचारोवश्याकर्षणादिदृष्टफलस्तद्युक्तं ६ । ७ । ८ । ९ । १० । ११ स्वापराद्धाऽपि संधिरार्षः १२ । १३ मद्यंमम १४ । १५ । १६



तस्यैसप्रददौमंत्रमापद्धर्मान्ववेक्षया ॥ अभिचाराभिसंयुक्तमब्रवीच्चैवतांमुनिः ६ यंयंदेवंत्वमेतेनमंत्रेणावाहयिष्यसि ॥ तस्यतस्यप्रभावेणतवपुत्रोभविष्यति ७
तथोक्तासातुविप्रेणकुंतीकौतूहलान्विता ॥ कन्यासतीदेवमर्कमाजुहावयशस्विनी ८ साददर्शतमायांतंभास्करंलोकभावनम् ॥ विस्मिताचानवद्यांगीदृष्ट्वातन्म
हदद्भुतम् ९ तांसमासाद्यदेवस्तुविवस्वानिदमब्रवीत् ॥ अयमस्म्यसितापांगिब्रूहिकिंकरवाणिते १० ॥ कुंत्युवाच ॥ कश्चिन्मेब्राह्मणःप्रादाद्वरंविद्यांचश
त्रुहन् ॥ तद्विजिज्ञासयाऽऽह्वानंकृतवत्यस्मितेविभो ११ एतस्मिन्नपराधेत्वांशिरसाऽहंप्रसादये ॥ योषितोहिसदारक्ष्याःस्वापराद्धाऽपिनित्यशः १२ ॥ सूर्यउवाच॥
वेदाहंसर्वमेवैतद्यद्दुर्वासावरंददौ ॥ संत्यज्यभयमेवेहक्रियतांसंगमोमम १३ अमोघंदर्शनंमह्यमाहूतश्चास्मितेशुभे ॥ वृथाह्वानेऽपितेभीरुदोषःस्यान्नात्रसंशयः
१४ ॥ वैशंपायनउवाच ॥ एवमुक्ताबहुविधंसांत्वपूर्वंविवस्वता ॥ सातुनैच्छद्वरारोहाकन्याऽहमितिभारत १५ बंधुपक्षभयाद्भीतालज्जयाचयशस्विनी ॥ तामर्कः
पुनरेवेदमब्रवीद्भरतर्षभ १६ मत्प्रसादान्नतेराज्ञिभवितादोषइत्युत ॥ एवमुक्त्वासभगवान्कुंतिराजसुतांतदा १७ प्रकाशकर्तातपनःसंबभूवतयासह ॥ तत्रवीरः
समभवत्सर्वशस्त्रभृतांवरः ॥ आमुक्तकवचःश्रीमान्देवगर्भःश्रियाऽन्वितः १८ सहजंकवचंबिभ्रत्कुंडलोद्द्योतिताननः ॥ अजायतसुतःकर्णःसर्वलोकेषुविश्रुतः
१९ प्रादाच्चतस्यैकन्यात्वंपुनःसपरमद्युतिः ॥ दत्वाचतपतांश्रेष्ठोदिवमाचक्रमेततः २० दृष्ट्वाकुमारंजातंसावार्ष्णेयीदीनमानसा ॥ एकाग्रंचिंतयामासकिंकृत्वा
सुकृतंभवेत् २१ गूहमानाऽपचारंसाबंधुपक्षभयात्तदा ॥ उत्ससर्जकुमारंतंजलेकुंतीमहाबलम् २२ तमुत्सृष्टंजलेगर्भंराधाभर्तामहायशाः ॥ पुत्रत्वेकल्पयामास
सभार्यःसूतनंदनः २३ नामधेयंचचक्रातेतस्यबालस्यताबुभौ ॥ वसुनासहजातोऽयंवसुषेणोभवत्विति २४ सवर्धमानोबलवान्सर्वास्त्रेषूद्यतोऽभवत् ॥ आपृष्ठता
पादादित्यमुपातिष्ठतवीर्यवान् २५ तस्मिन्कालेतुजपतस्तस्यवीरस्यधीमतः ॥ नादेयंब्राह्मणेष्वासीत्किंचिद्वसुमहीतले २६ तमिंद्रोब्राह्मणोभूत्वाभिक्षार्थीसमु
पागमत् ॥ कवचंप्रार्थयामासफाल्गुनस्यहितेरतः २७ स्वशरीरात्समुत्कृत्यकवचंस्वंनिसर्गजम् ॥ विप्ररूपायशक्रायददौकर्णःकृतांजलिः २८ प्रतिगृह्यतुदेवेश
स्तुष्टस्तेनास्यकर्मणा ॥ ददौशक्तिंसुरपतिर्वाक्यंचेदमुवाचह २९ देवासुरमनुष्याणांगंधर्वोरगरक्षसाम् ॥ यमेकंजेतुमिच्छेथाःसोऽन्ययानभविष्यति ३० प्राङ्नाम
तस्यकथितंवसुषेणइतिक्षितौ ॥ कर्णोवैकर्तनश्चैवकर्मणातेनसोऽभवत् ३१ ॥इतिश्रीमहाभारतेआदि०संभवपर्वणिकर्णसंभवेएकादशाधिकशततमोऽध्यायः॥१११॥ ॥१०९॥

१७ । १८ । १९ । २० । २१ गूहमानाछादयंती अपचारमनाचारं २२ । २३ वसुनाकुंडलकवचादिद्रव्येणबद्धइतिवसुषेणः २४ आपृष्ठतापात्मध्याह्नात्परतइत्यर्थः २५ । २६ । २७ । २८ । २९
३० कर्णइति सहजकवचकर्तनात्कर्णः । विशेषतःकर्तनेनवैकर्तनः स्वार्थेतद्धितः । वस्तुतस्तुविकर्तनस्यसूर्यस्यापत्यत्वाद्वैकर्तनः ३१ ॥ इतिआदि०नी०भा०एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

सत्वेति धर्मारामाधर्मैकनिष्ठा १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपेद्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥ ॥ ७ ॥

॥ वैशंपायनउवाच ॥ सत्वरूपगुणोपेताधर्मारामामहाव्रता ॥ दुहिताकुंतिभोजस्यपृथापृथुललोचना १ तांतुतेजस्विनींकन्यांरूपयौवनशालिनीम् ॥ व्यावृ
ण्वन्पार्थिवाःकेचिदतीवस्त्रीगुणैर्युताम् २ ततःसाकुंतिभोजेनराज्ञाऽऽहूयनराधिपान् ॥ पित्रास्वयंवरेदत्तादुहिताराजसत्तम ३ ततःसारंगमध्यस्थंतेषांराज्ञांमन
स्विनी ॥ ददर्शराजशार्दूलंपांडुंभरतसत्तमम् ४ सिंहदर्पंमहोरस्कंवृषभाक्षंमहाबलम् ॥ आदित्यमिवसर्वेषांराज्ञांप्रच्छाद्यवैप्रभाः ५ तिष्ठंतंराजसमितौपुरंदरमि
वापरम् ॥ तंदृष्ट्वासाऽनवद्यांगीकुंतिभोजसुताशुभा ६ पांडुंनरवरंरंगेहृदयेनाकुलाऽभवत् ॥ ततःकामपरीतांगीसकृत्प्रचलमानसा ७ व्रीडमानास्रजंकुंतीराज्ञः
स्कंदेसमासजत् ॥ तंनिशम्यवृतंपांडुंकुंत्यासर्वेनराधिपाः ८ यथागतंसमाजग्मुर्गजैरश्वैरथैस्तथा ॥ ततस्तस्याःपिताराजन्विवाहमकरोत्प्रभुः ९ सतयाकुंतिभो
जस्यदुहित्राकुरुनंदनः ॥ युयुजेऽमितसौभाग्यःपौलोम्यामघवानिव १० कुंत्याःपांडोश्चराजेंद्रकुंतिभोजोमहीपतिः ॥ कृत्वोद्वाहंतदातंतुनानावसुभिरर्चितम् ॥
स्वपुरंप्रेषयामाससराजाकुरुसत्तम ११ ततोबलेनमहतानानाध्वजपताकिना ॥ स्तूयमानःसचाशीर्भिर्ब्राह्मणैश्चमहर्षिभिः १२ संप्राप्यनगरंराजापांडुःकौरवनं
दनः ॥ न्यवेशयततांभार्यांकुंतींस्वभवनेप्रभुः १३ ॥ इतिश्रीमहाभारते आदिपर्वणि संभवपर्वणि कुंतीविवाहेद्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥ ॥ ॥
॥ वैशंपायनउवाच ॥ ततःशांतनवोभीष्मोराज्ञःपांडोर्यशस्विनः ॥ विवाहस्यापरस्यार्थेचकारमतिमान्मतिम् १ सोऽमात्यैःस्थविरैःसार्धंब्राह्मणैश्चमहर्षिभिः ॥
बलेनचतुरंगेणययौमद्रपतेःपुरम् २ तमागतमभिश्रुत्यभीष्मंवाहीकपुंगवः ॥ प्रत्युद्गम्यार्चयित्वाचपुरंप्रावेशयन्नृपः ३ दत्वातस्यासनंशुभ्रंपाद्यमर्घ्यंतथैवच ॥ म
धुपर्कंचमद्रेशःपप्रच्छागमनेऽर्थिताम् ४ तंभीष्मःप्रत्युवाचेदंमद्रराजंकुरूद्वहः ॥ आगतंमांविजानीहिकन्यार्थिनमरिंदम ५ श्रूयतेभवतःसाध्वीस्वसामाद्रीयश
स्विनी ॥ तामहंवरयिष्यामिपांडोरर्थेयशस्विनीं ६ युक्तरूपोहिसंबंधेत्वंनोराजन्वयंतव ॥ एतत्संचिंत्यमद्रेशगृहाणास्मान्यथाविधि ७ तमेवंवादिनंभीष्मंप्रत्य
भाषतमद्रपः ॥ नहिमेऽन्योवरस्त्वत्तःश्रेयानितिमतिर्मम ८ पूर्वैःप्रवर्तितंकिंचित्कुलेऽस्मिन्नृपसत्तमैः ॥ साधुवायदिवाऽसाधुतन्नातिक्रांतुमुत्सहे ९ व्यक्तंतद्भवत
श्चापिविदितंनात्रसंशयः ॥ नचयुक्तंतथावक्तुंभवान्देहीतिसत्तम १० कुलधर्मःसनोवीरप्रमाणंपरमंचतत् ॥ तेनत्वांनब्रवीम्येतदसंदिग्धंवचोऽरिहन् ११ तंभीष्मः
प्रत्युवाचेदंमद्रराजंजनाधिपः ॥ धर्मएषपरोराजन्स्वयमुक्तःस्वयंभुवा १२ नात्रकश्चनदोषोऽस्तिपूर्वैर्विधिरयंकृतः ॥ विदितेयंचतेशल्यमर्यादासाधुसंमता १३
इत्युक्त्वासमहातेजाःशातकुंभंकृताकृतम् ॥ रत्नानिचविचित्राणिशल्यायादात्सहस्रशः १४

ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ यद्यपिकन्याशुल्कग्रहणमासुरेविवाहेदृष्टंतथाऽपिकुलधर्मत्वादपरिहार्यमित्याह पूर्वैरिति ९ । १० । ११ धर्मएषःआर्षेऽपिविवाहेकन्याशुल्कत्वे
नगोमिथुनग्रहणस्यविधानात्तथाचशिष्टाहृतत्वादयमपिधर्मःस्वयंभुवावेदेनैवोक्तइत्यवसेयं । एतेनविगीतोऽपिकुलाचारोनत्याज्यइत्युक्तं १२ । १३ शातकुंभंकांचनं कृताकृतंघटितमघटितंच १४

व्यसृजत्प्रादात् १५। १६।१७ ।१८। १९। २० त्रिदशाः त्रिंशत् २१। २२।२३ । २४ आगस्कृतश्चौरप्रायाः पर्वताद्याश्रयित्वात् २५ ।२६ ।२७ । २८। २९ । ३० कुरुकर्मसुयोजिताःकरूणांदासभूताः

गजानश्वान्रथांश्चैववासांस्याभरणानिच ॥ मणिमुक्ताप्रवालंचगांगेयोव्यसृजच्छुभम् १५ तत्प्रगृह्यधनंसर्वंशल्यःसंप्रीतमानसः ॥ ददौतांसमलंकृत्यस्वसारंकौरवर्ष
भे १६ सतांमाद्रीमुपादायभीष्मःसागरगासुतः ॥ आजगामपुरींधीमान्प्रविष्टोगजसाह्वयम् १७ ततइष्टेऽहनिप्राप्तेमुहूर्तेसाधुसंमते ॥ जग्राहविधिवत्पाणिंमाद्र्याः
पांडुर्नराधिपः १८ ततोविवाहेनिर्वृत्तेसराजाकुरुनंदनः ॥ स्थापयामासतांभार्यांशुभेवेश्मनिभाविनीम् १९ सताभ्यांव्यचरत्सार्धंभार्याभ्यांराजसत्तमः ॥ कुंत्या
माद्र्याचराजेंद्रोयथाकामंयथासुखम् २० ततःसकौरवोराजाविहृत्यत्रिदशानिशाः ॥ जिगीषयामहींपांडुर्निरक्रामत्पुरात्प्रभो २१ सभीष्मप्रमुखान्वृद्धान
भिवाद्यप्रणम्यच ॥ धृतराष्ट्रंचकौरव्यंतथाऽन्यान्कुरुसत्तमान् ॥ आमंत्र्यप्रययौराजातैश्चैवाप्यनुमोदितः २२ मंगलाचारयुक्ताभिराशीर्भिरभिनंदितः ॥
गजवाजिरथौघेनबलेनमहताऽगमत २३ सराजादेवगर्भाभोविजिगीषुर्वसुंधराम् ॥ हृष्टपुष्टबलैःप्रायात्पांडुःशत्रूननेकशः २४ पूर्वमागस्कृतोगत्वादशार्णाःसमरेजि
ताः ॥ पांडुनानरसिंहेनकौरवाणांयशोभृता २५ ततःसेनामुपादायपांडुर्नानाविधध्वजाम् ॥ प्रभूतहस्त्यश्वयुतांपदातिरथसंकुलाम् २६ आगस्कारीमहीपानां
बहूनांबलदर्पितः ॥ गोप्तामगधराष्ट्रस्यदीर्घोराजगृहेहतः २७ ततःकोशंसमादायवाहनानिचभूरिशः ॥ पांडुनामिथिलांगत्वाविदेहाःसमरेजिताः २८ तथाका
शिषुसुह्मेषुपुंड्रेषुचनरर्षभ ॥ स्वबाहुबलवीर्येणकुरूणामकरोद्यशः २९ तंशरौघमहाज्वालंशस्त्रार्चिषमरिंदमम् ॥ पांडुपावकमासाद्यव्यदह्यंतनराधिपाः ३० ते
ससेनाःससेनेनविध्वंसितबलान्नृपाः ॥ पांडुनावशगाःकृत्वाकुरुकर्मसुयोजिताः ३१ तेनतेनिर्जिताःसर्वेपृथिव्यांसर्वपार्थिवाः ॥ तमेकंमेनिरेशूरंदेवेष्विवपुरंद
रम् ३२ तंकृतांजलयःसर्वेप्रणतावसुधाऽधिपाः ॥ उपाजग्मुर्धनंगृह्यरत्नानिविविधानिच ३३ मणिमुक्ताप्रवालंचसुवर्णरजतंबहु ॥ गोरत्नान्यश्वरत्नानिरथर
त्नानिकुंजरान् ३४ खरोष्ट्रमहिषीश्चैवयच्चकिंचिदजाविकम् ॥ कंबलाजिनरत्नानिरांकवास्तरणानिच ॥ तत्सर्वंप्रतिजग्राहराजानागपुराधिपः ३५ तदादाय
ययौपांडुःपुनर्मुदितवाहनः ॥ हर्षयिष्यन्स्वराष्ट्राणिपुरंचगजसाह्वयम् ३६ शांतनोराजसिंहस्यभरतस्यचधीमतः ॥ प्रनष्टःकीर्तिजःशब्दःपांडुनापुनराहृतः ३७
येपुराकुरुराष्ट्राणिजह्रुःकुरुधनानिच ॥ तेनागपुरसिंहेनपांडुनाकरदीकृताः ३८ इत्यभाषंतराजानोराजामात्याश्चसंगताः ॥ प्रतीतमनसोहृष्टाःपौरजानपदैः
सह ३९ प्रत्युद्ययुश्चतंप्राप्तंसर्वेभीष्मपुरोगमाः ॥ तेनदूरमिवाध्वानंगत्वानागपुरालयात् ४० आवृतंददृशुर्हृष्टालोकंबहुविधैर्धनैः ॥ नानायानसमानीतैरत्नै
रुच्चावचैस्तदा ४१ हस्त्यश्वरथरत्नैश्चगोभिरुष्ट्रैस्तथाऽविभिः ॥ नांतंददृशुरासाद्यभीष्मेणसहकौरवाः ४२ सोऽभिवाद्यपितुःपादौकौसल्यानंदवर्धनः ॥ ॥११०॥
यथाऽर्हमानयामासपौरजानपदानपि ४३

कृताः ३१ ।३२ ।३३ ।३४ नागपुराधिपोहस्तिनापुरेशः ३५। ३६। ३७ ३८ प्रतीतमनसोनिष्कलुषचित्ताःअतएवहृष्टाः ३९ नदूरमिवअदूरमिव अपोत्साहेनमार्गश्रमाभावात् ४० । ४१। ४२ । ४३

४४ । ४५ ॥ इतिआदिपर्वणि नैलकंठीये भारतभावदीपे त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ ॥ ७ ॥ धृतराष्ट्राभ्यनुज्ञातइति १ । २ । ३ । ४ अश्वमेधशतैस्तत्तुल्यैर्महाम

प्रमृद्यपुरराष्ट्राणिकृतार्थंपुनरागतम् ॥ पुत्रमाश्लिष्यभीष्मस्तुहर्षादश्रूण्यवर्तयत् ४४ सतूर्यशतशंखानांभेरीणांचमहास्वनैः ॥ हर्षयन्सर्वशःपौरान्विवेशगजसा
ह्वयम् ४५ ॥ इतिश्रीमहाभारतेआदिपर्वणि संभवपर्वणि पांडुदिग्विजयेत्रयोदशाधिकशततमोऽध्यायः ॥ ११३॥ ॥ वैशंपायनउवाच ॥ धृतराष्ट्राभ्यनुज्ञातः
स्वबाहुविजितंधनम् ॥ भीष्मायसत्यवत्यैचमात्रेचोपजहारसः १ विदुरायचवैपांडुःप्रेषयामासतद्धनम् ॥ सुहृदश्चापिधर्मात्माधनेनसमतर्पयत् २ ततःसत्यवती
भीष्मंकौसल्यांचयशस्विनीम् ॥ शुभैःपांडुजितैरर्थैस्तोषयामासभारत ३ ननंदमाताकौसल्यातमप्रतिमतेजसम् ॥ जयंतमिवपौलोमीपरिष्वज्यनरर्षभम् ४
तस्यवीरस्यविक्रांतैःसहस्रशतदक्षिणैः अश्वमेधशतैरीजेधृतराष्ट्रोमहामखैः ५ संप्रयुक्तस्तुकुंत्याचमाद्र्याचभरतर्षभ ॥ जिततंद्रीस्तदापांडुर्बभूववनगोचरः ६
हित्वाप्रासादनिलयंशुभानिशयनानिच ॥ अरण्यनित्यःसततंबभूवमृगयापरः ७ सचरन्दक्षिणंपार्श्वंरम्यंहिमवतोगिरेः ॥ उवासगिरिपृष्ठेषुमहाशालवनेषुच ८ रराज
कुंत्यामाद्र्याचपांडुःसहवनेचरन् ॥ करेण्वोरिवमध्यस्थःश्रीमान्पौरंदरोगजः ९ भारतंसहभार्याभ्यांखड्गबाणधनुर्धरम् ॥ विचित्रकवचंवीरंपरमास्त्रविदंनृपम् ॥
देवोऽयमित्यमन्यंतचरंतंवनवासिनः १० तस्यकामांश्चभोगांश्चनरानित्यमतंद्रिताः ॥ उपजह्रुर्वनांतेषुधृतराष्ट्रेणचोदिताः ११ अथपारसवींकन्यांदेवकस्यम
हीपतेः ॥ रूपयौवनसंपन्नांसशुश्रावापगासुतः १२ ततस्तुवरयित्वातामानीयभरतर्षभः ॥ विवाहंकारयामासविदुरस्यमहामतेः १३ तस्यांचोत्पादयामासवि
दुरःकुरुनंदनः ॥ पुत्रान्विनयसंपन्नानात्मनःसदृशान्गुणैः १४ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वणिविदुरपरिणयेचतुर्दशाधिकशततमोऽध्यायः ॥ ११४॥
॥ वैशंपायनउवाच ॥ ततःपुत्रशतंजज्ञेगांधार्यांजनमेजय ॥ धृतराष्ट्रस्यवैश्यायामेकश्चापिशतात्परः १ पांडोःकुंत्यांचमाद्र्यांचपुत्राःपंचमहारथाः ॥ देवे
भ्यःसमपद्यंतसंतानायकुलस्यवै २ ॥ जनमेजयउवाच ॥ कथंपुत्रशतंजज्ञेगांधार्यांद्विजसत्तम ॥ कियताचैवकालेनतेषामायुश्चकिंपरम् ३ कथंचैकःसवैश्यायां
धृतराष्ट्रसुतोऽभवत् ॥ कथंचसदृशींभार्यांगांधारींधर्मचारिणीम् ४ आनुकूल्येवर्तमानांधृतराष्ट्रोऽभ्यवर्तत ॥ कथंचशप्तस्यसतःपांडोस्तेनमहात्मना ५ समुत्प
न्नादैवतेभ्यःपुत्राःपंचमहारथाः ॥ एतद्विद्वन्यथान्यायंविस्तरेणतपोधन ६ कथयस्वनमेतृप्तिःकथ्यमानेषुबंधुषु ॥ वैशंपायनउवाच ॥ क्षुच्छ्रमाभिपरिग्लानं
द्वैपायनमुपस्थितम् ७ तोषयामासगांधारीव्यासस्तस्यैवरंददौ ॥ सावव्रेसदृशंभर्तुःपुत्राणांशतमात्मनः ८ ततःकालेनसागर्भंधृतराष्ट्रादथाग्रहीत् ॥ संवत्सरद्वयं
तंतुगांधारीगर्भमाहितम् ९ अप्रजाधारयामासततस्तांदुःखमाविशत् ॥ श्रुत्वाकुंतीसुतंजातंबालार्कसमतेजसम् १०

खेःपंचमहायज्ञैः गर्भाधिस्यश्रौतयज्ञेष्वनधिकारात् ५ । ६ । ७ । ८ । ९ । १० । ११ पारसवींव्याख्यातरूपांब्राह्मणेनशूद्रायांजातां १२ । १३ । १४ ॥ इति आदिपर्व
णि नैलकंठीये भारतभावदीपे चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥ ॥ ७ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

११ लोहाष्ठीलालोहमयीगंडिकातद्वत् संहताकठिना १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ अवदधेधृतवती २२ । २३ । २४ । २५ । २६ । २७ रुरावचननाद

उदरस्यात्मनःस्थैर्यमुपलभ्यान्वचिंतयत् ॥ अज्ञातंधृतराष्ट्रस्ययत्नेनमहताततः ११ सोदरंघातयामासगांधारीदुःखमूर्छिता ॥ ततोजज्ञेमांसपेशीलोहाष्ठीलेव
संहता १२ द्विवर्षसंभृताकुक्षौतामुत्स्रष्टुंप्रचक्रमे ॥ अथद्वैपायनोज्ञात्वात्वरितःसमुपागमत् १३ तांसमांसमयींपेशींददर्शजपतांवरः ॥ ततोऽब्रवीत्सौबलेयींकिमि
दंतेचिकीर्षितम् १४ साचात्मनोमतंसत्यंशशंसपरमर्षये ॥ गांधार्युवाच ॥ ज्येष्ठंकुंतीसुतंजातंश्रुत्वारविसमप्रभम् १५ दुःखेनपरमेणेदमुदरंघातितंमया ॥ शतंच
किलपुत्राणांवितीर्णमेत्वयापुरा १६ इयंचमेमांसपेशीजातापुत्रशतायवै ॥ व्यासउवाच ॥ एवमेतत्सौबलेयिनैतज्जात्वन्यथाभवेत् १७ वितथंनोक्तपूर्वंमेस्वैरेष्वपि
कुतोऽन्यथा ॥ घृतपूर्णंकुंडशतंक्षिप्रमेवविधीयताम् १८ सुगुप्तेषुचदेशेषुरक्षाचैवविधीयताम् ॥ शीताभिरद्भिरष्ठीलामिमांचपरिषिंचय १९ ॥ वैशंपायनउवाच॥
सासिच्यमानात्वष्ठीलाबभूवशतधातदा ॥ अंगुष्ठपर्वमात्राणांगर्भाणांपृथगेवतु २० एकाधिकशतंपूर्णंयथायोगंविशांपते ॥ मांसपेश्यास्तदाराजन्क्रमशःकालप
र्ययात् २१ ततस्तांस्तेषुकुंडेषुगर्भानवदधेतदा ॥ स्वनुगुप्तेषुदेशेषुरक्षांवैव्यदधात्ततः २२ शशंसचैवभगवान्कालेनैतावतापुनः ॥ उद्घाटनीयान्येतानिकुंडानीति
चसौबलीम् २३ इत्युक्त्वाभगवान्व्यासस्तथाप्रतिनिधायच ॥ जगामतपसेधीमान्हिमवंतंशिलोच्चयम् २४ जज्ञेक्रमेणचैतेनतेषांदुर्योधनोनृपः ॥ जन्मतस्तुप्रमाणे
नज्येष्ठोराजायुधिष्ठिरः २५ तदाऽऽख्यातंतुभीष्मायविदुरायचधीमते ॥ यस्मिन्नहनिदुर्धर्षोजज्ञेदुर्योधनस्तदा २६ तस्मिन्नेवमहाबाहुर्जज्ञेभीमोऽपिवीर्यवान् ॥
सजातमात्रएवाथधृतराष्ट्रसुतोनृप २७ रासभारावसदृशंरुरावचननादच ॥ तंखराःप्रत्यभाषंतगृध्रगोमायुवायसाः २८ वाताश्चप्रववुश्चापिदिग्दाहश्चाभवत्तदा ॥
ततस्तुभीतवद्राजाधृतराष्ट्रोऽब्रवीदिदम् २९ समानीयबहून्विप्रान्भीष्मंविदुरमेवच ॥ अन्यांश्चसुहृदोराजन्कुरून्सर्वांस्तथैवच ३० युधिष्ठिरोराजपुत्रोज्येष्ठोनः
कुलवर्धनः ॥ प्राप्तःस्वगुणतोराज्यंनतस्मिन्वाच्यमस्तिनः ३१ अयंत्वनंतरस्तस्मादपिराजाभविष्यति ॥ एतद्विब्रूतमेतथ्यंयदत्रभविताध्रुवम् ३२ वाक्यस्यैत
स्यनिधनेदिक्षुसर्वासुभारत ॥ क्रव्यादाःप्राणदन्घोराःशिवाश्चाशिवशंसिनः ३३ लक्षयित्वानिमित्तानितानिघोराणिसर्वशः ॥ तेऽब्रुवन्ब्राह्मणाराजन्विदुरश्चमहा
मतिः ३४ यथेमानिनिमित्तानिघोराणिमनुजाधिप ॥ उत्थितानिसुतेजातेज्येष्ठेतेपुरुषर्षभ ३५ व्यक्तंकुलांतकरणोभवितैषसुतस्तव ॥ तस्यशांतिःपरित्यागे
गुप्तावपनयोमहान् ३६ शतमेकोनमप्यस्तुपुत्राणांतेमहीपते ॥ त्यजैनमेकंशांतिंचेत्कुलस्येच्छसिभारत ३७ एकेनकुरुवैक्षेमंकुलस्यजगतस्तथा ॥ त्यजेदेकं
कुलस्यार्थेग्रामस्यार्थेकुलंत्यजेत् ३८ ग्रामंजनपदस्यार्थेआत्मार्थेपृथिवींत्यजेत् ॥ सतथाविदुरेणोक्तस्तैश्चसर्वैर्द्विजोत्तमैः ३९ नचकारतथाराजापुत्रस्नेहसम ॥१११॥
न्वितः ॥ ततःपुत्रशतंपूर्णंधृतराष्ट्रस्यपार्थिव ४० मासमात्रेणसंजज्ञेकन्याचैकाशताधिका ॥ गांधार्यांक्लिश्यमानायामुदरेणविवर्धता ४१

चव्यक्तमव्यक्तंवक्षब्दंखरसदृशमेवाकरोत् २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१

४२ करणइवकरणःक्षत्रियाद्वैश्यायांजातत्वात्तुवैश्याच्छूद्रायां ४३ । ४४ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपे पंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥ ॥ ७ ॥ धृतराष्ट्रस्येति १

धृतराष्ट्रंमहाराजंवैश्यापर्यचरत्किल ॥ तस्मिन्संवत्सरेराजन्धृतराष्ट्रान्महायशाः ४२ जज्ञेधीमांस्ततस्तस्यांयुयुत्सुःकरणोनृप ॥ एवंपुत्रशतंजज्ञेधृतराष्ट्रस्यधीम
तः ४३ महारथानांवीराणांकन्याचैकाशताधिका ॥ युयुत्सुश्चमहातेजावैश्यापुत्रःप्रतापवान् ४४ ॥ इतिश्रीमहाभारते आदिपर्वणि संभवपर्वणि गांधारीपु
त्रोत्पत्तौपंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥ ॥ ७ ॥ ॥ जनमेजयउवाच ॥ धृतराष्ट्रस्यपुत्राणामादितःकथितंत्वया ॥ ऋषेःप्रसादात्तुशतंनचक
न्याप्रकीर्तिता १ वैश्यापुत्रोयुयुत्सुश्चकन्याचैकाशताधिका ॥ गांधारराजदुहिताशतपुत्रेतिचानघ २ उक्तामहर्षिणातेनव्यासेनामिततेजसा ॥ कथंत्विदानीं
भगवन्कन्यांत्वंतुब्रवीषिमे ३ यदिभागशतंपेशीकृतातेनमहर्षिणा ॥ नप्रजास्यतिचेद्भूयःसौबलेयीकथंचन ४ कथंतुसंभवस्तस्यादुःशलायावदस्वमे ॥ यथावदि
हविप्रर्षेपरंमेऽत्रकुतूहलम् ५ ॥ वैशंपायनउवाच ॥ साध्वयंप्रश्नउद्दिष्टःपांडवेयब्रवीमिते ॥ तांमांसपेशींभगवान्स्वयमेवमहातपाः ६ शीताभिरद्भिरासिच्यभागंभा
गमकल्पयत् ॥ योयथाकल्पितोभागस्तंतंधात्र्यातथानृप ७ घृतपूर्णेषुकुंडेषुएकैकंप्राक्षिपत्तदा ॥ एतस्मिन्नंतरेसाध्वीगांधारीसुदृढव्रता ८ दुहितुःस्नेहसंयोगमनु
ध्यायवरांगना ॥ मनसाऽचिंतयद्देवीएतत्पुत्रशतंमम ९ भविष्यतिनसंदेहोनब्रवीत्यन्यथामुनिः ॥ ममेयंपरमातुष्टिर्दुहितामेभवेद्यदि १० एकाशताधिकाबाला
भविष्यतिकनीयसी ॥ ततोदौहित्रजाल्लोकादबाह्योऽसौपतिर्मम ११ अधिकाकिलनारीणांप्रीतिर्जामातृजाभवेत् ॥ यदिनाममममापिस्याद्दुहितैकाशताधिका
१२ कृतकृत्याभवेयंवैपुत्रदौहित्रसंवृता ॥ यदिसत्यंतपस्तप्तंदत्तंवाऽप्यथवाहुतम् १३ गुरवस्तोषितावाऽपितथाऽस्तुदुहितामम ॥ एतस्मिन्नेवकालेतुकृष्ण
द्वैपायनःस्वयम् १४ व्यभजत्सतदापेशींभगवानृषिसत्तमः ॥ गणयित्वाशतंपूर्णमंशानामाहसौबलीम् १५ ॥ व्यासउवाच ॥ पूर्णंपुत्रशतंत्वेतन्नमिथ्यावागु
दाहृता ॥ दौहित्रयोगायभागएकःशिष्टःशतात्परः १६ एषातेसुभगाकन्याभविष्यतियथेप्सिता ॥ ततोऽन्यंघृतकुंभंचसमानाय्यमहातपाः ॥ तंचापिप्राक्षिप
त्तत्रकन्याभागंतपोधनः १७ एतत्तेकथितंराजन्दुःशलाजन्मभारत ॥ ब्रूहिराजेंद्रकिंभूयोवर्तयिष्यामितेऽनघ १८ ॥ इति श्रीमहाभारते आदिपर्वणि संभवप
र्वणि दुःशलोत्पत्तौषोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ ॥ जनमेजयउवाच ॥ ज्येष्ठाऽनुज्येष्ठतांतेषांनामानिचपृथक्पृथक् ॥ धृतराष्ट्रस्यपुत्राणा
मानुपूर्व्यात्प्रकीर्तय १ ॥ वैशंपायनउवाच ॥ दुर्योधनोयुयुत्सुश्चराजन्दुःशासनस्तथा ॥ दुःसहोदुःशलश्चैवजलसंधःसमःसहः २ विंदानुविंदौदुर्धर्षःसुबाहुर्दु
ष्प्रधर्षणः ॥ दुर्मर्षणोदुर्मुखश्चदुष्कर्णःकर्णएवच ३ विविंशतिर्विकर्णश्चशलःसत्वःसुलोचनः ॥ चित्रोपचित्रौचित्राक्षश्चारुचित्रःशरासनः ४

५ । ३ । नप्रजास्यति प्रजामात्मनो नेच्छति क्यजंतोयंशब्दः । सर्वप्रतिपादिकेभ्यःक्यचिलालसायांसुगसुगावितिवार्तिकात्सुगागमः ४ । ५ । ६ । ७ । ८ । ९ । १० अबाह्यःदौहित्रजानपि
लोकान्प्राप्स्यतीत्यर्थः ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ ॥ ज्येष्ठेति १ । २ । ३ । ४

५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ ॥ इति आदिपर्वणि नैलकंठीये भारतभावदीपे सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ । कथितइति आर्षः ऋषिप्रसादहेतुकः । अमनुष्योमनुष्येष्वदृष्टः । युगपद्बहूनांजननात् १ । २ । ३ । ४ । ५ । ६ । ७ । ८ कामेतिकामक्रोधावृताअपिमूढाःपापाचारस्वभावाईदृशानिनृशंसानिबीभत्सानिवर्जयंत्यत



दुर्मदोदुर्विगाहश्चविवित्सुर्विकटाननः ॥ ऊर्णनाभःसुनाभश्चतथानंदोपनंदकौ ५ चित्रबाणश्चित्रवर्मासुवर्मादुर्विमोचनः ॥ अयोबाहुर्महाबाहुश्चित्रांगश्चित्रकुं
डलः ६ भीमवेगोभीमबलोबलाकीबलवर्धनः ॥ उग्रायुधःसुषेणश्चकुंडधारोमहोदरः ७ चित्रायुधोनिषंगीचपाशीवृंदारकस्तथा ॥ दृढवर्मादृढक्षत्रःसोमकीर्तिर
नूदरः ८ दृढसंधोजरासंधः सत्यसंधःसदःसुवाक् ॥ उग्रश्रवाउग्रसेनःसेनानीर्दुष्पराजयः ९ अपराजितःकुंडशायीविशालाक्षोदुराधरः ॥ दृढहस्तःसुहस्तश्च
वातवेगसुवर्चसौ १० आदित्यकेतुर्बह्वाशीनागदत्तोऽग्रयाय्यपि ॥ कवचीक्रथनःकुंडीकुंडधारोधनुर्धरः ११ उग्रभीमरथौवीरौवीरबाहुरलोलुपः ॥ अभयोरौद्रक
र्माचतथादृढरथाश्रयः १२ अनाधृष्यःकुंडभेदीविरावीचित्रकुंडलः ॥ प्रमथश्चप्रमाथीचदीर्घरोमश्चवीर्यवान् १३ दीर्घबाहुर्महाबाहुर्व्यूढोरःकनकध्वजः ॥ कुंडाशीवि
रजाश्चैवदुःशलाचशताधिका १४ इतिपुत्रशतंराजन्कन्याचैवशताधिका ॥ नामधेयानुपूर्व्येणविद्धिजन्मक्रमंनृप १५ सर्वेत्वतिरथाःशूराःसर्वेयुद्धविशारदाः ॥
सर्वेवेदविदश्चैवसर्वेसर्वास्त्रकोविदाः १६ सर्वेषामनुरूपाश्चकृतादारामहीपते ॥ धृतराष्ट्रेणसमयेपरीक्ष्यविधिवन्नृप १७ दुःशलांचापिसमयेधृतराष्ट्रोनराधिपः ॥
जयद्रथायप्रददौविधिनाभरतर्षभ १८ ॥ इति श्रीमहाभारते आदिपर्वणि संभवपर्वणि धृतराष्ट्रपुत्रनामकथने सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ ॥
जनमेजयउवाच ॥ कथितोधार्तराष्ट्राणामार्षःसंभवउत्तमः ॥ अमनुष्योमनुष्याणांभवताब्रह्मवादिना १ नामधेयानिचाप्येषांकथ्यमानानिभागशः ॥ त्वत्तः
श्रुतानिमेब्रह्मन्पांडवानांचकीर्तय २ तेहिसर्वेमहात्मानोदेवराजपराक्रमाः ॥ त्वयैवांशावतरणेदेवभागाःप्रकीर्तिताः ३ एतदिच्छाम्यहंश्रोतुमतिमानुषकर्मणाम् ॥
तेषामाजननंसर्वंवैशंपायनकीर्तय ४ ॥ वैशंपायनउवाच ॥ राजापांडुर्महारण्येमृगव्यालनिषेविते ॥ चरन्मैथुनधर्मस्थंददर्शमृगयूथपम् ५ ततस्तांचमृगीं
तंचरुक्मपुंखैःसुपत्रिभिः ॥ निर्बिभेदशरैस्तीक्ष्णैःपांडुःपंचभिराशुगैः ६ सचराजन्महातेजाऋषिपुत्रस्तपोधनः ॥ भार्ययासहतेजस्वीमृगरूपेणसंगतः ७ संसक्त
श्चतयामृग्यामानुषीमीरयन्गिरम् ॥ क्षणेनपतितोभूमौविललापाकुलेंद्रियः ८ ॥ मृगउवाच ॥ काममन्युपरीताहिबुद्ध्याविरहिताअपि ॥ वर्जयंतिनृशंसानि
पापेष्वपिरतानराः ९ नविधिंग्रसतेप्रज्ञाप्रज्ञांतुग्रसतेविधिः ॥ विधिपर्यागतानर्थान्प्राज्ञोनप्रतिपद्यते १० शश्वद्धर्मात्मनांमुख्येकुलेजातस्यभारत ॥ कामलो
भाभिभूतस्यकथंतेचलितामतिः ११ ॥ पांडुरुवाच ॥ शत्रूणांयावधेवृत्तिःसामृगाणांवधेस्मृता ॥ राज्ञांमृगनमांमोहात्त्वंगर्हयितुमर्हसि १२ 

स्त्वंनृशंसकर्तासर्वेभ्योऽप्यधमइत्यर्थः ९ विधिंदैवं नग्रसतेनातिक्रामति । प्रज्ञाशास्त्रीयाबुद्धिः । प्राज्ञःप्रज्ञावानर्थान्विधिपर्यागतान्दैवोपगतान्नप्रतिपद्यतेनवेत्तिकिंतुप्रज्ञाबलेनैवैतन्मयाकृतमिति
मन्यतेऽतोनायंतवापराधइतिभावः प्रज्ञावानितिपाठेतुप्रज्ञावानेवैतज्जानातिनमूढइत्यर्थः १० तवापिमोहइत्याश्चर्यमित्याह शश्वदिति ११ पाठांतरे मृगयुतांमृगहंतृत्वं १२

अच्छद्मनाप्राकट्येन । माययाप्रच्छन्नरूपेण । चोवार्थे १३ सत्रमासीनोऽनुतिष्ठन् । प्रतस्थानांतत्रापिब्राह्मणानामपिमृगयादृष्टैवकिंपुनर्ममराज्ञः । प्रोक्ष्येत्यनेनोपाकरणसंज्ञपनादिकंलक्ष्यते । मुखं व्यादायस्वपितीतिवन्मृगयांकृत्वाप्रोक्षयामासेतिव्याख्येयं १४ प्रमाणंवेदः । अस्मान्वर्तमानान् । ननुपर्यग्निकृतानारण्यानुत्सृजतीत्यारण्यानामुत्सर्गएवविहितोनवधइत्याशंक्याह अगस्त्यस्येति अभिचारेणशत्रुमारणेन । अतिचारेणेतिपाठेशास्त्रातिक्रमेण । वपाकदलीगर्भपत्रसदृशोमांसापूपः । तस्मादगस्त्यप्रदर्शितेनमार्गेणशत्रुवधकामानृपाशत्रुवन्मृगानघ्नंति १५ नरिपूनिति रंध्रेविशस्त्र

अच्छद्मनामाययाचमृगाणांवधइष्यते ॥ सएवधर्मोराज्ञांतुतद्विद्वान्किंनुगर्हसे १३ अगस्त्यःसत्रमासीनश्चकारमृगयामृषिः ॥ आरण्यान्सर्वदैवत्यान्मृगा
न्प्रोक्ष्यमहावने १४ प्रमाणदृष्टधर्मेणकथमस्मान्विगर्हसे ॥ अगस्त्यस्याभिचारेणयुष्माकंचवपाहुता १५ ॥ मृगउवाच ॥ नरिपून्वैसमुद्दिश्यविमुंचंतिनराः
शरान् ॥ रंध्रएषांविशेषेणवधकालःप्रशस्यते १६ ॥ पांडुरुवाच ॥ प्रमत्तमप्रमत्तंवाविवृतंघ्नंतिचौजसा ॥ उपायैर्विविधैस्तीक्ष्णैःकस्मान्मृगविगर्हसे
१७ ॥ मृगउवाच ॥ नाहंघ्नंतंमृगान्राजन्विगर्हेचात्मकारणात् ॥ मैथुनंतुप्रतीक्ष्यंमेत्वयेहाद्यानृशंस्यतः १८ सर्वभूतहितेकालेसर्वभूतेप्सितेतथा ॥
कोहिविद्वान्मृगंहन्याच्चरंतंमैथुनंवने १९ अस्यांमृग्यांचराजेंद्रहर्षान्मैथुनमाचरम् ॥ पुरुषार्थफलंकर्तुंतत्त्वयाविफलीकृतम् २० पौरवाणांमहाराजतेषा
मक्लिष्टकर्मणाम् ॥ वंशेजातस्यकौरव्यनानुरूपमिदंतव २१ नृशंसंकर्मसुमहत्सर्वलोकविगर्हितम् ॥ अस्वर्ग्यमयशस्यंचाप्यधर्मिष्ठंचभारत २२ स्त्रीभोगा
नांविशेषज्ञःशास्त्रधर्मार्थतत्त्ववित् ॥ नार्हस्त्वंसुरसंकाशकर्तुमस्वर्ग्यमीदृशम् २३ त्वयानृशंसकर्तारःपापाचाराश्चमानवाः ॥ निग्राह्याःपार्थिवश्रेष्ठत्रिवर्गपरिव
र्जिताः २४ किंकृतंतेनरश्रेष्ठमामिहानागसंघ्नता ॥ मुनिंमूलफलाहारंमृगवेषधरंनृप २५ वसमानमरण्येषुनित्यंशमपरायणम् ॥ त्वयाऽहंहिंसितोयस्मात्तस्मा
त्त्वामप्यहंशपे २६ द्वयोर्नृशंसकर्तारमवशंकाममोहितम् ॥ जीवितांतकरोभावएवमेवागमिष्यति २७ अहंहिकिंदमोनामतपसाभावितोमुनिः ॥ व्यपत्रपन्म
नुष्याणांमृग्यांमैथुनमाचरम् २८ मृगोभूत्वामृगैःसार्धंचरामिगहनेवने ॥ नतुतेब्रह्महत्येयंभविष्यत्यविजानतः २९ मृगरूपधरंहत्वामामेवंकाममोहितम् ॥
अस्यतुत्वंफलंमूढप्राप्स्यसीदृशमेवहि ३० प्रिययासहसंवासंप्राप्यकामविमोहितः ॥ त्वमप्यस्यामवस्थायांप्रेतलोकंगमिष्यसि ३१ अंतकालेहिसंवासं
ययागंताऽसिकांतया ॥ प्रेतराजपुरंप्राप्तंसर्वभूतदुरत्ययम् ॥ भक्त्यामतिमतांश्रेष्ठसैवत्वाऽनुगमिष्यति ३२ वर्तमानःसुखेदुःखंयथाहंप्रापितस्त्वया ॥
तथात्वांचसुखंप्राप्तंदुःखमभ्यागमिष्यति ३३

त्वव्यसनाक्रांतत्वादिसमयेशरान्नविमुंचंतीतिसंबंधः । किंत्वेषांशत्रूणांवधकालःसर्वलोकप्रसिद्धःसंग्रामआभिमुख्यादिमान्सएवप्रशस्यतेऽन्योनिंद्यतइत्यर्थः १६ प्रमत्तमसावधानं तीक्ष्णैर्गुप्तशस्त्रैराग्ने
यादिभिर्विवृतंव्यक्तंघ्नंतिमृगान् । मत्तभीतपलायितादीनांशत्रूणांवधोनिंद्योनतुमृगादीनामित्याशयः १७ । १८ । १९ हर्षात्ऋश्यशृंगादितुल्यःपुत्रोमेभविष्यतीत्युत्साहात् । पुरुषार्थफलंपुरु
षैर्मैथुनेनार्थनीयंफलंपुत्रस्तंकर्तुमुत्पादयितुं २० । २१ । २२ । २३ त्रिवर्गेति धर्मार्थकामहीनाः २४ तेत्वया २५ । २६ द्वयोःस्त्रीपुंसयोर्नृशंसंनिंद्यंमैथुनासक्तयोर्वधस्तस्यकर्तारं
२७ । २८ । २९ । ३० । ३१ प्राप्तंत्वात्वां ३२ । ३३

३४ ॥ इतिश्रीआदिपर्वणिनैलकंठीयेभारतभावदीपे अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥ ७ ॥ तमिति राजाऽतिक्रम्यतंपर्यदेवयदितिसंबंधः कीदृशंतंव्यतीतंमारितमित्यर्थः १ कामजाल विधित्साजालं २ । ३ । ४ देवैस्त्यक्तस्य अपुत्रतयास्वर्गगमनानर्हत्वात् ५ मोक्षंमोक्षमार्गव्यवस्यामिनिश्चिनोमिश्रेयस्करत्वेन । तत्रहिपुत्राद्यनपेक्षाद्दृष्टाकिंप्रजयाकरिष्यामोयेषांनोऽयमात्माऽयंलोकइति । इष्टमेवैतज्जातमित्याह बंधोहीति बंधःपुत्रैषणादिः सुवृत्तिंब्रह्मचर्याख्यांवृत्तिं । पितुर्व्यासस्य ६ तपसाश्रवणमननात्मकेनालोचनेन आत्मानंचित्तंयोजयिष्यामिसमाधातुमिच्छामि । तत्रसाधनान्याह तस्मादिति एकःस्त्रीहीनः एकाकीशिष्यादिभिःसहायैर्हीनः ७ इमान्वानप्रस्थाश्रमान्सन्निहितान् पांसुनेतिभूमिशायित्वमुक्तं ८ । ९ निराशीर्निर्नमस्कारः आशिर्षनमस्कारंवाने

॥ वैशंपायनउवाच ॥ एवमुक्त्वासुदुःखार्तोजीवितात्सव्यमुच्यत ॥ मृगःपांडुश्चदुःखार्तःक्षणेनसमपद्यत ३४ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वणिपांडुमृगशापेऽष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥ ७ ॥ वैशंपायनउवाच ॥ तंव्यतीतमतिक्रम्यराजास्वमिवबांधवम् ॥ सभार्यःशोकदुःखार्तःपर्यदेवयदातुरः १ ॥ पांडुरुवाच ॥ सतामपिकुलेजाताःकर्मणाबतदुर्गतिम् ॥ प्राप्नुवंत्यकृतात्मानःकामजालविमोहिताः २ शश्वद्धर्मात्मनाजातोबालएवपितामम ॥ जीवितांतमनुप्राप्तःकामात्मैवेतिनःश्रुतम् ३ तस्यकामात्मनःक्षेत्रेराज्ञःसंयतवाग्ऋषिः ॥ कृष्णद्वैपायनःसाक्षाद्भगवान्मामजीजनत् ४ तस्याद्यव्यसनेबुद्धिःसंजातेयंममाधमा ॥ त्यक्तस्यदेवैरनयान्मृगयायांपरिधावतः ५ मोक्षमेवव्यवस्यामिबंधोहिव्यसनंमहत् ॥ सुवृत्तिमनुवर्तिष्येतामहंपितुरव्ययाम् ६ अतीवतपसाऽऽत्मानंयोजयिष्याम्यसंशयम् ॥ तस्मादेकोऽहमेकाकीएकैकस्मिन्वनस्पतौ ७ चरन्भैक्ष्यंमुनिर्मुंडश्चरिष्याम्याश्रमानिमान् ॥ पांसुनासमवच्छन्नःशून्यागारकृतालयः ८ वृक्षमूलनिकेतोवात्यक्तसर्वप्रियाप्रियः ॥ नशोचन्नप्रहृष्यंश्चतुल्यनिंदात्मसंस्तुतिः ९ निराशीर्निर्नमस्कारोनिर्द्वंद्वोनिष्परिग्रहः ॥ नचाप्यवहसन्कंचिन्नकुर्वन्भ्रुकुटींक्वचित् १० प्रसन्नवदनोनित्यंसर्वभूतहितेरतः ॥ जंगमाजंगमंसर्वमविहिंसंश्चतुर्विधम् ११ स्वासुप्रजास्विवसदासमःप्राणभृतांप्रति ॥ एककालंचरन्भैक्ष्यंकुलानिदशपंचवा १२ असंभवेवाभैक्ष्यस्यचरन्ननशनान्यपि ॥ अल्पमल्पंचभुंजानःपूर्वालाभेनजातुचित् १३ अन्यान्यपिचरंल्लोभादलाभेसप्तपूरयन् ॥ अलाभेयदिवालाभेसमदर्शीमहातपाः १४ वास्यैकंतक्षतोबाहुंचंदनेनैकमुक्षतः ॥ नाकल्याणंनकल्याणंचिंतयन्नुभयोस्तयोः १५ नजिजीविषुवत्किंचिन्नमुमूर्षुवदाचरन् ॥ जीवितंमरणंचैवनाभिनंदन्नचद्विषन् १६ याःकाश्चिज्जीवताशक्याःकर्तुमभ्युदयक्रियाः ॥ ताःसर्वाःसमतिक्रम्यनिमेषादिव्यवस्थिताः १७

च्छामीत्यर्थः । निर्द्वंद्वःसुखदुःखादिहीनः । निष्परिग्रहःकंथापादुकादिहीनः १० । ११ पूर्वंसंन्यासिधर्मानेवकरिष्यामीत्युक्तमिदानींसंन्यासमेवकरिष्यामीत्याह एककालमितिसार्धः पूर्वालाभेपूर्वमेकैकस्मिन्वनस्पतौचरन्भैक्ष्यमित्युक्तंतदभावेसति कुलानिगृहाणि १२ नजातुचिन्नकदाचित् १३ लोभादन्यानिदशाधिकानिचरन् अलाभेअपूर्तौ १४ वास्यावास्येन काष्ठतक्षणेन सुपोडादेशआर्षोविभक्तिलोपोवा १५ । १६ अभ्युदयक्रियाःस्वर्गादिहेतुदर्शपूर्णमासादयः । समतिक्रम्यप्राजापत्येष्ट्यादिपूर्वकंविधिवत्त्यक्त्वा । निमेषादिःकालस्तत्रव्यवस्थितानियतकालाः १७



अनवस्थास्वनित्यफलासुसंपरित्यक्तोधर्मसाध्योऽर्थोब्रह्मलोकांतोयेनसः । सुनिर्णिक्तात्मकल्मषःयस्मात्धर्मेणसम्यक्क्षालितचित्तकल्मषरागादितस्मात्तेनकृतार्थेननातःपरंकार्यमस्तीत्यर्थः १८ रागादिक्षयोऽपितन्मूलभूतपापक्षयादेवेत्याहनिर्मुक्तइति वागुराइववागुराबंधनान्यविद्याकामकर्माणि । सधर्मोअसंगः १९ संस्थापयिष्यामिनाशयिष्यामि निर्भयंमार्गंसंसारभयरहितं २० बाह्यसाधनाधीनेसुकृपणेमार्गेकर्ममार्गे । 'योवाएतदक्षरंगार्ग्यविदित्वाऽस्मिन्लोकेयजतिददातितपस्तप्यतेऽपिबहूनिवर्षसहस्राण्यंतवदेवास्यतद्भवतियोवाएतदक्षरंगार्ग्यविदित्वाऽस्माल्लोकात्प्रैतिसकृपणः' इतिश्रुतिनिंदिते । स्ववीर्यक्षयशोचितेस्वस्यमत्यगात्मनोवीर्यं 'सर्वस्यवशीसर्वस्येशानःसर्वस्याधिपतिः' इत्यादिश्रुतिप्रसिद्धंवशित्वादितस्यक्षयोविषयसंगकृतोह्रासस्तेनशोचितेशोच्ये । ननु'न्यायागतधन

तासुचाप्यनवस्थासुत्यक्तसर्वेंद्रियक्रियः ॥ संपरित्यक्तधर्मार्थःसुनिर्णिक्तात्मकल्मषः १८ निर्मुक्तःसर्वपापेभ्योव्यतीतःसर्ववागुराः ॥ नवशेकस्यचित्तिष्ठन्स्वधर्मामातरिश्वनः १९ एतयासततंवृत्त्याचरन्नेवंप्रकारया ॥ देहंसंस्थापयिष्यामिनिर्भयंमार्गमास्थितः २० नाहंसुकृपणेमार्गेस्ववीर्यक्षयशोचिते ॥ स्वधर्मात्सततापेतेचरेयंवीर्यवर्जितः २१ सत्कृतोऽसत्कृतोवाऽपियोऽन्यंकृपणचक्षुषा ॥ उपैतिवृत्तिंकामात्मासशुनांवर्ततेपथि २२ ॥ वैशंपायनउवाच ॥ एवमुक्त्वासुदुःखार्तोनिःश्वासपरमोनृपः ॥ अवेक्षमाणःकुंतींचमाद्रींचसमभाषत २३ कौसल्याविदुरःक्षत्ताराजाचसहबंधुभिः ॥ आर्यासत्यवतीभीष्मस्तेचराजपुरोहिताः २४ ब्राह्मणाश्चमहात्मानःसोमपाःसंशितव्रताः ॥ पौरवृद्धाश्चयेतत्रनिवसंत्यस्मदाश्रयाः ॥ प्रसाद्यसर्वेवक्तव्याःपांडुःप्रव्रजितोवनम् २५ निशम्यवचनंभर्तुर्वनवासेधृतात्मनः ॥ तत्समंवचनंकुंतीमाद्रीचसमभाषताम् २६ अन्येऽपिह्याश्रमाःसंतियेशक्याभरतर्षभ ॥ आवाभ्यांधर्मपत्नीभ्यांसहतप्तुंतपोमहत् २७ शरीरस्यापिमोक्षायस्वर्ग्यंप्राप्यमहाफलम् ॥ त्वमेवभविताभर्तास्वर्गस्यापिनसंशयः २८ प्रणिधायेंद्रियग्रामंभर्तृलोकपरायणे ॥ त्यक्त्वाकामसुखेह्यावांतप्स्यावोविपुलंतपः २९ यदिचावांमहाप्राज्ञत्यक्ष्यसित्वंविशांपते ॥ अद्यैवावांप्रहास्यावोजीवितंनात्रसंशयः ३० ॥ पांडुरुवाच ॥ यदिव्यवसितंह्येतद्युवयोर्धर्मसंहितम् ॥ स्ववृत्तिमनुवर्तिष्येतामहंपितुरव्ययाम् ३१ त्यक्त्वाग्रामसुखाहारंतप्यमानोमहत्तपः ॥ वल्कलीफलमूलाशीचरिष्यामिमहावने ३२ अग्नौजुह्वदुभौकालावुभौकालावुपस्पृशन् ॥ कृशःपरिमिताहारश्चीरचर्मजटाधरः ३३ शीतवातातपसहःक्षुत्पिपासानवेक्षकः ॥ तपसादुश्चरेणेदंशरीरमुपशोषयन् ३४

स्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत्सत्यवादीचगृहस्थोऽपिविमुच्यते' इतिस्मृतेर्गृहएवमोक्षसिद्धौकिंसंन्यासेनेत्याशंक्याह स्वधर्मादिति । जायामेस्यादथप्रजायेयेतिश्रुतेःप्रजोत्पादनमेवगृहस्थधर्मस्ततोऽपेतेगार्हस्थ्येकिमवस्थानेनेत्याशयः । वीर्यवर्जितोऽपत्योत्पादनसामर्थ्यरहितः २१ अपत्योत्पादनमपिब्राह्मणद्वारासुसंपाद्यमित्याशंक्याह सत्कृतइति अन्यंपुरुषं वृत्तिंवृत्तिमर्दं । कृपणचक्षुषाअपत्यंमेदेहीतियाञ्चादीनदृष्ट्या । कामात्माअपत्यकामआत्माचित्तंयस्यसः । कामपूर्त्यैतेशुनामिवापत्यकामानामपितत्कृतंमहद्दुःखमस्त्यतःपारिव्राज्यमेवश्रेयइतिभावः २२ । २३ क्षत्ताऽविदुरएवकौसल्याविसादृश्यर्यात् २४ । २५ तत्समयुक्तस्यपेत्यर्थ २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४

विमृशन्हिंसादिदोषं । पक्वापक्वेन पक्वफलादि अपक्वकंदादि । पक्वापक्वेनेतिपाठेपक्वांतकर्मइष्ट्यादिकंपक्षस्तदन्यदग्निहोत्रादिकमपक्वः ३५ अप्रियाणिचनाचरिष्यामि तथाकुलवासिनांभ्रात्रादीनां ३६ आरण्यावानप्रस्थास्तेषांशास्त्राणिधर्मविधायकानितेषांमध्येविहितमुग्रमास्थास्येअंगीकरिष्ये आसमापनात्यावत्समाप्ति ३७ निष्कंग्रैवेयकं ३८ । ३९ रतिंस्त्रीसंगं परमात्मिकांपरमोनुत्तमत्वादुत्कृ

एकांतशीलीविमृशन्पक्वापक्वेनवर्तयन् ॥ पितॄन्देवांश्चवन्येनवाग्भिरद्भिश्चतर्पयन् ३५ वानप्रस्थजनस्यापिदर्शनंकुलवासिनाम् ॥ नाप्रियाण्याचरिष्यामिकिंपुन ग्रॉमवासिनाम् ३६ एवमारण्यशास्त्राणामुग्रमुग्रतरंविधिम् ॥ कांक्षमाणोऽहमास्थास्येदेहस्यास्यासमापनात् ३७ ॥ वैशंपायनउवाच ॥ इत्येवमुक्त्वाभार्येतेरा जाकौरवनंदनः ॥ ततश्चूडामणिंनिष्कमंगदेकुंडलानिच ३८ वासांसिचमहार्हाणिस्त्रीणामाभरणानिच ॥ प्रदायसर्वंविप्रेभ्यःपांडुःपुनरभाषत ३९ गत्वानाग पुरंवाच्यंपांडुःप्रव्रजितोवनम् ॥ अर्थकामंसुखंचैवरतिंचपरमात्मिकाम् ४० प्रतस्थेसर्वमुत्सृज्यसभार्यःकुरुनंदनः ॥ ततस्तस्यानुयातारस्तेचैवपरिचारकाः ४१ श्रुत्वाभरतसिंहस्यविविधाःकरुणागिरः ॥ भीममार्तस्वरंकृत्वाहाहेतिपरिचुक्रुशुः ४२ उष्णमश्रुविमुंचंतस्तंविहायमहीपतिम् ॥ ययुर्नागपुरंतूर्णंसर्वमादायत द्वचः ४३ तेगत्वानगरंराज्ञोयथावृत्तंमहात्मनः ॥ कथयांचक्रिरेराज्ञस्तद्धनंविविधंददुः ४४ श्रुत्वातेभ्यस्ततःसर्वंयथावृत्तंमहावने ॥ धृतराष्ट्रोनरश्रेष्ठःपांडुमेवान्व शोचत ४५ नशय्यासनभोगेषुरतिंविंदतिकर्हिचित् ॥ भ्रातृशोकसमाविष्टस्तमेवार्थंविचिंतयन् ४६ राजपुत्रस्तुकौरव्यःपांडुर्मूलफलाशनः ॥ जगामसहपत्नीभ्यां ततोनागशतंगिरिम् ४७ सचैत्ररथमासाद्यकालकूटमतीत्यच ॥ हिमवंतमतिक्रम्यप्रययौगंधमादनम् ४८ रक्ष्यमाणोमहाभूतैःसिद्धैश्चपरमर्षिभिः ॥ उवाससम हाराजसमेषुविषमेषुच ४९ इंद्रद्युम्नसरःप्राप्यहंसकूटमतीत्यच ॥ शतशृंगेमहाराजतापसःसमतप्यत ५० ॥ इतिश्रीमहाभारतेआदिपर्वणि संभवप० पांडुचरिते ऊनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥ वैशंपायनउवाच ॥ तत्रापितपसिश्रेष्ठेवर्तमानःसवीर्यवान् ॥ सिद्धचारणसंघानांबभूवप्रियदर्शनः १ शुश्रूषुरनहंवादीसं यतात्माजितेंद्रियः ॥ स्वर्गंगंतुंपराक्रांतःस्वेनवीर्येणभारत २ केषांचिदभवद्भ्राताकेषांचिदभवत्सखा ॥ ऋषयस्त्वपरेचैनंपुत्रवत्परिपालयन् ३ सतुकालेनमहताप्राप्य निष्कल्मषंतपः ॥ ब्रह्मर्षिसदृशःपांडुर्बभूवभरतर्षभ ४ अमावास्यांतुसहिताऋषयःसंशितव्रताः ॥ ब्रह्माणंद्रष्टुकामास्तेसंप्रतस्थुर्महर्षयः ५ संप्रयातानृषीन्दृष्ट्वापां डुर्वचनमब्रवीत् ॥ भवंतःक्वगमिष्यंतिब्रूतमेवदतांवराः ६ ॥ ऋषयऊचुः ॥ समवायोमहानद्यब्रह्मलोकेमहात्मनाम् ॥ देवानांचऋषीणांचपितॄणांचमहात्मनाम् ॥ वयंतत्रगमिष्यामोद्रष्टुकामाःस्वयंभुवम् ७ ॥ वैशंपायनउवाच ॥ पांडुरुत्थायसहसागंतुकामोमहर्षिभिः ॥ स्वर्गपारंतितीर्षुःसशतशृंगादुदङ्मुखः ८ प्रतस्थेसह पत्नीभ्यामब्रुवंस्तंचतापसाः ॥ उपर्युपरिगच्छंतःशैलराजमुदङ्मुखाः ९ दृष्टवंतोगिरौरम्येदुर्गान्देशान्बहून्वयम् ॥ विमानशतसंबाधांगीतस्वरनिनादिताम् १० ॥११४॥

इचात्मा आत्माविषुत्रनामा।सीतिश्रुतेःपुत्रःसययातां ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे ऊनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥ तत्रापीति १ । २ परिपालयन् अडभावआर्षः ३ । ४ अमावास्यांप्राप्य ५ । ६ । ७ । ८ । ९ विमानशतैनसंबाधसंकटंयस्यांसा । 'संबाधःसंकटेभगे'इतिमेदिनी १०

११ । १२ । १३ । सिद्धाश्चपरमर्षयइति वक्ष्यमाणलक्षणचतुष्टयनिर्मुक्ताःसिद्धादिव्यज्ञानवंतःपरमर्षयस्तेऽपियांति त्वंतुनतथेतिभावः । तत्रलोकद्वयेहेतुमाह । गच्छंत्याविति १४ तमेवंमुनीनामाशयं बुद्ध्वापांडुरुवाच अप्रजस्येति नपरिचक्षतेपरितःसर्वथानपश्यंति १५ । १६ नाशोममैव यतःपितॄणामेषनिश्चयः । अप्रजस्यस्वर्गद्वारनिरोधेनयज्ञादिकंविफलीकर्तव्यमित्येषनिश्चयःपितॄणां तेनतादृशोऽस्वर्ग्योभूमौसन्नपिनश्यायएवकिमुतदेहनाशेइतिभावः एतदेवविवृणोति ऋणैरित्यादिना १७ । १८ । १९ ऋषिदेवमनुष्याणामृणादितिशेषः २० इतरेषांपितॄणामृणानुनाशोऽप्र काशतामममात्मन्निदेहेनश्यतिसति । सोऽयंलोकःपुत्रेणैवजय्योनान्येनकर्मणेतिश्रुतेः । स्वदेहनाशेऽपिपुत्ररूपेणात्मस्येवपुत्राभावेतुनास्त्येवेत्यर्थः तदेवाह पित्र्यादृणादिति २१ । २२ । २३

आक्रीडभूमिंदेवानांगंधर्वाप्सरसांतथा ॥ उद्यानानिकुबेरस्यसमानिविषमाणिच ११ महानदीनितंबांश्चगहनान्गिरिगह्वरान् ॥ संतिनित्यहिमादेशानिर्वृक्ष मृगपक्षिणः १२ संतिक्वचिन्महादर्योदुर्गाःकाश्चिद्दुरासदाः ॥ नातिक्रामेतपक्षीयान्कुतएवेतरेमृगाः १३ वायुरेकोहियात्यत्रसिद्धाश्चपरमर्षयः ॥ गच्छंत्यौशै लराजेऽस्मिन्राजपुत्र्यौकथंत्विमे १४ नसीदेतामदुःखार्हेमागमोभरतर्षभ ॥ पांडुरुवाच ॥ अप्रजस्यमहाभागानद्वारंपरिचक्षते ११९ स्वर्गेतेनाभितप्तोऽहम प्रजस्तुब्रवीमिवः ॥ पित्र्यादृणादनिर्मुक्तस्तेनतप्येतपोधनाः १६ देहनाशेध्रुवोनाशःपितॄणामेषनिश्चयः ॥ ऋणैश्चतुर्भिःसंयुक्ताजायंतेमानवाभुवि १७ पितृदेव र्षिमनुजैर्देयंतेभ्यश्चधर्मतः ॥ एतानितुयथाकालंयोनबुध्यतिमानवः १८ नतस्यलोकाःसंतीतिधर्मविद्भिःप्रतिष्ठितम् ॥ यज्ञैस्तुदेवान्प्रीणातिस्वाध्यायतपसामु नीन् १९ पुत्रैःश्राद्धैःपितॄंश्चापिआनृशंस्येनमानवान् ॥ ऋषिदेवमनुष्याणांपरिमुक्तोऽस्मिधर्मतः २० त्रयाणामितरेषांतुनाशआत्मनिनश्यति ॥ पित्र्यादृणाद निर्मुक्तइदानीमस्मितापसाः २१ इहतस्मात्प्रजाहेतोःप्रजायंतेनरोत्तमाः ॥ यथैवाहंपितुःक्षेत्रेजातस्तेनमहर्षिणा २२ तथैवास्मिन्ममक्षेत्रेकथंवैसंभवेत्प्रजा ॥ ॥ ऋषयऊचुः ॥ अस्तिवैतवधर्मात्मन्विद्मदेवोपमंशुभम् २३ अपत्यमनघंराजन्वयंदिव्येनचक्षुषा ॥ दैवोदिष्टंनरव्याघ्रकर्मणेहोपपादय २४ अक्लिष्टंफलम व्यग्रोविंदतेबुद्धिमान्नरः ॥ तस्मिन्दृष्टेफलेराजन्प्रयत्नंकर्तुमर्हसि २५ अपत्यंगुणसंपन्नंलब्धाप्रीतिकरंह्यसि ॥ वैशंपायनउवाच ॥ तच्छ्रुत्वातापसवचःपांडु श्चितापरोऽभवत् २६ आत्मनोमृगशापेनजानन्नुपहतांक्रियाम् ॥ सोऽब्रवीद्विजनेकुंतींधर्मपत्नींयशस्विनीम् ॥ अपत्योत्पादनेयत्नमापदित्वंसमर्थय २७ अ पत्यंनामलोकेषुप्रतिष्ठाधर्मसंहिता ॥ इतिकुंतिविदुर्धीराःशाश्वतंधर्मवादिनः २८ इष्टंदत्तंतपस्तप्तंनियमश्चस्वनुष्ठितः ॥ सर्वमेवानपत्यस्यनपावनमिहोच्यते २९ सोऽहमेवंविदित्वैतत्प्रपश्यामिशुचिस्मिते ॥ अनपत्यःशुभाँल्लोकान्नप्राप्स्यामीतिचिंतयन् ३० मृगाभिशापान्नष्टंमेजननंह्यकृतात्मनः ॥ नृशंसकारिणोभी रुयथैवोपहतंपुरा ३१ इमेवैबंधुदायादाःषट्पुत्राधर्मदर्शने ॥ षडेवाबंधुदायादाःपुत्रास्ताञ्छृणुमेपृथे ३२

दैवोदिष्टंदृष्टादृष्टकारणकलापजन्यत्वात्कार्यमात्रस्येत्यर्थः २४ अव्यग्रोविंदतेऽतोव्यग्रोमाभूदित्यर्थः २५ लभतेइतिलब्धातादृशोऽसिलप्स्यसीत्यर्थः २६ क्रियांपुत्रोत्पादिकां २७ धर्मसंहिताधर्ममयी २८ । २९ । ३० मृगाभिशापान्मृगरूपस्यमुनेःशापान्नष्टमसद्रूपंजातंजननंस्त्रीसंगाख्यंरतिकर्मेयतउपहतं । यथामृगस्यतथैवांतरामिथुनंममापिमरणमापिनिश्चयात्तद्भीवरवात् ३१ धर्मे दर्शनेधर्मशास्त्रेउक्ताइतिशेषः बंधुदायादारिक्थहराः अबंधुदायादास्तदन्ये ३२

पक्षायानाह स्वयंजातऊढायांवोढुःसकाशाज्जातःतस्यामेवोत्तमानुग्रहाज्जातःप्रणीतः २ परिक्रीतोरेतोमूल्यदानेनतस्यामेवजनितः ३ पौनर्भवःपूर्वमन्येनऊढापश्चादन्येनतस्यांद्वितीयपतोजातोधर्मतोयस्य पिपूर्वस्यक्षेत्रजस्तथाऽपितस्यापिपरिणेतृत्वात्तदीयएव ४ कानीनः विवाहात्प्रागेवाऽस्यांयोजायतेपुत्रःसमेपुत्रोभविष्यतीतिसमयबंधेनपादीयतेतस्यामुत्पन्नः ५ स्वैरिण्यामप्यूढायामेवानीचाज्जातः कुंडनामा ६ एतेष्वाद्यचतुर्थावौरसोपंचमोव्यवहितौरसइतरेक्षेत्रजाख्यः ३३ अथषड्बंधुदायादाः । दत्तोमातापितृभ्यांसमर्पितः १ क्रीतोधनादिकंदत्वागृहीतः २ कृत्रिमश्चेतिचकारोभिन्नक्रमः क्रीतश्चे तिसंबंधः कृत्रिमउत्तमकाराद्यकाभावेऽपियःस्वयमुपगच्छेतअहंतवपुत्रोऽस्मीत्युपेयात्सतृतीयः ३ सहोढोयस्यमातागर्भवत्येवऊढासचतुर्थः ४ कर्णादिसदृशस्यकानीनस्याप्यत्रैवांतर्भावः । ज्ञातिरेताव्य

सहोढोज्ञातिरेताश्चहीनयोनि स्वयंजातःप्रणीतश्चपरिक्रीतश्चयःसुतः ॥ पौनर्भवश्चकानीनःस्वैरिण्यांयश्चजायते ३३ दत्तःक्रीतःकृत्रिमश्चउपगच्छेत्स्वयंचयः ॥ सहोढोज्ञातिरेताश्चहीनयोनि धृतश्चयः ३४ पूर्वपूर्वतमाभावंमत्वालिप्सेतवैसुतम् ॥ उत्तमादेवरात्पुंसःकांक्षंतेपुत्रमापदि ३५ अपत्यंधर्मफलदंश्रेष्ठंविंदंतिमानवाः ॥ आत्मशुक्रादपिपृथेमनुः स्वायंभुवोऽब्रवीत् ३६ तस्मात्प्रहेष्याम्यद्यत्वांहीनःप्रजननात्स्वयम् ॥ सदृशाच्छ्रेयसोवात्वंविद्ध्यपत्यंयशस्विनि ३७ शृणुकुंतिकथामेतांशारदंडायिनींप्रति ॥ सावीरपत्नीगुरुणानियुक्तापुत्रजन्मनि ३८ पुष्पेणप्रयतास्नातानिशिकुंतिचतुष्पथे ॥ वरयित्वाद्विजंसिद्धंहुत्वापुंसवनेऽनलम् ३९ कर्मण्यवसितेतस्मिन्सातेनैव सहावसत् ॥ तत्रत्रीन्जनयामासदुर्जयादीन्महारथान् ४० तथात्वमपिकल्याणिब्राह्मणात्तपसाऽधिकात् ॥ मन्नियोगाद्यतक्षिप्रमपत्योत्पादनंप्रति ४१ ॥ इति श्रीमहाभारते आदिपर्वणि संभवपर्वणिपांडुपृथासंवादे विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ एवमुक्तामहाराजकुंती पांडुमभाषत ॥ कुरूणामृषभंवीरंतदाभूमिपतिंपतिम् १ नमामर्हसिधर्मज्ञवक्तुमेवंकथंचन ॥ धर्मपत्नीमभिरतांत्वयिराजीवलोचने २ त्वमेवतुमहाबाहोमय्यप त्यानिभारत ॥ वीरवीर्योपपन्नानिधर्मतोजनयिष्यसि ३ स्वर्गंमनुजशार्दूलगच्छेयंसहितात्वया ॥ अपत्यायचमांगच्छत्वमेवकुरुनंदन ४ नह्यहंमनसाऽप्यन्यंगच्छेयं त्वदृतेनरम् ॥ त्वत्तःप्रतिविशिष्टश्चकोऽन्योऽस्तिभुविमानवः ५ इमांचतावद्धर्मात्मन्पौराणींशृणुमेकथाम् ॥ परिश्रुतांविशालाक्षकीर्तयिष्यामियामहम् ६ व्यु षिताश्वइतिख्यातोबभूवकिलपार्थिवः ॥ पुरापरमधर्मिष्ठःपूरोर्वंशविवर्धनः ७ तस्मिंश्चयजमानेवैधर्मात्मनिमहाभुजे ॥ उपागमंस्ततोदेवाःसेंद्रादेवर्षिभिःसह ८ अमाद्यदिंद्रःसोमेनदक्षिणाभिर्द्विजातयः ॥ व्युषिताश्वस्यराजर्षेस्ततोयज्ञेमहात्मनः ९ देवाब्रह्मर्षयश्चैवचक्रुःकर्मस्वयंतदा ॥ व्युषिताश्वस्ततोराजन्नतिमर्त्या न्व्यरोचत १० सर्वभूतान्प्रतियथातपनःशिशिरात्यये ॥ सविजित्यगृहीत्वाचनृपतीन्राजसत्तमः ११

बहितभ्रात्रादेःपुत्रःपंचमः ५ 'सर्वेषामेकपुत्राणांयद्येकोऽपिभवेत्सुतः । सर्वेतेतेनपुत्रेणपुत्रिणोमनुरब्रवीत्' इतिस्मृतेःसाक्षात्भ्रातुःपुत्रस्यौरसत्वाविशेषात् हीनयोनौधृतउत्पादितःषष्ठः ६ । ३४ प्रणीते विशेषमाह उत्तमादिति ३५ श्रेष्ठंपितुःकुलादपियःप्रशस्यतमस्तत्ज्ञंश्रेष्ठमपत्यमितिसामानाधिकरण्यं श्रेष्ठादन्यस्यवादपत्यस्य ३६ प्रहेष्यामि गतिवृद्धिकर्मणोहिनोतेरूपं । अथेतिक्षिप्रवचनर्सं योगात्सुहृद् त्वांशरणंगतोऽस्मिवर्धयामिवेतिचार्थः ३७ शारदंडायनेर्भार्या ३८ गुरुणाभर्त्रा पुष्पेणआर्तवेनउपलक्षितेन प्रयतारजस्वलाप्रसवती । स्नाताचतुर्थेऽह्नि ३९ । ४० यतयतस्व ४१ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥ ॥ ७ ॥ एवमिति १ । २ ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११



अकालयद्वशीकृतवान् १२ । १३ । १४ । १५ जहारआहृतवान्यकारेत्यर्थः । सोमसंस्थाःअग्निष्टोमात्यग्निष्टोमादयःसप्त १६ काक्षीवतीकक्षीवतोदुहिता १७ । १८ । १९ । २० । २१ मृतेमरणमप्र

प्राच्यानुदीच्यान्पाश्चात्यान्दाक्षिणात्यानकालयत् ॥ अश्वमेधेमहायज्ञेव्युषिताश्वःप्रतापवान् १२ बभूवसहिराजेंद्रोदशनागबलान्वितः ॥ अप्यत्रगाथांगायंति येपुराणविदोजनाः १३ व्युषिताश्वेयशोवृद्धेमनुष्येंद्रेकुरूत्तम ॥ व्युषिताश्वःसमुद्रांतांविजित्येमांवसुंधराम् १४ अपालयत्सर्ववर्णान्पितापुत्रानिवौरसान् ॥ यजमानोमहायज्ञैर्ब्राह्मणेभ्योधनंददौ १५ अनंतरत्नान्यादायसजहारमहाक्रतून् ॥ सुषावचबहून्सोमान्सोमसंस्थास्ततानच १६ आसीत्काक्षीवतीचास्यभार्या परमसंमता ॥ भद्रानाममनुष्येंद्ररूपेणासदृशीभुवि १७ कामयामासतुस्तौचपरस्परमितिश्रुतम् ॥ सतस्यांकामसंपन्नोयक्ष्मणासमपद्यत १८ तेनाचिरेणकाले नजगामास्तमिवांशुमान् ॥ तस्मिन्प्रेतेमनुष्येंद्रेभार्याऽस्यभृशदुःखिता १९ अपुत्रापुरुषव्याघ्रविललापेतिनःश्रुतम् ॥ भद्रापरमदुःखार्त्तातन्निबोधजनाधिप ॥ २० ॥ भद्रोवाच ॥ नारीपरमधर्मज्ञसर्वाभर्तृविनाकृता ॥ पतिंविनाजीवतियानसाजीवतिदुःखिता २१ पतिंविनामृतंश्रेयोनार्याःक्षत्रियपुंगव ॥ त्वद्गतिंगंतुमि च्छामिप्रसीदस्वनयस्वमाम् २२ त्वयाहीनाक्षणमपिनाहंजीवितुमुत्सहे ॥ प्रसादंकुरुमेराजन्नितस्तूर्णंनयस्वमाम् २३ पृष्ठतोऽनुगमिष्यामिसमेषुविषमेषुच ॥ त्वामहंनरशार्दूलगच्छंतमनिवर्तितुम् २४ छायेवानुगताराजन्सततंवशवर्तिनी ॥ भविष्यामिनरव्याघ्रनित्यंप्रियहितेरता २५ अद्यप्रभृतिमांराजन्कष्टाहृदय शोषणाः ॥ आधयोऽभिभविष्यंतित्वामृतेपुष्करेक्षण २६ अभाग्ययामयानूनंवियुक्ताःसहचारिणः ॥ तेनमेविप्रयोगोऽयमुपपन्नस्त्वयासह २७ विप्रयुक्तातुयाप त्यामुहूर्तमपिजीवति ॥ दुःखंजीवतिसापापानरकस्थेवपार्थिव २८ संयुक्ताविप्रयुक्ताश्चपूर्वदेहेकृतामया ॥ तदिदंकर्मभिःपापैःपूर्वदेहेपुसंचितम् २९ दुःखंमाम नुसंप्राप्तंराजंस्त्वद्विप्रयोगजम् ॥ अद्यप्रभृत्यहंराजन्कुशसंस्तरशायिनी ॥ भविष्याम्यसुखाविष्टात्वद्दर्शनपरायणा ३० दर्शयस्वनरव्याघ्रशाधिमामसुखान्वि ताम् ॥ कृपणांचाथकरुणंविलपंतींनरेश्वर ३१ ॥ कुंत्युवाच ॥ एवंबहुविधंतस्यांविलपंत्यांपुनःपुनः ॥ तंशवंसंपरिष्वज्यवाक्किलांऽतर्हिताऽब्रवीत् ३२ उत्तिष्ठ भद्रेगच्छत्वंददानीहवरंतव ॥ जनयिष्याम्यपत्यानित्वय्यहंचारुहासिनि ३३ आत्मकीयेवरारोहेशयनीयेचतुर्दशीम् ॥ अष्टमींवाऋतुस्नातासंविशेथामयासह ३४ एवमुक्तातुसादेवीतथाचक्रेपतिव्रता ॥ यथोक्तमेवतद्वाक्यंभद्रापुत्रार्थिनीतदा ३५ सातेनसुषुवेदेवीशवेनभरतर्षभ ॥ त्रीन्शाल्वांश्चतुरोमद्रान्सुतान्भरतस त्तम ३६ तथात्वमपिमय्येवंमनसाभरतर्षभ ॥ शक्तोजनयितुंपुत्रांस्तपोयोगबलान्वितः ३७ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वणिव्युषिताश्वोपाख्याने एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तयाराजातांदेवींपुनरब्रवीत् ॥ धर्मविद्धर्मसंयुक्तमिदंवचनमुत्तमम् १

तेमुक्तिर्विनातुब्रह्मलोकांतमैश्वर्यं २२ । २३ अनिवर्तितुंगच्छंतंम्रियमाणमित्यर्थः २४ । २५ आधयोमनोव्यथाः २६ सहचारिणोमिथुनिनः २७ । २८ । २९ । ३० । ३१ शवंमृतशरीरंसंपरिष्वज्य विलपंत्यामित्यन्वयः ३२ । ३३ । ३४ । ३५ । ३६ । ३७ ॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपे एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥ ॥ एवमिति १

२ । ३ अनावृताःसर्वैर्द्रष्टुंयोग्याः । कामचारोरतिसुखंतदर्थविहारिण्यःपर्यटनशीलाः । स्वतंत्राभर्त्रादिभिरनिवार्याः ४ पतीन्व्युच्चरमाणानांव्यभिचरंतीनां ५ अनुविधीयंतेअनुसार्यंतेईश्वरेण ६ दृश्यतेचवेदेनकांचनपरिहरेदितिवामदेव्यव्रतेपुमैथुनार्थिन्याःस्त्रियाःप्रत्याख्याननिषेधः ७ नचिरादल्पकालतः ८ । ९ । १० श्वेतकेतोर्मातरं पितुःसमक्षं ११ । १२ । १३ । १४ स्थिताव्यवस्थिताः । नचक्षमेनक्षमांकृतवान् । यथास्तेनोभ्रूणहैवमेषभवतियोऽयोनौरेतःसिंचतीत्ययोनावदारेषुपुंसांगमनात्प्रत्यवायःश्रुतिसिद्धः । तथाअमीषांनिष्कृतंजारिणीवेतिमंत्रेजारिण्यानिष्कृतेःपीडायाश्चदर्श

॥ पांडुरुवाच ॥ एवमेतत्पुराकुंतिव्युषिताश्वश्चकारह ॥ यथात्वयोक्तंकल्याणिसह्यासीदमरोपमः २ अथत्विदंप्रवक्ष्यामिधर्मतत्त्वंनिबोधमे ॥ पुराणमृषिभिर्दृ
ष्टंधर्मविद्भिर्महात्मभिः ३ अनावृताःकिलपुरास्त्रियआसन्वरानने ॥ कामचारविहारिण्यःस्वतंत्राश्चारुहासिनि ४ तासांव्युच्चरमाणानांकौमारात्सुभगेपतीन् ॥
नाधर्मोऽभूद्वरारोहेसहिधर्मःपुराऽभवत् ५ तंचैवधर्मपौराणंतिर्यग्योनिगताःप्रजाः ॥ अद्याप्यनुविधीयंतेकामक्रोधविवर्जिताः ६ प्रमाणदृष्टोधर्मोऽयंपूज्यतेचमह
र्षिभिः ॥ उत्तरेषुचरंभोरुकुरुष्वद्यापिपूज्यते ७ स्त्रीणामनुग्रहकरःसहिधर्मःसनातनः ॥ अस्मिंस्तुलोकेनचिरान्मर्यादेयंशुचिस्मिते ८ स्थापितायेनयस्माच्च
तन्मेविस्तरतःशृणु ॥ बभूवोद्दालकोनाममहर्षिरितिनःश्रुतम् ९ श्वेतकेतुरितिख्यातःपुत्रस्तस्याभवन्मुनिः ॥ मर्यादेयंकृतातेनधर्म्यावैश्वेतकेतुना १० कोपा
त्कमलपत्राक्षियदर्थंतन्निबोधमे ॥ श्वेतकेतोःकिलपुरासमक्षंमातरंपितुः ११ जग्राहब्राह्मणःपाणौगच्छावइतिचाब्रवीत् ॥ ऋषिपुत्रस्ततःकोपंचकारामर्षचोदि
तः १२ मातरंतांतथादृष्ट्वानीयमानांबलादिव ॥ क्रुद्धंतंतुपितादृष्ट्वाश्वेतकेतुमुवाचह १३ मातातकोपंकार्षीस्त्वमेषधर्मःसनातनः ॥ अनावृताहिसर्वेषांवर्णानामं
गनाभुवि १४ यथागावःस्थितास्तातस्वेस्वेवर्णेतथाप्रजाः ॥ ऋषिपुत्रोऽथतंधर्मंश्वेतकेतुर्नचक्षमे १५ चकारचैवमर्यादामिमांस्त्रीपुंसयोर्भुवि ॥ मानुषेषुमहाभा
गेनत्वेवान्येषुजंतुषु १६ तदाप्रभृतिमर्यादास्थितेयमितिनःश्रुतम् ॥ व्युच्चरंत्याःपतिंनार्याअद्यप्रभृतिपातकम् १७ भ्रूणहत्यासमंघोरंभविष्यत्यसुखावहम् ॥
भार्यांतथाव्युच्चरतःकौमारब्रह्मचारिणीम् १८ पतिव्रतामेतदेवभवितापातकंभुवि ॥ पत्यानियुक्तायाचैवपत्नीपुत्रार्थमेवच १९ नकरिष्यतितस्याश्चभविष्यतित
देवहि ॥ इतितेनपुराभीरुमर्यादास्थापिताबलात् २० उद्दालकस्यपुत्रेणधर्म्यावैश्वेतकेतुना ॥ सौदासेनचरंभोरुनियुक्तापुत्रजन्मनि २१ दमयंतीजगामर्षिंव
सिष्ठमितिनःश्रुतम् ॥ तस्माल्लेभेचसापुत्रमश्मकंनामभाविनी २२ एवंकृतवतीसापिभर्तुःप्रियचिकीर्षया ॥ अस्माकमपितेजन्मविदितंकमलेक्षणे २३ कृष्णद्वै
पायनाद्भीरुकुरूणांवंशवृद्धये ॥ अतएतानिसर्वाणिकारणानिसमीक्ष्यवै २४ ममैतद्वचनंधर्म्यंकर्तुमर्हस्यनिंदिते ॥ ऋतावृतौराजपुत्रिस्त्रियाभर्त्तापतिव्रते २५
नातिवर्त्तव्यइत्येवंधर्मंधर्मविदोविदुः ॥ शेषेष्वन्येषुकालेषुस्वातंत्र्यंस्त्रीकिलार्हति २६

नात्स्त्रीणामपिपरसंगेदोषोऽस्त्येवोक्तःतथापिश्रौतार्थस्यैवकयाचिद्भंग्याव्यवस्थेयंविहितेतिज्ञेयं । अथवाव्युच्चरणेतेजस्विनांनदोषःकिंतुपृथग्जनानामेवेतितात्पर्यं अन्यथाकृष्णस्यापिपारदार्यदोषप्रस
क्तेः । अहल्यादिजाराणामिंद्रादीनांतदप्रसक्तेश्चेत्यास्तांतावत् १५। १६ ।१७ । १८ प्रकृतोपयुक्तमाह पत्येति । अयुक्तमपिभर्त्राज्ञप्ताःस्त्रीभिरवश्यंकर्तव्यमितिभावः१९।२०।२१।२२।२३।२४।२५।२६



पुराणंयुगांतरीयं २७ । २८ रक्तांगुलिभिर्नितरांभातीतिरक्तांगुलिनिभः । पद्मपत्रनिभाउपमायस्यसतथा २९ । ३० । ३१ । ३२ । ३३ । ३४ अभिचारोदेवताकर्षणशक्तिस्तद्युक्तं ३५ । ३६ । ३७
३८ । ३९ विलंबासहःपांडुरुवाचाद्यैवेति ४० नःक्षत्रियाणांधर्मःपालनमधर्मेणनसंयुज्यतिनसंभवत्यतःकेवलाद्धर्मादेवपुत्रएष्टव्यइतिभावः । यंधर्मइतिमन्यतेलोकःसनोधर्मइतिसंबंधः ४१ धार्मि

धर्ममेवंजनाःसंतःपुराणंपरिचक्षते ॥ भर्ताभार्यांराजपुत्रिधर्म्यंवाऽधर्म्यमेववा २७ यद्ब्रूयात्तत्तथाकार्यमितिवेदविदोविदुः ॥ विशेषतःपुत्रगृद्धीहीनःप्रजननात्स्व
यम् २८ यथाऽहमनवद्यांगिपुत्रदर्शनलालसः ॥ तथारक्तांगुलिनिभःपद्मपत्रनिभःशुभे २९ प्रसादार्थमयातेऽयंशिरस्यभ्युद्यतोऽञ्जलिः ॥ मन्नियोगात्सुकेशांते
द्विजातेस्तपसाऽधिकात् ३० पुत्रान्गुणसमायुक्तानुत्पादयितुमर्हसि ॥ त्वत्कृतेऽहंपृथुश्रोणिगच्छेयंपुत्रिणांगतिम् ३१ ॥ वैशंपायनउवाच ॥ एवमुक्तातः
कुंतीपांडुंपरपुरंजयम् ॥ प्रत्युवाचवरारोहाभर्तुःप्रियहितेरता ३२ पितृवेश्मन्यहंबालानियुक्ताऽतिथिपूजने ॥ उग्रंपर्यचरंतत्रब्राह्मणंसंशितव्रतम् ३३ निगूढनि
श्चयंधर्मेयंतंदुर्वाससंविदुः ॥ तमहंसंशितात्मानंसर्वयत्नैरतोषयम् ३४ समेऽभिचारसंयुक्तमाचष्टभगवान्वरम् ॥ मंत्रंत्विमंचमेप्रादादब्रवीच्चैवमामिदम् ३५ यंयंदे
वंत्वमेतेनमंत्रेणावाहयिष्यसि ॥ अकामोवासकामोवावशंतेसमुपैष्यति ३६ तस्यतस्यप्रसादात्तेराज्ञिपुत्रोभविष्यति ॥ इत्युक्ताऽहंतदातेनपितृवेश्मनिभारत ३७
ब्राह्मणस्यवचस्तथ्यंतस्यकालोऽयमागतः ॥ अनुज्ञातात्वयादेवमाह्वयेयमहंनृप ३८ तेनमंत्रेणराजर्षेयथास्यान्नौप्रजाहिता ॥ आवाहयामिकंदेवंब्रूहिसत्यवतां
वर ॥ त्वत्तोऽनुज्ञाप्रतीक्षांमांविद्धचस्मिन्कर्मणिस्थिताम् ३९ ॥ पांडुरुवाच ॥ अद्यैवत्वंवरारोहेप्रयतस्वयथाविधि ॥ धर्ममावाहयशुभेसहिलोकेषुपुण्यभाक् ४०
अधर्मेणननोधर्मःसंयुज्यतिकथंचन ॥ लोकश्चायंवरारोहेधर्मोऽयमितिमन्यते ४१ धार्मिकश्चकुरूणांसभविष्यतिनसंशयः ॥ धर्मेणचापिदत्तस्यनाधर्मेरंस्यते
मनः ४२ तस्माद्धर्मंपुरस्कृत्यनियतात्वंशुचिस्मिते ॥ उपचाराभिचाराभ्यांधर्ममावाहयस्ववै ४३॥ वैशंपायनउवाच ॥ सातथोक्तातथेत्युक्त्वातेनभर्त्रावरांगना॥
अभिवाद्याभ्यनुज्ञाताप्रदक्षिणमवर्तत ४४ ॥ इति श्रीमहाभारते आदिपर्वणि संभवपर्वणि कुंतीपुत्रोत्पत्त्यनुज्ञाने द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥
॥ वैशंपायनउवाच ॥ संवत्सरधृतेगर्भेगांधार्याजनमेजय ॥ आह्वयामाससंकुंतीगर्भार्थंधर्ममच्युतम् १ सार्बलिंत्वरितादेवीधर्मायोपजहारह ॥ जजापवि
धिवज्जप्यंदत्तंदुर्वाससापुरा २ आजगामततोदेवोधर्मोमंत्रबलात्ततः ॥ विमानेसूर्यसंकाशेकुंतीयत्रजपस्थिता ३ विहस्यतांततोब्रूयाःकुंतिकिंतेददाम्य
हम् ॥ सातंविहस्यमानाऽपिपुत्रंदेह्यब्रवीदिदम् ४

कश्चेत्तत्रहेतुमाह । धर्मेणेति धर्मेणास्वविहितेनलौकिकवैदिकाचारेण ४२ उपचारआदरः अभिचारोव्याख्यातस्ताभ्यां ४३ भर्त्रातथोक्तासतीतथेत्युक्त्वेतियोजना प्रदक्षिणमाज्ञानुकूलमवर्त्ततव
र्तनंकृतवती ४४ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपेद्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥ ॥ ७ ॥ ॥ संवत्सरधृतेइति १ जप्यंमंत्रंधर्मदेवतारूपं २ विमानेस्थित्वाआज
गामेत्यन्वयः जपस्थिताजपनिष्ठा ३ ततोविहस्यतामब्रवीदित्यपकृष्यते । हेकुंतिकिंतेददामितद्ब्रूयाइतिसंबंधः । ब्रूयादित्यपपाठोलकारव्यत्ययोवाऽऽर्षः । विहस्यमानाधर्मेण ४

५ ऐंद्रेज्येष्ठानक्षत्रे । अष्टमेसंवत्सरारंभात् । अभिजितेऽभिजितित्रिंशन्मुहूर्तस्याह्नोऽष्टमेमुहूर्ते । दिवाह्नुक्लपक्षे । मध्यगतेतुलायनगते । तिथौपूर्णेपूर्णायांपंचम्यां । अयंयोगःप्रायेणाश्विनशुक्लपंचम्यांभ
वतीतितत्रैवधर्मराजस्यजन्मेत्यर्थः ६ । ७ । ८ प्रथितोमहान् विश्रुतःकीर्तिमान् ९ । १० । ११ । १२ । १३ । १४ । १५ अंकात्पतनेहेतुमाह कुंतीति १६ संचूर्णयेनशिलाऽपिचूर्णीभूतातादृशेऽप्या

संयुक्तासाहिधर्मेणयोगमूर्तिधरेणह ॥ लेभेपुत्रंवरारोहासर्वप्राणभृतांहितम् ५ ऐंद्रेचंद्रसमायुक्तेमुहूर्तेऽभिजितेष्टमे ॥ दिवामध्यगतेसूर्येतिथौपूर्णेऽतिपूजिते ६
समृद्धयशसंकुंतीसुषावप्रवरंसुतम् ॥ जातमात्रेसुतेतस्मिन्वागुवाचाशरीरिणी ७ एषधर्मभृतांश्रेष्ठोभविष्यतिनरोत्तमः ॥ विक्रांतःसत्यवाक्चैवराजापृथ्व्यांभ
विष्यति ८ युधिष्ठिरइतिख्यातःपांडोःप्रथमजःसुतः ॥ भविताप्रथितोराजात्रिषुलोकेषुविश्रुतः ९ यशसातेजसाचैववृत्तेनचसमन्वितः ॥ धार्मिकंतंसुतंलब्ध्वा
पांडुस्तांपुनरब्रवीत् १० प्राहुःक्षत्रंबलज्येष्ठंबलज्येष्ठंसुतंवृणु ॥ ततस्तथोक्ताभर्त्रातुवायुमेवाजुहावसा ११ ततस्तामागतोवायुर्मृगारूढोमहाबलः ॥ किंतेकुं
तिददाम्यद्यब्रूहियत्तेहृदिस्थितम् १२ सासलज्जाविहस्याहपुत्रंदेहिसुरोत्तम ॥ बलवंतंमहाकायंसर्वदर्पप्रभंजनम् १३ तस्माज्जज्ञेमहाबाहुर्भीमोभीमपराक्रमः ॥
तमप्यतिबलंजातंवागुवाचाशरीरिणी १४ सर्वेषांबलिनांश्रेष्ठोजातोऽयमितिभारत ॥ इदमत्यद्भुतंचासीज्जातमात्रेवृकोदरे १५ यदंकात्पतितोमातुःशिलांगा
त्रैर्व्यचूर्णयत् ॥ कुंतीव्याघ्रभयोद्विग्नासहसोत्पतिताकिल १६ नान्वबुध्यतसंसुप्तमुत्संगेस्वेवृकोदरम् ॥ ततःसवज्रसंघातःकुमारोन्यपतद्गिरौ १७ पततातेनश
तधाशिलागात्रैर्विचूर्णिता ॥ तांशिलांचूर्णितांदृष्ट्वापांडुर्विस्मयमागतः १८ यस्मिन्नहनिभीमस्तुजज्ञेभरतसत्तम ॥ दुर्योधनोऽपितत्रैवप्रजज्ञेवसुधाधिप १९
जातेवृकोदरेपांडुरिदंभूयोऽन्वचिंतयत् ॥ कथंनुमेवरःपुत्रोलोकश्रेष्ठोभवेदिति २० दैवेपुरुषकारेचलोकोऽयंसंप्रतिष्ठितः ॥ तत्रदैवंतुविधिनाकालयुक्तेनल
भ्यते २१ इंद्रोहिराजादेवानांप्रधानइतिनःश्रुतम् ॥ अप्रमेयबलोत्साहोवीर्यवानमितद्युतिः २२ तंतोषयित्वातपसापुत्रंलप्स्येमहाबलम् ॥ यंदास्यतिसमेपु
त्रंसवरीयान्भविष्यति २३ अमानुषान्मानुषांश्चसंग्रामेसहनिष्यति ॥ कर्मणामनसावाचातस्मात्तप्स्येमहत्तपः २४ ततःपांडुर्महाराजोमंत्रयित्वामह
र्षिभिः ॥ दिदेशकुंत्याःकौरव्योव्रतंसांवत्सरंशुभम् २५ आत्मनाचमहाबाहुरेकपादस्थितोऽभवत् ॥ उग्रंसतपआस्थायपरमेणसमाधिना २६ आरिराधयि
षुर्देवंत्रिदशानांतमीश्वरम् ॥ सूर्येणसहधर्मात्मापर्यतप्यतभारत २७ तंतुकालेनमहतावासवःप्रत्यपद्यत ॥ शक्रउवाच ॥ पुत्रंतवप्रदास्यामित्रिषुलोके
षुविश्रुतम् २८ ब्राह्मणानांगवांचैवसुहृदांचार्थसाधकम् ॥ दुर्हृदांशोकजननंसर्वबांधवनंदनम् २९ सुतंतेऽग्र्यंप्रदास्यामिसर्वामित्रविनाशनम् ॥ इत्युक्तः
कौरवोराजावासवेनमहात्मना ३० उवाचकुंतींधर्मात्मादेवराजवचःस्मरन् ॥ उदर्कस्तवकल्याणितुष्टोदेवगणेश्वरः ३१ दातुमिच्छतितेपुत्रंयथासंकल्पितं
त्वया ॥ अतिमानुषकर्माणंयशस्विनमरिंदमम् ३२ ॥११७॥

घातेसतियस्यनिद्राभंगोऽपिनजातोनिर्वेदनत्वात्वज्रशरीरत्वादित्यर्थः उत्संगेसमीपे १७
१८ । १९ । २० । २१ । २२ । २३ । २४ । २५ समाधिनाध्यानेन । परमेणानन्यवृत्तिना २६ सूर्येणसहउदयादस्तमयावधि २७ । २८ । २९ । ३० । ३१ । ३२

३३ । ३४ । ३५ । ३६ आभाष्यहेकुंतीतिसंबोध्य ३७ । ३८ । ३९ वहिष्यतिपालयिष्यति ४० । ४१ मेधानश्वमेधान् ४२ । ४३ । ४४ । ४५ । ४६ । ४७ देवनिकायानांदेवतानिलयानांवि

नीतिमंतंमहात्मानमादित्यसमतेजसम् ॥ दुराधर्षंक्रियावंतमतीवाद्भुतदर्शनम् ३३ पुत्रंजनयसुश्रोणिधामक्षत्रियतेजसाम् ॥ लब्धःप्रसादोदेवेंद्रात्तमाह्वयशुचि
स्मिते ३४ ॥ वैशंपायनउवाच ॥ एवमुक्ताततःशक्रमाजुहावयशस्विनी ॥ अथाजगामदेवेंद्रोजनयामासचार्जुनम् ३५ जातमात्रेकुमारेतुवागुवाचाशरीरिणी ॥
महागंभीरनिर्घोषानभोनादयतीतदा ३६ शृण्वतांसर्वभूतानांतेषांचाश्रमवासिनाम् ॥ कुंतीमाभाष्यविस्पष्टमुवाचेदंशुचिस्मिताम् ३७ कार्तवीर्यसमःकुंतिशि
वतुल्यपराक्रमः ॥ एषशक्रइवाजय्योयशस्तेप्रथयिष्यति ३८ अदित्याविष्णुनाप्रीतिर्यथाऽभूदभिवर्धिता ॥ तथाविष्णुसमःप्रीतिंवर्धयिष्यतितेऽर्जुनः ३९
एषमद्रान्वशेकृत्वाकुरूंश्चसहसोमकैः ॥ चेदिकाशिकरूषांश्चकुरुलक्ष्मींवहिष्यति ४० एतस्यभुजवीर्येणखांडवेहव्यवाहनः ॥ मेदसासर्वभूतानांतृप्तिंयास्यतिवै
पराम् ४१ ग्रामणीश्चमहीपालानेषजित्वामहाबलः ॥ भ्रातृभिःसहितोवीरस्त्रीन्मेधानाहरिष्यति ४२ जामदग्न्यसमःकुंतिविष्णुतुल्यपराक्रमः ॥ एषवीर्यवतांश्रे
ष्ठोभविष्यतिमहायशाः ४३ एषयुद्धेमहादेवंतोषयिष्यतिशंकरम् ॥ अस्त्रंपाशुपतंनामतस्मात्तुष्टादवाप्स्यति ४४ निवातकवचानामदैत्यविबुधविद्विषः ॥ शक्रा
ज्ञयामहाबाहुस्तान्वधिष्यतितेसुतः ४५ तथादिव्यानिचास्त्राणिनिखिलेनाहरिष्यति ॥ विप्रनष्टांश्रियंचायमाहर्तापुरुषर्षभः ४६ एतामत्यद्भुतांवाचंकुंती
शुश्रावसूतके ॥ वाचमुच्चरितामुच्चैस्तांनिशम्यतपस्विनाम् ४७ बभूवपरमोहर्षःशतशृंगनिवासिनाम् ॥ तथादेवनिकायानांसेंद्राणांचदिवौकसाम् ४८ आका
शेदुंदुभीनांचबभूवतुमुलःस्वनः ॥ उदतिष्ठन्महाघोषःपुष्पवृष्टिभिरावृतः ४९ समवेत्यचदेवानांगणाःपार्थमपूजयन् ॥ काद्रवेयावैनतेयागंधर्वाप्सरसस्तथा ॥ प्रजा
नांपतयःसर्वेसप्तचैवमहर्षयः ५० भरद्वाजःकश्यपोगौतमश्चविश्वामित्रोजमदग्निर्वसिष्ठः ॥ यश्चोदितोभास्करेऽभूत्प्रनष्टेसोऽप्यत्रात्रिर्भगवानाजगाम ५१ मरीचि
रंगिराश्चैवपुलस्त्यःपुलहःक्रतुः ॥ दक्षःप्रजापतिश्चैवगंधर्वाप्सरसस्तथा ५२ दिव्यमाल्यांबरधराःसर्वालंकारभूषिताः ॥ उपगायंतिबीभत्सुंनृत्यंतेऽप्सरसां
गणाः ५३ तथामहर्षयश्चापिजेपुस्तत्रसमंततः ॥ गंधर्वैःसहितःश्रीमान्प्रागायतचतुंबुरुः ५४ भीमसेनोग्रसेनौचऊर्णायुरनघस्तथा ॥ गोपतिर्धृतराष्ट्रश्चसूर्यव
र्चास्तथाऽष्टमः ५५ युगपस्तृणपःकार्ष्णिर्नंदिश्चित्ररथस्तथा ॥ त्रयोदशःशालिशिराःपर्जन्यश्चचतुर्दशः ५६ कलिःपंचदशश्चैवनारदश्चात्रषोडशः ॥ ऋत्वा
बृहत्त्वाबृहकःकरालश्चमहामनाः ५७ ब्रह्मचारीबहुगुणःसुवर्णश्चेतिविश्रुतः ॥ विश्वावसुर्भुमन्युश्चसुचंद्रश्चशरुस्तथा ५८ गीतमाधुर्यसंपन्नौविख्यातौचहहाहुहू ॥
इत्येतेदेवगंधर्वाजग्मुस्तत्रनराधिप ५९ तथैवाप्सरसोहृष्टाःसर्वालंकारभूषिताः ॥ ननृतुर्वैमहाभागाजगुश्चायतलोचनाः ६० अनूचानाऽनवद्याचगुणमुख्यागुणा
वरा ॥ अद्रिकाचतथासोमामिश्रकेशीत्वलंबुषा ६१ मरीचिःशुचिकाचैवविद्युत्पर्णातिलोत्तमा ॥ अंबिकालक्षणाक्षेमादेवीरंभामनोरमा ६२

मानानां तेनतत्स्थानांदेवानामितिलक्ष्यते ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२

६३।६४।६५।६६।६७।६८।६९।७०।७१।७२।७३।७४।७५।७६।७७।७८ ॥ इति आदि० नी० भा० त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥ कुंतीति १ विगुणेप्रजोत्पादनानधिकृतेअवरत्वेकानि

असिताचसुबाहुश्चसुप्रियाचवपुस्तथा ॥ पुंडरीकासुगंधाचसुरसाचप्रमाथिनी ६३ काम्याशारद्वतीचैवनन्नृतुस्तत्रसंघशः ॥ मेनकासहजन्याचकर्णिकापुंजिकस्थला ६४ ऋतुस्थलाघृताचीचविश्वाचीपूर्वचित्त्यपि ॥ उम्लोचेतिचविख्याताप्रम्लोचेतिचतादश ६५ उर्वश्येकादशीतासांजगुश्चायतलोचनाः ॥ धाताऽर्यमाचमित्रश्चवरुणोंऽशोभगस्तथा ६६ इंद्रोविवस्वान्पूषाचत्वष्टाचसवितातथा ॥ पर्जन्यश्चैवविष्णुश्चआदित्याद्वादशस्मृताः ॥ महिमानंपांडवस्यवर्धयंतोंऽबरेस्थिताः ६७ मृगव्याधश्चसर्पश्चनिर्ऋतिश्चमहायशाः ॥अजैकपादहिर्बुध्न्यःपिनाकीचपरंतप ३८ दहनोऽथेश्वरश्चैवकपालीचविशांपते ॥ स्थाणुर्भगश्चभगवान्रुद्रास्तत्रावतस्थिरे ३९ अश्विनौवसवश्चाष्टौमरुतश्चमहाबलाः ॥ विश्वेदेवास्तथासाध्यास्तत्रासन्परितःस्थिताः ७० कर्कोटकोऽथसर्पश्चवासुकिश्चभुजंगमः ॥ कच्छपश्चाथकुंडश्चतक्षकश्चमहोरगः ७१ आययुस्तपसायुक्तामहाक्रोधामहाबलाः ॥ एतेचान्येचबहवस्तत्रनागाव्यवस्थिताः ७२ तार्क्ष्यश्चारिष्टनेमिश्चगरुडश्चासितध्वजः ॥ अरुणश्चारुणिश्चैववैनतेयाव्यवस्थिताः ७३ तांश्चदेवगणान्सर्वांस्तपःसिद्धामहर्षयः ॥ विमानगिर्यग्रगतान्ददृशुर्नेतरेजनाः ७४ तद्दृष्ट्वामहदाश्चर्यंविस्मितामुनिसत्तमाः ॥ अधिकांस्मततोवृत्तिमवर्तन्पांडवान्प्रति ७५ पांडुस्तुपुनरेवैनांपुत्रलोभान्महायशाः ॥ वक्तुमैच्छद्धर्मपत्नींकुंतीत्वेनमथाब्रवीत् ७६ नातश्चतुर्थंप्रसवमापत्स्वपिवदंत्युत ॥ अतःपरंस्वैरिणीस्याद्बंधकीपंचमेभवेत् ७७ सत्वंविद्वन्धर्ममिममधिगम्यकथंनुमाम् ॥ अपत्यार्थंसमुत्क्रम्यप्रमादादिवभाषसे ७८ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वणिपांडवोत्पत्तौत्रयोविंशत्यधिकशततमोध्यायः ॥ १२३ ॥ ॥ ध ॥ ॥ वैशंपायनउवाच ॥ ॥ कुंतीपुत्रेषुजातेषुधृतराष्ट्रात्मजेषुच ॥ मद्रराजसुतापांडुंरहोवचनमब्रवीत् १ नमेऽस्तित्वयिसंतापोविगुणेऽपिपरंतप ॥ नावरत्वेवराहायाःस्थित्वाचानघनित्यदा २ गांधार्याश्चैवनृपतेजातंपुत्रशतंतथा ॥ श्रुत्वानमेतथादुःखमभवत्कुरुनंदन ३ इदंतुमेमहद्दुःखंतुल्यतायामपुत्रता ॥ दिष्ट्यात्विदानींभर्तुर्मेकुंत्यामप्यस्तिसंततिः ४ यदित्वपत्यसंतानंकुंतिराजसुतामयि ॥ कुर्यादनुग्रहोमेस्यात्तवचापिहितंभवेत् ५ संरंभोहिसपत्नीत्वाद्वक्तुंकुंतिसुतांप्रति ॥ यदितुत्वंप्रसन्नोमेस्वयमेनांप्रचोदय ६ ॥ पांडुरुवाच ॥ ॥ ममाप्येषसदामाद्रिहृद्यर्थःपरिवर्तते ॥ नतुत्वांप्रसहेवक्तुमिष्टानिष्टविवक्षया ७ तवत्विदंमतंमत्वाप्रयतिष्याम्यतःपरम् ॥ मन्येध्रुवंमयोक्तासावचनंप्रतिपत्स्यते ८ ॥ वैशंपायनउवाच ॥ ॥ ततःकुंतींपुनःपांडुर्विविक्तइदमब्रवीत् ॥ कुलस्यममसंतानंलोकस्यचकुरुप्रियम् ९ ममचापिंडनाशायपूर्वेषामपिचात्मनः ॥ मत्प्रियार्थंचकल्याणिकुरुकल्याणमुत्तमम् १० 

त्वे वराहायाःकुंत्याअपेक्षया २।३।४।५ संरंभोऽभिमानः ६ ममेति इष्टमनिष्टंवावक्ष्यसीतिसंदेहेनत्वांवक्तुंनमसहेइत्यर्थः ७ मत्वाज्ञात्वा प्रतिपत्स्यतेअंगीकरिष्यति ८ संतानमविच्छेदं लोकस्यप्रियं बलवत्प्रजात्वेननिर्भयत्वं ९ ममपूर्वेषांचापिंडविनाशायपिंडविनाशाभावाय बहुषुपुत्रेषुकस्यचिदपिपुत्रस्यसंततेरविच्छेदसंभवादित्यर्थः कल्याणंपुत्रांतरोत्पादनं १०

यशसइति कृतकृत्याअपियशोर्थंदेवगुर्वाद्याराधनंकुर्वंतीत्यर्थः ११। १२। १३। १४ एवंपांडुंप्रत्युक्तवाकुंत्यांमंत्रेकृतेसतिकुंतीमाद्रीमब्रवीदितियोजना १५। १६। १७ अत्यश्विनौअश्विभ्यामधिकौ १८। १९। २०। २१ अनुसंवत्सरंसंवत्सरमनुपश्चाजाताअपिदेवताभावात्सर्वेपंचसंवत्सराइवादृश्यंतेत्यर्थः । यद्वापंचापिपुत्राव्यराजंतसंवत्सराःप्रभवादयइवानुसंवत्सरंजाताइतियो

यशसोऽर्थायचैवत्वंकुरुकर्मसुदुष्करम् ॥ प्राप्याधिपत्यमिंद्रेणयज्ञैरिष्टंयशोऽर्थिना ११ तथामंत्रविदोविप्रास्तपस्तप्त्वासुदुष्करम् ॥ गुरूनभ्युपगच्छंतियशसोऽर्थायभाविनि १२ तथाराजर्षयःसर्वेब्राह्मणाश्चतपोधनाः ॥ चक्रुरुच्चावचंकर्मयशसोऽर्थायदुष्करम् १३ सात्वंमाद्रींप्लवेनैवतारयैनामनिंदिते ॥ अपत्यसंविभागेनपरांकीर्तिमवाप्नुहि १४ ॥ वैशंपायनउवाच ॥ एवमुक्ताऽब्रवीन्माद्रींसकृच्चिंतयदैवतम् ॥ तस्मात्तेभविताऽपत्यमनुरूपमसंशयम् १५ ततोमाद्रीविचार्यैवंजगामनसाऽश्विनौ ॥ तावागम्यसुतौतस्यांजनयामासतुर्यमौ १६ नकुलंसहदेवंचरूपेणाप्रतिमौभुवि ॥ तथैवतावपियमौवागुवाचाशरीरिणी १७ सत्वरूपगुणोपेतौभवतोऽत्यश्विनाविति ॥ भासतस्तेजसाऽत्यर्थंरूपद्रविणसंपदा १८ नामानिचक्रिरेतेषांशतशृंगनिवासिनः ॥ भक्त्याचकर्मणाचैवतथाऽऽशीर्भिर्विशांपते १९ ज्येष्ठंयुधिष्ठिरेत्येवंभीमसेनेतिमध्यमम् ॥ अर्जुनेतितृतीयंचकुंतीपुत्रानकल्पयन् २० पूर्वजंनकुलेत्येवंसहदेवेतिचापरम् ॥ माद्रीपुत्रावकथयंस्तेविप्राःप्रीतमानसाः २१ अनुसंवत्सरंजाताअपितेकुरुसत्तमाः ॥ पांडुपुत्राव्यराजंतपंचसंवत्सराइव २२ महासत्वामहावीर्यामहाबलपराक्रमाः ॥ पांडुर्दृष्ट्वासुतांस्तांस्तुदेवरूपान्महौजसः २३ मुदंपरमिकांलेभेननंदचनराधिपः ॥ ऋषीणामपिसर्वेषांशतशृंगनिवासिनाम् २४ प्रियावभूवुस्तासांचतथैवमुनियोषिताम् ॥ कुंतीमथपुनःपांडुर्माद्र्यर्थेसमचोदयत् २५ तमुवाचपृथाराजन्रहस्युक्तातदासती ॥ उक्तासकृद्द्वंद्वमेषालेभेतेनास्मिवंचिता २६ बिभेम्यस्याःपरिभवात्कुस्त्रीणांगतिरीदृशी ॥ नाज्ञासिषमहंमूढाद्वंद्वाह्वानेफलद्वयम् २७ तस्मान्नाहंनियोक्तव्यात्वयैषोऽस्तुवरोमम ॥ एवंपांडोःसुताःपंचदेवदत्तामहाबलाः २८ संभूताःकीर्तिमंतश्चकुरुवंशविवर्धनाः ॥ शुभलक्षणसंपन्नाःसोमवत्प्रियदर्शनाः २९ सिंहदर्पामहेष्वासाःसिंहविक्रांतगामिनः ॥ सिंहग्रीवामनुष्येंद्रावव्रधुर्देवविक्रमाः ३० विवर्धमानास्तेतत्रपुण्येहैमवतेगिरौ ॥ विस्मयंजनयामासुर्महर्षीणांसमेयुषाम् ३१ तेचपंचशतंचैवकुरुवंशविवर्धनाः ॥ सर्वेवृद्धुरल्पेनकालेनाप्स्विवनीरजाः ३२ ॥ इतिश्रीमहाभारते आदिपर्वणि संभवपर्वणि पांडवोत्पत्तौचतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥ ॥ वैशंपायनउवाच ॥ दर्शनीयांस्ततःपुत्रान्पांडुःपंचमहावने ॥ तान्पश्यन्पर्वतेरम्येस्वबाहुबलमाश्रितः १ सपुष्पितवनेकालेकदाचिन्मधुमाधवे ॥ भूतसंमोहनेराजासभार्योव्यचरद्वनम् २ पलाशैस्तिलकैश्चूतैश्चंपकैःपारिभद्रकैः ॥ अन्यैश्चबहुभिर्वृक्षैःफलपुष्पसमृद्धिभिः ३ जलस्थानैश्चविविधैःपद्मिनीभिश्चशोभितम् ॥ पांडोर्वनंतत्संप्रेक्ष्यप्रजज्ञेहृदिमन्मथः ४

ज्यं २२। २३। २४। २५। २६। २७। २८। २९। ३०। ३१ तेपंचपांडवाःशतंचान्येधार्तराष्ट्राः नीरजाःपद्माइव ३२ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपे चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥ ॥ ७ ॥ दर्शनीयानिति १ मधुमाधवेचैत्रवैशाखयोःसंधीतदात्मकेवसंते २। ३। ४

९ वयःस्थांयुवतीं तनुवाससंसूक्ष्मवस्त्रांकिंचिद्विवृतांगामित्यर्थः ६ । ७ । ८ कामपरीतात्माकामेनव्याप्तचित्तः ९ । १० बुद्धिर्भयनिश्चयःचेतसाविचारेण ११ कालस्यातीतत्वाद्विव्यवहारहेतोः

प्रहृष्टमनसंतत्रविचरंतंयथाऽमरम् ॥ तंमाद्र्यनुजगामैकावसनंबिभ्रतीशुभम् ५ समीक्षमाणःसतुतांवयस्थांतनुवाससम् ॥ तस्यकामःप्रववृतेगहनेऽग्निरिवोद्ग
तः ६ रहस्येकांतुतांदृष्ट्वाराजाराजीवलोचनाम् ॥ नशशाकनियंतुंतंकामंकामवशीकृतः ७ ततएनांबलाद्राजानिजग्राहरहोगताम् ॥ वार्यमाणस्तयादेव्याविं
स्फुरंत्यायथाबलम् ८ सतुकामपरीतात्मातंशापंनान्वबुध्यत ॥ माद्रींमैथुनधर्मेणसोऽन्वगच्छद्बलादिव ९ जीवितांतायकौरव्यमन्मथस्यवशंगतः ॥ शापजंभ
यमुत्सृज्यविधिनासंप्रचोदितः १० तस्यकामात्मनोबुद्धिःसाक्षात्कालेनमोहिता ॥ संप्रमथ्येंद्रियग्रामंप्रनष्टासहचेतसा ११ सतयासहसंगम्यभार्ययाकुरुनंदनः ॥
पांडुःपरमधर्मात्मायुयुजेकालधर्मणा १२ ततोमाद्रीसमालिंग्यराजानंगतचेतसम् ॥ मुमोचदुःखजंशब्दंपुनःपुनरतीवहि १३ सहपुत्रैस्ततःकुंतीमाद्रीपुत्रौ
चपांडवौ ॥ आजग्मुःसहितास्तत्रयत्रराजातथागतः १४ ततोमाद्र्यब्रवीद्राजन्नार्त्ताकुंतीमिदंवचः ॥ एकैवत्वमिहागच्छतिष्ठंत्वत्रैवदारकाः १५ तच्छ्रुत्वावच
नंतस्यास्तत्रैवाधायदारकान् ॥ हताऽहमितिविक्रुश्यसहसैवाजगामसा १६ दृष्ट्वापांडुंचमाद्रींचशयानौधरणीतले ॥ कुंतीशोकपरीतांगीविललापसुदुःखिता
१७ रक्ष्यमाणोमयानित्यंवीरःसततमात्मवान् ॥ कथंत्वामत्यतिक्रांतःशापंजानन्वनौकसः १८ ननुनामत्वयामाद्रिरक्षितव्योनराधिपः ॥ साकथंलोभितवतीवि
जनेत्वंनराधिपम् १९ कथंदीनस्यसततंत्वामासाद्यरहोगताम् ॥ तंविचिंतयतःशापंप्रहर्षःसमजायत २० धन्यात्वमसिबाल्हीकिमत्तोभाग्यतरातथा ॥ दृष्टव
त्यसियद्वक्त्रंप्रहृष्टस्यमहीपतेः २१ ॥ माद्र्युवाच ॥ विलपंत्यामयादेवीवार्यमाणेनचासकृत् ॥ आत्मानवारितोऽनेनसत्यंदिष्टंचिकीर्षुणा २२ ॥ कुंत्युवाच ॥
अहंज्येष्ठाधर्मपत्नीज्येष्ठंधर्मफलंमम ॥ अवश्यंभाविनोभावान्मामांमाद्रिनिवर्तय २३ अन्विष्यामीहभर्तारमहंप्रेतवशंगतम् ॥ उत्तिष्ठत्वंविसृज्यैनमिमान्पा
लयदारकान् २४ ॥ माद्र्युवाच ॥ अहमेवानुयास्यामिभर्त्तारमपलायिनम् ॥ नहितृप्ताऽस्मिकामानांज्येष्ठामामनुमन्यताम् २५ मांचाभिगम्यक्षीणोऽयं
कामाद्भरतसत्तमः ॥ तमुच्छिंद्यामस्यकामंकथंनुयमसादने २६ नचाप्यहंवर्तयंतीनिर्विशेषंसुतेषुते ॥ वृत्तिमार्येचरिष्यामिस्पृशेदेनस्तथाचमाम् २७
तस्मान्मेसुतयोःकुंतिवर्तितव्यंस्वपुत्रवत् ॥ मांचकामयमानोऽयंराजाप्रेतवशंगतः २८ राज्ञःशरीरेणसहममापीदंकलेवरम् ॥ दग्धव्यंसुप्रतिच्छन्नमेतदार्येप्रि
यंकुरु २९ दारकेष्वप्रमत्ताचभवेथाश्चहितामम ॥ अतोऽन्यन्नप्रपश्यामिसंदेष्टव्यंहिकिंचन ३० ॥११९॥

षष्ठद्रव्यस्येवधर्मःकालनात्मकोयस्यमरणस्यतेनकालधर्मणामृत्युना १२ । १३ । १४ । १५ । १६ । १७ त्वामत्यतिक्रांतोबलादाक्रांतवान् । शोकाकुलत्वादतिशब्दस्याभ्यासः १८
त्वयाचरक्षितव्यः १९ प्रहर्षःकामः २० । २१ आत्मावित्तं दिष्टंशापजंदुरदृष्टं २२ । २३ प्रेतवशंप्रेतराजवशं अन्विष्याम्यनुगमिष्यामि २४ । २५ । २६ । २७ । २८ । २९ । ३०

३१ ॥ इतिआदिपर्वणिनैलकंठीये भारतभावदीपेपंचविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥ ॥ पांडोरुपरमंदृष्ट्वेति १ । २ । ३ देहंदेहयोरस्थीनि अग्निहोत्राग्निभिःसंस्कारलंभनार्थं ४ । ५ । ६
७ तद्गमनंसंक्षिप्तममन्यत मुनीनांयोगप्रभावात्स्वदेशगमनोत्कंठयाद्वा ८ वर्द्धमानपुरद्वारंमुख्यद्वारं ९ । १० चारणादेवगायकागुह्यकाख्यास्तेषांसहस्राणांमुनीनांचागममितिचोऽध्याहर्तव्यः ।

॥ वैशंपायनउवाच ॥ इत्युक्त्वासंचिताग्निस्थंधर्मपत्नीनरर्षभम् ॥ मद्रराजसुतातूर्णमन्वारोहद्यशस्विनी ३१ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वणिपांडूप
रमेपंचविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥ वैशंपायनउवाच ॥ पांडोरुपरमंदृष्ट्वादेवकल्पामहर्षयः ॥ ततोमंत्रविदःसर्वेमंत्रयांचक्रिरेमिथः १॥तापसाऊचुः॥
हित्वाराज्यंचराष्ट्रंचसमहात्मामहायशाः ॥ अस्मिन्स्थानेतपस्तप्तुंतापसान्शरणंगतः २ सजातमात्रान्पुत्रांश्चदारांश्चभवतामिह ॥ प्रादायोपनिधिंराजापांडुः
स्वर्गमितोगतः ३ तस्येमानात्मजान्देहंभार्यांचसुमहात्मनः ॥ स्वराष्ट्रंगृह्यगच्छामोधर्मएषहिनःस्मृतः ४ ॥ वैशंपायनउवाच ॥ तेपरस्परमामंत्र्यदेवकल्पाम
हर्षयः ॥ पांडोपुत्रान्पुरस्कृत्यनगरंनागसाह्वयम् ५ उदारमनसःसिद्धागमनेचक्रिरेमनः ॥ भीष्मायपांडवान्दातुंधृतराष्ट्रायचैवहि ६ तस्मिन्नेवक्षणेसर्वेतानादाय
प्रतस्थिरे ॥ पांडोर्दारांश्चपुत्रांश्चशरीरेतेचतापसाः ७ सुखिनीसापुराभूत्वासततंपुत्रवत्सला ॥ प्रपन्नादीर्घमध्वानंसंक्षिप्तंतदमन्यत ८ सात्वदीर्घेणकालेनसंप्रा
प्ताकुरुजांगलम् ॥ वर्धमानपुरद्वारमाससादयशस्विनी ९ द्वारिणंतापसाऊचूराजानंचप्रकाशय ॥ तेतुगत्वाक्षणेनैवसभायांविनिवेदिताः १० तंचारणसहस्राणां
मुनीनामागमंतदा ॥ श्रुत्वानागपुरेनॄणांविस्मयःसमपद्यत ११ मुहूर्त्तोदितआदित्येसर्वेबालपुरस्कृताः ॥ सदारास्तापसान्द्रष्टुंनिर्ययुःपुरवासिनः १२ स्त्रीसंघाः
क्षत्रसंघाश्चयानसंघसमास्थिताः ॥ ब्राह्मणैःसहनिर्जग्मुर्ब्राह्मणानांचयोषितः १३ तथाविट्शूद्रसंघानांमहान्व्यतिकरोऽभवत् ॥ नकश्चिदकरोदीर्ष्यामभवन्धर्म
बुद्धयः १४ तथाभीष्मःशांतनवःसोमदत्तोऽथबाल्हिकः ॥ प्रज्ञाचक्षुश्चराजर्षिःक्षत्ताचविदुरःस्वयम् १५ साचसत्यवतीदेवीकौसल्याचयशस्विनी ॥ राजदारैःपरि
वृतागांधारीचापिनिर्ययौ १६ धृतराष्ट्रस्यदायादादुर्योधनपुरोगमाः ॥ भूषिताभूषणैश्चित्रैःशतसंख्याविनिर्ययुः १७ तान्महर्षिगणान्दृष्ट्वाशिरोभिरभिवाद्यच॥
उपोपविविशुःसर्वेकौरव्याःसपुरोहिताः १८ तथैवशिरसाभूमावभिवाद्यप्रणम्यच ॥ उपोपविविशुःसर्वेपौरजानपदाअपि १९ तमकूजमभिज्ञायजनौघंसर्वशस्त
दा ॥ पूजयित्वायथान्यायंपाद्येनार्घ्येणचप्रभो २० भीष्मोराज्यंचराष्ट्रंचमहर्षिभ्योन्यवेदयत् ॥ तेषामथोवृद्धतमःप्रत्युत्थायजटाजिनी ॥ ऋषीणांमतमाज्ञाय
महर्षिरिदमब्रवीत् २१ यःसकौरव्यदायादःपांडुर्नामनराधिपः ॥ कामभोगान्परित्यज्यशतशृंगमितोगतः २२ ब्रह्मचर्यव्रतस्थस्यतस्यदिव्येनहेतुना ॥ साक्षा
द्धर्मादयंपुत्रस्तत्रजातोयुधिष्ठिरः २३ तथैनंबलिनांश्रेष्ठंतस्यराज्ञोमहात्मनः ॥ मातरिश्वाददौपुत्रंभीमंनाममहाबलम् २४

पाठांतरेआरण्यानांसहस्रसंख्यानांमुनीनांचेतियोज्यं ११ । १२ । १३ व्यतिकरःसंघर्षः १४ । १५ कौसल्याकाशिराजसुता १६ । १७ उपोपविविशुःपरिवार्योपविष्टवंतः १८ । १९ अकूजंनिःशब्दं
२० । २१ । २२ दिव्येनहेतुनामंत्रेणदेवताह्वानाख्यलौकिककारणेन २३ । २४

२५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ प्रेतकार्येसपिंडीकरणांते पितृमेधंयज्ञविशेषं वृषोत्सर्गादिकंवा ३३ । ३४ गंधर्वनगरंखपुरं यथोक्तंज्योतिःशास्त्रे । 'अनेकरत्नाकृतिखेप्रकाशतेपुरं

पुरुहूतादयंजज्ञेकुंत्यामेवधनंजयः ॥ यस्यकीर्तिर्महेष्वासान्सर्वानभिभविष्यति २५ यौतुमाद्रीमहेष्वासावसूतपुरुषोत्तमौ ॥ अश्विभ्यांपुरुषव्याघ्राविमौताव
पिपश्यत २६ चरताधर्मनित्येनवनवासंयशस्विना ॥ नष्टःपैतामहोवंशःपांडुनापुनरुद्धृतः २७ पुत्राणांजन्मवृद्धिंचवैदिकाध्ययनानिच ॥ पश्यंतःसततंपांडोः
परांप्रीतिमवाप्स्यथ २८ वर्तमानःसतांवृत्तेपुत्रलाभमवाप्यच ॥ पितृलोकंगतःपांडुरितःसप्तदशेऽहनि २९ तंचितागतमाज्ञायवैश्वानरमुखेहुतम् ॥ प्रविष्टापाव ॥१२७॥
कंमाद्रीहित्वाजीवितमात्मनः ३० सागतासहतेनैवपतिलोकमनुव्रता ॥ तस्यास्तस्यचयत्कार्यंक्रियतांतदनंतरम् ३१ इमेतयोःशरीरेद्वेपुत्राश्चेमेतयोर्वराः ॥
क्रियाभिरनुगृह्यंतांसहमात्रापरंतपाः ३२ प्रेतकार्येनिवृत्तेतुपितृमेधंमहायशाः ॥ लभतांसर्वधर्मज्ञःपांडुःकुरुकुलोद्वहः ३३ ॥ वैशंपायनउवाच ॥ एवमुक्त्वाकु
रून्सर्वान्कुरूणामेवपश्यताम् ॥ क्षणेनांतर्हिताःसर्वेतापसागुह्यकैःसह ३४ गंधर्वनगराकारंतथैवांतर्हितंपुनः ॥ ऋषिसिद्धगणंदृष्ट्वाविस्मयंतेपरंययुः ३५ ॥ इ
तिश्रीमहाभारतेआदिपर्वणिसं०प०ऋषिसंवादेषड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥ धृतराष्ट्रउवाच ॥ पांडोर्विदुरसर्वाणिप्रेतकार्याणिकारय ॥ राजवद्राज
सिंहस्यमाद्र्याश्चैवविशेषतः १ पशून्वासांसिरत्नानिधनानिविविधानिच ॥ पांडोःप्रयच्छमाद्र्याश्चयेभ्योयावच्चवांछितम् २ यथाचकुंतीसत्कारंकुर्यान्माद्र्या
स्तथाकुरु ॥ यथानवायुर्नादित्यःपश्येतांतांसुसंवृताम् ३ नशोच्यःपांडुरनघःप्रशस्यःसनराधिपः ॥ यस्यपंचसुतावीराजाताःसुरसुतोपमाः ४ ॥ वैशंपा
यनउवाच ॥ विदुरस्तंतथेत्युक्त्वाभीष्मेणसहभारत ॥ पांडुंसंस्कारयामासदेशेपरमपूजिते ५ ततस्तुनगरात्तूर्णमाज्यगंधपुरस्कृताः ॥ निर्हृताःपावकादीप्ताःपां
डोराजन्पुरोहितैः ६ अथैनामार्तवैःपुष्पैर्गंधैश्चविविधैर्वरैः ॥ शिबिकांतामलंकृत्यवाससाऽऽच्छाद्यसर्वशः ७ तांतथाशोभितांमाल्यैर्वासोभिश्चमहाधनैः ॥ अ
मात्याज्ञातयश्चैनंसुहृदश्चोपतस्थिरे ८ नृसिंहंनरयुक्तेनपरमालंकृतेनतम् ॥ अवहन्यानमुख्येनसहमाद्र्यासुसंवृतम् ९ पांडुरेणातपत्रेणचामरव्यजनेनच ॥ सर्व
वादित्रनादैश्चसमलंचक्रिरेततः १० रत्नानिचाप्युपादायबहूनिशतशोनराः ॥ प्रददुःकांक्षमाणेभ्यःपांडोस्तस्यौर्ध्वदेहिके ११ अथछत्राणिशुभ्राणिचामराणिबृ
हंतिच ॥ आजह्रुःकौरवस्यार्थेवासांसिरुचिराणिच १२ याजकैःशुक्लवासोभिर्हूयमानाहुताशनाः ॥ अगच्छन्नग्रतस्तस्यदीप्यमानाःस्वलंकृताः १३ ब्राह्मणाः
क्षत्रियावैश्याःशूद्राश्चैवसहस्रशः ॥ रुदंतःशोकसंतप्ताअनुजग्मुर्नराधिपम् १४ अयमस्मानपाहायदुःखेचाधायशाश्वते ॥ कृत्वाचास्माननाथांश्चक्वयास्यतिनरा ॥१२०॥
धिपः १५ क्रोशंतःपांडवाःसर्वेभीष्मोविदुरएवच ॥ रमणीयेवनोद्देशेगंगातीरेसमेशुभे १६

पताकाध्वजतोरणान्वितं ॥ यदातदानागमनुष्यवाजिनांपिबत्यसृग्भूरिरणेवसुंधरा'इति ३५ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपेषड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥ ॥ पांडोरिति १
२ । ३ । ४ । ५ । ६ । ७ । ८ नृसिंहंपांडुं नृसिंहेतिपाठेजनमेजयसंबोधनं ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

१७ कालीयकादिगंधंकृष्णागुरुलिप्तं १८ । १९ । २० । २१ । २२ तुंगपद्मकौगंधद्रव्यविशेषौ २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ ॥ ॥ इतिआदिपर्वणिनीलकंठी

न्यासयामासुरथतांशिबिकांसत्यवादिनः ॥ सभार्यस्यनृसिंहस्यपांडोरक्लिष्टकर्मणः १७ ततस्तस्यशरीरंतुसर्वगंधाधिवासितम् ॥ शुचिकालीयकादिग्धंदिव्यचंद
नरूषितम् १८ पर्यषिंचन्जलेनाशुशातकुंभमयैर्घटैः ॥ चंदनेनचशुक्लेनसर्वतःसमलेपयन् १९ कालागुरुविमिश्रेणतथातुंगरसेनच ॥ अथैनंदेशजैःशुक्लैर्वासोभिः
समयोजयन् २० संछन्नःसतुवासोभिर्जीवन्निवनराधिपः ॥ शुशुभेसनरव्याघ्रोमहार्हशयनोचितः २१ याजकैरभ्यनुज्ञातेप्रेतकर्मण्यनुष्ठिते ॥ घृतावसिक्तंराजानं
सहमाद्र्यास्वलंकृतम् २२ तुंगपद्मकमिश्रेणचंदनेनसुगंधिना ॥ अन्यैश्चविविधैर्गंधैर्विधिनासमदाहयन् २३ ततस्तयोःशरीरेद्वेदृष्ट्वामोहवशंगता ॥ हाहापुत्रेति
कौसल्यापपातसहसाभुवि २४ तांप्रेक्ष्यपतितामार्तांपौरजानपदोजनः ॥ रुरोददुःखसंतप्तोराजभक्त्याकृपाऽन्वितः २५ कुंत्याश्चैवार्तनादेनसर्वाणिचविचुक्रुशुः ॥
मानुषैःसहभूतानितिर्यग्योनिगतान्यपि २६ तथाभीष्मःशांतनवोविदुरश्चमहामतिः ॥ सर्वशःकौरवाश्चैवप्राणदन्भृशदुःखिताः २७ ततोभीष्मोऽथविदुरोराजा
चसहपांडवैः ॥ उदकंचक्रिरेतस्यसर्वाश्चकुरुयोषितः २८ चुक्रुशुःपांडवाःसर्वेभीष्मःशांतनवस्तथा ॥ विदुरोज्ञातयश्चैवचक्रुश्चाप्युदकक्रियाः २९ कृतोदकांस्ता
नादायपांडवाञ्छोककर्शितान् ॥ सर्वाःप्रकृतयोराजन्शोचमानान्यवारयन् ३० यथैवपांडवाभूमौसुषुपुःसहबांधवैः ॥ तथैवनागराराजन्शिश्यिरेब्राह्मणादयः ३१
तद्गतानंदमस्वस्थमाकुमारमहृष्टवत् ॥ बभूवपांडवैःसार्धंनगरंद्वादशक्षपाः ३२ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वणिपांडुदाहेसप्तविंशत्यधिकशततमो
ऽध्यायः ॥ १२७ ॥ ॥ वैशंपायनउवाच ॥ ततःकुंतीचराजाचभीष्मश्चसहबंधुभिः ॥ ददुःश्राद्धंतदापांडोःस्वधामृतमयंतदा १ कुरूंश्चविप्रमुख्यांश्चभोजयि
त्वासहस्रशः ॥ रत्नौघान्विप्रमुख्येभ्योदत्वाग्रामवरांस्तथा २ कृतशौचांस्ततस्तांस्तुपांडवान्भरतर्षभान् ॥ आदायविविशुःसर्वेपुरंवारणसाह्वयम् ३ सततंस्मा
नुशोचंतस्तमेवभरतर्षभम् ॥ पौरजानपदाःसर्वेमृतंस्वमिवबांधवम् ४ श्राद्धावसानेतुतदादृष्ट्वातंदुःखितंजनम् ॥ संमूढांदुःखशोकार्तांव्यासोमातरमब्रवीत् ५
अतिक्रांतसुखाःकालाःपर्युपस्थितदारुणाः ॥ श्वःश्वःपापिष्ठदिवसाःपृथिवीगतयौवना ६ बहुमायासमाकीर्णोनानादोषसमाकुलः ॥ लुप्तधर्मक्रियाचारोघोरः
कालोभविष्यति ७ कुरूणामनयाच्चापिपृथिवीनभविष्यति ॥ गच्छत्वंयोगमास्थाययुक्तावसतपोवने ८ माद्राक्षीस्त्वंकुलस्यास्यघोरंसंक्षयमात्मनः ॥ तथेति
४१ समनुज्ञायसाप्रविश्याब्रवीत्स्नुषाम् ९ अंबिकेतवपौत्रस्यदुर्नयात्किलभारताः ॥ सानुबंधाविनंक्ष्यंतिपौराश्चैवेतिनःश्रुतम् १० तत्कौसल्यामिमामार्तांपुत्रशो
काभिपीडिताम् ॥ वनमादायभद्रंतेगच्छामियदिमन्यसे ११ तथेत्युक्त्वात्वंबिकयाभीष्ममामंत्र्यसुव्रता ॥ वनंययौसत्यवतीस्नुषाभ्यांसहभारत १२

येभारतभावदीपे सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥ ॥ ७ ॥ ॥ ततइति १ । २ । ३ । ४ । ५ श्वःश्वःपूर्वपूर्वदिनापेक्षयाउत्तरमुत्तरंपापिष्ठं । गतयौवनासम्यक्फलशून्या ६
७ योगंचित्तवृत्तिनिरोधंप्रयाणोद्योगंवा युक्तासमाहिता ८ । ९ । १० । ११ । १२

१३ । १४ । १५ जवेधावनक्रीडायां । लक्ष्याभिहरणेअहंपूर्वमहंपूर्वमितिदृष्टफलादिग्रहणे । भोज्ये । पांसुविकर्षणेबालक्रीडाविशेषे । पारिमर्दति सर्वतउपमृद्नाति १६ । १७
१८ । १९ । २० । २१ । २२ योग्यासुशिक्षाभ्यासेषु उत्तरमुत्कर्षं २३ । २४ । २५ । २६ निकृत्याकपटेन २७ प्राणवान्बलवान् २८ । २९ प्रसह्यबलात्कारेण ३०

ताःसुघोरंतपस्तप्स्वादिव्योभरतसत्तम ॥ देहंत्यक्त्वामहाराजगतिमिष्टांययुस्तदा १३ ॥ वैशंपायनउवाच ॥ अथाप्तवंतोवेदोक्तान्संस्कारान्पांडवास्तदा ॥ संव्य
वर्धंतभोगांस्तेभुंजानाःपितृवेश्मनि १४ धार्तराष्ट्रैश्चसहिताःक्रीडंतोमुदिताःसुखम् ॥ बालक्रीडासुसर्वासुविशिष्टास्तेजसाऽभवन् १५ जवेलक्ष्याभिहरणेभोज्येपां
सुविकर्षणे ॥ धार्तराष्ट्रान्भीमसेनःसर्वान्सपरिमर्दति १६ हर्षात्प्रक्रीडमानांस्तान्गृह्यराजन्निलीयते ॥ शिरःसुविनिगृह्यैतान्योधयामासपांडवैः १७ शतमेको
त्तरंतेषांकुमाराणांमहौजसाम् ॥ एकएवनिगृह्णातिनातिकृच्छ्राद्वृकोदरः १८ कचेषुचनिगृह्यैनान्विनिहत्यबलाद्बली ॥ चकर्षक्रोशतोभूमौघृष्टजानुशिरोंसकान् ॥
१९ दशबालान्जलेक्रीडन्भुजाभ्यांपरिगृह्यसः ॥ आस्तेस्मसलिलेमग्नोमृतकल्पान्विमुंचति २० फलानिवृक्षमारुह्यविचिन्वंतिचतेयदा ॥ तदापादप्रहारेणभी
मःकंपयतेद्रुमान् २१ प्रहारवेगाभिहताद्द्रुमाव्याघूर्णितास्ततः ॥ सफलाःप्रपतंतिस्मद्रुतंत्रस्ताःकुमारकाः २२ नतेनियुद्धेनजवेनयोग्यासुकदाचन ॥ कुमाराउ
त्तरंचक्रुःस्पर्धमानावृकोदरम् २३ एवंसधार्तराष्ट्रांश्चस्पर्धमानोवृकोदरः ॥ अप्रियेऽतिष्ठदत्यंतंबाल्यान्नद्रोहचेतसा २४ततोबलमतिख्यातंधार्तराष्ट्रःप्रतापवान् ॥
भीमसेनस्यतज्ज्ञात्वादुष्टभावमदर्शयत् २५ तस्यधर्मादपेतस्यपापानिपरिपश्यतः ॥ मोहादैश्वर्यलोभाच्चपापामतिरजायत २६ अयंबलवतांश्रेष्ठःकुंतीपुत्रोवृको
दरः ॥ मध्यमःपांडुपुत्राणांनिकृत्यासन्निगृह्यताम् २७ प्राणवान्विक्रमीचैवशौर्येणमहताऽन्वितः ॥ स्पर्धतेचापिसहितानस्मानेकोवृकोदरः २८ तंतुसुप्तंपुरोद्या
नेगंगायांप्रक्षिपामहे ॥ अथतस्मादवरजंश्रेष्ठंचैवयुधिष्ठिरम् २९ प्रसह्यबंधनेबद्ध्वाप्रशासिष्येवसुंधराम् ॥ एवंसनिश्चयंपापःकृत्वादुर्योधनस्तदा ॥ नित्यमेवांतर
प्रेक्षीभीमस्यासीन्महात्मनः ३० ततोजलविहारार्थंकारयामासभारत ॥ चैलकंबलवेश्मानिविचित्राणिमहांतिच ३१ सर्वकामैःसुपूर्णानिपताकोच्छ्रायवंतिच ॥
तत्रसंजनयामासनानागाराण्यनेकशः ३२ उदकक्रीडनंनामकारयामासभारत ॥ प्रमाणकोट्यांतंदेशंस्थलंकिंचिदुपेत्यह ३३ भक्ष्यंभोज्यंचपेयंचचोष्यंलेह्यमथा
पिच ॥ उपपादितंनरैस्तत्रकुशलैःसूदकर्मणि ३४ न्यवेदयंस्तत्पुरुषाधार्तराष्ट्रायवैतदा ॥ ततोदुर्योधनस्तत्रपांडवानाहदुर्मतिः ३५ गंगांचैवानुयास्यामउद्या
नवनशोभिताम् ॥ सहिताभ्रातरःसर्वेजलक्रीडामवाप्नुमः ३६ एवमस्त्वितितंचापिप्रत्युवाचयुधिष्ठिरः ॥ तेरथैर्नगराकारैर्देशजैश्चगजोत्तमैः ३७ निर्ययुर्नगराच्छू
राःकौरवाःपांडवैःसह ॥ उद्यानवनमासाद्यविसृज्यचमहाजनम् ३८

३१ । ३२ प्रमाणकोट्यांगंगायांप्रदेशविशेषे स्थलंकिंचिदर्धंजलेर्धंस्थलेचक्रीडागारं ३३ भक्ष्यंदंतैश्छित्त्वाछित्त्वाग्राह्यमपूपादि । भोज्यंजिह्वाव्यापारैकग्राह्यंपायसादि । पेयंतदुभयानपेक्षंपानका
दि । चोष्यंरसमात्रंगृहीत्वात्याज्यमिक्षुकांडादि । लेह्यंमुखलालयाद्रवीभावमापद्यमानंखंडशर्करादि । उपपादितं उपाहृतमित्यपिपठंति ३४ । ३५ । ३६ । ३७ । ३८



३९ उपस्थानगृहैःयत्रराजानेकार्थिनःशूराश्चोपतिष्ठंतितैर्गृहैः । वलभीभिरुभयतोनिम्नपक्षाभिःस्तंभशालाभिः । यंत्रैर्जलयंत्रैःशतधारादिभिः । यतोयुगपच्छतधाराउच्छलंत्योनीहारीभूयभवनो
दर्व्याप्नुवंति । सांचारिकैःसंचारयोग्यैः ४० दीर्घिकाभिःकुल्याभिः पुष्करिणीभिर्हीतिउपांत्यस्यालघुत्वेऽप्यनुष्टुप्त्वाहानेर्नदोषः ४१ उपछन्नासंछन्ना ४२ उपच्छन्नानुपागतान् कामान्
शब्दादिविषयान् ४३ वक्रेभ्योवक्त्रेषु ४४ । ४५ । ४६ प्रतीक्षितंप्रीत्याऽवेक्षितंभक्षितंनतुशत्रोरितिनिरस्तं तत्रहेतुरजानतेति ४७ । ४८ । ४९ । ५० व्यायम्यश्रमंकृत्वा ५१ । ५२

विशंतिस्मसदावीराःसिंहाइवगिरेर्गुहां ॥ उद्यानमभिपश्यंतोभ्रातरःसर्वएवते ३९ उपस्थानगृहैःशुभ्रैर्वलभीभिश्चशोभितं ॥ गवाक्षकैस्तथाजालैर्यंत्रैःसांचारिकैरपि
४० संमार्जितंसौधकारैश्चित्रकारैश्चचित्रितं ॥ दीर्घिकाभिश्चपूर्णाभिस्तथापुष्करिणीभिर्हि ४१ जलंतच्छुशुभेच्छन्नंफुल्लैर्जलरुहैस्तथा ॥ उपच्छन्नावसुमतीतथापु
ष्पैर्यथर्तुकैः ४२ तत्रोपविष्टास्तेसर्वेपांडवाःकौरवाश्चह ॥ उपच्छन्नान्बहून्कामांस्तेभुंजंतिततस्ततः ४३ अथोद्यानवरेतस्मिंस्तथाक्रीडागताश्चते ॥ परस्परस्यव
क्त्रेभ्योददुर्भक्ष्यांस्ततस्ततः ४४ ततोदुर्योधनःपापस्तद्भक्ष्येकालकूटकम् ॥ विषंप्रक्षेपयामासभीमसेनजिघांसया ४५ स्वयमुत्थायचैवाथहृदयेनक्षुरोपमः ॥ सवाचा
मृतकल्पश्चभ्रातृवच्चसुहृद्यथा ४६ स्वयंप्रक्षिपतेभक्ष्यंबहुभीमस्यपापकृत् ॥ प्रतीक्षितंस्मभीमेनतंवैदोषमजानता ४७ ततोदुर्योधनस्तत्रहृदयेनहसन्निव ॥
कृतकृत्यमिवात्मानंमन्यतेपुरुषाधमः ४८ ततस्तेसहिताःसर्वेजलक्रीडामकुर्वत ॥ पांडवाधार्तराष्ट्राश्चतदामुदितमानसाः ४९ क्रीडावसानेतेसर्वेशुचिवस्त्राः
स्वलंकृताः ॥ दिवसांतेपरिश्रांताविहृत्यचकुरूद्वहाः ५० विहारावसथेष्वेववीरावासमरोचयन् ॥ खिन्नस्तुबलवान्भीमोव्यायम्याभ्यधिकंतदा ५१ वाहयित्वाकु
मारांस्तान्जलक्रीडागतांस्तदा ॥ प्रमाणकोट्यांवासार्थीसुष्वापावाप्यतत्स्थलम् ५२ शीतंवातंसमासाद्यश्रांतोमदविमोहितः ॥ विषेणचपरीतांगोनिश्चेष्टःपांडु
नंदनः ५३ ततोबद्ध्वालतापाशैर्भीमंदुर्योधनःस्वयम् ॥ मृतकल्पंतदावीरंस्थलाज्जलमपातयत् ५४ सनिःसंज्ञोजलस्यांतमथवैपांडवोऽविशत् ॥ आक्रामन्नाग
भवनेतदानागकुमारकान् ५५ ततःसमेत्यबहुभिस्तदानागैर्महाविषैः ॥ अदश्यतभृशंभीमोमहादंष्ट्रैर्विषोल्बणैः ५६ ततोऽस्यदश्यमानस्यतद्विषंकालकूटकम् ॥
हतंसर्पविषेणैवस्थावरंजंगमेनतु ५७ दंष्ट्राश्चदंष्ट्रिणांतेषांमर्मस्वपिनिपातिताः ॥ त्वचंनैवास्यबिभिदुःसारत्वात्पृथुवक्षसः ५८ ततःप्रबुद्धःकौंतेयःसर्वंसंछिद्यबंधनं
पोथयामासतान्सर्वान्केचिद्भीताःप्रदुद्रुवुः ५९ हतावशेषाभीमेनसर्वेवासुकिमभ्ययुः ॥ ऊचुश्चसर्पराजानंवासुकिंवासवोपमम् ६० अयंनरोवैनागेंद्रह्यप्सुबद्ध्वाप्रवे
शितः ॥ यथाचनोमतिर्वीरविषपीतोभविष्यति ६१ निश्चेष्टोऽस्माननुप्राप्तःसचदष्टोऽन्वबुध्यत ॥ ससंज्ञश्चापिसंवृत्तश्छित्त्वाबंधनमाशुनः ६२ पोथयंतंमहाबाहुंत्वं
वैतंज्ञातुमर्हसि ॥ ततोवासुकिरभ्येत्यनागैरनुगतस्तदा ६३ पश्यतिस्ममहाबाहुंभीमंभीमपराक्रमं ॥ आर्यकेणचदृष्टःसपृथायाआर्यकेणच ६४

५३ । ५४ जलस्यांतमवसानं आक्रामच्छरीराभोगेननागानाक्रांतवान् ५५ ततस्तैर्भीरखिन्नैरदश्यतदष्टः ५६ । ५७ । ५८ । ५९ । ६० विषपीतःपीतविषः ६१ । ६२ । ६३ आर्य
केणनागराजेन पृथायाआर्यकेणमातामहेन कुंतिभोजद्वाराऽयंसंबंधइतिगम्यते ६४

दौहित्रदौहित्रइतिवार्यकनागस्यदौहित्रःशूरस्तद्दौहित्रोभीमइत्यविरुद्धमेतत् अन्येतुशूरस्यातामहएवोपचारात्कुंतीमातामहोऽपीत्याहुः ६६ । ६७ । ६८ । ६९ । ७० । ७१ नागदंतेभि त्तितोवहिर्निर्गतेदारुणिकृतंयदासनस्थानंतत्र'झरोखा'इतिभाषयाप्रसिद्धे ७२ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपेअष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥ ॥ ततइति वृत्तःसमाप्तः १

तदादौहित्रदौहित्रःपरिष्वक्तःसुपीडितम् ॥ सुप्रीतश्चाभवत्तस्यवासुकिःसमहायशाः ६५ अब्रवीत्तंचनागेंद्रःकिमस्यक्रियतांप्रियम् ॥ धनौघोरत्ननिच योवसुचास्यप्रदीयताम् ६६ एवमुक्तस्तदानागोवासुकिंप्रत्यभाषत ॥ यदिनागेंद्रतुष्टोऽसिकिमस्यधनसंचयैः ६७ रसंपिबेत्कुमारोऽयंत्वयिप्रीतेमहाबलः ॥ बलं नागसहस्रस्ययस्मिन्कुंडेप्रतिष्ठितम् ६८ यावत्पिबतिबालोऽयंतावदस्मैप्रदीयताम् ॥ एवमस्त्वितितंनागंवासुकिःप्रत्यभाषत ६९ ततोभीमस्तदानागैःकृतस्व स्त्ययनःशुचिः ॥ प्राङ्मुखश्चोपविष्टश्चरसंपिबतिपांडवः ७० एकोच्छ्वासात्ततःकुंडंपिबतिस्ममहाबलः ॥ एवमष्टौसकुंडानिह्यपिबत्पांडुनंदनः ७१ ततस्तुश यनेदिव्येनागदत्तेमहाभुजः ॥ अशेतभीमसेनस्तुयथासुखमरिंदमः ७२ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वणिभीमसेनरसपानेअष्टाविंशत्यधिकशततमो ध्यायः ॥ १२८ ॥ ॥ वैशंपायनउवाच ॥ ततस्तेकौरवाःसर्वेविनाभीमंचपांडवाः ॥ वृत्तक्रीडाविहारास्तुप्रतस्थुर्गजसाह्वयम् १ रथैर्गजैस्तथाचाश्वैर्या नैश्चान्यैरनेकशः ॥ ब्रुवंतोभीमसेनस्तुयातोह्यग्रतएवनः २ ततोदुर्योधनःपापस्तत्रापश्यन्वृकोदरम् ॥ भ्रातृभिःसहितोहृष्टोनगरंप्रविवेशह ३ युधिष्ठिरस्तुधर्मा त्माह्यविदन्पापमात्मनि ॥ स्वेनानुमानेनपरंसाधुंसमनुपश्यति ४ सोऽभ्युपेत्यतदापार्थोमातरंभ्रातृवत्सलः ॥ अभिवाद्याब्रवीत्कुंतीमंबभीमइहागतः ५ क्वगतोभ वितामातर्नेहपश्यामितंशुभे ॥ उद्यानानिवनंचैवविचितानिसमंततः ६ तदर्थंनचतंवीरंदृष्टवंतोवृकोदरम् ॥ मन्यमानास्ततःसर्वेयातोनःपूर्वमेवसः ७ आगताः स्ममहाभागेव्याकुलेनांतरात्मना ॥ इहागम्यक्वनुगतस्त्वयावाप्रेषितःक्वनु ८ कथयस्वमहाबाहुंभीमसेनंयशस्विनि ॥ नहिमेशुध्यतेभावस्तंवीरंप्रतिशोभने ९ यतःप्रसुप्तंमन्येऽहंभीमंनेतिहतस्तुसः ॥ इत्युक्ताचततःकुंतीधर्मराजेनधीमता १० हाहेतिकृत्वासंभ्रांताप्रत्युवाचयुधिष्ठिरम् ॥ नपुत्रभीमंपश्यामिनमामभ्येत्य सावि‍ति ११ शीघ्रमन्वेषणेयत्नंकुरुतस्यानुजैःसह ॥ इत्युक्त्वातनयंज्येष्ठंहृदयेनविदूयता १२ क्षत्तारमानाय्यतदाकुंतीवचनमब्रवीत् ॥ क्वगतोभगवन्क्षत्तर्भीमसे नोनदृश्यते १३ उद्यानान्निर्गताःसर्वेभ्रातरोभ्रातृभिःसह ॥ तत्रैकस्तुमहाबाहुर्भीमोनाभ्येतिमामिह १४ नचप्रीणयतेचक्षुःसदादुर्योधनस्यसः ॥ क्रूरोऽसौदुर्म तिःक्षुद्रोराज्यलुब्धोऽनपत्रपः १५ निहन्यादपितंवीरंजातमन्युःसुयोधनः ॥ तेनमेव्याकुलंचित्तंहृदयंदह्यतीवच १६ ॥ विदुरउवाच ॥ मैवंवदस्वकल्याणिशेष संरक्षणंकुरु ॥ प्रत्यादिष्टोहिदुष्टात्माशेषेऽपिप्रहरेत्तव १७ दीर्घायुषस्तवसुतायथोवाचमहामुनिः ॥ आगमिष्यतितेपुत्रःप्रीतिंचोत्पादयिष्यति १८ ॥१२२॥

२ । ३ । ४ अंबहेमातः ५ । ६ । ७ । ८ भावश्चित्तंनशुध्यतेजीवतीतिमनुते ९ यतोभीमंप्रसुप्तंनमन्येऽपितुहतइत्येवमन्ये १० । ११ । १२ । १३ । १४ नचेति दुर्योधनस्तंद्रष्टुंनशक्नोतीत्यर्थः १५ । १६ वदस्वविपरीतंमन्येथाः प्रत्यादिष्टःकुतोभीमंहतवानसीत्युपालब्धः १७ । १८

१९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ तान्कुरुबालकानन्वबेदयत् ४२ । ४३

॥ वैशंपायनउवाच ॥ एवमुक्त्वाययौविद्वान्विदुरःस्वंनिवेशनम् ॥ कुंतीचिंतापराभूत्वासहासीनासुतैर्गृहे १९ ततोऽष्टमेतुदिवसेप्रत्यबुध्यतपांडवः ॥ तस्मिं स्तदारसेजीर्णेसोऽप्रमेयबलोबली २० तंदृष्ट्वाप्रतिबुध्यंतंपांडवंतेभुजंगमाः ॥ सांत्वयामासुरव्यग्रावचनंचेदमब्रुवन् २१ यत्तेपीतोमहाबाहोरसोऽयंवीर्यसंभृतः ॥ तस्मान्नागायुतबलोरणेऽधृष्योभविष्यसि २२ गच्छाद्यत्वंचस्वगृहंस्नातोदिव्यैरिमैर्जलैः ॥ भ्रातरस्तेऽनुतप्यंतित्वांविनाकुरुपुंगव २३ ततःस्नातोमहाबाहुः शुचिःशुक्लांबरस्रजः ॥ ततोनागस्यभवनेकृतकौतुकमंगलः २४ ओषधीभिर्विषघ्नीभिःसुरभीभिर्विशेषतः ॥ भुक्तवान्परमान्नंचनागैर्दत्तंमहाबलः २५ पूजि तोभुजगैर्वीरआशीर्भिश्चाभिनंदितः ॥ दिव्याभरणसंछन्नोनागानामंत्र्यपांडवः २६ उदतिष्ठत्प्रहृष्टात्मानागलोकादरिंदमः ॥ उत्क्षिप्तःसतुनागेनजलाज्जल रुहेक्षणः २७ तस्मिन्नेववनोद्देशेस्थापितःकुरुनंदनः ॥ तेचांतर्दधिरेनागाःपांडवस्यैवपश्यतः २८ ततउत्थायकौंतेयोभीमसेनोमहाबलः ॥ आजगाममहाबाहु र्मातुरंतिकमंजसा २९ ततोऽभिवाद्यजननींज्येष्ठंभ्रातरमेवच ॥ कनीयसःसमाघ्रायशिरःस्वरिविमर्दनः ३० तैश्चापिसंपरिष्वक्तःसहमात्रानरर्षभैः ॥ अन्योन्य गतसौहार्दाद्दिष्ट्याद्दिष्ट्येतिचाब्रुवन् ३१ ततस्तत्सर्वमाचष्टदुर्योधनविचेष्टितम् ॥ भ्रातॄणांभीमसेनश्चमहाबलपराक्रमः ३२ नागलोकेचयद्वृत्तंगुणदोषमशेषतः ॥ तच्चसर्वमशेषेणकथयामासपांडवः ३३ ततोयुधिष्ठिरोराजाभीममाहवचोऽर्थवत् ॥ तूष्णींभवनतेजल्प्यमिदंकार्यंकथंचन ३४ एवमुक्त्वामहाबाहुर्धर्मराजोयुधि ष्ठिरः ॥ भ्रातृभिःसहितःसर्वैरप्रमत्तोऽभवत्तदा ३५ सारथिंचास्यदयितमपहस्तेनजघ्निवान् ॥ धर्मात्माविदुरस्तेषांपार्थानांप्रददौमतिम् ३६ भोजनेभीमसेनस्य पुनःप्राक्षेपयद्विषम् ॥ कालकूटंनवंतीक्ष्णंसंभृतंलोमहर्षणम् ३७ वैश्यापुत्रस्तदाचष्टपार्थानांहितकाम्यया ॥ तच्चापिभुक्त्वाऽजरयदविकारंवृकोदरः ३८ विका रंनह्यजनयत्सुतीक्ष्णमपितद्विषम् ॥ भीमसंहननेभीमेअजीर्यतवृकोदरे ३९ एवंदुर्योधनःकर्णःशकुनिश्चापिसौबलः ॥ अनेकैरभ्युपायैस्तान्जिघांसंतिस्मपांड वान् ४० पांडवाश्चापितत्सर्वंप्रत्यजानन्नमर्षिताः ॥ उद्भावनमकुर्वंतोविदुरस्यमतेस्थिताः ४१ कुमारान्क्रीडमानांस्तान्दृष्ट्वाराजाऽतिदुर्मदान् ॥ गुरुंशिक्षार्थम न्विष्यगौतमंतान्न्यवेदयत् ४२ शरस्तंबेसमुद्भूतंवेदशास्त्रार्थपारगम् ॥ अधिजग्मुश्चकुरवोधनुर्वेदंकृपात्तु ते ४३ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वणिभी मप्रत्यागमनेऊनत्रिंशदधिकशततमोऽध्यायः ॥ २१९ ॥ ॥ जनमेजयउवाच ॥ कृपस्यापिममब्रह्मन्संभवंवक्तुमर्हसि ॥ शरस्तंबात्कथंजज्ञेकथंवास्त्राण्यवा प्तवान् १ ॥ वैशंपायनउवाच ॥ महर्षेर्गौतमस्यासीच्छरद्वान्नामगौतमः ॥ पुत्रःकिलमहाराजजातःसहशरैर्विभो २

॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे ऊनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ गुरुद्वारकमपिकौरवाणांमाहा त्म्यंवक्तुंगुर्वोःकृपद्रोणयोरप्युत्पत्तिविशिष्टमाहाध्यायाभ्यां कृपस्यापीत्यादिना १ शरद्वान्नामतः गौतमोगोत्रतः शरैःसहजातः शराएववाऽस्यबंधुवत्प्रियाइत्यर्थः २

तदेवाह नतस्येत्यादिना ३ । ४ । ५ । ६ । ७ । ८ । ९ समर्थनात्सामर्थ्यात् समन्वयादितिपाठांतरं १० । ११ । १२ । १३ । १४ । १५ । २६ पुत्रीचपुत्रश्चपुत्रौ १७ प्रातिपेयःप्रतीपपुत्रः

नतस्यवेदाध्ययनेतथाबुद्धिरजायत ॥ यथाऽस्यबुद्धिरभवद्धनुर्वेदेपरंतप ३ अधिजग्मुर्यथावेदांस्तपसाब्रह्मचारिणः ॥ तथासतपसोपेतःसर्वाण्यस्त्राण्यवापह ४ धनुर्वेदपरत्वाच्चतपसाविपुलेनच ॥ भृशंसंतापयामासदेवराजंसगौतमः ५ ततोजानपदींनामदेवकन्यांसुरेश्वरः ॥ प्राहिणोत्तपसोविघ्नंकुरुतस्येतिकौरव ६ साहिगत्वाऽऽश्रमंतस्यरमणीयंशरद्वतः ॥ धनुर्बाणधरंबालालोभयामासगौतमम् ७ तामेकवसनांदृष्ट्वागौतमोऽप्सरसंवने ॥ लोकेऽप्रतिमसंस्थानांप्रोत्फुल्लनय नोऽभवत् ८ धनुश्चहिशरास्तस्यकराभ्यामपतन्भुवि ॥ वेपथुश्चापितांदृष्ट्वाशरीरेसमजायत ९ सतुज्ञानगरीयस्त्वात्तपसश्चसमर्थनात् ॥ अवतस्थेमहाप्राज्ञो धैर्येणपरमेणह १० यस्तस्यसहसाराजन्विकारःसमदृश्यत ॥ तेनसुस्रावरेतोऽस्यसचतन्नान्वबुध्यत ११ धनुश्चसशरंत्यक्त्वातथाकृष्णाजिनानिच ॥ सविहाया श्रमंतंचतांचैवाप्सरसंमुनिः १२ जगामरेतस्तत्तस्यशरस्तंबेपपातच ॥ शरस्तंबेचपतितंद्विधातदभवन्नृप १३ तस्याथमिथुनंजज्ञेगौतमस्यशरद्वतः ॥ मृगयांचर तोराज्ञःशांतनोस्तुयदृच्छया १४ कश्चित्सेनाचरोऽरण्येमिथुनंतदपश्यत ॥ धनुश्चसशरंदृष्ट्वातथाकृष्णाजिनानिच १५ ज्ञात्वाद्विजस्यचापत्येधनुर्वेदांतगस्यह ॥ सराज्ञेदर्शयामासमिथुनंसशरंधनुः १६ सतदादायमिथुनंराजाचकृपयान्वितः ॥ आजगामगृहानेवममपुत्रावितिब्रुवन् १७ ततःसंवर्धयामाससंस्कारैश्चाप्ययो जयत् ॥ प्रातिपेयोनरश्रेष्ठोमिथुनंगौतमस्यतत् १८ गौतमोऽपिततोऽभ्येत्यधनुर्वेदपरोऽभवत् ॥ कृपयायन्मयाबालाविमौसंवर्धिताविति १९ तस्मात्तयो र्नामचक्रेतदेवसमहीपतिः ॥ गोपितौगौतमस्तत्रतपसासमविंदत २० आगत्यतस्मैगोत्रादिसर्वमाख्यातवांस्तदा ॥ चतुर्विधंधनुर्वेदंशास्त्राणिविविधा निच २१ निखिलेनास्यतत्सर्वंगुह्यमाख्यातवांस्तदा ॥ सोऽचिरेणैवकालेनपरमाचार्यतांगतः २२ ततोऽधिजग्मुःसर्वेतेधनुर्वेदंमहारथाः ॥ धृतरा ष्ट्रात्मजाश्चैवपांडवाःसहयादवैः २३ वृष्णयश्चनृपाश्चान्येनानादेशसमागताः ॥ वैशंपायनउवाच ॥ विशेषार्थीततोभीष्मःपौत्राणांविनयेप्सया २४ इष्वस्त्रज्ञान्पर्यपृच्छदाचार्यान्वीर्यसंमतान् ॥ नाल्पधीर्नामहाभागस्तथानानस्त्रकोविदः २५ नादेवसत्त्वोविनयेत्कुरूनस्त्रेमहाबलान् ॥ इतिसंचिंत्यगांगेयः सदाभरतसत्तमः २६ द्रोणायवेदविदुषेभारद्वाजायधीमते ॥ पांडवान्कौरवांश्चैवददौशिष्यान्नरर्षभ २७ शास्त्रतःपूजितश्चैवसम्यक्तेनमहात्मना ॥ सभी ष्मेणमहाभागस्तुष्टोऽस्त्रविदुषांवरः २८ प्रतिजग्राहतान्सर्वान्शिष्यत्वेनमहायशाः ॥ शिक्षयामासचद्रोणोधनुर्वेदमशेषतः २९ तेऽचिरेणैवकालेनसर्वशस्त्र विशारदाः ॥ बभूवुःकौरवाराजन्पांडवाश्चामितौजसः ३० ॥१२३॥

१८ । १९ गोपितौराज्ञापालितौ २० चतुर्विधं मुक्तममुक्तंमुक्तामुक्तंमंत्रमुक्तंचेति मुक्तंबाणादि । अमुक्तंखड्गादि । मुक्तामुक्तंसोपसंहारमस्त्रं । निरुपसंहारमस्त्रंमंत्रमुक्तं । यद्वा शस्त्रमस्त्रंप्रत्य स्त्रंपरमास्त्रंच । यद्वा आदानंसंधानंविमोक्षःसंहारश्च २१ । २२ । २३ विनयेप्सयाशिक्षेच्छया २४ । २५ अदेवसत्वःनास्तिदेवस्येवसत्वंसामर्थ्यंयस्यसः २६ । २७ । २८ । २९ । ३०

३१ । ३२ । ३३ सहेति ततःपूर्वमेवाहूतामितिसंबंधः अंगलग्नवस्त्रांविवृतांगींददर्शेतिभावः सार्धः ३४ । ३५ । ३६ द्रोणेद्रोणकलशाख्येयज्ञियपात्रविशेषे ३७ यतोद्रोणकलशेऽभव

॥ जनमेजयउवाच ॥ कथंसमभवद्द्रोणःकथंचास्त्राण्यवाप्तवान् ॥ कथंचागात्कुरून्ब्रह्मन्कस्यपुत्रःसवीर्यवान् ३१ कथंचास्यसुतोजातःसोऽश्वत्थामाऽस्त्रवित्तमः ॥ एतदिच्छाम्यहंश्रोतुंविस्तरेणप्रकीर्तय ३२ ॥ वैशंपायनउवाच ॥ गंगाद्वारंप्रतिमहान्बभूवभगवानृषिः ॥ भरद्वाजइतिख्यातःसततंसंशितव्रतः ३३ सोऽभिषे क्तुंततोगंगांपूर्वमेवागमन्नदीम् ॥ महर्षिभिर्भरद्वाजोहविर्धानेचरन्पुरा ३४ ददर्शाप्सरसंसाक्षाद्घृताचीमाप्लुतामृषिः ॥ रूपयौवनसंपन्नांमदहप्तांमदालसाम् ३५ तस्याःपुनर्नदीतीरेवसनंपर्यवर्तत ॥ व्यपकृष्टांबरांदृष्ट्वातामृषिश्चकमेततः ३६ तत्रसंसक्तमनसोभरद्वाजस्यधीमतः ॥ ततोऽस्यरेतश्चस्कंदतदृषिर्द्रोणआदधे ३७ ततःसमभवद्द्रोणःकलशेतस्यधीमतः ॥ अध्यगीष्टसवेदांश्चवेदांगानिचसर्वशः ३८ अग्निवेशंमहाभागंभरद्वाजःप्रतापवान् ॥ प्रत्यपादयदाग्नेयमस्त्रमस्त्रविदांवरः ३९ अग्नेस्तुजातःसमुनिस्ततोभरतसत्तम ॥ भारद्वाजंतदाग्नेयंमहास्त्रंप्रत्यपादयत् ४० भरद्वाजसखाचासीत्पृषतोनामपार्थिवः ॥ तस्यापिद्रुपदोनामतदासमभव त्सुतः ४१ सनित्यमाश्रमंगत्वाद्रोणेनसहपार्थिवः ॥ चिक्रीडाध्ययनंचैवचकारक्षत्रियर्षभः ४२ ततोव्यतीतेपृषतेसराजाद्रुपदोऽभवत् ॥ पंचालेषुमहाबाहुरुत्तरे पुनरेश्वरः ४३ भरद्वाजोऽपिभगवानारुरोहदिवंतदा ॥ तत्रैवचवसन्द्रोणस्तपस्तेपेमहातपाः ४४ वेदवेदांगविद्वान्सतपसादग्धकिल्बिषः ॥ ततःपितृनियुक्तात्मा पुत्रलोभान्महायशाः ४५ शारद्वतींततोभार्यांकृपींद्रोणोऽन्वविंदत ॥ अग्निहोत्रेचधर्मेचदमेचसततंरताम् ४६ अलभद्गौतमीपुत्रमश्वत्थामानमेवच ॥ सजात मात्रोव्यनदद्यथैवोच्चैःश्रवाहयः ४७ तच्छ्रुत्वांतर्हितंभूतमंतरिक्षस्थमब्रवीत् ॥ अश्वस्येवास्ययत्स्थामनदतःप्रदिशोगतम् ४८ अश्वत्थामैवबालोऽयंतस्मान्नाम्ना भविष्यति ॥ सुतेनतेनसुप्रीतोभारद्वाजस्ततोऽभवत् ४९ तत्रैवचवसन्धीमान्धनुर्वेदपरोऽभवत् ॥ सशुश्रावमहात्मानंजामदग्न्यंपरंतपम् ५० सर्वज्ञानविदंविप्रं सर्वशस्त्रभृतांवरम् ॥ ब्राह्मणेभ्यस्तदाराजन्दित्संतंवसुसर्वशः ५१ सरामस्यधनुर्वेदंदिव्यान्यस्त्राणिचैवह ॥ श्रुत्वातेषुमनश्चक्रेनीतिशास्त्रेतथैवच ५२ ततःसव्रति भिःशिष्यैस्तपोयुक्तैर्महातपाः ॥ वृतःप्रायान्महाबाहुर्महेंद्रंपर्वतोत्तमम् ५३ ततोमहेंद्रमासाद्यभारद्वाजोमहातपाः ॥ क्षांतंदांतममित्रघ्नमपश्यद्भृगुनंदनम् ५४ ततोद्रोणोवृतःशिष्यैरुपगम्यभृगूद्वहम् ॥ आचख्यावात्मनोनामजन्मचांगिरसःकुले ५५ निवेद्यशिरसाभूमौपादौचैवाभ्यवादयत् ॥ ततस्तंसर्वमुत्सृज्यवनंजिग मिषुंतदा ५६ जामदग्न्यंमहात्मानंभारद्वाजोऽब्रवीदिदम् ॥ भरद्वाजात्समुत्पन्नंतथात्वंमामयोनिजम् ५७ आगतंवित्तकामंमांविद्धिद्रोणंद्विजोत्तमम् ॥ तमब्रवी न्महात्मासर्वक्षत्रियमर्दनः ५८ स्वागतंतेद्विजश्रेष्ठयदिच्छसिवदस्वमे ॥ एवमुक्तस्तुरामेणभारद्वाजोऽब्रवीद्वचः ५९

यतोद्रोणइतिनामनिर्वक्तितदिति ३८ भरद्वाजआग्नेयमस्त्रंअग्निवेशायददौ । सचाग्नेःपुत्रोऽग्निवेशोभारद्वाजंद्रोणंस्वगुरुपुत्रमाग्नेयमस्त्रमशिक्षयदितिश्लोकद्वयार्थः ३९ । ४० । ४१ । ४२ । ४३।४४ पितृभिःपुत्रमुत्पादयेतिनियुक्तआत्मामनोयस्यसपितृनियुक्तात्मा ४५ । ४६ । ४७ स्थामशब्दसकारस्यतकारादेशेऽश्वत्थामेति ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ ।५५।५६।५७।५८ ।५९

६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ ॥ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥ ॥ ततइति १ । २
कषायीकृतेरक्तेलोचनेयस्यसः ३ अकृताअसंस्कृता ४ । ५ सामर्थ्येत्यनेनासमर्थस्यसौहृदंजीर्यतइत्युक्तं ६ एनंसखायं विहरतिपृथक्करोति रहतिसख्याच्च्यावयति ७ मैवमिति एवं

रामंप्रहरतांश्रेष्ठंदित्संतंविविधंवसु ॥ अहंधनमनंतंहिप्रार्थयेविपुलव्रत ६० ॥ रामउवाच ॥ हिरण्यंममयच्चान्यद्वसुकिंचिदिहस्थितम् ॥ ब्राह्मणेभ्योमयादत्तंसर्व
मेतत्तपोधन ६१ तथैवेयंधरादेवीसागरांतासपत्तना ॥ कश्यपायमयादत्ताकृत्स्नानगरमालिनी ६२ शरीरमात्रमेवाद्यममेदमवशेषितम् ॥ अस्त्राणिचमहार्हाणि
शस्त्राणिविविधानिच ६३ अस्त्राणिवाशरीरंवावरयैतन्मयोद्यतम् ॥ वृणीष्वकिंप्रयच्छामितुभ्यंद्रोणवदाशुतत् ६४ ॥ द्रोणउवाच ॥ अस्त्राणिमेसमग्राणिससं
हाराणिभार्गव ॥ सप्रयोगरहस्यानिदातुमर्हस्यशेषतः ६५ तथेत्युक्त्वाततस्तस्मैप्रादादस्त्राणिभार्गवः ॥ सरहस्यव्रतंचैवधनुर्वेदमशेषतः ६६ प्रतिगृह्यतुतत्सर्वंकृ
तास्त्रोद्विजसत्तमः ॥ प्रियंसखायंसुप्रीतोजगामद्रुपदंप्रति ६७ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वणिद्रोणस्यभार्गवादस्त्रप्राप्तौत्रिंशदधिकशततमोऽध्यायः
॥ १३० ॥ वैशंपायनउवाच ॥ ततोद्रुपदमासाद्यभारद्वाजःप्रतापवान् ॥ अब्रवीत्पार्थिवंराजन्सखायंविद्धिमामिह १ इत्येवमुक्तःसख्यासप्रीतिपूर्वंजनेश्वरः ॥ भार
द्वाजेनपांचाल्योनामृष्यतवचोऽस्यतत् २ सक्रोधामर्षजिह्मभ्रूःकषायीकृतलोचनः ॥ ऐश्वर्यमदसंपन्नोद्रोणंराजाऽब्रवीदिदम् ३ ॥ द्रुपदउवाच ॥ अकृतेयंतवप्रज्ञा
ब्रह्मन्नातिसमंजसा ॥ यन्मांब्रवीषिप्रसभंसखातेऽहमितिद्विज ४ नहिराज्ञामुदीर्णानामेवंभूतैर्नरैःक्वचित् ॥ सख्यंभवतिमंदात्मन्श्रियाहीनैर्धनच्युतैः ५ सौहृदान्यपि
जीर्यंतेकालेनपरिजीर्यतः ॥ सौहृदंमेत्वयाह्यासीत्पूर्वंसामर्थ्यबंधनम् ६ नसख्यमजरंलोकेहृदितिष्ठतिकस्यचित् ॥ कालोह्येनंविहरतिक्रोधोवैनंरहत्युत ७
मैवंजीर्णमुपास्वत्वंसख्यंभवत्वपाकृधि ॥ आसीत्सख्यंद्विजश्रेष्ठत्वयामेऽर्थनिबंधनम् ८ नदरिद्रोवसुमतोनाविद्वान्विदुषःसखा ॥ नशूरस्यसखाक्लीबःसखिपूर्वं
किमिष्यते ९ ययोरेवसमंवित्तंययोरेवसमंश्रुतम् ॥ तयोर्विवाहःसख्यंचनतुपुष्टविपुष्टयोः १० नाश्रोत्रियःश्रोत्रियस्यनारथीरथिनःसखा ॥ नाराजापार्थिवस्यापि
सखिपूर्वंकिमिष्यते ११ ॥ ॥ वैशंपायनउवाच ॥ द्रुपदेनैवमुक्तस्तुभारद्वाजःप्रतापवान् ॥ मुहूर्तंचिंतयित्वातुमन्युनाऽभिपरिप्लुतः १२ सविनि
श्चित्यमनसापांचाल्यंप्रतिबुद्धिमान् ॥ जगामकुरुमुख्यानांनगरंनागसाह्वयम् १३ सनागपुरमागम्यगौतमस्यनिवेशने ॥ भारद्वाजोऽवसत्तत्रप्रच्छन्नंद्विजसत्तमः १४

जीर्णंभवत् जीर्णत्वंप्राप्नुवत्सख्यंमाउपास्वतुपुनः अपाकृधिदूरीकुरु । यद्वा भवतुजीर्णंसख्यंतत्तुएवंपूर्ववन्मा उपास्वकिंत्वपाकृधिनाशयत्यजेत्यर्थः । हिंसार्थस्यस्वादिकृञोरूपं । अत्रापिहे तुः अर्थनिबंधनं ८ एतदेवविवृणोतिनदरिद्रइत्यादिना पूर्वंसखाइतिसखिपूर्वंजीर्णंसख्यंतत्किमिष्यतेअपितुनैवेतिकाकायोज्यं ९ विपुष्टःकृशोनिर्धनोवा १० । ११ द्रुपदेनेति पांचाल्यं गर्वितंचिंतयित्वातत्परःभवेत्पार्थमनसाविनिश्चित्यप्रतिबुद्धिःप्रतीपबुद्धिःशत्रुबुद्धिस्तद्वान्सन्नागसाह्वयंजगामेतिद्वयोःसंबंधः १२ । १३ । १४ ॥१२३॥

अस्यतनुजोऽश्वत्थामा नाबुध्यंतद्रोणपुत्रोऽयमितिनज्ञातवंतः १५ । १६ वीटयायवाकारेणप्रादेशमात्रकाष्ठेन यत्हस्तमात्रदंडेनउपर्युपरिकुमाराःप्रक्षिपंति लोहगुलिकेत्यन्ये १७ । १८

ततोऽस्यतनुजःपार्थान्कृपस्यानंतरंप्रभुः ॥ अस्त्राणिशिक्षयामासनाबुध्यंतचतंजनाः १५ एवंसतत्रगूढात्माकंचित्कालमुवासह ॥ कुमारास्त्वथनिष्क्रम्यसमे
तागजसाह्वयात् १६ क्रीडंतोवीटयातत्रवीराःपर्यचरन्मुदा ॥ पपातकूपेसावीटातेषांवैक्रीडतांतदा १७ ततस्तेयत्नमातिष्ठन्वीटामुद्धर्तुमादृताः ॥ नचतेप्रत्य
पद्यंतकर्मवीटोपलब्धये १८ ततोऽन्योन्यमवेक्षंतव्रीडयाऽवनताननाः ॥ तस्यायोगमविंदंतोभृशंचोत्कंठिताऽभवन् १९ तेऽपश्यन्ब्राह्मणंश्याममापन्नंपलि
तंकृशम् ॥ कृत्यवंतमदूरस्थमग्निहोत्रपुरस्कृतम् २० तेतंदृष्ट्वामहात्मानमुपगम्यकुमारकाः ॥ भग्नोत्साहक्रियात्मानोब्राह्मणंपर्यवारयन् २१ अथद्रोणःकुमारां
स्तान्दृष्ट्वाकृत्यवतस्तदा ॥ प्रहस्यमंदंपैशल्यादभ्यभाषतवीर्यवान् २२ अहोवोधिग्बलंक्षात्रंधिगेतांवःकृतास्त्रताम् ॥ भरतस्यान्वयेजातायेवीटांनाधिगच्छत २३
वीटांचमुद्रिकांचैवह्यहमेतदपिद्वयम् ॥ उद्धरेयमिषीकाभिर्भोजनंमेप्रदीयताम् २४ एवमुक्त्वाकुमारांस्तान्द्रोणःस्वांगुलिवेष्टनम् ॥ कूपेनिरुदकेतस्मिन्नपातयद
रिंदमः २५ ततोऽब्रवीत्तदाद्रोणंकुंतीपुत्रोयुधिष्ठिरः ॥ युधिष्ठिरउवाच ॥ कृपस्यानुमतेब्रह्मन्भिक्षामाप्नुहिशाश्वतीम् २६ एवमुक्तःप्रत्युवाचप्रहस्यभरतानि
दम् ॥ द्रोणउवाच ॥ एषामुष्टिरिषीकाणांमयाऽस्त्रेणाभिमंत्रिता २७ अस्यावीर्यंनिरीक्षध्वंयदन्यस्यनविद्यते ॥ भेत्स्यामीषीकयावीटांतामिषीकांतथाऽन्यया
२८ तामन्ययासमायोगेवीटायाग्रहणंमम ॥ वैशंपायनउवाच ॥ ततोयथोक्तंद्रोणेनतत्सर्वंकृतमंजसा २९ तदवेक्ष्यकुमारास्तेविस्मयोत्फुल्ललोचनाः ॥ आश्चर्य
मिदमत्यंतमितिमत्वावचोऽब्रुवन् ३० ॥ कुमाराऊचुः ॥ मुद्रिकामपिविप्रर्षेशीघ्रमेतांसमुद्धर ॥ वैशंपायनउवाच ॥ ततःशरंसमादायधनुर्द्रोणोमहायशाः ३१
शरेणविद्ध्वामुद्रांतामूर्ध्वमावाहयत्प्रभुः ॥ सशरंसमुपादायकूपादंगुलिवेष्टनम् ३२ ददौततःकुमाराणांविस्मितानामविस्मितः ॥ मुद्रिकामुद्धृतांदृष्ट्वातमाहुस्तेकुमा
रकाः ३३ ॥ कुमाराऊचुः ॥ अभिवादयामहेब्रह्मन्नैतदन्येषुविद्यते ॥ कोऽसिकस्यासिजानीमोवयंकिंकरवामहे ३४ ॥ वैशंपायनउवाच ॥ एवमुक्तस्ततो
द्रोणःप्रत्युवाचकुमारकान् ॥ द्रोणउवाच ॥ आचक्षध्वंचभीष्मायरूपेणचगुणैश्चमाम् ३५ सएवसुमहातेजाःसांप्रतंप्रतिपत्स्यते ॥ वैशंपायनउवाच ॥ तथे
त्युक्त्वाचगत्वाचभीष्ममूचुःकुमारकाः ३६ ब्राह्मणस्यवचस्तथ्यंतच्चकर्मतथाविधम् ॥ भीष्मःश्रुत्वाकुमाराणांद्रोणंतंप्रत्यजानत ३७ युक्तरूपःसहिगुरुरित्येवमनु
चिंत्यच ॥ अथैनमानीयतदास्वयमेवसुसत्कृतम् ३८ परिपप्रच्छनिपुणंभीष्मःशस्त्रभृतांवरः ॥ हेतुमागमनेतच्चद्रोणःसर्वंन्यवेदयत् ३९ ॥ द्रोणउवाच ॥ महर्षे
रग्निवेशस्यसकाशमहमच्युत ॥ अस्त्रार्थमगमंपूर्वंधनुर्वेदचिकीर्षया ४० ब्रह्मचारीविनीतात्माजटिलोबहुलाःसमाः ॥ अवसंसुचिरंतत्रगुरुशुश्रूषणेरतः ४१

१९ । २० । २१ पैशल्यात्कौशल्यात् २२ । २३ मुद्रिकांचमयात्यज्यमानां २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ सांप्रतंयुक्तंप्रतिपत्स्यतेज्ञास्यति ३६ । ३७ । ३८ । ३९ चिकीर्षयाजिज्ञासयाकृविज्ञानेइत्यस्यरूपं ४० । ४१

४२ सखावयस्यः उपकारकर्तृत्वादेवप्रियोबल्लभश्च वर्त्तयन्वसन् ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० दिशःसंदेहयत्दिङ्मोहमजनयत् । अङभावआर्षःशत्रंतवा ५१ स्नातको
यःकश्चिदल्पगोधनःस्वधर्मलोपाभावसीदेतातोबहुगोधनवतोब्राह्मणस्यप्रतिग्रहमिच्छन् ५२ अंतादंतंदेशाद्देशं ५३ । ५४ । ५५ । ५६ । ५७ संभाषतांसंभाषमाणानां अच्यवत्धर्मच्चुता

पांचाल्योराजपुत्रश्चयज्ञसेनोमहाबलः ॥ इष्वस्त्रहेतोर्न्यवसत्तस्मिन्नेवगुरौप्रभुः ४२ समेतत्रसखाचासीदुपकारीप्रियश्चमे ॥ तेनाहंसहसंगम्यवर्तयन्सुचिरंप्रभो ४३
बाल्यात्प्रभृतिकौरव्यसहाध्ययनमेवच ॥ समेसखासदातत्रप्रियवादीप्रियंकरः ४४ अब्रवीदितिमांभीष्मवचनंप्रीतिवर्धनम् ॥ अहंप्रियतमःपुत्रःपितुर्द्रोणमहात्म
नः ४५ अभिषेक्ष्यतिमांराज्येसपांचाल्योयदातदा ॥ त्वद्भोग्यंभवितातातसखेसत्येनतेशपे ४६ ममभोगाश्चवित्तंचत्वदधीनंसुखानिच ॥ एवमुक्त्वाऽथवव्राज
कृतास्त्रःपूजितोमया ४७ तच्चवाक्यमहंनित्यंमनसाधारयंस्तदा ॥ सोऽहंपितृनियोगेनपुत्रलोभाद्यशस्विनीम् ४८ नातिकेशींमहाप्रज्ञामुमयेममहाव्रताम् ॥
अग्निहोत्रेचसत्रेचदमेचसततंरताम् ४९ अलभद्गौतमीपुत्रमश्वत्थामानमौरसम् ॥ भीमविक्रमकर्माणमादित्यसमतेजसम् ५० पुत्रेणतेनप्रीतोऽहंभरद्वाजोम
यायथा ॥ गोक्षीरंपिबतोदृष्ट्वाधनिनस्तत्रपुत्रकान् ॥ अश्वत्थामाऽरुदद्बालस्तन्मेसंदेहयद्दिशः ५१ नस्नातकोवसीदेववर्त्तमानःस्वकर्मसु ॥ इतिसंचिंत्यमनसातं
देशंबहुशोभ्रमन् ५२ विशुद्धमिच्छन्गांगेयधर्मोपेतंप्रतिग्रहम् ॥ अंतादंतंपरिक्रम्यनाध्यगच्छंपयस्विनीम् ५३ अथपिष्टोदकेनैनंलोभयंतिकुमारकाः ॥
पीत्वापिष्टरसंबालःक्षीरंपीतंमयाऽपिच ५४ ननर्तोत्थायकौरव्यहृष्टोबाल्याद्विमोहितः ॥ तंदृष्ट्वानृत्यमानंतुबालैःपरिवृतंसुतम् ५५ हास्यतामुपसंप्राप्तंकश्मलंत
त्रमेऽभवत् ॥ द्रोणंधिगस्त्वधनिनंयोधनंनाधिगच्छति ५६ पिष्टोदकंसुतोयस्यपीत्वाक्षीरस्यतृष्णया ॥ नृत्यतिस्ममुदाविष्टःक्षीरंपीतंमयाऽप्युत ५७ इतिसंभा
षतांवाचंश्रुत्वामेबुद्धिरच्यवत् ॥ आत्मानंचात्मनागर्हन्मनसेदंव्यचिंतयम् ५८ अपिचाहंपुराविप्रैर्वर्जितोगर्हितोवसे ॥ परोपसेवांपापिष्ठांनचकुर्यांधनेप्सया ५९
इतिमत्वाप्रियंपुत्रंभीष्मादायततोह्यहम् ॥ पूर्वस्नेहानुरागित्वात्सदारःसौमकिंगतः ६० अभिषिक्तंतुश्रुत्वैवकृतार्थोऽस्मीतिचिंतयन् ॥ प्रियंसखायंसुप्रीतोराज्य
स्थंसमुपागमम् ६१ संस्मरन्संगमंचैववचनंचैवतस्यतत् ॥ ततोद्रुपदमागम्यसखिपूर्वमहंप्रभो ६२ अब्रुवंपुरुषव्याघ्रसखायंविद्धिमामिति ॥ उपस्थितस्तुद्रुपदं
सखिवच्चास्मिसंगतः ६३ समांनिराकारमिवप्रहसन्निदमब्रवीत् ॥ अकृतेयंतवप्रज्ञाब्रह्मन्नातिसमंजसा ६४ यदात्थमांत्वंप्रसभंसखातेऽहमितिद्विज ॥ संगता
नीहजीर्यंतिकालेनपरिजीर्यतः ६५ सौहृदंमेत्वयाह्यासीत्पूर्वंसामर्थ्यबंधनम् ॥ नाश्रोत्रियःश्रोत्रियस्यनारथीरथिनःसखा ६६ साम्याद्धिसख्यंभवतिवैषम्यान्नो
पपद्यते ॥ नसख्यमजरंलोकेविद्यतेजातुकस्यचित् ६७ कालोवैनंविहरतिक्रोधोवैनंरहत्युत ॥ मैवंजीर्णमुपास्स्वत्वंसत्यंभवत्वपाकृधि ६८ ॥१२५॥

ऽभूत् आत्मानंदरिद्रदोषादात्मनामनसागर्हन् इदंवक्ष्यमाणं ५८ । ५९ पुरापूर्वंदरिद्रोऽयमितिगर्हितोऽपिवसेउपवासंकुर्वंनतुसेवांकुर्यामितिमत्वानिश्चित्यापिपुत्रस्यप्रियत्वात्सौमकिंद्रुपदंगतइति
संबंधः ६० । ६१ तत्तस्यवचनंममराज्यंत्वद्भोग्यंभविष्यतीति ६२ । ६३ निराकारंनिरस्तोत्तमरूपंहनिजनमिव अकृतेत्यादिमाग्ध्याख्यातं ६४ । ६५ । ६६ । ६७ । ६८

६९ । ७० । ७१ राज्यार्थेसंविदंत्वद्भोग्यंममराज्यमितिसंकेतं ७२ । ७३ । ७४ । ७५ । ७६ प्रतिपादयअस्मत्कुमारेभ्यइतिशेषः कुरुक्षयेकुरुगृहे ७७ । ७८ । ७९ ॥ इतिआदिपर्वणिनीलकंठीये

आसीत्सख्यंद्विजश्रेष्ठत्वयामेऽर्थनिबंधनम् ॥ नह्यनाढ्यःसखाढ्यस्यनाविद्वान्विदुषःसखा ६९ नशूरस्यसखाक्लीबःसखिपूर्वंकिमिष्यते ॥ नहिराज्ञामुदीर्णानामेवंभू
तैर्नरैःक्वचित् ७० सख्यंभवतिमंदात्मन्श्रियाहीनैर्धनच्युतैः ॥ नाश्रोत्रियःश्रोत्रियस्यनारथीरथिनःसखा ७१ नाराजापार्थिवस्यापिसखिपूर्वंकिमिष्यते ॥ अहंत्व
यानजानामिराज्यार्थेसंविदंकृताम् ७२ एकरात्रंतुतेब्रह्मन्कामंदास्यामिभोजनम् ॥ एवमुक्तस्त्वहंतेनसदारःप्रस्थितस्तदा ७३ तांप्रतिज्ञांप्रतिज्ञायर्यांकर्त्ताऽस्म्य
चिरादिव ॥ द्रुपदेनैवमुक्तोऽहंमन्युनाऽभिपरिप्लुतः ७४ अभ्यागच्छंकुरून्भीष्मशिष्यैरर्थीगुणान्वितैः ॥ ततोऽहंभवतःकामंसंवर्धयितुमागतः ७५ इदंनागपुरं
रम्यंब्रूहिकिंकरवाणिते ॥ वैशंपायनउवाच ॥ एवमुक्तस्तदाभीष्मोभारद्वाजमभाषत ७६ ॥ भीष्मउवाच ॥ अपज्यंक्रियतांचापंसाध्वस्त्रंप्रतिपादय ॥ भुंक्ष्व
भोगान्भृशंप्रीतःपूज्यमानःकुरुक्षये ७७ कुरूणामस्तियद्वित्तंराज्यंचेदंसराष्ट्रकम् ॥ त्वमेवपरमोराजासर्वेचकुरवस्तव ७८ यच्चतेप्रार्थितंब्रह्मन्कृतंतदितिचिं
त्यताम् ॥ दिष्ट्याप्राप्तोऽसिविप्रर्षेमहान्मेऽनुग्रहःकृतः ७९ ॥ इति श्रीमहा० आ० संभवप० भीष्मद्रोणसमागमे एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥
॥ वैशंपायनउवाच ॥ ततःसंपूजितोद्रोणोभीष्मेणद्विपदांवरः ॥ विशश्राममहातेजाःपूजितःकुरुवेश्मनि १ विश्रांतेऽथगुरौतस्मिन्पौत्रानादायकौरवान् ॥ शि
ष्यत्वेनददौभीष्मोवसूनिविविधानिच २ गृहंचसुपरिच्छन्नंधनधान्यसमाकुलम् ॥ भारद्वाजायसुप्रीतःप्रत्यपादयतप्रभुः ३ सतान्शिष्यान्महेष्वासःप्रतिजग्राह
कौरवान् ॥ पांडवान्धार्त्तराष्ट्रांश्चद्रोणोमुदितमानसः ४ प्रतिगृह्यचतान्सर्वान्द्रोणोवचनमब्रवीत् ॥ रहस्येकःप्रतीतात्माकृतोपसदनांस्तथा ५ ॥ द्रोणउवाच ॥
कार्यमेकांक्षितंकिंचिद्धृदिसंपरिवर्त्तते ॥ कृतास्त्रैस्तत्प्रदेयंमेतदेतद्वदतानघाः ६ वैशंपायनउवाच ॥ तच्छ्रुत्वाकौरवेयास्तेतूष्णींमासन्विशांपते ॥ अर्जुनस्तुत
तःसर्वंप्रतिजज्ञेपरंतप ७ ततोऽर्जुनंतदामूर्ध्निसमाघ्रायपुनःपुनः ॥ प्रीतिपूर्वंपरिष्वज्यप्ररुरोदमुदातदा ८ ततोद्रोणःपांडुपुत्रानस्त्राणिविविधानिच ॥ ग्राहयामासदि
व्यानिमानुषाणिचवीर्यवान् ९ राजपुत्रास्तथाचान्येसमेत्यभरतर्षभ ॥ अभिजग्मुस्ततोद्रोणमस्त्रार्थेद्विजसत्तमम् १० वृष्णयश्चांधकाश्चैवनानादेश्याश्चपार्थिवाः ॥
सूतपुत्रश्चराधेयोगुरुंद्रोणमियात्तदा ११ स्पर्धमानस्तुपार्थेनसूतपुत्रोऽत्यमर्षणः ॥ दुर्योधनंसमाश्रित्यसोऽवमन्यतपांडवान् १२ अभ्ययात्सततोद्रोणंधनुर्वेदचि
कीर्षया ॥ शिक्षाभुजबलोद्योगैस्तेषुसर्वेषुपांडवः १३ अस्त्रविद्यानुरागाच्चविशिष्टोऽभवदर्जुनः ॥ तुल्येष्वस्त्रप्रयोगेषुलाघवेसौष्ठवेषुच १४ सर्वेषामेवशिष्याणां
बभूवाभ्यधिकोऽर्जुनः ॥ ऐंद्रिमप्रतिमंद्रोणउपदेशेष्वमन्यत १५ एवंसर्वकुमाराणामिष्वस्त्रंप्रत्यपादयत् ॥ कमंडलुंचसर्वेषांप्रायच्छच्चिरकारणात् १६

भारतभावदीपेएकत्रिंशदधिकशततमोऽध्यायः ॥१३१॥ ततइति १ । २ सुपरिछन्नंसुधाद्यालिप्तं ३ । ४ प्रतीतात्माहृष्टचित्तः कृतोपसदनान्कृतपादग्रहणान् ५ । ६ । ७ । ८ । ९ । १० । ११ । १२
धनुर्वेदस्यचिकीर्षयाजिज्ञासया शिक्षादिभिःपांडवोद्रोणमभ्ययादभिगतः तत्तुल्पोऽभवदित्यर्थः १३ अतएवतेषुविशिष्टः एतदेवाह तुल्येष्विति १४ । १५ कमंडलुंसूक्ष्ममुखत्वाद्विलंबेनपूर्णार्यं १६

कुंभंविस्तीर्णमुखत्वात्सद्यःपूरणीयं तस्यफलमाह यावदिति १७ औहततर्कितवान् १८ विशेषोपचयेगुणवृद्धौअपृथक्सहैवास्ते १९ अतोनव्यहीयतनविहीनोऽभूत् २० योगमैकाग्र्यं २१ सूदंसूपकारंप्रति अन्नंनदेयं किंत्वंधकारेमुखादन्यत्रग्रासाःपतिष्यंतीतिनाहंददामीतिसत्ववाक्यइतिभावः विजयेअर्जुने । अयंभावः अत्यभ्यासान्मुखादन्यत्रग्रासानपतंत्येवएवंतमपिशब्दा दिलक्ष्यादन्यत्रशराअपिनपतेयुरित्युक्तोऽर्जुनोयदिकेनेदमुक्तमितिपृच्छेत्तर्हिलौकिकएवायमर्थइतितंप्रतिवक्तव्यंनतुद्रोणवाक्यमेतदिति २२ एवंगुरुणाशिष्यस्याभ्यासेप्रवृत्तौज्ञापितायांततःप्रागेवार्जु

पुत्रायचददौकुंभमविलंबनकारणात् ॥ यावत्तेनोपगच्छंतितावदस्मैपरांक्रियाम् १७ द्रोणआचष्टपुत्रायतत्कर्मजिष्णुरौहत ॥ ततःसवारुणास्त्रेणपूरयित्वाकमं
डलुम् १८ सममाचार्यपुत्रेणगुरुमभ्येतिफाल्गुनः ॥ आचार्यपुत्रात्तस्मात्तुविशेषोपचयेऽपृथक् १९ नव्यहीयतमेधावीपार्थोऽप्यस्त्रविदांवरः ॥ अर्जुनःपरमंय
त्नमातिष्ठद्गुरुपूजने २० अस्त्रेचपरमंयोगंप्रियोद्रोणस्यचाभवत् ॥ तंदृष्ट्वानित्यमुद्युक्तमिष्वस्त्रंप्रतिफाल्गुनम् २१ आहूयवचनंद्रोणोरहःसूदमभाषत ॥ अंध
कारेऽर्जुनायान्नंनदेयंतेकदाचन ॥ नचाख्येयमिदंचापिमद्वाक्यंविजयेत्वया २२ ततःकदाचिद्भुंजानेप्रववौवायुरर्जुने ॥ तेनतत्रप्रदीपःसदीप्यमानोविलोपितः
२३ भुंक्तएवतुकौंतेयोनास्यादन्यत्रवर्तते ॥ हस्तस्तेजस्विनस्तस्यअनुग्रहणकारणात् २४ तदभ्यासकृतंमत्वारात्रावपिसपांडवः ॥ योग्यांचक्रेमहाबाहुर्धनुषापां
डुनंदनः २५ तस्यज्यातलनिर्घोषंद्रोणःशुश्रावभारत ॥ उपेत्यचैनमुत्थायपरिष्वज्येदमब्रवीत् २६ ॥ द्रोणउवाच ॥ प्रयतिष्येतथाकर्तुंयथानान्योधनुर्धरः ॥
त्वत्समोभवितालोकेसत्यमेतद्ब्रवीमिते २७ वैशंपायनउवाच ॥ ततोद्रोणोऽर्जुनंभूयोहयेषुचगजेषुच ॥ रथेषुभूमावपिचरणशिक्षामशिक्षयत् २८ गदायुद्धेऽसि
चर्यायांतोमरप्रासशक्तिषु ॥ द्रोणःसंकीर्णयुद्धेचशिक्षयामासकौरवान् २९ तस्यतत्कौशलंश्रुत्वाधनुर्वेदजिघृक्षवः ॥ राजानोराजपुत्राश्चसमाजग्मुःसहस्रशः ३०
ततोनिषादराजस्यहिरण्यधनुषःसुतः ॥ एकलव्योमहाराजद्रोणमभ्याजगामह ३१ नसतंप्रतिजग्राहनैषादिरितिचिंतयन् ॥ शिष्यंधनुषिधर्मज्ञस्तेषामेवान्ववे
क्षया ३२ सतुद्रोणस्यशिरसापादौगृह्यपरंतपः ॥ अरण्यमनुसंप्राप्यकृत्वाद्रोणंमहीमयम् ३३ तस्मिन्नाचार्यवृत्तिंचपरमामास्थितस्तदा ॥ इष्वस्त्रेयोगमातस्थेपरं
नियममास्थितः ३४ परयाश्रद्धयोपेतोयोगेनपरमेणच ॥ विमोक्षादानसंधानेलघुत्वंपरमापसः ३५ अथद्रोणाभ्यनुज्ञाताःकदाचित्कुरुपांडवाः ॥ रथैर्विनिर्य
युःसर्वेमृगयामरिमर्दन ३७ तत्रोपकरणंगृह्यनरःकश्चिद्यदृच्छया ॥ राजन्ननुजगामैकःश्वानमादायपांडवान् ३८ तेषांविचरतांतत्रतत्तत्कर्मचिकीर्षया ॥ श्वाचर
न्सवनेमूढोनैषादिंप्रतिजग्मिवान् ३८ सकृष्णमलदिग्धांगंकृष्णाजिनजटाधरम् ॥ नैषादिंश्वासमालक्ष्यभषंस्तस्थौतदंतिके ३९ ॥१२५॥

नःस्वदृष्टांतेनैवतज्ज्ञातवानित्याहद्वाभ्यां ततइति २३ अनुग्रहणमभ्यासः २४ योग्यामभ्यासं २५ श्रवणोत्तरमुत्थायोपेत्येतिक्रमः २६ । २७ २८ संकीर्णयुद्धेयुगपदनेकायुधप्रयोगे युगपदनेकैःसहयुद्धेवा २९ । ३० । ३१ तेषामन्ववेक्षयातेभ्योऽधिकोमाभूदितिबुद्ध्या ३२ महीमयंमृन्मयं ३३ इष्वस्त्रेइषुप्रयोगे योगमैकाग्र्यं ३४ लघुत्वंशीघ्रप्रयोक्तृत्वं ३५ । ३६ उपकरणंश्ववागुरादिमुख्यंतुकरणमायुधमेव ३७ । ३८ । ३९

अस्त्रेप्रयोगेलाघवंकौशलं येनशरामुखेप्रविष्टाएवनतुतद्विद्धवंतः ४० ।४१। ४२ । ४३ । ४४ । ४५ ।४६।४७।४८।४९।५०।५१।५२। ५३ वेतनंगुरुदक्षिणारूपं ५४।५५।५६।५७ छित्त्वेति अविचार्येति

तदातस्याथभषतःशुनःसप्तशरान्मुखे ॥ लाघवंदर्शयन्नस्त्रेमुमोचयुगपद्यथा ४० सतुश्वाशरपूर्णास्यःपांडवानाजगामह ॥ तंदृष्ट्वापांडवावीराःपरंविस्मयमागताः ४१
लाघवंशब्दवेधित्वंदृष्ट्वातत्परमंतदा ॥ प्रेक्ष्यतंव्रीडिताश्चासन्प्रशशंसुश्चसर्वशः ४२ तंततोऽन्वेषमाणास्तेवनेवननिवासिनम् ॥ ददृशुःपांडवाराजन्नस्यंतम
निशंशरान् ४३ नचैनमभिजानंस्तेतदाविकृतदर्शनम् ॥ तथैनंपरिपप्रच्छुःकोभवान्कस्यवेत्युत ४४ ॥ एकलव्यउवाच ॥ निषादाधिपतेर्वीराहिरण्यध
नुषःसुतम् ॥ द्रोणशिष्यंचमांवित्तधनुर्वेदकृतश्रमम् ४५ ॥ वैशंपायनउवाच ॥ तेतमाज्ञायतत्त्वेनपुनरागम्यपांडवाः ॥ यथावृत्तंवनेसर्वंद्रोणायाचख्युरद्भु
तम् ४६ कौंतेयस्त्वर्जुनोराजन्नेकलव्यमनुस्मरन् ॥ रहोद्रोणंसमासाद्यप्रणयादिदमब्रवीत् ४७ ॥ अर्जुनउवाच ॥ तदाहंपरिरभ्यैकःप्रीतिपूर्वमिदंवचः ॥ भव
तोक्तोनमेशिष्यस्त्वद्विशिष्टोभविष्यति ४८ अथकस्मान्मद्विशिष्टोलोकादपिचवीर्यवान् ॥ अन्योऽस्तिभवतःशिष्योनिषादाधिपतेःसुतः ४९॥ वैशंपायनउवाच॥
मुहूर्तमिवतंद्रोणश्चिंतयित्वाविनिश्चयम् ॥ सव्यसाचिनमादायनैषादिंप्रतिजग्मिवान् ५० ददर्शमलदिग्धांगंजटिलंचीरवाससम् ॥ एकलव्यंधनुष्पाणिमस्यंत
मनिशंशरान् ५१ एकलव्यस्तुतंदृष्ट्वाद्रोणमायांतमंतिकात् ॥ अभिगम्योपसंगृह्यजगामशिरसामहीम् ५२ पूजयित्वाततोद्रोणंविधिवत्सनिषादजः ॥ निवेद्यशि
ष्यमात्मानंतस्थौप्रांजलिरग्रतः ५३ ततोद्रोणोऽब्रवीद्राजन्नेकलव्यमिदंवचः ॥ यदिशिष्योऽसिमेवीरवेतनंदीयतांमम ५४ एकलव्यस्तुतच्छ्रुत्वाप्रीयमाणोऽब्रवी
दिदम् ॥ एकलव्यउवाच ॥ किंप्रयच्छामिभगवन्नाज्ञापयतुमांगुरुः ५५ नहिकिंचिददेयंमेगुरवेब्रह्मवित्तम ॥ वैशंपायनउवाच ॥ तमब्रवीत्त्वयांगुष्ठोदक्षिणो
दीयतामिति ५६ एकलव्यस्तुतच्छ्रुत्वावचोद्रोणस्यदारुणम् ॥ प्रतिज्ञामात्मनोरक्षन्सत्येचनियतःसदा ५७ तथैवहृष्टवदनस्तथैवादीनमानसः ॥ छित्त्वाऽविचा
र्यतंप्रादाद्द्रोणायांगुष्ठमात्मनः ५८ ततःशरंतुनैषादिरंगुलीभिर्व्यकर्षत ॥ नतथाचसशीघ्रोऽभूद्यथापूर्वंनराधिप ५९ ततोऽर्जुनःप्रीतमनाबभूवविगतज्वरः ॥
द्रोणश्चसत्यवागासीन्नान्योऽभिभवितार्जुनम् ६० द्रोणस्यतुतदाशिष्यौगदायोग्यौबभूवतुः ॥ दुर्योधनश्चभीमश्चसदासंरब्धमानसौ ६१ अश्वत्थामारहस्येषुसर्वेष्व
भ्यधिकोऽभवत् ॥ तथातिपुरुषानन्यान्त्सारुकौयमजावुभौ ६२ युधिष्ठिरोरथश्रेष्ठःसर्वत्रतुधनंजयः ॥ प्रथितःसागरांतायांरथयूथपयूथपः ६३ बुद्धियोगबलोत्साहैः
सर्वास्त्रेषुचनिष्ठितः ॥ अस्त्रेगुर्वनुरागेचविशिष्टोऽभवदर्जुनः ६४ तुल्येष्वस्त्रोपदेशेषुसौष्ठवेनचवीर्यवान् ॥ एकःसर्वकुमाराणांबभूवातिरथोऽर्जुनः ६५ प्राणाधिकंभी
मसेनंकृतविद्यंधनंजयम् ॥ धार्तराष्ट्रादुरात्मानोनामृष्यंतपरस्परम् ६६ तांस्तुसर्वान्समानीयसर्वविद्यास्त्रशिक्षितान् ॥ द्रोणःप्रहरणज्ञानेजिज्ञासुःपुरुषर्षभः ६७

च्छेदः । 'ससत्यसंधंनैषादिंदृष्ट्वाप्रीतोऽब्रवीदिदं ॥ एवंकर्तव्यमितिवाएकलव्यमभाषत'इतिकचित्पाठंतितत्रएवंकर्तव्यमितितर्जनीमध्यमाभ्यांशरंधृत्वाज्याकर्षणंकर्तव्यमित्यभिनीयदर्शयति५८।५९ ६० गदायोग्यौगदायुद्धेऽभ्यासवंतौ ६१ त्सारुकौत्सरुःखड्गादिमुष्टिस्तद्ग्रहणप्रधानेयुद्धेकुशलौ ६२ रथश्रेष्ठः। सप्तमीशौंडैरितिसमासः ६३ । ६४ । ६५।६६ प्रहरणज्ञानेकःकथंप्रहरतीतिविचारे ६७

भासंनीलपक्षंपक्षिणं । शकुंतमित्यन्ये । गृध्रमित्यपरे ६८ । ६९ । ७० अंगिरसांवरोद्रोणः ७१ । ७२ । ७३ भासंपश्यतदेकाग्रदृष्टिर्भवेत्यर्थः ७४ । ७५ । ७६ तमिति वृक्षादिदर्शं



कृत्रिमंभासमारोप्यवृक्षाग्रेशिल्पिभिःकृतं ॥ अविज्ञातंकुमाराणांलक्ष्यभूतमुपादिशत् ६८ ॥ द्रोणउवाच ॥ शीघ्रंभवंतःसर्वेऽपिधनूंष्यादायसर्वशः ॥ भासमे
तंसमुद्दिश्यतिष्ठध्वंसंधितेषवः ६९ मद्वाक्यसमकालंतुशिरोऽस्यविनिपात्यतां ॥ एकैकशोनियोक्ष्यामितथाकुरुतपुत्रकाः ७० ॥ वैशंपायनउवाच ॥ ततोयु
धिष्ठिरंपूर्वमुवाचांगिरसांवरः ॥ संधत्स्वबाणंदुर्धर्षमद्वाक्यांतेविमुंचतं ७१ ततोयुधिष्ठिरःपूर्वंधनुर्गृह्यपरंतपः ॥ तस्थौभासंसमुद्दिश्यगुरुवाक्यप्रचोदितः ७२
ततोविततधन्वानंद्रोणस्तंकुरुनंदनं ॥ समुहूर्तादुवाचेदंवचनंभरतर्षभ ७३ पश्यैनंतंद्रुमाग्रस्थंभासंनरवरात्मज ॥ पश्यामीत्येवमाचार्यंप्रत्युवाचयुधिष्ठिरः ७४
समुहूर्तादिवपुनर्द्रोणस्तंप्रत्यभाषत ॥ द्रोणउवाच ॥ अथवृक्षमिमंमांवाभ्रातॄन्वाऽपिप्रपश्यसि ७५ तमुवाचसकौंतेयःपश्याम्येनंवनस्पतिं ॥ भवंतंचतथाभ्रातॄन्
भासंचेतिपुनःपुनः ७६ तमुवाचापसर्पेतिद्रोणोऽप्रीतमनाइव ॥ नैतच्छक्यंत्वयावेद्धुंलक्ष्यमित्येवकुत्सयन् ७७ ततोदुर्योधनादींस्तान्धार्तराष्ट्रान्महायशाः ॥
तेनैवक्रमयोगेनजिज्ञासुःपर्यपृच्छत ७८ अन्यांश्चशिष्यान्भीमादीन्राज्ञश्चैवान्यदेशजान् ॥ तथाचसर्वेतत्सर्वंपश्यामइतिकुत्सिताः ७९ ॥ इतिश्रीमहाभारते
आदिपर्वणिसंभवपर्वणिद्रोणशिष्यपरीक्षायांद्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥ ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ ततोधनंजयंद्रोणःस्मयमानो
ऽभ्यभाषत ॥ त्वयेदानींप्रहर्तव्यमेतल्लक्ष्यंविलोक्यताम् १ मद्वाक्यसमकालंतेमोक्तव्योऽत्रभवेच्छरः ॥ वितत्यकार्मुकंपुत्रतिष्ठतावन्मुहूर्तकं २ एवमुक्तः
सव्यसाचीमंडलीकृतकार्मुकः ॥ तस्थौभासंसमुद्दिश्यगुरुवाक्यप्रचोदितः ३ मुहूर्तादिवतंद्रोणस्तथैवसमभाषत ॥ पश्यस्येनंस्थितंभासंद्रुमंमामपिचा
र्जुन ४ पश्याम्येकंभासमितिद्रोणंपार्थोऽभ्यभाषत ॥ नतुवृक्षंभवंतंवापश्यामीतिचभारत ५ ततःप्रीतमनाद्रोणोमुहूर्तादिवतंपुनः ॥ प्रत्यभाषतदुर्धर्षःपांडवानां
महारथम् ६ भासंपश्यसियद्येनंतथाब्रूहिपुनर्वचः ॥ शिरःपश्यामिभासस्यनगात्रमितिसोब्रवीत् ७ अर्जुनेनैवमुक्तस्तुद्रोणोहृष्टतनूरुहः ॥ मुंचस्वेत्यब्रवी
त्पार्थंसमुमोचाविचारयन् ८ ततस्तस्यनगस्थस्यक्षुरेणनिशितेनच ॥ शिरउत्कृत्यतरसापातयामासपांडवः ९ तस्मिन्कर्मणिसंसिद्धेपर्यष्वजतपांडवम् ॥
मेनेचद्रुपदंसंख्येसानुबंधंपराजितम् १० कस्यचित्त्वथकालस्यसशिष्योंऽगिरसांवरः ॥ जगामगंगामभितोमज्जितुंभरतर्षभ ११ अवगाढमथोद्रोणंसलिलेस
लिलेचरः ॥ ग्राहोजग्राहबलवान्जंघांतेकालचोदितः १२ ससमर्थोऽपिमोक्षायशिष्यान्सर्वानचोदयत् ॥ ग्राहंहत्वाततुमोक्षयध्वंमामितित्वरयन्निव १३ त
द्वाक्यसमकालंतुबीभत्सुर्निशितैःशरैः ॥ अवार्यैःपंचभिर्ग्राहंमग्नमंभस्यताडयत् १४ ॥१२७॥

नाद्राक्षमदृष्टित्वंतेषांज्ञात्वासर्वानपिनिराचकार ७७ । ७८ । ७९ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥ ॥ ॥ ॥ ततइति १ । २
३ । ४ । ५ । ६ । ७ । ८ तस्यभासस्य नगस्थस्यवृक्षाग्रस्थितस्य ९ सानुबंधंससहायं १० । ११ अवगाढंजलावगाहिनं १२ मोक्षयध्वंमोचयध्वं १३ । १४

क्रियोपेतंकृतकार्यं १५ । १६ । १७ । १८ । १९ असामान्यमसाधारणं २० । २१ । २२ ॥ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥
कृतास्त्रान्धार्तराष्ट्रांश्चेति १ । २ । ३ कर्मकुमारशिक्षाख्यं ४ मन्यसेऽस्त्रशिक्षादर्शनस्यकालं विधानायरंगभूमेः ५ निर्वेदाद्दुःखात् सचक्षुषांस्पृहयामि सुखायेतिशेषः ६ हेक्षत्तःहेवि

इतरेत्वथसंमूढास्तत्रतत्रप्रपेदिरे ॥ तंतुदृष्ट्वाक्रियोपेतंद्रोणोऽमन्यतपांडवम् १५ विशिष्टंसर्वशिष्येभ्यःप्रीतिमांश्चाभवत्तदा ॥ सपार्थबाणैर्बहुधाखंडशःपरिकल्पि
तः १६ ग्राहःपंचत्वमापेदेजंघांत्यक्त्वामहात्मनः ॥ अथाब्रवीन्महात्मानंभारद्वाजोमहारथम् १७ गृहाणेदंमहाबाहोविशिष्टमतिदुर्धरम् ॥ अस्त्रंब्रह्मशिरोनामसप्र
योगनिवर्तनम् १८ नचतेमानुषेष्वेतत्प्रयोक्तव्यंकथंचन ॥ जगद्विनिर्दहेदेतदल्पतेजसिपातितम् १९ असामान्यमिदंताततलोकेष्वस्त्रंनिगद्यते ॥ तद्धारयेथाः
प्रयतःशृणुचेदंवचोमम २० बाधेतामानुषःशत्रुर्यदित्वांवीरकश्चन ॥ तद्वधायप्रयुंजीथास्तदस्त्रमिदमाहवे २१ तथेतिसंप्रतिश्रुत्यबीभत्सुःसकृतांजलिः ॥ जग्राह
परमास्त्रंतदाहचैनंपुनर्गुरुः ॥ भवितात्वत्समोनान्यःपुमाँल्लोकेधनुर्धरः २२ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वणिद्रोणग्राहमोक्षणेत्रयस्त्रिंशदधिकशततमो
ऽध्यायः ॥ १३३ ॥ ॥ वैशंपायनउवाच ॥ कृतास्त्रान्धार्तराष्ट्रांश्चपांडुपुत्रांश्चभारत ॥ दृष्ट्वाद्रोणोऽब्रवीद्राजन्धृतराष्ट्रंजनेश्वरम् १ कृपस्यसोमदत्तस्य
बाल्हीकस्यचधीमतः ॥ गांगेयस्यचसान्निध्येव्यासस्यविदुरस्यच २ राजन्संप्राप्तविद्यास्तेकुमाराःकुरुसत्तम ॥ तेदर्शयेयुःस्वांशिक्षांराजन्ननुमतेतव ३ ततो
ऽब्रवीन्महाराजःप्रहृष्टेनांतरात्मना ॥ धृतराष्ट्रउवाच ॥ भारद्वाजमहत्कर्मकृतंतेद्विजसत्तम ४ यदानुमन्यसेकालंयस्मिन्देशेयथायथा ॥ तथातथाविधानायस्वय
माज्ञापयस्वमाम् ५ स्पृहयाम्यद्यनिर्वेदात्पुरुषाणांसचक्षुषाम् ॥ अस्त्रहेतोःपराक्रांतान्येमेद्रक्ष्यंतिपुत्रकान् ६ क्षत्तर्यद्गुरुराचार्योब्रवीतिकुरुतत्तथा ॥ नहीद
शंप्रियंमन्येभविताधर्मवत्सल ७ ततोराजानमामंत्र्यनिर्गतोविदुरोबहिः ॥ भारद्वाजोमहाप्राज्ञोमापयामासमेदिनीम् ८ समामवृक्षांनिर्गुल्मामुदक्प्रस्रवणान्वि
ताम् ॥ तस्यांभूमौबलिंचक्रेतिथौनक्षत्रपूजिते ९ अवघुष्टेसमाजेचतदर्थंवदतांवरः ॥ रंगभूमौसुविपुलंशास्त्रदृष्टंयथाविधि १० प्रेक्षागारंसुविहितंचक्रुस्तेतस्य
शिल्पिनः ॥ राज्ञःसर्वायुधोपेतंस्त्रीणांचैवनरर्षभ ११ मंचांश्चकारयामासुस्तत्रजानपदाजनाः ॥ विपुलानुच्छ्रयोपेतान्शिबिकाश्चमहाधनाः १२ तस्मिंस्ततो
ऽहनिप्राप्तेराजाससचिवस्तदा ॥ भीष्मंप्रमुखतःकृत्वाकृपंचाचार्यसत्तमम् १३ मुक्ताजालपरिक्षिप्तंवैडूर्यमणिशोभितम् ॥ शातकुंभमयंदिव्यंप्रेक्षागारमुपागमत् ॥
१४ गांधारीचमहाभागाकुंतीचजयतांवर ॥ स्त्रियश्चराज्ञःसर्वास्ताःसप्रेष्याःसपरिच्छदाः १५ हर्षादारुरुहुर्मंचान्मेरुंदेवस्त्रियोयथा ॥ ब्राह्मणक्षत्रियाद्यंचचातुर्व
र्ण्यंपुराद्द्रुतम् १६ दर्शनेप्सुसमभ्यागात्कुमाराणांकृतास्त्रताम् ॥ क्षणेनैकस्थतांतत्रदर्शनेप्सुर्जगामह १७

दुर ७ । ८ निर्गुल्मांतृणसमूहमूलपिंडरहितां उदक्प्रस्रवणान्वितामुदङ्निम्नां ९ तदर्थंबल्यर्थं समाजेवीरसंग्रहे अवघुष्टेडिंडीरवशब्देनाहूतेसतिबलिंचक्रेइतिपूर्वेणान्वयः १० राज्ञःस्त्रीणां
प्रेक्षार्थमागारंमंचांश्चइतरेषांप्रेक्षार्थंरंगभूमौचक्रुरितिद्वयोःसंबंधः ११ । १२ । १३ । १४ । १५ । १६ । १७

१८ । १९ सांगारकःसभौमः अंशुमान्चंद्रः २० । २१ । २२ बद्धकक्षाःवस्त्रादिनासंवृतांसपृष्ठोदराइत्यर्थः कक्षाबाहूमूलं २३ अस्त्रमस्त्रविद्यांचक्रुःप्रादुश्चक्रुः २४ घृष्टंनिर्भयंयथा स्यात्तथा २५ लाघवोत्कृष्टैर्गतिचातुरीप्रयुक्तैः उद्यंतःउद्यमानाः २६ गंधर्वनगराकारमद्भुतरूपं २७ । २८ धनुषिमार्गान्तिर्यगूर्ध्वान्चललक्ष्यपातनादीन् रथचर्यासुमार्गान्शीघ्रगतप्रत्यागतमदक्षिणाप्रदक्षिणमंडलगत्यादिरूपान् २९ त्सरुमार्गान्तिर्यगूर्ध्वाधःखड्गप्रचलनरूपान् सर्वासुभूमिषुरथादिपृष्ठेषुभुविवा ३० लाघवंक्षैप्र्यं । सौष्ठवंचातुरीं एकेनैवखड्गेनसमंताद्भ्रामितेनयु

प्रवादितैश्चवादित्रैर्जनकौतूहलेनच ॥ महार्णवइवक्षुब्धःसमाजःसोऽभवत्तदा १८ ततःशुक्लांबरधरःशुक्लयज्ञोपवीतवान् ॥ शुक्लकेशःसितश्मश्रुःशुक्लमाल्यानुलेपनः १९ रंगमध्यंतदाऽऽचार्यःसपुत्रःप्रविवेशह ॥ नभोजलधरैर्हीनंसांगारकइवांशुमान् २० सयथासमयंचक्रेबलिंबलवतांवरः ॥ ब्राह्मणांस्तुसुमंत्रज्ञान्कारयामासमंगलम् २१ सुखपुण्याहघोषस्यपुण्यस्यसमनंतरम् ॥ विविशुर्विविधंगृह्यशस्त्रोपकरणंनराः २२ ततोबद्धांगुलित्राणाबद्धकक्षामहारथाः ॥ बद्धतूणाःसधनुषोविविशुर्भरतर्षभाः २३ अनुज्येष्ठंतुतेतत्रयुधिष्ठिरपुरोगमाः ॥ चक्रुरस्त्रंमहावीर्याःकुमाराःपरमाद्भुतम् २४ केचिच्छराक्षेपभयाच्छिरांस्यवननामिरे ॥ मनुजाधृष्टमपरेवीक्षांचक्रुःसुविस्मिताः २५ तेस्मलक्ष्याणिविभिदुर्बाणैर्नामांकशोभितैः ॥ विविधैर्लाघवोत्सृष्टैरुह्यंतोवाजिभिर्द्रुतम् २६ तत्कुमारबलंतत्रगृहीतशरकार्मुकम् ॥ गंधर्वनगराकारंप्रेक्ष्यतेविस्मिताऽभवन् २७ सहसाचुक्रुशुश्चान्येनराःशतसहस्रशः ॥ विस्मयोत्फुल्लनयनाःसाधुसाध्वितिभारत २८ कृत्वाधनुषितेमार्गान्रथचर्यासुचासकृत् ॥ गजपृष्ठेऽश्वपृष्ठेचनियुद्धेचमहाबलाः २९ गृहीतखड्गचर्माणस्ततोभूयःप्रहारिणः ॥ त्सरुमार्गान्यथोद्दिष्टांश्चेरुःसर्वासुभूमिषु ॥ ३० लाघवंसौष्ठवंशोभांस्थिरत्वंदृढमुष्टिताम् ॥ ददृशुस्तत्रसर्वेषांप्रयोगंखड्गचर्मणोः ३१ अथतौनित्यसंहृष्टौसुयोधनवृकोदरौ ॥ अवतीर्णौगदाहस्तावेकशृंगाविवाचलौ ३२ बद्धकक्षौमहाबाहूपौरुषेपर्यवस्थितौ ॥ बृंहंतौवासितांहेतोःसमदाविवकुंजरौ ३३ तौप्रदक्षिणसव्यानिमंडलानिमहाबलौ ॥ चेरतुर्मंडलगतौसमदाविवकुंजरौ ३४ विदुरोधृतराष्ट्रायगांधार्याःपांडवारणिः ॥ न्यवेदयेतांतत्सर्वंकुमाराणांविचेष्टितम् ३५ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वण्यस्त्रदर्शनेचतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥ वैशंपायनउवाच ॥ कुरुराजेहिरंगस्थेभीमेचबलिनांवरे ॥ पक्षपातकृतस्नेहःसद्विधेवाभवज्जनः १ हीवीरकुरुराजेतिहीभीमइतिजल्पताम् ॥ पुरुषाणांसुविपुलाःप्रणादाःसहसोत्थिताः २ ततःक्षुब्धार्णवनिभंरंगमालोक्यबुद्धिमान् ॥ भारद्वाजःप्रियंपुत्रमश्वत्थामानमब्रवीत् ३

गपदनेकायुधनिवारणं । शोभांसर्वतोझलझलायमानेकखड्गांशुमंडलांतरगतत्वेनाभिनवां । स्थिरत्वमभीतत्वं । दृढमुष्टितांखड्गभृतांहस्तएवपरितश्चलतित्वंगुल्यइत्यर्थः । प्रयोगंनिदर्शनं ३१ संहृष्टौपरस्परंजेतुंसकामौ ३२ बृंहंतौशब्दंकुर्वाणौ वासिताहस्तिनी ३३ चेरतुःपद्भ्यां मंडलगतावलातचक्रवद्भ्राम्यमाणगदापरिवेषांतर्गतौ निर्मलगदावितिपाठेस्पष्टोऽर्थः ३४ पांडवारणिःकुंती ३५ ॥ ॥इतिआदिपर्वणिनीलकंठीये भारतभावदीपे चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥ ॥ ७ ॥ ॥ ७ ॥ कुर्विति कुरुराजेदुर्योधने १ हीविस्मये आश्चर्यंभीमदुर्योधनौकुरुतइत्यर्थः हाभीमेत्यपपाठः २ । ३



कृतयोग्यौसुशिक्षितौ ४ । ५ । ६ ईंद्रानुजसमोविष्णुतुल्यः ७ बद्धेगोधांगुलित्राणेयेन गोधातलाख्यंज्याघातवारणं अंगुलित्राणंप्रसिद्धंचर्ममयं ८ कांचनमिति तूणकार्मुककवचानांतत्प्रभाजालस्या

॥ द्रोणउवाच ॥ वारयैतौमहावीर्यौकृतयोग्यावुभावपि ॥ माभूद्रंगप्रकोपोऽयंभीमदुर्योधनोद्भवः ४ ॥ वैशंपायनउवाच ॥ ततस्तावुद्यतगदौगुरुपुत्रेणवारितौ ॥ युगांतानिलसंक्षुब्धौमहावेलाविवार्णवौ ५ ततोरंगांगणगतोद्रोणोवचनमब्रवीत् ॥ निवार्यवादित्रगणंमहामेघनिभस्वनम् ६ योमेपुत्रात्प्रियतरःसर्वशस्त्रविशारदः ॥ ऐंद्रिरिंद्रानुजसमःसपार्थोदृश्यतामिति ७ आचार्यवचनेनाथकृतस्वस्त्ययनोयुवा ॥ बद्धगोधांगुलित्राणःपूर्णतूणःसकार्मुकः ८ कांचनंकवचंबिभ्रत्प्रत्यदृश्यतफाल्गुनः ॥ सार्कःसेंद्रायुधतडित्ससंध्यइवतोयदः ९ ततःसर्वस्यरंगस्यसमुत्पिंजलकोऽभवत् ॥ प्रावाद्यंतचवाद्यानिसशंखानिसमंततः १० एषकुंतीसुतःश्रीमानेषमध्यमपांडवः ॥ एषपुत्रोमहेंद्रस्यकुरूणामेषरक्षिता ११ एषोऽस्त्रविदुषांश्रेष्ठएषधर्मभृतांवरः ॥ एषशीलवतांचापिशीलज्ञाननिधिःपरः १२ इत्येवंतुमुलावाचःशुश्रुवुःप्रेक्षकेरिताः ॥ कुंत्याःप्रस्नवसंयुक्तैरस्रैःक्लिन्नमुरोऽभवत् १३ तेनशब्देनमहतापूर्णश्रुतिरथाब्रवीत् ॥ धृतराष्ट्रोनरश्रेष्ठोविदुरंहृष्टमानसः १४ क्षत्तःक्षुब्धार्णवनिभःकिमेषसुमहास्वनः ॥ सहसैवोत्थितोरंगेभिंदन्निवनभस्तलम् १५ ॥ विदुरउवाच ॥ एषपार्थोमहाराजफाल्गुनःपांडुनंदनः ॥ अवतीर्णःसकवचस्तत्रैषसुमहास्वनः १६ ॥ धृतराष्ट्रउवाच ॥ धन्योऽस्म्यनुगृहीतोऽस्मिरक्षितोऽस्मिमहामते ॥ पृथारणिसमुद्भूतैस्त्रिभिःपांडववह्निभिः १७ ॥ वैशंपायनउवाच ॥ तस्मिन्प्रमुदितेरंगेकथंचित्प्रत्युपस्थिते ॥ दर्शयामासबीभत्सुराचार्यायास्त्रलाघवम् १८ आग्नेयेनासृजद्वह्निंवारुणेनासृजत्पयः ॥ वायव्येनासृजद्वायुंपार्जन्येनासृजद्घनान् १९ भौमेनप्राविशद्भूमिंपार्वतेनासृजद्गिरीन् ॥ अंतर्धानेनचास्त्रेणपुनरंतर्हितोऽभवत् २० क्षणात्प्रांशुःक्षणाद्ध्रस्वःक्षणाच्चरथधूर्गतः ॥ क्षणेनरथमध्यस्थःक्षणेनावतरन्महीम् २१ सुकुमारंचसूक्ष्मंचगुरुंचापिगुरुप्रियः ॥ सौष्ठवेनाभिसंक्षिप्तःसोऽविध्यद्विविधैःशरैः २२ भ्रमतश्चवराहस्यलोहस्यप्रमुखेसमम् ॥ पंचबाणानसंसक्तान्संमुमोचैकबाणवत् २३ गव्येविषाणकोशेचचलेरज्ज्ववलंबिनि ॥ निचखानमहावीर्यःसायकानेकविंशतिम् २४ इत्येवमादिसुमहत्खड्गेधनुषिचानघ ॥ गदायांशस्त्रकुशलोमंडलानिप्रदर्शयत् २५ ततःसमाप्तभूयिष्ठेतस्मिन्कर्मणिभारत ॥ मंदीभूतेसमाजेचवादित्रस्यचनिःस्वने २६ द्वारदेशात्समुद्भूतोमाहात्म्यबलसूचकः ॥ वज्रनिष्पेषसदृशःशुश्रुवेभुजनिःस्वनः २७ दीर्यंतेकिंनुगिरयःकिंस्विद्भूमिर्विदीर्यते ॥ किंस्विदापूर्यतेव्योमजलधाराघनैर्घनैः २८ रंगस्यैवंमतिरभूत्क्षणेनवसुधाधिप ॥ द्वारंचाभिमुखाःसर्वेबभूवुःप्रेक्षकास्तदा २९ पंचभिर्भ्रातृभिःपार्थैर्द्रोणःपरिवृतोबभौ ॥ पंचतारेणसंयुक्तःसावित्रेणेवचंद्रमाः ३० अश्वत्थाम्नाचसहितंभ्रातॄणांशतमूर्जितम् ॥ दुर्योधनममित्रघ्नमुत्थितंपर्यवारयत् ३१ र्जुनस्यचक्रमादैंद्रायुधतडित्संध्यातोयदैरुपमा ९ समुत्पिंजलकःउत्फुल्लता प्रमुदितेरंगेइतिवाक्यशेषात् अन्येकलकलशब्दोव्याकुलत्वंचेत्याहुः १० । ११ । १२ अस्रैःप्रेमाश्रुभिः १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ सुकुमारंपूर्णघटकुक्कुटांडादीनिलक्ष्याण्यविचाल्याविध्यत् सूक्ष्मंगुंजादिलक्ष्यंगुरुघनावयवंचसोऽविध्यत् २२ । २३ गव्येगोसंबंधिनि २४ । २५ । २६ । २७ । २८ । २९ सावित्रेणहस्तनक्षत्रेण ३० । ३१

गदाग्रमालंबनंयस्यताद्दशःपाणिर्यस्यसगदाग्रपाणिः गदामात्रसहायइत्यर्थः अग्रंपुरस्तादुपरीत्युपक्रम्य'आलंबनेसमूहेच'इतिमेदिनी ३२ ॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेपंचत्रिंशदधिकश

सतैस्तदाभ्रातृभिरुद्यतायुधैर्गदाग्रपाणिःसमवस्थितैर्वृतः ॥ बभौयथादानवसंक्षयेपुरापुरंदरोदेवगणैःसमावृतः ३२ ॥ इतिश्रीमहारते आदिपर्वणि संभव० अ

॥१२९॥ स्त्रदर्शने पंचत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥ ॥ वैशंपायनउवाच ॥ दत्तेऽवकाशेपुरुषैर्विस्मयोत्फुल्ललोचनः ॥ विवेशरंगंविस्तीर्णंकर्णःपरपुरंज अ०

यः १ सहजंकवचंबिभ्रत्कुंडलोद्योतिताननः ॥ सधनुर्बद्धनिस्त्रिंशःपादचारीवपर्वतः २ कन्यागर्भःपृथुयशाःपृथायाःपृथुलोचनः ॥ तीक्ष्णांशोर्भास्करस्यांशः ॥१३६॥

कर्णोऽरिगणसूदनः ३ सिंहर्षभगजेंद्राणांबलवीर्यपराक्रमः ॥ दीप्तिकांतिद्युतिगुणैःसूर्येंदुज्वलनोपमः ४ प्रांशुःकनकतालाभःसिंहसंहननोयुवा ॥ असंख्येयगु

णःश्रीमान्भास्करस्यात्मसंभवः ५ सनिरीक्ष्यमहाबाहुःसर्वतोरंगमंडलम् ॥ प्रणामंद्रोणकृपयोर्नात्यादृतमिवाकरोत् ६ ससमाजजनःसर्वोनिश्चलःस्थिरलोचनः ॥

कोऽयमित्यागतक्षोभःकौतूहलपरोऽभवत् ७ सोऽब्रवीन्मेघगंभीरस्वरेणवदतांवरः ॥ भ्राताभ्रातरमज्ञातंसावित्रःपाकशासनिम् ८ पार्थयत्तेकृतंकर्मविशेषवदहंत

तः ॥ करिष्येपश्यतांनृणांमाऽऽत्मनाविस्मयंगमः ९ असमाप्तेततस्तस्यवचनेवदतांवर ॥ यंत्रोत्क्षिप्तइवोत्तस्थौक्षिप्रंवैसर्वतोजनः १० प्रीतिश्चमनुजव्याघ्रदुर्यो

धनमुपाविशत् ॥ ह्रीश्चक्रोधश्चबीभत्सुंक्षणेनान्वाविवेशह ११ ततोद्रोणाभ्यनुज्ञातःकर्णःप्रियरणःसदा ॥ यत्कृतंतत्रपार्थेनतच्चकारमहाबलः १२ अथदुर्योधन

स्तत्रभ्रातृभिःसहभारत ॥ कर्णपरिष्वज्यमुदाततोवचनमब्रवीत् १३ दुर्योधनउवाच ॥ स्वागतंतेमहाबाहोदिष्ट्याप्राप्तोऽसिमानद ॥ अहंचकुरुराज्यंचयथेष्टमु

पभुज्यताम् १४ कर्णउवाच ॥ कृतंसर्वमहंमन्येसखित्वंचत्वयावृणे ॥ द्वंद्वयुद्धंचपार्थेनकर्तुमिच्छाम्यहंप्रभो १५ ॥ दुर्योधनउवाच ॥ भुंक्ष्वभोगान्मयासार्धंबंधू

नांप्रियकृद्भव ॥ दुर्हृदांकुरुसर्वेषांमूर्ध्निपादमरिंदम १६ ॥ वैशंपायनउवाच ॥ ततःक्षिप्तमिवात्मानंमत्वापार्थोऽभ्यभाषत ॥ कर्णंभ्रातृसमूहस्यमध्येऽचलमिव

स्थितम् १७ ॥ अर्जुनउवाच ॥ अनाहूतोपसृष्टानामनाहूतोपजल्पिनाम् ॥ येलोकास्तान्हतःकर्णमयात्वंप्रतिपत्स्यसे १८ ॥ कर्णउवाच ॥ रंगोऽयंसर्वसामा

न्यःकिमत्रतवफाल्गुन ॥ वीर्यश्रेष्ठाश्चराजानोबलंधर्मोऽनुवर्तते १९ किंक्षेपैर्दुर्बलायासैःशरैःकथयभारत ॥ गुरोःसमक्षंयावत्तेहराम्यद्यशिरःशरैः २०

॥ वैशंपायनउवाच ॥ ततोद्रोणाभ्यनुज्ञातःपार्थःपरपुरंजयः ॥ भ्रातृभिस्त्वरयाऽऽश्लिष्टोरणायोपजगामतम् २१ ततोदुर्योधनेनापिसभ्रात्रासमरोद्यतः ॥ परि

ष्वक्तःस्थितःकर्णःप्रगृह्यसशरंधनुः २२ ततःसविद्युत्स्तनितैःसेंद्रायुधपुरोगमैः ॥ आवृतंगगनंमेघैर्बलाकापंक्तिहासिभिः २३ ततःस्नेहाद्धरिहयंदृष्ट्वारंगावलोकि

नम् ॥ भास्करोऽप्यनयन्नाशंसमीपोपगतान्घनान् २४ मेघच्छायोपगूढस्तुततोऽदृश्यतफाल्गुनः ॥ सूर्यातपपरिक्षिप्तःकर्णोऽपिसमदृश्यत २५ धार्तराष्ट्रायतःकर्ण ॥१२९॥

स्तस्मिन्देशेव्यवस्थिताः ॥ भारद्वाजःकृपोभीष्मोयतःपार्थस्ततोऽभवन् २६ द्विधारंगःसमभवत्स्त्रीणांद्वैधमजायत ॥ कुंतिभोजसुतामोहंविज्ञातार्थाजगामह २७

ततमोऽध्यायः ॥ १३५ ॥ दत्तेइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ ॥ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे

तांतथामोहमापन्नांविदुरःसर्वधर्मवित् ॥ कुंतीमाश्वासयामासप्रेष्याभिश्चंदनोदकैः २८ ततःप्रत्यागतप्राणाताबुभौपरिदंशितौ ॥ पुत्रौदृष्ट्वासुसंभ्रांतानान्वपद्यत

किंचन २९ तावुद्यतमहाचापौकृपःशारद्वतोऽब्रवीत् ॥ द्वंद्वयुद्धसमाचारेकुशलःसर्वधर्मवित् ३० अयंपृथायास्तनयःकनीयान्पांडुनंदनः ॥ कौरवोभवता

सार्धंद्वंद्वयुद्धंकरिष्यति ३१ त्वमप्येवंमहाबाहोमातरंपितरंकुलम् ॥ कथयस्वनरेंद्राणांयेषांत्वंकुलभूषणम् ३२ ततोविदित्वापार्थस्त्वांप्रतियोत्स्यतिवानवा ॥

वृथाकुलसमाचारैर्नयुध्यंतेनृपात्मजाः ३३ ॥ वैशंपायनउवाच ॥ एवमुक्तस्यकर्णस्यव्रीडावनतमाननम् ॥ बभौवर्षांबुविक्लिन्नंपद्ममागलितंयथा ३४ ॥ दुर्योधन

उवाच ॥ आचार्यत्रिविधायोनीराज्ञांशास्त्रविनिश्चये ॥ सत्कुलीनश्चशूरश्चयश्चसेनांप्रकर्षति ३५ यद्ययंफाल्गुनोयुद्धेनाराज्ञायोद्धुमिच्छति ॥ तस्मादेषोंऽग

विषयेमयाराज्येऽभिषिच्यते ३६ ॥ वैशंपायनउवाच ॥ ततस्तस्मिन्क्षणेकर्णःसलाजकुसुमैर्घटैः ॥ कांचनैःकांचनेपीठेमंत्रविद्भिर्महारथः ३७ अभिषिक्तो

ऽगराज्येसश्रियायुक्तोमहाबलः ॥ सच्छत्रवालव्यजनोजयशब्दोत्तरेणच ३८ उवाचकौरवंराजन्वचनंसवृषस्तदा ॥ अस्यराज्यप्रदानस्यसदृशंकिंददानिते ३९

प्रब्रूहिराजशार्दूलकर्ताह्यस्मितथानृप ॥ अत्यंतंसख्यमिच्छामीत्याहतंससुयोधनः ४० एवमुक्तस्ततःकर्णस्तथेतिप्रत्युवाचतं ॥ हर्षाच्चोभौसमाश्लिष्यपरांमुद

मवापतुः ४१ ॥ इतिश्रीमहाभारतेआदिपर्वणिसं०कर्णाभिषेकेषट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥ ॥ ४ ॥ ॥ वैशंपायनउवाच ॥ ततःस्रस्तोत्तर

पटःसप्रस्वेदःसवेपथुः ॥ विवेशाधिरथोरंगंयष्टिप्राणोह्वयन्निव १ तमालोक्यधनुस्त्यक्त्वापितृगौरवयंत्रितः ॥ कर्णोऽभिषेकार्द्रशिराःशिरसासमवंदत २ ततःपादा

ववच्छाद्यपटांतेनससंभ्रमः ॥ पुत्रेतिपरिपूर्णार्थमब्रवीद्रथसारथिः ३ परिष्वज्यचतस्याथमूर्धानंस्नेहविक्लवः ॥ अंगराज्याभिषेकार्द्रमश्रुभिःसिषिचेपुनः ४ तंदृ

ष्ट्वासूतपुत्रोऽयमितिसंचिंत्यपांडवः ॥ भीमसेनस्तदावाक्यमब्रवीत्प्रहसन्निव ५ नत्वमर्हसिपार्थेनसूतपुत्ररणेवधम् ॥ कुलस्यसदृशस्तूर्णंप्रतोदोगृह्यतांत्वया ६ अं

गराज्यंचनार्हस्त्वमुपभोक्तुंनराधम ॥ श्वाहुताशसमीपस्थंपुरोडाशमिवाध्वरे ७ एवमुक्तस्ततःकर्णःकिंचित्प्रस्फुरिताधरः ॥ गगनस्थंविनिःश्वस्यदिवाकर

मुदैक्षत ८ ततोदुर्योधनःकोपादुत्पपातमहाबलः ॥ भ्रातृपद्मवनात्तस्मान्मदोत्कटइवद्विपः ९ सोऽब्रवीद्भीमकर्माणंभीमसेनमवस्थितम् ॥ वृकोदरनयुक्तंते

४४ वचनंवक्तुमीदृशं १० क्षत्रियाणांबलंज्येष्ठंयोद्धव्यंक्षत्रबंधुना ॥ शूराणांचनदीनांचदुर्विदाःप्रभवाःकिल ११ सलिलादुत्थितोवह्निर्येनव्याप्तंचराचरं ॥ दधी

चस्यास्थितोवज्रंकृतंदानवसूदनम् १२ आग्नेयःकृत्तिकापुत्रोरौद्रोगांगेयइत्यपि ॥ श्रूयतेभगवान्देवःसर्वगुह्यमयोगुहः १३ क्षत्रियेभ्यश्चयेजाताब्राह्मणास्ते

चतेश्रुताः ॥ विश्वामित्रप्रभृतयःप्राप्ताब्रह्मत्वमव्ययम् १४

षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥ ॥ ७ ॥ ॥ ततइति ॥ १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४

१५ । १६ । १७ यस्यवेनलक्षांतंनसोढंसोऽस्मत्समक्षंकार्मुकंपादेनस्पृष्ट्वाअस्मद्भ्यतांवायात्वस्मान्वाहंत्विति क्षत्रप्रसिद्धांप्रतिज्ञांकरोतीत्यर्थः १८ ।१९।२० । २१। २२ । २३ । २४ सचापिकर्णोऽपि

आचार्यःकलशाज्जातोद्रोणःशस्त्रभृतांवरः ॥ गौतमस्यान्ववायेचशरस्तंबाच्चगौतमः १५ भवतांचयथाजन्मतदप्यागमितंमया ॥ सकुंडलंसकवचंसर्वलक्षणल
क्षितम् ॥ कथमादित्यसदृशंमृगीव्याघ्रंजनिष्यति १६ पृथिवीराज्यमर्होऽयंनांगराज्यंनरेश्वरः ॥ अनेनबाहुवीर्येणमयाचाज्ञानुवर्तिना १७ यस्यवामनुजस्येदं
नक्षांतंमद्विचेष्टितम् ॥ रथमारुह्यपद्भ्यांसविनामयतुकार्मुकम् १८ ततःसर्वस्यरंगस्यहाहाकारोमहानभूत् ॥ साधुवादानुसंबद्धःसूर्यश्चास्तमुपागमत् १९
ततोदुर्योधनःकर्णमालंब्याग्रकरेनृपः ॥ दीपिकाग्निकृतालोकस्तस्माद्रंगाद्विनिर्ययौ २० पांडवाश्चसहद्रोणाःसकृपाश्चविशांपते ॥ भीष्मेणसहिताःसर्वेययुःस्वं
स्वंनिवेशनम् २१ अर्जुनेतिजनःकश्चित्कश्चित्कर्णेतिभारत ॥ कश्चिद्दुर्योधनेत्येवंब्रुवंतःप्रस्थितास्तदा २२ कुंत्याश्चप्रत्यभिज्ञायदिव्यलक्षणसूचितम् ॥ पुत्रमं
गेश्वरंस्नेहाच्छन्नाप्रीतिरजायत २३ दुर्योधनस्यापितदाकर्णमासाद्यपार्थिव ॥ भयमर्जुनसंजातंक्षिप्रमंतरधीयत २४ सचापिवीरःकृतशस्त्रनिश्रमःपरेणसाम्नाऽ
भ्यवदत्सुयोधनम् ॥ युधिष्ठिरस्याप्यभवत्तदामतिर्नकर्णतुल्योऽस्तिधनुर्धरःक्षितौ २५ ॥ इति श्रीमहाभारते आदिपर्वणि संभवपर्वणि अस्त्रदर्शनेसप्तत्रिंशदधि
कशततमोऽध्यायः ॥ १३७ ॥ ॥ वैशंपायनउवाच ॥ पांडवान्धार्तराष्ट्रांश्चकृतास्त्रान्प्रसमीक्ष्यसः ॥ गुर्वर्थंदक्षिणाकालेप्राप्तेऽमन्यतवैगुरुः १ ततःशिष्यान्स
मानीयआचार्योऽर्थमचोदयत् ॥ द्रोणःसर्वानशेषेणदक्षिणार्थंमहीपते २ पंचालराजंद्रुपदंगृहीत्वारणमूर्धनि ॥ पर्यानयतभद्रंवःसास्यात्परमदक्षिणा ३ तथेत्यु
क्त्वातुतेसर्वेरथैस्तूर्णंप्रहारिणः ॥ आचार्यधनदानार्थंद्रोणेनसहिताययुः ४ ततोभिजग्मुःपंचालान्निघ्नंतस्तेनरर्षभाः ॥ ममृदुस्तस्यनगरंद्रुपदस्यमहौजसः ५
दुर्योधनश्चकर्णश्चयुयुत्सुश्चमहाबलः ॥ दुःशासनोविकर्णश्चजलसंधःसुलोचनः ६ एतेचान्येचबहवःकुमाराबहुविक्रमाः ॥ अहंपूर्वमहंपूर्वमित्येवंक्षत्रियर्षभाः ७
ततोवररथारूढाःकुमाराःसादिभिःसह ॥ प्रविश्यनगरंसर्वेराजमार्गमुपाययुः ८ तस्मिन्कालेतुपांचालःश्रुत्वादृष्ट्वामहद्बलम् ॥ भ्रातृभिःसहितोराजंस्त्वरयानिर्य
यौगृहात् ९ ततस्तुकृतसन्नाहोयज्ञसेनोमहीधरः ॥ शरवर्षाणिमुंचंतःप्रणेदुःसर्वएवते १० ततोरथेनशुभ्रेणसमासाद्यतुकौरवान् ॥ यज्ञसेनःशरान्घोरान्ववर्षयुधिदु
र्जयः ११ ॥ वैशंपायनउवाच ॥ पूर्वमेवतुसंमंत्र्यपार्थोद्रोणमथाऽब्रवीत् ॥ दर्पोद्रेकात्कुमाराणामाचार्यंद्विजसत्तमम् १२ एषांपराक्रमस्यांतेवयंकुर्यामसाहसम् ॥
एतैरशक्यःपांचालोग्रहीतुंरणमूर्धनि १३ एवमुक्त्वातुकौंतेयोभ्रातृभिःसहितोऽनघः ॥ अर्धक्रोशेतुनगरादतिष्ठद्बहिरेवसः १४ द्रुपदःकौरवान्दृष्ट्वाप्राधावतसमंततः ॥
शरजालेनमहतामोहयन्कौरवींचमूम् १५ तमुद्यतंरथेनैकमाशुकारिणमाहवे ॥ अनेकमिवसंत्रासान्मेनिरेतत्रकौरवाः १६ ॥१३०॥

निश्रमोनितरांश्रमः २५ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥ ॥ पांडवानिति अमन्यतचिंतितवान् १ अर्थंगुरवेदेयं दक्षिणार्थंदक्षिणायै
२ । ३ । ४ । ५ । ६ । ७ । ८ । ९ ततोगृहान्निर्गमनदूर्ध्वंमार्गेकृतसन्नाहोऽभूत् तेप्रणेदुर्यज्ञसेनमालक्ष्येतिशेषः । १० । ११ । १२ कुर्यामकुर्वीमहि १३ । १४ । १५ । १६

१७ । १८ । १९ । २० । २१ । २२ । २३ तुमुलंयुद्धमुपस्थितंश्रुत्वाचारमुखात्तदृष्ट्वा कौरवाःनद्रवेतिच्छेदः नद्रवंतीतिनापितुद्रवंत्येवपांडवान्प्रतीत्यर्थः तथानदंतीत्यपिज्ञेयं २४ । २५

द्रुपदस्यशराघोराविचेरुःसर्वतोदिशम् ॥ ततःशंखाश्चभेर्यश्चमृदंगाश्चसहस्रशः १७ प्रावाद्यंतमहाराजपंचालानांनिवेशने ॥ सिंहनादश्चसंजज्ञेपंचालानांमहात्म
नाम् १८ धनुर्ज्यातलशब्दश्चसंस्पृश्यगगनंमहान् ॥ दुर्योधनोविकर्णश्चसुबाहुर्दीर्घलोचनः १९ दुःशासनश्चसंक्रुद्धःशरवर्षैरवाकिरन् ॥ सोऽतिविद्धोमहेष्वासः
पार्षतोयुधिदुर्जयः २० व्यधमत्तान्यनीकानितत्क्षणादेवभारत ॥ दुर्योधनंविकर्णंचकर्णंचापिमहाबलम् २१ नानानृपसुतान्वीरान्सैन्यानिविविधानिच ॥
अलातचक्रवत्सर्वंचरन्बाणैरतर्पयत् २२ ततस्तुनागराःसर्वेमुसलैर्यष्टिभिस्तदा ॥ अभ्यवर्षंतकौरव्यान्वर्षमाणाघनाइव २३ सबालवृद्धास्तेपौराःकौरवानभ्ययुस्त
दा ॥ श्रुत्वासुतुमुलंयुद्धंकौरवानेवभारत २४ द्रवंतिस्मनदंतिस्मक्रोशंतःपांडवान्प्रति ॥ पांडवास्तुस्वनंश्रुत्वाआर्तानांलोमहर्षणम् २५ अभिवाद्यततोद्रोणंरथा
नारुरुहुस्तदा ॥ युधिष्ठिरंनिवार्याशुमायुध्यस्वेतिपांडवम् २६ माद्रेयौचक्ररक्षौतुफाल्गुनश्चतदाऽकरोत् ॥ सेनाग्रगोभीमसेनःसदाऽभूद्गदयासह २७ तदाशत्रु
स्वनंश्रुत्वाभ्रातृभिःसहितोऽनघः ॥ आयाज्जवेनकौंतेयोरथेनानादयन्दिशः २८ पंचालानांततःसेनामुद्धूतार्णवनिःस्वनाम् ॥ भीमसेनोमहाबाहुर्दंडपाणिरिवां
तकः २९ प्रविवेशमहासेनांमकरःसागरंयथा ॥ स्वयमभ्यद्रवद्भीमोनागानीकंगदाधरः ३० सयुद्धकुशलःपार्थोबाहुवीर्येणचातुलः ॥ अहनत्कुंजरानीकंगदया
कालरूपधृक् ३१ तेगजागिरिसंकाशाःक्षरंतोरुधिरंबहु ॥ भीमसेनस्यगदयाभिन्नमस्तकपिंडकाः ३२ पतंतिद्विरदाभूमौवज्रघातादिवाचलाः ॥ गजानश्वा
न्रथांश्चैवपातयामासपांडवः ३३ पदातींश्चरथांश्चैवन्यवधीदर्जुनाग्रजः ॥ गोपालइवदंडेनयथापशुगणान्वने ३४ चालयन्रथनागांश्चसंचचालवृकोदरः ॥ वैशंपाय
नउवाच ॥ भारद्वाजप्रियंकर्तुमुद्यतःफाल्गुनस्तदा ३५ पार्षतंशरजालेनक्षिपन्नागात्सपांडवः ॥ हयौघांश्चरथौघांश्चगजौघांश्चसमंततः ३६ पातयन्समरेराज
न्युगांताग्निरिवज्वलन् ॥ ततस्तेहन्यमानावैपंचालाःसृंजयास्तथा ३७ शरैर्नानाविधैस्तूर्णंपार्थंसंछाद्यसर्वशः ॥ सिंहनादंमुखैःकृत्वासमयुध्यंतपांडवम् ३८ तद्यु
द्धमभवद्घोरंसुमहाद्भुतदर्शनम् ॥ सिंहनादस्वनंश्रुत्वानामृष्यत्पाकशासनिः ३९ ततःकिरीटीसहसापंचालान्समरेऽद्रवत् ॥ छादयन्निषुजालेनमहतामोहयन्नि
व ४० शीघ्रमभ्यस्यतोबाणान्संदधानस्यचानिशम् ॥ नांतरंददृशेकिंचित्कौंतेयस्ययशस्विनः ४१ सिंहनादश्चसंजज्ञेसाधुशब्देनमिश्रितः ॥ ततःपांचालराज
स्तुतथासत्यजितासह ४२ त्वरमाणोऽभिदुद्रावमहेंद्रंशंबरोयथा ॥ महताशरवर्षेणपार्थःपांचालमावृणोत् ४३ ततोहलहलाशब्दआसीत्पांचालकेबले ॥ जिघृक्ष
तिमहासिंहोगजानामिवयूथपम् ४४ दृष्ट्वापार्थंतदाऽऽयांतंसत्यजित्सत्यविक्रमः ॥ पांचालंवैपरिप्रेप्सुर्धनंजयमदुद्रवत् ४५ ततस्त्वर्जुनपांचालौयुद्धायसमुपाग
तौ ॥ व्यक्षोभयेतांतौसैन्यमिंद्रवैरोचनाविव ४६ ततःसत्यजितंपार्थोदशभिर्मर्मभेदिभिः ॥ विव्याधबलवद्गाढंतदद्भुतमिवाभवत् ४७

२६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७

४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ तच्छिन्नंधनुस्ततउत्सृज्यचापंशरावरंतूणंचाददानंतमुद्दिश्यखङ्गमुद्धृत्यसिंहनादमकरोदितिसंबंधः ५६ ईषारथस्ययुगचक्रयोः

ततःशरशतैःपार्थंपांचालःशीघ्रमार्दयत् ॥ पार्थस्तुशरवर्षेणच्छाद्यमानोमहारथः ४८ वेगंचक्रेमहावेगोधनुर्ज्यामवमृज्यच ॥ ततःसत्यजितश्चापंछित्त्वाराजानम
भ्ययात् ४९ अथान्यद्धनुरादायसत्यजिद्वेगवत्तरम् ॥ साश्वंससूतंसरथंपार्थंविव्याधसत्वरः ५० सतंनममृषेपार्थःपांचालेनार्दितोयुधि ॥ ततस्तस्यविनाशार्थं
सत्वरंव्यसृजच्छरान् ५१ हयान्ध्वजंधनुर्मुष्टिमुभौतौपार्ष्णिसारथी ॥ सतथाभिद्यमानेषुकार्मुकेषुपुनःपुनः ५२ हयेषुविनियुक्तेषुविमुखोऽभवदाहवे ॥ ससत्यजि
तमालोक्यतथाविमुखमाहवे ५३ वेगेनमहताराजन्नभ्यवर्षतपांडवम् ॥ तदाचक्रेमहद्युद्धमर्जुनोजयतांवरः ५४ तस्यपार्थोधनुश्छित्त्वाध्वजंचोर्व्यामपातयत् ॥
पंचभिस्तस्यविव्याधहयान्सूतंचसायकैः ५५ ततउत्सृज्यतच्चापमाददानंशरावरम् ॥ खड्गमुद्धृत्यकौंतेयःसिंहनादमथाकरोत् ५६ पांचालस्यरथस्येषामाप्लुत्यस
हसाऽपतत् ॥ पांचालरथमास्थायअवित्रस्तोधनंजयः ५७ विक्षोभ्यांभोनिधिंपार्थस्तंनागमिवसोऽग्रहीत् ॥ ततस्तुसर्वपंचालाविद्रवंतिदिशोदश ५८ दर्शय
न्सर्वसैन्यानांसबाह्वोर्बलमात्मनः ॥ सिंहनादस्वनंकृत्वानिर्जगामधनंजयः ५९ आयांतमर्जुनंदृष्ट्वाकुमाराःसहितास्तदा ॥ ममृदुस्तस्यनगरंद्रुपदस्यमहात्मनः
६० ॥ अर्जुनउवाच ॥ संबंधीकुरुवीराणांद्रुपदोराजसत्तमः ॥ मावधीस्तद्बलंभीमगुरुदानंप्रदीयताम् ६१ ॥ वैशंपायनउवाच ॥ भीमसेनस्तदाराजन्नर्जुनेन
निवारितः ॥ अतृप्तोयुद्धधर्मेषुन्यवर्त्ततमहाबलः ६२ तेयज्ञसेनंद्रुपदंगृहीत्वारणमूर्धनि ॥ उपाजग्मुःसहामात्यंद्रोणायभरतर्षभ ६३ भग्नदर्पंहृतधनंतंतथावश
मागतम् ॥ सवैरंमनसाध्यात्वाद्रोणोद्रुपदमब्रवीत् ६४ विमृद्यतरसाराष्ट्रंपुरंतेमृदितंमया ॥ प्राप्यजीवंरिपुवशंसखिपूर्वंकिमिष्यते ६५ एवमुक्त्वाप्रहस्यैवंकिंचि
त्सपुनरब्रवीत् ॥ माभैःप्राणभयाद्वीरक्षमिणोब्राह्मणावयम् ६६ आश्रमेक्रीडितंयत्तुत्वयाबाल्येमयासह ॥ तेनसंवर्द्धितःस्नेहःप्रीतिश्चक्षत्रियर्षभ ६७ प्रार्थयेयंत्व
यासख्यंपुनरेवजनाधिप ॥ वरंददामितेराजन्राज्यस्यार्धमवाप्नुहि ६८ अराजाकिलनोराज्ञःसखाभवितुमर्हसि ॥ अतःप्रयतितंराज्येयज्ञसेनमयातव ६९ राजा
ऽसिदक्षिणेकूलेभागीरथ्याऽहमुत्तरे ॥ सखायंमांविजानाहिपांचालयदिमन्यसे ७० ॥ द्रुपदउवाच ॥ अनाश्चर्यमिदंब्रह्मन्विक्रांतेषुमहात्मसु ॥ प्रीयेत्वयाऽहंत्वत्त
श्चप्रीतिमिच्छामिशाश्वतीम् ७१ ॥ वैशंपायनउवाच ॥ एवमुक्तःसतंद्रोणोमोक्षयामासभारत ॥ सत्कृत्यचैनंप्रीतात्माराज्यार्धंप्रत्यपादयत् ७२ माकंदीमथगं
गायास्तीरेजनपदायुताम् ॥सोऽध्यावसद्दीनमनाःकांपिल्यंचपुरोत्तमम् ७३दक्षिणांश्चापिपंचालान्यावच्चर्मण्वतीनदी॥द्रोणेनचैवंद्रुपदःपरिभूयाथपालितः ७४ क्षात्रे
णचबलेनास्यनापश्यत्सपराजयम् ॥ हीनंविदित्वाचात्मानंब्राह्मेणसबलेनतु ७५ पुत्रजन्मपरीप्सन्वैपृथिवीमन्वसंचरत् ॥ अहिच्छत्रंचविषयंद्रोणःसमभिपद्यत ७६

संलग्नंमहादारु ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७२ । ७३ । ७४ । ७५ । ७६

७७ ॥ इतिश्रीमहाभारते आदिपर्वणिनीलकंठीये भारतभावदीपेअष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥ ॥ ७ ॥ ॥ ततःसंवत्सरस्यांतेइति १ धृतिःप्रजानांधारणं । स्थैर्यमचाप
लं । सहिष्णुत्वंतितिक्षा । समाहारद्वंद्वोयं । आनृशंस्यमनैष्ठुर्यं । आर्जवमवक्रता । एतेभ्योहेतुभ्यःप्रजानामनुकंपार्थंधृतराष्ट्रेणपांडुपुत्रोयौवराज्यायस्थापितइतिद्वयोःसंबंधः २ अदीर्घेणे
तिच्छेदः शीलंविनयादिःसदाचारः । वृत्तंशौर्यतेजआदिमत्त्वाविष्करणं । समाधिःप्रजानांसमाधानं ३ । ४ । ५ क्षुरनाराचौपार्श्वधारतीक्ष्णाग्रावृजू । भल्लोब्रडिशवदुद्धरणकालेअंत्राण्यु

एवंराजन्नहिच्छत्रापुरीजनपदायुता ॥ युधिनिर्जित्यपार्थेनद्रोणायप्रतिपादिता ७७ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वणिद्रुपदशासनेऽष्टत्रिंशदधिकशत
तमोऽध्यायः ॥ १३८ ॥ ॥ वैशंपायनउवाच ॥ ततःसंवत्सरस्यांतेयौवराज्यायपार्थिव ॥ स्थापितोधृतराष्ट्रेणपांडुपुत्रोयुधिष्ठिरः १ धृतिस्थैर्यसहिष्णु
त्वादानृशंस्यात्तथाऽऽर्जवात् ॥ भृत्यानामनुकंपार्थंतथैवस्थिरसौहृदात् २ ततोऽदीर्घेणकालेनकुंतीपुत्रोयुधिष्ठिरः ॥ पितुरंतर्दधेकीर्तिंशीलवृत्तसमाधिभिः ३ अ
सियुद्धेगदायुद्धेरथयुद्धेचपांडवः ॥ संकर्षणादशिक्षद्वैशश्वच्छिक्षांवृकोदरः ४ समाप्तशिक्षोभीमस्तुद्युमत्सेनसमोबले ॥ पराक्रमेणसंपन्नोभ्रातॄणामचरद्वशे ५ प्र
गाढदृढमुष्टित्वेलाघवेवेधनेतथा ॥ क्षुरनाराचभल्लानांविपाठानांचतत्त्ववित् ६ ऋजुवक्रविशालानांप्रयोक्ताफाल्गुनोऽभवत् ॥ लाघवेसौष्ठवेचैवनान्यःकश्चनविद्यते
७ बीभत्सुसदृशोलोकेइतिद्रोणोव्यवस्थितः ॥ ततोऽब्रवीद्गुडाकेशंद्रोणःकौरवसंसदि ८ अगस्त्यस्यधनुर्वेदेशिष्योममगुरुःपुरा ॥ अग्निवेशइतिख्यातस्तस्यशि
ष्योऽस्मिभारत ९ तीर्थात्तीर्थंगमयितुमहमेतत्समुद्यतः ॥ तपसायन्मयाप्राप्तममोघमशनिप्रभम् १० अस्त्रंब्रह्मशिरोनामयद्दहेत्पृथिवीमपि ॥ ददतागुरुणाचो
क्तंनमनुष्येष्विदंत्वया ११ भारद्वाजविमोक्तव्यमल्पवीर्येष्वपिप्रभो ॥ त्वयाप्राप्तमिदंवीरदिव्यंनान्योर्हतिविद्वम् १२ समयस्तुत्वयारक्ष्योमुनिसृष्टोविशांपते ॥
आचार्यदक्षिणांदेहिज्ञातिग्रामस्यपश्यतः १३ ददानीतिप्रतिज्ञातेफाल्गुनेनाब्रवीद्गुरुः ॥ युद्धेऽहंप्रतियोद्धव्योयुध्यमानस्त्वयाऽनघ १४ तथेतिचप्रतिज्ञायद्रो
णायकुरुपुंगवः ॥ उपसंगृह्यचरणौसप्रायादुत्तरांदिशम् १५ स्वभावादगमच्छब्दोमहींसागरमेखलाम् ॥ अर्जुनस्यसमोलोकेनास्तिकश्चिद्धनुर्धरः १६ गदायुद्धेऽसि
युद्धेचरथयुद्धेचपांडवः ॥ पारगश्चधनुर्युद्धेबभूवाथधनंजयः १७ नीतिमान्सकलांनीतिंविबुधाधिपतेस्तदा ॥ अवाप्यसहदेवोऽपिभ्रातॄणांवृत्तवशे १८ द्रोणेनैववि
नीतश्चभ्रातॄणांनकुलःप्रियः ॥ चित्रयोधीसमाख्यातोबभूवातिरथोदितः १९ त्रिवर्षकृतयज्ञस्तुगंधर्वाणामुपप्लवे ॥ अर्जुनप्रमुखैःपार्थैःसौवीरःसमरेहतः २०

द्वृहातीतिवक्रः । विपाठोबिशालोवैशाखीमुखवत् ६ । ७ गुडाकानिद्रातस्याईशमर्जुनंजितनिद्रं ८ । ९ तीर्थात्पात्रात्पात्रांतरंगमयितुं संप्रदायाविच्छेदार्थमित्यर्थः १० । ११ अल्पवी
र्येष्वमानुषेषु त्वयाप्रहार्यमांमोचयताप्राप्तंप्रागेव १२ समयोविद्यालाभादनंतरंगुरवेदक्षिणादानं १३ । १४ उत्तरामुत्कृष्टतरांदिशमुपदेशंप्रायात्प्राप्तवान् चरणावुपसंगृह्याचार्याद्ब्रह्मशिरोऽस्त्रंल
ब्धवानित्यर्थः १५ । १६ । १७ विबुधाधिपतेर्देवाचार्याद्द्रोणरूपात् १८ विनीतःशिक्षितः अतिरथेभूदितःख्यातः १९ त्रिवर्षेति । गंधर्वोपप्लवेऽपियस्यसौवीरस्ययज्ञोनविप्लुतइत्यनेनतस्यदु
र्जेयत्वमुक्तंअतिदुर्जयोऽपिसोऽर्जुनेननिहतइत्यन्वयः २०

२१ शस्तोहिंसितः शसुहिंसायां २२ । २३ । २४ । २५ ववृधुर्वर्धितवंतः २६ । २७ ॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेऊनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥ ॥ श्रुत्वेति उद्रिक्तानधिकान् १ राजशास्त्रंदंडनीतिशास्त्रं २ उत्सक्ताउत्कर्षेणसर्वत्रव्याप्ताः पंजरसंगेऽस्यरूपं । असूयेगुणवत्त्वेऽपिदोषवत्त्वेनपश्यामि । तेभ्यइतिचतुर्थ्यातेषुकोपादेवंपश्यामि नतत्त्वज्ञानादितिगम्यते । क्रुध॒द्रुहेतिस्मरणात् । पांडवैःसहसंधिकारणंविग्रहकारणंवातयोरन्यतरप्रयोजकंसंधिविग्रहकारणंत्वंममाचक्ष्व ३ । ४ ब्राह्मणोऽयंतीक्ष्णमेवोपायंवदतीतिप्रसक्ताऽभ्य सूयानकार्येत्याह नमेइति ५ भीमसेनदुर्योधनयोरर्जुनकर्णयोश्चवैरस्याचिकित्स्यत्वादसंभावनीयसंधित्वकाविग्रहमेवाश्रित्याह नित्यमिति उद्यतोनतुक्षिप्तोदंडोयेनसतथा अपकृष्टान्भीषये देवनतूच्छिद्यान्नवाउपेक्षेतेतिभावः । समेपुनित्यंविवृतपौरुषःस्यात् । समानउत्कृष्टंबलंसंपाद्यहन्यादेवेत्यर्थः । उत्कृष्टेषुचशत्रुष्वच्छिद्रःस्यात् । स्वस्यन्यूनंकोशबलादिकंतेयथानजानंतितथा

नशशाकवशेकर्तुंयंपांडुरपिवीर्यवान् ॥ सोऽर्जुनेनवशंनीतोराजाऽऽसीद्यवनाधिपः २१ अतीवबलसंपन्नःसदामानीकुरून्प्रति ॥ विपुलोनामसौवीरःशस्तःपार्थेनधीमता २२ दत्तामित्रइतिख्यातंसंग्रामेकृतनिश्चयम् ॥ सुमित्रंनामसौवीरमर्जुनाऽदमयच्छरैः २३ भीमसेनसहायश्चरथानामयुतंचसः ॥ अर्जुनःसमरेप्राच्यान्सर्वानेकरथोऽजयत् २४ तथैवैकरथोगत्वादक्षिणामजयद्दिशम् ॥ धनौघंप्रापयामासकुरुराष्ट्रंधनंजयः २५ एवंसर्वेमहात्मानःपांडवामनुजोत्तमाः ॥ परराष्ट्राणिनिर्जित्यस्वराष्ट्रंववृधुःपुरा २६ ततोबलमतिख्यातंविज्ञायदृढधन्विनाम् ॥ दूषितःसहसाभावोधृतराष्ट्रस्यपांडुषु ॥ सचिंतापरमोराजाननिद्रामलभन्निशि २७ ॥ इतिश्रीमहाभारतेआदिपर्वणिसंभवपर्वणिधृतराष्ट्रचिंतायामूनचत्वारिंशदधिकशततमोऽध्याय ॥ १३९ ॥ वैशंपायनउवाच ॥ श्रुत्वापांडुसुतान्वीरानबलोद्रिक्तान्महौजसः ॥ धृतराष्ट्रोमहीपालश्चिंतामगमदातुरः १ ततआहूयमंत्रज्ञंराजशास्त्रार्थवित्तमम् ॥ कणिकंमंत्रिणांश्रेष्ठंधृतराष्ट्रोऽब्रवीद्वचः २ ॥ धृतराष्ट्रउवाच ॥ उत्सक्ताःपांडवानित्यंतेभ्योऽसूयेद्विजोत्तम ॥ तत्रमेनिश्चिततमंसंधिविग्रहकारणम् ॥ कणिकत्वंममाचक्ष्वकरिष्येवचनंतव ३ ॥ वैशंपायनउवाच ॥ सप्रसन्नमनास्तेनपरिपृष्टोद्विजोत्तमः ॥ उवाचवचनंतीक्ष्णंराजशास्त्रार्थदर्शनम् ४ शृणुराजन्निदंतत्रप्रोच्यमानंमयाऽनघ ॥ नमेऽभ्यसूयाकर्तव्याश्रुत्वैतत्कुरुसत्तम ५ नित्यमुद्यतदंडःस्यान्नित्यंविवृतपौरुषः ॥ अच्छिद्रश्छिद्रदर्शीस्यात्परेषांविवरानुगः ६ नित्यमुद्यतदंडाद्धिभृशमुद्विजतेजनः ॥ तस्मात्सर्वाणिकार्याणिदंडेनैवविधारयेत् ७ नास्यच्छिद्रंपरःपश्येच्छिद्रेणपरमन्वियात् ॥ गूहेत्कूर्मइवांगानिरक्षेद्विवरमात्मनः ८ नासम्यक्कृतकारीस्यादुपक्रम्यकदाचन ॥ कंटकोह्यपिदुश्छिन्नआस्रावंजनयेच्चिरम् ९ वधमेवप्रशंसंतिशत्रूणामपकारिणाम् ॥ सुविदीर्णंसुविक्रांतंसुयुद्धंसुपलायितम् १०

स्थैर्यं । छिद्रदर्शीदूरामात्यत्वप्रतिकूलदेशावस्थितत्वादीनिच्छिद्राणितद्दर्शीस्यात् । तथाभूत्वाचतदेवविवरमनुसृत्यशत्रुंहन्यादित्याह परेषांविवरानुगइति ६ अस्यश्लोकस्यार्धपद्यंव्याचष्टे नित्यमिति ७ तस्यैवोत्तरार्धंव्याचष्टे नास्येति अंगानिसहायसाधनोपायादीनिगूहेत्संवृणुयात् । तथाचैनमगणयन्शत्रुश्छिद्रेतैरेवांगैःप्रहर्तव्यइतिभावः आत्मनोविवरंरक्षेद्गृहेत् ८ तथास्व यंसम्यक्कारस्यैनकृतंनिष्पादितंकार्यंतत्करणशीलःस्यात् । शत्रुशेषंनावशेषयेदित्यर्थः । तत्रदृष्टांतः कंटकइति दुश्छिन्नोऽर्धच्छिन्नः आस्रावंव्रणं ९ उपसंहरति वधमिति कथंवधःकर्तव्य इत्याह सुविदीर्णमिति सुविक्रांतमपिशत्रुंकालेआपद्यापन्नमालभ्यसुविदीर्णंविनष्टंकुर्वीत । तथासुयुद्धमपिशत्रुमापदिकालेसुपलायितंकुर्वीत । यस्यचभावेनभावलक्षणमितिसप्तमी । आ पदाशत्रोर्विदारणकालोलक्षणीयइत्यर्थः । आपदिआपदीतिद्वित्वं यदाशत्रोरापत्तदातदेतत्कर्तव्यंनत्वनुबंधादिकंसौभ्रात्रादिकंवाविचारयेत् सार्धश्लोकः १०



मध्यमंप्रत्येवमुक्त्वाऽधमोऽपिनोपेक्षणीयइत्याह नावज्ञेयइति ११ आश्रयोदुर्गादिः ईंधनमग्नेस्तस्यसंश्रयाद्बलात् । आश्रयाभावेतुसकिंकुर्यात्तत्राह अंधइति सर्वांधवेलायांरात्रौ । 'अंधंतुतिमिरेक्लीबे'इतिमेदिनी । सामर्थ्यप्रतिघातसमर्येऽधोहीनोपकरणःस्याद्भवेत् । शस्त्रंत्यक्त्वाशत्रुंशरणमेतीत्यर्थः । बाधिर्यमपिचाश्रयेत् तदानींधिक्कृतोऽप्यश्रुतवदेवतत्कृत्वाक्षमेत १२ अयंश त्रुश्चापंतृणंतृणवन्निष्प्रयोजनंकुर्यात् क्षात्रंधर्मंत्यक्त्वाशत्रुगृहेभिक्षाभुगपिस्यादित्यर्थः । ननुसिद्धस्तर्हिपुरुषार्थइतिचेत्तत्राह । शयीतमृगशायिकांमृगहंतुःशय्यांशयीतशेते । यथाव्याधोमृगान्विश्वासयितुंमृगपानिद्रातिविश्वस्तेषुचतेषुप्रहरत्येवंसहंतुमेवाकारंगोपयतीत्यर्थः । उपसंहरति सांत्वेति तुतस्मात् तमेवंकपटेनवशेस्थितंस्वयमपिसांत्वादिनविश्वास्यहन्यादेवेत्यर्थः १३ । १४ बलाधिकसुहृद्याह हन्यादिति अमित्रंसहजशत्रुंदायादंदानेनतत्परिवारकान्वशीकृत्यविषाद्युपायैर्हन्यात् । तथासंमतिदासभूतमपिपूर्वापकारिणंहन्यादेवेत्युक्तंभवति अत्रोपायमाह हन्यादिति

आपद्यापदिकालेचकुर्वीतनविचारयेत् ॥ नावज्ञेयोरिपुस्तातदुर्बलोऽपिकथंचन ११ अल्पोऽप्यग्निर्वनंकृत्स्नंदहत्याश्रयसंश्रयात् ॥ अंधःस्यादंधवेलायांबाधिर्यमपिचाश्रयेत् १२ कुर्यात्तृणमयंचापंशयीतमृगशायिकाम् ॥ सांत्वादिभिरुपायैस्तुहन्याच्छत्रुंवशेस्थितम् १३ दयानतस्मिन्कर्तव्याशरणागतइत्युत ॥ निरुद्विग्नोहिभवतिनहताज्जायतेभयम् १४ हन्यादमित्रंदानेनतथापूर्वापकारिणम् ॥ हन्यात्त्रीन्पंचसप्तेतिपरपक्षस्यसर्वशः १५ मूलमेवादितश्छिंद्यात्परपक्षस्यनित्यशः ॥ ततःसहायांस्तत्पक्षान्सर्वांश्चतदनंतरम् १६ छिन्नमूलेह्यधिष्ठानेसर्वेतज्जीविनोहताः ॥ कथंनुशाखास्तिष्ठेरंश्छिन्नमूलेवनस्पतौ १७ एकाग्रःस्यादविवृतोनित्यंविवरदर्शकः ॥ राजन्नित्यंसपत्नेषुनित्योद्विग्नःसमाचरेत् १८ अग्न्याधानेनयज्ञेनकाषायेणजटाजिनैः ॥ लोकान्विश्वासयित्वैवतोलुंपेद्यथावृकः १९ अंकुशंशौचमित्याहुरर्थानामुपधारणे ॥ आनाम्यफलितांशाखांपक्वंपक्वंप्रशातयेत् २० फलार्थोऽयंसमारंभोलोकेपुंसांविपश्चिताम् ॥ वहेदमित्रंस्कंधेनयावत्कालस्यपर्ययः २१ ततःप्रत्यागतेकालेभिंद्याद्घटमिवाश्मनि ॥ अमित्रोनविमोक्तव्यःकृपणंबह्वपिब्रुवन् २२ कृपानतस्मिन्कर्तव्याहन्यादेवापकारिणम् ॥ हन्यादमित्रंसांत्वेनतथादानेनवापुनः २३ तथैवभेददंडाभ्यांसर्वोपायैःप्रशातयेत् ॥ ॥ धृतराष्ट्रउवाच ॥ ॥ कथंसांत्वेनदानेनभेदैर्दंडेनवापुनः २४

परपक्षस्यकृत्स्नान्ऐश्वर्यमंत्रोत्साहान् ऐश्वर्यंतदीयदुर्गाद्याक्रमणेन । मंत्रंचारैः । उत्साहमाप्तद्वारातेजोवधेन । तथापंचैतेत्वयायौवराज्याद्भ्रंशनीयाइतिभावः तथापंच 'अमात्यराष्ट्रदुर्गाणि कोशोदंडश्चपंचमः'इतिप्रकृतिपंचकहननेशत्रोरैश्वर्यभ्रंशोभवतीत्यर्थः । दंडोऽत्रसैन्यं । 'साम्नादानेनभेदेनदंडेनोद्बंधनेनवा ॥ विषेणवन्हिनावाऽपिप्रकृतीःपंचनिर्हरेत्'इत्याह । सप्तेति उद्बंधनंप्रमत्तस्यपाशेनमारणं । यद्वा उद्बंधनादिनामूलंशत्रुमेवनाशयेत् १५ अन्नपानतांबूलादिद्वारातद्भृत्यान्भेदयित्वाविषादिनानाशयेत्किमितरैरित्याह मूलमेवेति १६ । १७ एकाग्रःएकःशत्रुरेवाऽग्रेदृष्टिगोचरोयस्यतादृशःस्यात् अन्यत्रमनोनदद्यात् । अविवृतोगुप्तांगः । विवरदर्शकः परच्छिद्रंद्रष्टुमित्यर्थः । नित्योद्विग्नः विश्वासंकृत्वाकचिदपिनिश्चितोनभवेदित्यर्थः । दर्शकइतिक्रियायांक्रियार्थायांण्वुल् १८ दंभादिनाऽपिशत्रुर्जेयइत्याह अग्न्याधानेनेति १९ अंकुशंअंकुशवत्परचित्ताकर्षणं । शौचमग्न्याधानादि । अत्रदृष्टांतः आनाम्येति आनामयित्वा २० एतत्प्रयोजनमाह फलार्थइति फलंशत्रुवधः प्रसिद्धंच सेवयानिर्दयत्वेनशत्रुंहन्यादित्याह वहेदित्यादिना २१ । २२ । २३ । २४

२५ । २६ । बभ्रुर्नकुलः मृगयूथपंमहांतंहरिणं २७ । २८ । २९ । ३० मूषिकेणआर्द्रपद्भक्षितैः ३१ । ३२ । ३३ । ३४ । ३५ मृगराजस्यव्याघ्रस्य ३६ । ३७ ।

अमित्रःशक्यतेहंतुंतन्मेब्रूहियथातथं ॥ कणिकउवाच ॥ शृणुराजन्यथावृत्तंवनेनिवसतःपुरा २५ जंबुकस्यमहाराजनीतिशास्त्रार्थदर्शिनः ॥ अथकश्चि
त्कृतप्रज्ञःशृगालःस्वार्थपंडितः २६ सखिभिर्न्यवसत्सार्धंव्याघ्राखुवृकबभ्रुभिः ॥ तेऽपश्यन्विपिनेतस्मिन्बलिनंमृगयूथपम् २७ अशक्ताग्रहणेतस्यततोमंत्रमम
त्रयन् ॥ जंबुकउवाच ॥ असकृद्यतितोह्येषहंतुंव्याघ्रवनेत्वया २८ युवावैजवसंपन्नोबुद्धिशालीनशक्यते ॥ मूषिकोऽस्यशयानस्यचरणौभक्षयत्वयं २९ अथै
नंभक्षितैःपादैर्व्याघ्रोगृह्णातुवैततः ॥ ततोवैभक्षयिष्यामःसर्वेमुदितमानसाः ३० जंबुकस्यतुतद्वाक्यंतथाचक्रुःसमाहिताः ॥ मूषिकाभक्षितैःपादैर्मृगंव्याघ्रो
ऽवधीत्तदा ३१ दृष्ट्वैवाचेष्टमानंतुभूमौमृगकलेवरं ॥ स्नात्वाऽऽगच्छतभद्रंवोरक्षामीत्याहजंबुकः ३२ शृगालवचनात्तेऽपिगताःसर्वेनदींततः ॥ सचिंतापरमोभू
त्वातस्थौतत्रैवजंबुकः ३३ अथाजगामपूर्वंतुस्नात्वाव्याघ्रोमहाबलः ॥ ददर्शजंबुकंचैवचिंताकुलितमानसं ३४ ॥ व्याघ्रउवाच ॥ किंशोचसिमहाप्राज्ञ
त्वंनोबुद्धिमतांवरः ॥ अशित्वापिशितान्यद्यविहरिष्यामहेवयं ३५ ॥ जंबुकउवाच ॥ शृणुमेत्वंमहाबाहोयद्वाक्यंमूषिकोऽब्रवीत् ॥ धिग्बलंमृगराजस्य
मयाऽद्यायंमृगोहतः ३६ मद्बाहुबलमाश्रित्यतृप्तिमद्यगमिष्यति ॥ गर्जमानस्यतस्यैवमतोभक्ष्यंनरोचये ३७ ॥ व्याघ्रउवाच ॥ ब्रवीतियदिसह्येवंकाले
ह्यस्मिन्प्रबोधितः ॥ स्वबाहुबलमाश्रित्यहनिष्येऽहंवनेचरान् ३८ खादिष्येतत्रमांसानिइत्युक्त्वाप्रस्थितोवनं ॥ एतस्मिन्नेवकालेतुमूषिकोऽप्याजगामह ३९
तमागतमभिप्रेत्यशृगालोऽप्यब्रवीद्वचः ॥ जंबुकउवाच ॥ शृणुमूषिकभद्रंतेनकुलोयदिहाब्रवीत् ४० मृगमांसंनखादेयंगरमेतन्नरोचते ॥ मूषिकंभक्षयिष्यामि
तद्भवाननुमन्यतां ४१ तच्छ्रुत्वामूषिकोवाक्यंसंत्रस्तःप्रगतोबिलं ॥ ततःस्नात्वासवैतत्रआजगामवृकोनृप ४२ तमागतमिदंवाक्यमब्रवीज्जंबुकस्तदा ॥ मृगरा
जोहिसंक्रुद्धोनतेसाधुभविष्यति ४३ सकलत्रस्त्विहायातिकुरुष्वयदनंतरं ॥ एवंसंचोदितस्तेनजंबुकेनतदावृकः ४४ ततोऽवलुंपनंकृत्वाप्रयातःपिशिताश
नः ॥ एतस्मिन्नेवकालेतुनकुलोऽप्याजगामह ४५ तमुवाचमहाराजनकुलंजंबुकोवने ॥ स्वबाहुबलमाश्रित्यनिर्जितास्तेऽन्यतोगताः ४६ ममदत्वानि
युद्धंत्वंभुंक्ष्वमांसंयथेप्सितं ॥ नकुलउवाच ॥ मृगराजोवृकश्चैवबुद्धिमानपिमूषिकः ४७ निर्जितायत्त्वयावीरास्तस्माद्वीरतरोभवान् ॥ नत्वयाऽप्युत्सहेयोद्धु
मित्युक्त्वासोऽप्युपागमत् ४८ ॥ कणिकउवाच ॥ एवंतेषुप्रयातेषुजंबुकोहृष्टमानसः ॥ खादतिस्मतदामांसमेकःसन्मंत्रनिश्चयात् ४९ एवंसमाचरन्नित्यंसुखमेधे
तभूपतिः ॥ भयेनभेदयेद्भीरुंशूरमंजलिकर्मणा ५० लुब्धमर्थप्रदानेनसमंन्यूनंतथौजसा ॥ एवंतेकथितंराजन्शृणुचाप्यपरंतथा ५१

३८ । ३९ । ४० गरंगरवद्दुष्पचंव्याघ्राभिपत्वात् ४१ । ४२ । ४३ । ४४ अवलुंपनं गात्रसंकोचनं वर्त्मांतरेणगमनमित्यन्ये ४५ । ४६ । ४७ । ४८ । ४९ भयेनेति अत्र
व्याघ्रस्यसाम्नाआखुवृकयोर्व्याघ्राद्भयदर्शनेननकुलस्यओजसास्वसामर्थ्येनचबुद्धिभेदःकृतः ५० । ५१

हंतव्याइत्यत्रकर्तव्याइतिपाठेऽपिच्छेत्तव्याइत्येवार्थः कृञ्हिंसायामित्यस्यरूपं । भूतिवर्धनाइतिपाठेभूतिच्छेदनाः५२ उभौजिगीषुतुल्योपायतयासंशयापन्नौचेच्छ्रद्धावान्योमदुक्तादरवान्सवर्धते । 'श्रद्धा
दरेचकांक्षायां'इतिमेदिनी ५३ ननुज्येष्ठोयुधिष्ठिरःकथंहंतव्यइत्याशंक्याह गुरोरिति अवलिप्तस्यभ्रातृबलेनगर्वितस्य । धृतराष्ट्रस्यराज्यंपांडोर्न्यासभूतमित्यजानतोराज्यलुब्धस्यशासनंकार्यमेव ५४
अपध्वंसेत्कुत्सयेत् ५५ । ५६ अस्यएनं विचलितेविचलनेसति ५७ । ५८ अनुप्राप्तवधःशीघ्रंहंतुमिष्टश्चौरादिः । अधनादरिद्राःसंतोनास्तिकाःपरलोकश्रद्धारहितास्तान्चौरांश्च । एवंधर्मे
पक्षपातंप्रदर्शयेदित्याशयः ५९ प्रतिविश्रब्धघातीअत्यंतविश्रब्धहननशीलः । तीक्ष्णदंष्ट्रोनिमग्नकः गाढंप्रहरेद्यथापुनर्नोन्मज्जेदित्यर्थः ६० योऽन्यंहंतुमिच्छतितमन्योऽपिजिघांसतीतिस्वय

पुत्रःसखावाभ्रातावापितावायदिवागुरुः ॥ रिपुस्थानेषुवर्तंतोहंतव्याभूतिमिच्छता ५२ शपथेनाप्यरिंहन्यादर्थदानेनवापुनः ॥ विषेणमाययावाऽपिनोपेक्षेतक
थंचन ॥ उभौचेत्संशयोपेतौश्रद्धावांस्तत्रवर्द्धते ५३ गुरोरप्यवलिप्तस्यकार्याकार्यमजानतः ॥ उत्पथप्रतिपन्नस्यन्याय्यंभवतिशासनम् ५४ क्रुद्धोऽप्यक्रुद्धरूपः
स्यात्स्मितपूर्वाभिभाषिता ॥ नचाप्यन्यमपध्वंसेत्कदाचित्कोपसंयुतः ५५ प्रहरिष्यन्प्रियंब्रूयात्प्रहरन्नपिभारत ॥ प्रहृत्यचकृपायीतशोचेतचरुदेतच ५६ आश्वा
सयेच्चापिपरंसांत्वधर्मार्थवृत्तिभिः ॥ अथास्यप्रहरेत्कालेयदाविचलितेपथि ५७ अपिघोरापराधस्यधर्ममाश्रित्यतिष्ठतः ॥ सहिप्रच्छाद्यतेदोषःशैलोमेघैरिवासितैः
५८ यःस्यादनुप्राप्तवधस्तस्यागारंप्रदीपयेत् ॥ अधनान्नास्तिकांश्चौरान्विषयेस्वेनवासयेत् ५९ प्रत्युत्थानासनाद्येनसंप्रदानेनकेनचित् ॥ प्रतिविश्रब्धघातीस्या
तीक्ष्णदंष्ट्रोनिमग्नकः ६० अशंकितेभ्यःशंकेतशंकितेभ्यश्चसर्वशः ॥ अशंक्याद्भयमुत्पन्नमपिमूलंनिकंतति ६१ नविश्वसेदविश्वस्तेविश्वस्तेनातिविश्वसेत् ॥ विश्वासा
द्भयमुत्पन्नंमूलान्यपिनिकंतति ६२ चारःसुविहितःकार्यआत्मनश्चपरस्यवा ॥ पाषंडांस्तापसादींश्चपरराष्ट्रेषुयोजयेत् ६३ उद्यानेषुविहारेषुदेवतायतनेषुच ॥
पानागारेषुरथ्यासुसर्वतीर्थेषुचाप्यथ ६४ चत्वरेषुचकूपेषुपर्वतेषुवनेषुच ॥ समवायेषुसर्वेषुसरित्सुचविचारयेत् ६५ वाचाभृशंविनीतःस्याद्धृदयेनतथाक्षुरः ॥
स्मितपूर्वाभिभाषीस्यात्सृष्टोरौद्रेणकर्मणा ६६ अंजलिःशपथःसांत्वंशिरसापादवंदनम् ॥ आशाकरणमित्येवंकर्तव्यंभूतिमिच्छता ६७ सुपुष्पितःस्यादफ
लःफलवान्स्याद्दुरारुहः ॥ आमःस्यात्पक्वसंकाशोनचजीर्येतकर्हिचित् ६८

मशंकितेभ्यइति ६१ सर्वत्रशंकावतःकिमपिकार्यंनसिद्ध्यतीत्याशंक्याह नेति ६२ सुविहितःसम्यक्परीक्षितः ६३ उद्यानादिस्थानेषुयेसमवायाजनसमूहास्तेषु । तीर्थेषु ' मंत्रीपुरोहितश्चैव
युवराजश्चमूपतिः ॥ पंचमोद्वारपालश्चषष्ठोंऽतर्वेशिकस्तथा ॥ कारागाराधिकारीचद्रव्यसंचयकृत्तथा ॥ कृत्याकृत्येषुचार्थानांनवमोविनियोजकः ॥ प्रदेष्टानगराध्यक्षःकार्यनिर्माणकृत्तथा ॥ धर्माध्य
क्षःसभाध्यक्षोदंडपालस्त्रिपंचमः ॥ षोडशोदुर्गपालश्चतथाराष्ट्रांतपालकः ॥ अटवीपालकांतानितीर्थान्यष्टादशैववु'इतिनीतिशास्त्रोक्तेषु विचारयेत्चारद्वाराशत्रुं चिकीर्षितुमितिशेषः ६४ । ६५
६६ आशाकरणंतुभ्यंधनादिकंदास्येइत्युक्त्याप्रलोभनंभूतिमिच्छताभूतिकामस्यैवैतदुचितंनपरलोककामस्येत्यर्थः ६७ अस्मिन्नर्थेनीतिशास्त्रीयंवृक्षरूपकश्लोकमाह सुपुष्पितइति पुष्पितःशब्दे
नैवफलाशांदर्शयेन्नतुफलं । दर्शितस्यप्राप्तावपिविघ्नंयोजयेत् प्राप्तमप्यप्राप्तवत् । आमःपक्वोभूत्वातिष्ठेत् । नचजीर्येतधनव्ययेनशत्रून्पोपयित्वाहीयेत ६८

एवंनानोपायैःशत्रूणांदंडमुक्त्वानीतिमाह त्रिवर्गइति त्रिवर्गेधर्मार्थकामेषुत्रिविधात्रिप्रकारापीडा । एकएकैकेनप्रकारेणपीड्यतइत्यर्थः । तथाअनुपश्चाद्बध्यतइत्यनुबंधःफलंतदपितथैवात्रि
विधंशुभं । पीडास्तुनशुभाः । त्रिवर्गेपरस्परापीडयासेवेतेत्यर्थः ६९ तत्रपीडामाह धर्ममिति धर्ममत्यंतंविचरतःपुंसोद्वाभ्यामर्थकामाभ्यांधनव्ययब्रह्मचर्योपक्षिप्ताभ्यांपीडाचित्तवैकल्यंभवति ।
साऽपिपुंसःपीडाधर्मंनियच्छतिनिगृह्णाति । कर्तुःपीडैवधर्मपीडेत्यर्थः । एवमर्थंचाप्यर्थलुब्धस्यकामंचातिप्रवर्तिनइतिव्याख्येयं । लुब्धस्यार्थंविचरतःपुंसोद्वाभ्यांकामधर्माभ्यांपीडिताभ्यांपीडाभवति ।
सापीडार्थंनियच्छति । एवमतिप्रवर्तिनःकामंविचरतःपुंसोद्वाभ्यांधर्मार्थाभ्यांपीडाभवति । साऽपिपीडाकामंनियच्छतीतियोज्यं । अर्थस्यकामस्येतिपाठेकर्मणिषष्ठ्यौ ७० । ७१ समर्थो
धर्ममाचरेदित्यनेनपूर्वोक्तसर्वकौटिल्यादिकमापद्येवकार्यंनान्यथेत्युक्तं ७२ संशयंप्राणसंकटं ७३ परिभवेतशोकेन तमतीतेननलरामाद्याख्यानेन । अनागतेनकालांतरेतवश्रेयोभविष्यतीत्याशा

त्रिवर्गेत्रिविधापीडाह्यनुबंधस्तथैवच ॥ अनुबंधाःशुभाज्ञेयाःपीडास्तुपरिवर्जयेत् ६९ धर्मंविचरतःपीडासाऽपिद्वाभ्यांनियच्छति ॥ अर्थंचाप्यर्थलुब्धस्यका
मंचातिप्रवर्तिनः ७० अगर्वितात्मायुक्तश्चसांत्वयुक्तोऽनसूयिता ॥ अवेक्षितार्थःशुद्धात्मामंत्रयीतद्विजैःसह ७१ कर्मणायेनकेनैवमृदुनादारुणेनच ॥ उद्धरेद्दी
नमात्मानंसमर्थोधर्ममाचरेत् ७२ नसंशयमनारुह्यनरोभद्राणिपश्यति ॥ संशयंपुनरारुह्ययदिजीवतिपश्यति ७३ यस्यबुद्धिःपरिभवेत्तमतीतेनसांत्वयेत् ॥ अ
नागतेनदुर्बुद्धिंप्रत्युत्पन्नेनपंडितम् ७४ योऽरिणासहसंधायशयीतकृतकृत्यवत् ॥ सवृक्षाग्रेयथासुप्तःपतितःप्रतिबुध्यते ७५ मंत्रसंवरणेयत्नःसदाकार्योऽनसूयता ॥
आकारमभिरक्षेतचारेणाप्यनुपालितः ७६ नाच्छित्वापरमर्माणिनाकृत्वाकर्मदारुणम् ॥ नाहत्वामत्स्यघातीवप्राप्नोतिमहतींश्रियम् ७७ कर्शितंव्याधितंक्लि
न्नमपानीयमघासकम् ॥ परिविश्वस्तमंदंचप्रहर्तव्यमरेर्बलम् ७८ नार्थिकोर्थिनमभ्येतिकृतार्थेनास्तिसंगतम् ॥ तस्मात्सर्वाणिसाध्यानिसावशेषाणिकारयेत्
७९ संग्रहेविग्रहेचैवयत्नःकार्योऽनसूयता ॥ उत्साहश्चापियत्नेनकर्तव्योभूतिमिच्छता ८० नास्यकृत्यानिबुध्येरन्मित्राणिरिपवस्तथा ॥ आरब्धान्येवपश्ये
रन्सुपर्यवसितान्यपि ८१ भीतवत्संविधातव्यंयावद्भयमनागतम् ॥ आगतंतुभयंदृष्ट्वाप्रहर्तव्यमभीतवत् ८२ दंडेनोपनतंशत्रुमनुगृह्णातियोनरः ॥ समृत्युमुप
गृह्णीयाद्गर्भमश्वतरीयथा ८३ अनागतंहिबुध्येतयच्चकार्यंपुरःस्थितम् ॥ नतुबुद्धिक्षयात्किंचिदतिक्रामेत्प्रयोजनम् ८४ उत्साहश्चापियत्नेनकर्तव्योभूति
मिच्छता ॥ विभज्यदेशकालौचदैवंधर्मादयस्त्रयः ॥ नैःश्रेयसौतुतौज्ञेयौदेशकालाविितिस्थितिः ८५

प्रदर्शनेन । पंडितंप्रत्युत्पन्नेनवर्तमानेनधनादिनासांत्वयेत् ७४ संधिपक्षंनिंदति योऽरिणेति ७५ मंत्रेति परचारेभ्योमंत्रस्यगूहनं । आकारस्यक्रोधाद्यावेशस्यचगूहनंकर्तव्यं । स्वयंचचारप्रधानः
स्यादित्यर्थः ७६ दंडस्यैवप्राधान्यमाह नाच्छित्वेति ७७ विग्रहकालमाह कर्शितमिति अघासकमनाहारं ७८ नार्थिकइति संगतंसख्यं कार्येषुसावशेषेषुकार्यिणःस्ववशेतिष्ठंत्यन्यथा
नगणयंतीत्यर्थः ७९ संग्रहेसहायादीनां विग्रहेरिपुभिःसार्धं ८० । ८१ संविधातव्यंप्रतिकर्तव्यं ८२ उपनतंवशीकृतं । अनुगृह्णातिधनमानादिना । अश्वतरीअश्वगर्दभसंकीर्णजातिः ८३ अनागतं ॥१३४॥
कार्यंबुद्ध्येतबुद्ध्वाचतदनुगुणंकुर्यादित्यर्थः । पुरःस्थितंवर्तमानं बुद्धिक्षयादनवधारणात् ८४ देशाद्यनुगुणउत्साहोऽपिकर्तव्योनत्वब्लसोभवेत् । दैवंमाक्तनंकर्मयेधर्मादयस्त्रयस्तांश्चविभज्य
तेषांमध्येनैःश्रेयसौश्रेयोहेतूइतिस्थितिर्निश्चयः ८५

बालःअल्पोऽपि ८६ आत्मानंसंधुक्षयतिसहायादिनावर्धयति । संचयमिंधनानां पक्षेशत्रूणां ८७ आशांकालवतींदद्यादित्यतःप्राग्दाक्षिणात्या'आदातव्यंनदातव्यमाशामेवप्रदापयेत्'इत्यर्धंपठंति ।
कालवतींदीर्घावधिमतीं निमित्ततोहेतुतः तमपिहेत्वंतरेण ८८ क्षुरःक्षुरवत् निशितस्तीक्ष्णोनिर्दयइतियावत् पक्षेशाणोल्लीढः । कालसाधनश्छिद्रकालापेक्षः पक्षेकाललोहोपादानकः । प्रतिच्छ
न्नोगूढाशयः । पक्षेचर्मपुटच्छन्नः लोमहारीअनुलोमसंग्रही पक्षेलोमच्छेदकः । लोमवाहीतिपाठेऽपितावेवार्थौ ८९ । ९० कल्याणैर्धनपुत्रराज्यादिभिःसंपन्नः । विशिष्टःकुलशीलबलादि

तालवत्कुरुतेमूलंबालःशत्रुरुपेक्षितः ॥ गहनेऽग्निरिवोत्सृष्टःक्षिप्रंसंजायतेमहान् ८६ अग्निंस्तोकमिवात्मानंसंधुक्षयतियोनरः ॥ सवर्धमानोग्रसतेमहांतमपि
संचयम् ८७ आशांकालवतींकुर्यात्कालंविघ्नेनयोजयेत् ॥ विघ्नंनिमित्ततोब्रूयान्निमित्तंवाऽपिहेतुतः ८८ क्षुरोभूत्वाहरेत्प्राणान्निशितःकालसाधनः ॥ प्रतिच्छ
न्नोलोमहारीद्विषतांपरिकर्तनः ८९ पांडवेषुयथान्यायमन्येषुचकुरूद्वह ॥ वर्तमानोनमज्जेस्त्वंतथाकृत्यंसमाचर ९० सर्वकल्याणसंपन्नोविशिष्टइतिनिश्चयः ॥
तस्मात्त्वंपांडुपुत्रेभ्योरक्षात्मानंनराधिप ९१ भ्रातृव्याबलिनोयस्मात्पांडुपुत्रानराधिप ॥ पश्चात्तापोयथानस्यात्तथानीतिर्विधीयताम् ९२ ॥ वैशंपायनउवाच॥
एवमुक्त्वासंप्रतस्थेकणिकःस्वगृहंततः ॥ धृतराष्ट्रोऽपिकौरव्यःशोकार्तःसमपद्यत ९३ ॥ इति श्रीमहाभारते आदिपर्वणि संभवपर्वणि कणिकवाक्येचत्वा
रिंशदधिकशततमोऽध्यायः ॥ १४० ॥ ॥ समाप्तंचसंभवपर्व ॥ अथजतुगृहपर्व ॥ वैशंपायनउवाच ॥ ततःसुबलपुत्रस्तुराजादुर्योधनश्चह ॥ दुःशा
सनश्चकर्णश्चदुष्टंमंत्रममंत्रयन् १ तेकौरव्यमनुज्ञाप्यधृतराष्ट्रंनराधिपम् ॥ दहनेतुसपुत्रायाःकुंत्याबुद्धिमकारयन् २ तेषामिंगितभावज्ञोविदुरस्तत्त्वदर्शिवान् ॥
आकारेणचतंमंत्रंबुबुधेदुष्टचेतसाम् ३ ततोविदितवेद्यात्मापांडवानांहितेरतः ॥ पलायनेमतिंचक्रेकुंत्याःपुत्रैःसहानघः ४ ततोवातसहांनावंयंत्रयुक्तांपताकि
नीम् ॥ ऊर्मिक्षमांदृढांकृत्वाकुंतीमिदमुवाचह ५ एषजातःकुलस्यास्यकीर्तिवंशप्रणाशनः ॥ धृतराष्ट्रःपरीतात्माधर्मंत्यजतिशाश्वतम् ६ इयंवारिपथेयुक्ता
तरंगपवनक्षमा ॥ नौर्ययामृत्युपाशात्त्वंसपुत्रामोक्ष्यसेशुभे ७ तच्छ्रुत्वाव्यथिताकुंतीपुत्रैःसहयशस्विनी ॥ नावमारुह्यगंगायांप्रययौभरतर्षभ ८ ततोविदु
रवाक्येननावंविक्षिप्यपांडवाः ॥ धनंचादायतैर्दत्तमरिष्टंप्राविशन्वनम् ९ निषादीपंचपुत्रातुजातुषेतत्रवेश्मनि ॥ कारणाभ्यागतादग्धासहपुत्रैरनागसा १०
सचम्लेच्छाधमःपापोदग्धस्तत्रपुरोचनः ॥ वंचिताश्चदुरात्मानोधार्तराष्ट्राःसहानुगाः ११

भिःश्रेष्ठः ९१ । ९२ । ९३ ॥ इति आदिपर्वणि नैलकंठीये भारतभावदीपे चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥ ॥ ७ ॥ ततइति १ अनुज्ञाप्यपृष्ट्वा २ इंगितंचेष्टितंतेनभावंचित्ताभि
प्रायंजानातीतिइंगितभावज्ञः । आकारेणचनेत्रादिविकारेण । यथाहुः'नेत्रवक्त्रविकारेणज्ञायतेंतर्गतंमनः'इति ३ विदितवेद्योज्ञाततत्त्वआत्माचित्तंयस्य ४ यंत्रंमहत्यपिवातेजलाशयेनौकास्तंभकंलोह
लांगलमयंसामुद्रिकप्रसिद्धं । एवंपताकावतीनौर्वायुनावेगेनक्षुभ्यमानानचोर्मिभिःपूरयितुंशक्याऽतउक्तंपताकिनीमूर्मिक्षमामिति ५ परीतात्माविपरीतबुद्धिः परीतोममताक्रांतआत्माचित्तंयस्येति
वा ६ । ७ नावमारुह्यप्रययाविति जतुगृहेस्वदाहोमाभूदितिबिलमार्गेणवारणावतंत्यक्त्वागंगातीरमाप्यनंतरं ८ अरिष्टंनिर्विघ्नं ९ । १० । ११

 १२ । १३ । १४ । १५ । १६ । १७ क्रूरेणकणिकेनोपसंहितमुपदिष्टं १८ । १९ प्राणाधिकंबलाधिकं २० । २१ यथागतंयथोपस्थितंतथैवप्रतिचक्रुः २२ । २३ राज्यप्राप्तिंराज्ययोग्यतां २४ 

॥१३५॥ अविज्ञातामहात्मानोजनानामक्षतास्तथा ॥ जनन्यासहकौंतेयामुक्ताविदुरमंत्रिताः १२ ततस्तस्मिन्पुरेलोकानगरेवारणावते ॥ दृष्ट्वाजतुगृहंदग्धमन्वशोचंत 
दुःखिताः १३ प्रेषयामासूराजानंयथावृत्तंनिवेदितुम् ॥ संवृत्तस्तेमहान्कामःपांडवान्दग्धवानसि १४ सकामोभवकौरव्यभुंक्ष्वराज्यंसपुत्रकः ॥ तच्छ्रुत्वाधृत ॥१४१॥
राष्ट्रस्तुसहपुत्रेणशोचयन् १५ प्रेतकार्याणिचतथाचकारसहबांधवैः ॥ पांडवानांतथाक्षत्ताभीष्मश्चकुरुसत्तमः १६ ॥ जनमेजयउवाच ॥ पुनर्विस्तरशःश्रोतु
मिच्छामिद्विजसत्तम ॥ दाहंजतुगृहस्यैवपांडवानांचमोक्षणम् १७ सुनृशंसमिदंकर्मतेषांक्रूरोपसंहितम् ॥ कीर्तयस्वयथावृत्तंपरंकौतूहलंमम १८ ॥ वैशंपायन
उवाच ॥ शृणुविस्तरशोराजन्वदतोमेपरंतप ॥ दाहंजतुगृहस्यैतत्पांडवानांचमोक्षणम् १९ प्राणाधिकंभीमसेनंकृतविद्यंधनंजयम् ॥ दुर्योधनोलक्षयित्वापर्यत
प्यतदुर्मनाः २० ततोवैकर्तनःकर्णःशकुनिश्चापिसौबलः ॥ अनेकैरभ्युपायैस्तेजिघांसंतिस्मपांडवान् २१ पांडवाअपितत्सर्वंप्रतिचक्रुर्यथागतम् ॥ उद्भावनम
कुर्वंतोविदुरस्यमतेस्थिताः २२ गुणैःसमुदितान्दृष्ट्वापौराःपांडुसुतांस्तदा ॥ कथयांचक्रिरेतेषांगुणान्संसत्सुभारत २३ राज्यप्राप्तिंचसंप्राप्तंज्येष्ठंपांडुसुतंतदा ॥
कथयंतिस्मसंभूयचत्वरेषुसभासुच २४ प्रज्ञाचक्षुरचक्षुष्ट्वाद्धृतराष्ट्रोजनेश्वरः ॥ राज्यंनप्राप्तवान्पूर्वंसकथंनृपतिर्भवेत् २५ तथाशांतनवोभीष्मःसत्यसंधोमहा
व्रतः ॥ प्रत्याख्यायपुराराज्यंनसजातुग्रहीष्यति २६ तेवयंपांडवज्येष्ठंतरुणंवृद्धशीलिनम् ॥ अभ्यषिंचामसाध्वद्यसत्यकारुण्यवेदिनम् २७ सहिभीष्मंशांतनवं
धृतराष्ट्रंचधर्मवित् ॥ सपुत्रंविविधैर्भोगैर्योजयिष्यतिपूजयन् २८ तेषांदुर्योधनःश्रुत्वातानिवाक्यानिजल्पताम् ॥ युधिष्ठिरानुरक्तानांपर्यतप्यतदुर्मतिः २९ सत
प्यमानोदुष्टात्मातेषांवाचोनचक्षमे ॥ ईर्ष्ययाचापिसंतप्तोधृतराष्ट्रमुपागमत् ३० ततोविरहितंदृष्ट्वापितरंप्रतिपूज्यसः ॥ पौरानुरागसंतप्तःपश्चादिदमभाषत
३१ ॥ दुर्योधनउवाच ॥ श्रुत्वामेजल्पतांतातपौराणामशिवागिरः ॥ त्वामनादृत्यभीष्मंचपतिमिच्छंतिपांडवम् ३२ मतमेतच्चभीष्मस्यनसराज्यंबुभुक्षति ॥
अस्माकंतुपरांपीडांचिकीर्षंतिपुरेजनाः ३३ पितृतःप्राप्तवान्राज्यंपांडुरात्मगुणैःपुरा ॥ त्वमंधगुणसंयोगात्प्राप्तंराज्यंनलब्धवान् ३४ सएषपांडोर्दाया
द्यंयदिप्राप्नोतिपांडवः ॥ तस्यपुत्रोध्रुवंप्राप्तस्तस्यतस्यापिचापरः ३५ तेवयंराजवंशेनहीनाःसहसुतैरपि ॥ अवज्ञाताभविष्यामोलोकस्यजगतीपते ३६ सततं ॥१३५॥
निरयंप्राप्ताःपरपिंडोपजीविनः ॥ नभवेमयथाराजंस्तथानीतिर्विधीयताम् ३७

प्रज्ञाचक्षुरंधोऽतएवानधिकाराद्राज्यंनप्राप्तवान्सइदानीमपिपुत्रद्वाराकथंनृपतिर्भवेन्नकथमपि द्वारलोपादित्यर्थः २५ । २६ सत्यंकारुण्यंवेदश्रुतद्वंतं २७ । २८ । २९ । ३० विरहितमेकाकिनं ३१ । ३२
अस्माकंतुपरांपीडामितिमिथ्यैवोक्तंराज्ञःपांडवेपुद्वेषमुत्पादयितुं राज्यापहरणाद्यापीडां ३३ प्राप्तंज्येष्ठत्वात्प्राप्तमपि ३४ दायाद्यंदायादःपुत्रस्तद्योग्यंराज्यं तस्यपांडवस्य ३५ । ३६ निरयंदुःखं ३७

३८ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १३० ॥ ॥ ७ ॥ एवमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

यदित्वंहिपुराराजन्निदंराज्यमवाप्तवान् ॥ ध्रुवंप्राप्स्यामचवयंराज्यमप्यवशेजने ३८ इतिश्रीमहाभारतेआदिपर्वणिजतुगृहपर्वणिदुर्योधनेर्ष्यायामेकचत्वारिंशदधि
कशततमोऽध्यायः ॥ १४१ ॥ वैशंपायनउवाच ॥ एवंश्रुत्वातुपुत्रस्यप्रज्ञाचक्षुर्नराधिपः ॥ कणिकस्यचवाक्यानितानिश्रुत्वाससर्वशः १ धृतराष्ट्रोद्विधाचित्तः
शोकार्त्तःसमपद्यत ॥ दुर्योधनश्चकर्णश्चशकुनिःसौबलस्तथा २ दुःशासनचतुर्थास्तेमंत्रयामासुरेकतः ॥ ततोदुर्योधनोराजाधृतराष्ट्रमभाषत ३ पांडवेभ्योभयंनः
स्यात्तान्विवासयतांभवान् ॥ निपुणेनाभ्युपायेननगरंवारणावतम् ४ धृतराष्ट्रस्तुपुत्रेणश्रुत्वावचनमीरितम् ॥ मुहूर्तमिवसंचिंत्यदुर्योधनमथाब्रवीत् ५ ॥ धृतरा
ष्ट्रउवाच ॥ धर्मनित्यःसदापांडुस्तथाधर्मपरायणः ॥ सर्वेषुज्ञातिषुतथामयित्वासीद्विशेषतः ६ नासौकिंचिद्विजानातिभोजनादिचिकीर्षितम् ॥ निवेदयतिनित्यं
हिममराज्यंधृतव्रतः ७ तस्यपुत्रोयथापांडुस्तथाधर्मपरायणः ॥ गुणवाँल्लोकविख्यातःपौरवाणांसुसंमतः ८ सकथंशक्यतेऽस्माभिरपाकर्तुंबलादितः ॥ पितृ
पैतामहाद्राज्यात्ससहायोविशेषतः ९ भृताहिपांडुनाऽमात्याबलंचसततंभृतम् ॥ भृताःपुत्राश्चपौत्राश्चतेषामपिविशेषतः १० तेपुरासत्कृतास्तातपांडुनानागरा
जनाः ॥ कथंयुधिष्ठिरस्यार्थेननोहन्युःसबांधवान् ११ ॥ दुर्योधनउवाच ॥ एवमेतन्मयाताततभावितंदोषमात्मनि ॥ दृष्ट्वाप्रकृतयःसर्वाअर्थमानेनपूजिताः १२
ध्रुवमस्मत्सहायास्तेभविष्यंतिप्रधानतः ॥ अर्थवर्गःसहामात्योमत्संस्थोऽद्यमहीपते १३ सभवान्पांडवानाशुविवासयितुमर्हति ॥ मृदुनैवाभ्युपायेननगरंवारणाव
तम् १४ यदाप्रतिष्ठितंराज्यंमयिराजन्भविष्यति ॥ तदाकुंतीसहापत्यापुनरेष्यतिभारत १५ ॥ धृतराष्ट्रउवाच ॥ दुर्योधनममाप्येतद्धृदिसंपरिवर्त्तते ॥ अभि
प्रायस्यपापत्वान्नैवंतुविवृणोम्यहम् १६ नचभीष्मोनचद्रोणोनचक्षत्तानगौतमः ॥ विवास्यमानान्कौंतेयाननुमंस्यंतिकर्हिचित् १७ समाहिकौरवेयाणांवयंतेचैव
पुत्रक ॥ नैतेविषममिच्छेयुर्धर्मयुक्तामनस्विनः १८ तेवयंकौरवेयाणामेतेषांचमहात्मनाम् ॥ कथंनवध्यतांतातगच्छामजगतस्तथा १९ ॥ दुर्योधनउवाच ॥
मध्यस्थःसततंभीष्मोद्रोणपुत्रोमयिस्थितः ॥ यतःपुत्रस्ततोद्रोणोभवितानात्रसंशयः २० कृपःशारद्वतश्चैवयतएतौततोभवेत् ॥ द्रोणंचभागिनेयंचनसत्यक्ष्य
तिकर्हिचित् २१ क्षत्ताऽर्थबद्धस्त्वस्माकंप्रच्छन्नंसंयतःपरैः ॥ नचैकःससमर्थोऽस्मान्पांडवार्थेऽधिबाधितुम् २२ सुविस्रब्धःपांडुपुत्रान्सहमात्राप्रवासय ॥ वार
४६ णावतमद्यैवयथायांतितथाकुरु २३ विनिद्रकरणंघोरंहृदिशल्यमिवार्पितम् ॥ शोकपावकमुद्भूतंकर्मणैतेननाशय २४ ॥ इतिश्रीम० आदिपर्वणिजतुगृहपर्वणि
दुर्योधनपरामर्शेद्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥ ॥

१० । ११ भावितंवर्धितं १२ प्रधानतःप्राधान्येन अर्थवर्गोधनकोशः मत्संस्थोमदधीनः १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ सुविस्रब्धोनिः
शंकः २३ । २४ ॥ ॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपे द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥ ॥ ७ ॥ ॥ ७ ॥

ततइति प्रकृतयःप्रकृतीःसंजहारस्वाधीनाश्चक्रे १ । २ । समाजःपशुपतेःपूजार्थंमेलकः ३ । ४ ५ जातकौतूहलाजातकौतुकदिदृक्षाः ६ । ७ सगणाःसपरिवाराः सान्वयाः
अन्वयोवंशः सकुंतीकाइत्यर्थः । सानुयात्राइतिपाठे यात्रामनुविधीयमानाःशिबिकाकोशाद्युपस्करास्तत्सहिताः ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ प्रसहिष्यतेस्प्रष्टुंशक्रो



॥ वैशंपायनउवाच ॥ ततोदुर्योधनोराजासर्वाःप्रकृतयःशनैः ॥ ॥ अर्थमानप्रदानाभ्यांसंजहारसहानुजः १ धृतराष्ट्रप्रयुक्तास्तेकेचित्कुशलमंत्रिणः ॥ क
थयांचक्रिरेरम्यंनगरंवारणावतम् २ अयंसमाजःसुमहान्रमणीयतमोभुवि ॥ उपस्थितःपशुपतेर्नगरेवारणावते ३ सर्वरत्नसमाकीर्णेपुंसांदेशेमनोरमे ॥ इत्ये
वंधृतराष्ट्रस्यवचनाच्चक्रिरेकथाः ४ कथ्यमानेतथारम्येनगरेवारणावते ॥ गमनेपांडुपुत्राणांजज्ञेतत्रमतिर्नृप ५ यदात्वमन्यतनृपोजातकौतूहलाइति ॥ उ
वाचैतानेत्यतदापांडवानंबिकासुतः ६ ममैतेपुरुषानित्यंकथयंतिपुनःपुनः ॥ रमणीयतमंलोकेनगरंवारणावतम् ७ तेतातायदिमन्यध्वमुत्सवंवारणावते ॥
सगणाःसान्वयाश्चैवविहरध्वंयथाऽमराः ८ ब्राह्मणेभ्यश्चरत्नानिगायनेभ्यश्चसर्वशः ॥ प्रयच्छध्वंयथाकामंदेवाइवसुवर्चसः ९ कंचित्कालंविहृत्यैवमनुभूयपरां
मुदं ॥ इदंवैहास्तिनपुरंसुखिनःपुनरेष्यथ १० ॥ वैशंपायनउवाच ॥ धृतराष्ट्रस्यतंकाममनुबुध्ययुधिष्ठिरः ॥ आत्मनश्चसहायत्वंतथेतिप्रत्युवाचतं ११
ततोभीष्मंशांतनवंविदुरंचमहामतिं ॥ द्रोणंचबाह्लिकंचैवसोमदत्तंचकौरवम् १२ कृपमाचार्यपुत्रंचभूरिश्रवसमेवच ॥ मान्यानन्यानमात्यांश्चब्राह्मणांश्चतपोधनान्
१३ पुरोहितांश्चपौरांश्चगांधारींचयशस्विनीम् ॥ युधिष्ठिरःशनैर्दीनउवाचेदंवचस्तदा १४ रमणीयेजनाकीर्णेनगरेवारणावते ॥ सगणास्तत्रयास्यामोधृतराष्ट्रस्य
शासनात् १५ प्रसन्नमनसःसर्वेपुण्यावाचोविसृजत ॥ आशीर्भिर्वृंहितानस्मान्नपापंप्रसहिष्यते १६ एवमुक्तास्तुतेसर्वेपांडुपुत्रेणकौरवाः ॥ प्रसन्नवदनाभूत्वातेऽन्वव
र्तंतपांडवान् १७ स्वस्त्यस्तुवःपथिसदाभूतेभ्यश्चैवसर्वशः ॥ माचवोऽस्त्वशुभंकिंचित्सर्वशःपांडुनंदनाः १८ ततःकृतस्वस्त्ययनाराज्यलंभायपार्थिवाः ॥ कृत्वा
सर्वाणिकार्याणिप्रययुर्वारणावतम् १९ ॥ इतिश्रीमहाभारतेआदिपर्वणिजतुगृहपर्वणिवारणावतयात्रायांत्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥ ॥ वैशं
पायनउवाच ॥ एवमुक्तेषुराज्ञातुपांडुपुत्रेषुभारत ॥ दुर्योधनःपरंहर्षमगच्छत्सदुरात्मवान् १ सपुरोचनमेकांतमानीयभरतर्षभ ॥ गृहीत्वादक्षिणेपाणौसचिवंवा
क्यमब्रवीत् २ ममेयंवसुसंपूर्णापुरोचनवसुंधरा ॥ यथेयंममतद्वत्तेसतांरक्षितुमर्हसि ३ नहिमेकश्चिदन्योऽस्तिविश्वासिकतरस्त्वया ॥ सहायोयेनसंधायमंत्रयेयं
यथात्वया ४ संरक्षतातमंत्रंचसपत्नांश्चममोद्धर ॥ निपुणेनाभ्युपायेनयद्ब्रवीमितथाकुरु ५ पांडवाधृतराष्ट्रेणप्रेषितावारणावतम् ॥ उत्सवेविहरिष्यंतिधृतराष्ट्रस्यशा
सनात् ६ सत्वंरासभयुक्तेनस्यंदनेनाशुगामिना ॥ वारणावतमद्यैवयथायासितथाकुरु ७ तत्रगत्वाचतुःशालंगृहंपरमसंवृतं ॥ नगरोपांतमाश्रित्यकारयेथामहाधनं ८ ॥१३६॥

ति १६ । १७ । १८ राज्यलंभायराज्यांशलाभाय १९ ॥ इति आदिपर्वणिनीलकंठीयेभारतभावदीपेत्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥ ॥ ७ ॥ एवमिति १ । २ सत्वं
तांत्वदीयांमदीयांच ३ विश्वासिकतरोविश्वासेनाप्ततरः संधायमिलित्वा ४ उद्धरउन्मूलय ५ । ६ रासभेतितदुत्पन्नाश्वतरग्रहणं ७ महाधनंबहुधनसाध्यं ८

आग्नेयान्यग्निसंदीपकानि ९ । १० । ११ । १२ । १३ पिताधृतराष्ट्रः १४ । १५ । १६ । १७ । १८ । १९ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे चतुश्चत्वारिंशदधिकशततमोऽ

शणसर्जरसादीनियानिद्रव्याणिकानिचित् ॥ आग्नेयान्युतसंतीहतानितत्रप्रदापय ९ सर्पिस्तैलवसाभिश्चलाक्षयाचाप्यनल्पया ॥ मृत्तिकांमिश्रयित्वात्वंलेपंकु
ड्येषुदापय १० शणंतैलंघृतंचैवजतुदारूणिचैवहि ॥ तस्मिन्वेश्मनिसर्वाणिनिक्षिपेथाःसमंततः ११ यथाचतन्नपश्येरन्परीक्षंतोऽपिपांडवाः ॥ आग्नेयमिति
तत्कार्यमपिचान्येऽपिमानवाः १२ वेश्मन्येवंकृतेतत्रगत्वातान्परमार्चितान् ॥ वासयेथाःपांडवेयान्कुंतींचससुहृज्जनाम् १३ आसनानिचदिव्यानियाना
निशयनानिच ॥ विधातव्यानिपांडूनांयथातुष्येतवैपिता १४ तथाचतन्नजानंतिनगरेवारणावते ॥ तथासर्वंविधातव्यंयावत्कालस्यपर्ययः १५ ज्ञात्वाचतान्सु
विश्वस्तान्शयानानकुतोभयान् ॥ अग्निस्त्वयाततोदेयोद्वारतस्तस्यवेश्मनः १६ दह्यमानेस्वकेगेहेदग्धाइतिततोजनाः ॥ नगर्हयेयुरस्मान्वैपांडवार्थायक
र्हिचित् १७ सतथेतिप्रतिज्ञायकौरवायपुरोचनः ॥ प्रायाद्रासभयुक्तेनस्यंदनेनाशुगामिना १८ सगत्वात्वरितंराजन्दुर्योधनमतेस्थितः ॥ यथोक्तंराजपुत्रेणसर्वं
चक्रेपुरोचनः १९ ॥ इतिश्रीमहाभारते आदिपर्वणि जतुगृहपर्व० पुरोचनोपदेशे चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥ ॥ वैशंपायनउवाच ॥
पांडवास्तुरथान्युक्त्वासदश्वैरनिलोपमैः ॥ आरोहमाणाभीष्मस्यपादौजगृहुरार्तवत् १ राज्ञश्चधृतराष्ट्रस्यद्रोणस्यचमहात्मनः ॥ अन्येषांचैववृद्धानांकृप
स्यविदुरस्यच २ एवंसर्वान्कुरून्वृद्धानभिवाद्ययतव्रताः ॥ समालिंग्यसमानान्वैबालैश्चाप्यभिवादिताः ३ सर्वामातृस्तथाऽऽपृच्छ्यकृत्वाचैवप्रदक्षिणम् ॥
सर्वाःप्रकृतयश्चैवप्रययुर्वारणावतम् ४ विदुरश्चमहाप्राज्ञस्तथाऽन्येकुरुपुंगवाः ॥ पौराश्चपुरुषव्याघ्रानन्वीयुःशोककर्शिताः ५ तत्रकेचिद्ब्रुवंतिस्मब्राह्मणानिर्भ
यास्तदा ॥ दीनान्दृष्ट्वापांडुसुतानतीवभृशदुःखिताः ६ विषमंपश्यतेराजासर्वथासतुमंदधीः ॥ कौरव्योधृतराष्ट्रस्तुनचधर्मंप्रपश्यति ७ नहिपापमपापात्मारो
चयिष्यतिपांडवः ॥ भीमोवाबलिनांश्रेष्ठःकौंतेयोवाधनंजयः ८ कुतएवमहात्मानौमाद्रीपुत्रौकरिष्यतः ॥ तान्राज्यंपितृतःप्राप्तान्धृतराष्ट्रोनमृष्यते ९
अधर्म्यमिदमत्यंतंकथंभीष्मोऽनुमन्यते ॥ विवास्यमानानस्थानेनगरेयोऽभिमन्यते १० पितेवहिनृपोऽस्माकमभूच्छांतनवःपुरा ॥ विचित्रवीर्योराजर्षिःपां
डुश्चकुरुनंदनः ११ सतस्मिन्पुरुषव्याघ्रेदेवभावंगतेसति ॥ राजपुत्रानिमान्बालान्धृतराष्ट्रोनमृष्यते १२ वयमेतदनिच्छंतःसर्वएवपुरोत्तमात् ॥ गृहान्वि
हायगच्छामोयत्रगंतायुधिष्ठिरः १३ तांस्तथावादिनःपौरान्दुःखितान्दुःखकर्शितः ॥ उवाचमनसाध्यात्वाधर्मराजोयुधिष्ठिरः १४ पितामान्योगुरुःश्रेष्ठोयदा
हपृथिवीपतिः ॥ अशंकमानैस्तत्कार्यमस्माभिरितिनोव्रतम् १५ भवंतःसुहृदोऽस्माकमस्मान्कृत्वाप्रदक्षिणम् ॥ प्रतिनंद्यतथाऽऽशीर्भिर्निवर्तध्वंयथागृहम्
१६ यदातुकार्यमस्माकंभवद्भिरुपपत्स्यते ॥ तदाकरिष्यथास्माकंप्रियाणिचहितानिच १७

ध्यायः ॥ १४४ ॥ पांडवाइति १ । २ । ३ प्रकृतयःप्रकृतीः ४ अन्वीयुरनुजग्मुः ५ । ६ । ७ । ८ । ९ अस्थानेअयुक्तं १० । ११ । १२ गंतागमिष्यति १३ । १४ । १५ । १६ । १७

१८ पौरेष्विति पांडवश्रेष्ठंयुधिष्ठिरंबोधयन्नज्ञातंदुर्योधनकृतंकपटंज्ञापयन्इदंवक्ष्यमाणंवचनमब्रवीत् १९ नकेवलंपौरेभ्यएवतद्वचनंगोपनीयमपितुसमीपस्थैरपियुधिष्ठिरादन्यैर्नज्ञातुंशक्यमित्याह प्राज्ञइति प्राज्ञोबुद्धिमाननेकभाषाभिज्ञत्वात् । प्राज्ञत्वमेवाह प्राज्ञप्रलापज्ञइति प्रकर्षेणाज्ञानांपशुप्रायाणांवेदविरोधिनांम्लेच्छानांप्रलापोऽनर्थकंसम्यक्प्रकृतिप्रत्ययविभागेनानिष्पन्नत्वादर्थानव बोधकंवचनंदेशभाषारूपंलुप्तवर्णमधिकवर्णंविकृतवर्णंचपदजातंयत्रतादृशभाषाभिज्ञइत्यर्थः । तत्रलुप्तवर्णकाण्वशतपथेइंद्रेणासुरान्प्रतिभवतामग्नीइमांचित्राख्यांमदीयांइष्टकामुपधास्येइतिपृष्टेउ पहीत्यसुरवचनं तथाआदास्येइत्युक्तेआहीतिप्रतिवचनं । तत्रउपधेहिआदेहीतिवक्तव्येवर्णलोपः । अधिकवर्णंतु गौरितिवक्तव्येगावीगोणीगोतागोपोतलिकेतिप्रयुंजते । तथा विकृतवर्णंते ऽसुराहेलयोहेलयइतिवदंतःपराबभूवुरिति अरयइत्यपेक्षितेरेफस्थानेलकारःप्रयुज्यतेवेदेप्यसुरभाषानुवादे । तेनेयंशंकाप्यपास्ता । यद्यपियुधिष्ठिरंप्रतिविदुरेणम्लेच्छभाषयोक्तंतथापिव्यासेनतत्सं स्कृतेनैवोपनिबद्धमिति । आदिपर्वणिनानादेशभाषाश्चात्रप्रथ्यंतइतिप्रतिज्ञानात् । सएवंप्राज्ञःप्राज्ञप्रलापज्ञश्चविदुरोयुधिष्ठिरंप्रलापज्ञंम्लेच्छभाषाभिज्ञमिदंवक्ष्यमाणंवचोम्लेच्छभाषारूपंप्राज्ञःप्रक र्षेणाजानतःप्राज्ञंप्रकर्षेणाऽर्थतोज्ञातुमशक्यमज्ञापकमर्थानामनवबोधकंवा । कथंतर्हितेनवचनेनास्यापिबोधोभविष्यतीत्याशंक्याह प्रलापज्ञःप्रलापज्ञमितिप्रलापंजानतःप्रलापज्ञापकं । प्रलाप ज्ञमितिपूर्वार्द्धेशब्दतोम्लेच्छभाषाभिज्ञत्वमुक्तं इहत्वर्थतस्तदभिज्ञत्वमित्यपौनरुक्त्यं । प्राज्ञइतिप्रलापज्ञइतिचोत्तरार्द्धेकिबंतस्यषष्ठ्यंतस्यरूपे । प्राज्ञंप्रलापज्ञमितिर्त्वंतर्भावितण्यर्थात्ज्ञाधातोः

एवमुक्तास्तदापौराःकृत्वाचापिप्रदक्षिणम् ॥ आशीर्भिश्चाभिनंद्यैतान्जग्मुर्नगरमेवहि १८ पौरेषुविनिवृत्तेषुविदुरःसर्वधर्मवित् ॥ बोधयन्पांडवश्रेष्ठमिदंवचन मब्रवीत् १९ प्राज्ञःप्राज्ञप्रलापज्ञःप्रलापज्ञमिदंवचः ॥ प्राज्ञंप्राज्ञःप्रलापज्ञःप्रलापज्ञंवचोऽब्रवीत् २० योजानातिपरप्रज्ञांनीतिशास्त्रानुसारिणीम् ॥ विज्ञायेह तथाकुर्यादापदंनिस्तरेद्यथा २१ अलोहंनिशितंशस्त्रंशरीरपरिकर्तनम् ॥ योवेत्तिनतुतंघ्नंतिप्रतिघातविदंद्विषः २२

कप्रत्ययांतस्यरूपे । वचोवचनीयमवश्यंवक्तव्यमित्यर्थः । अतएवाब्रवीत् अत्रोत्तरार्धंगौडपाठएवदृश्यते । तदभावेतुपूर्वार्धादेवायमर्थःप्रत्येतव्यः । सर्वथापिम्लेच्छभाषयोक्तोऽर्थोम्लेच्छभाषयैवसं गृह्यतइतितात्पर्यं । अन्यथाअलोहमित्याद्यपिव्यासोनावक्ष्यत् । यथाश्रुतंजातुषमेवगृहंभवद्दाहार्थंतत्रकृतमितिम्लेच्छभाषयाविदुरेणयुधिष्ठिरोबोधितइत्येवतेनोक्तंस्यात् २० तदेववचनंश्रावयितुं युधिष्ठिरमभिमुखीकरोति योजानातीति । परस्यशत्रोःप्रज्ञांनीतिशास्त्रंकपटेनविश्वासमुत्पाद्यापिशत्रुर्हंतव्यइतिकणिकवचनरूपंतदनुसारिणींयोजानातिसपुमानिहयथाशत्रुकल्पितामापदंनिस्तरेत्तथा कुर्याद्यत्नमितिशेषः २१ तामेवापदमाह अलोहमित्यादिना । तंशत्रुणाकृतंवारणावतस्थं शस्त्रंसस्तिशेतेअस्मिन्निति व्युत्पत्त्याप्रासादंयोवेत्तितंद्विषोनघ्नंतीतिसंबंधः । शस्त्रमितिदंत्यसकारस्थानेता लव्यशकारोम्लेच्छभाषात्वात् हेलयइतिवद्वर्णविकारः । षसस्वापेइत्यदादेष्ट्रन्प्रत्ययांतस्यरूपं । तदेवविशिनष्टि अलोहमिति अलःअनलोऽग्निः । आहिउपहीतिवद्वर्णलोपः तेनआग्नेयानिद्रव्या णिजतुशणसर्जरसादीनिलक्ष्यंते तेषामूहःसमूहोयस्मिन् । आग्नेयैर्दाहकैर्द्रव्यैरुपेतमित्यर्थः । तर्हिकिंतानिज्ञातुंशक्यानिनवेत्यतआह शरीरपरिकर्तनमिति शरीरंस्वरूपं म्लेच्छभाषात्वादविभक्तिक मिदंपदं । परिपरिलुप्यआच्छाद्य । वर्णद्वयलोपः परिवर्जनार्थोवा कर्तनंहिंसकं । तस्मिन्गृहेऽतर्हितान्येवाग्नेयानिद्रव्याणिभित्त्यादौवर्तंतेनस्वरूपेणदृश्यंतेऽतस्तंशरीरपरिकर्तनंप्रासादंपरित्याज्यं योवेत्तिकर्तनमितिहिंसार्थस्यकृणतेरूपंनच्छेदनार्थस्यकृंततेरितिज्ञेयं । कर्तनकाल्माह निशीति अत्रनिशितंकर्तनमितिपदत्रयव्यतिरेकेणपूर्वार्धंम्लेच्छभाषयैवोक्तं । एवमग्रेपिश्लोकेकतिपयपदान्येव म्लेच्छभाषाभवतिनसर्वःश्लोकइतिज्ञेयं । योवेत्तितंप्रतिघातविदंतस्यशस्त्रस्यप्रतिघातःप्रतीकारस्तद्विदंद्विषःशत्रवोनघ्नंतिहंतुंनशक्नुवंतीत्यर्थः २२



कस्तर्हिदाहस्तीतस्मिन्गृहेवसतोऽस्मान्भस्मीकर्तुंपतिष्यतीत्यतआह कक्षघ्नइति कक्षःकुक्षिःपार्श्वइतियावत् तत्रहंतिगच्छतीतिकक्षघ्नःपार्श्वचरःपुरोचनएव । अत्रस्वरस्यैवप्रथमेपदेव्यत्ययो हंते रप्रसिद्धंगत्यर्थत्वंचम्लेच्छभाषात्वात् । कक्षघ्नएवशिशिरघ्नःश्रृणातिहिनस्तीतिशिशिरोऽग्निः । श्रृहिंसायामित्यस्यरूपं तेनहंतीतिशिशिरघ्नः । गावीगोणीतिवद्वर्णाधिक्यंशिकारद्वयरूपं । अप मेवपार्श्ववर्तीयुष्मानग्निनाहंतुमायातीत्यर्थः । एवंतर्ह्ययमेवहंतव्यउतवारणावतेतद्गृहंवानप्रवेष्टव्यमुतवारणावतमगत्वैवहास्तिनपुरंप्रत्येवागंतव्यमित्याशंक्याह महाकक्षइति महतिकंसुखंक्षिणोतीति कक्षयःशत्रुर्वर्णलोपेनकक्षेमहतिशत्रौसत्येतत्त्रयंकर्तुमशक्यं । ज्ञातकपटोहिबलवान्शत्रुःप्रत्यक्षमेवप्रहरेदितिभावः । कस्तर्ह्यत्रउपायइत्यतआह बिलौकसोबिलांतःप्रविष्टान्युष्मान्सपुरोचनोनदहेत् तत्रदाहसंभावनानास्ति । तत्रगृहांतर्बिलंकर्तव्यमित्यर्थः । इत्यनेनप्रकारेणात्मानंयोरक्षतिसजीवति । तस्मात्त्वयाप्येवंज्ञात्वाउपायेनात्मासंरक्षणीयइत्यर्थः २३ ननुबिलेप्रविष्टानामस्माकं बिलमुखेप्रदीप्तेनवह्निनाअंतरूष्मणानाशःकर्तव्यइत्याशंक्यविवेकंविनामार्गज्ञानंदिग्ज्ञानंचनभवतिधैर्यंविनाऐश्वर्यंचनप्राप्यतइतिविवेकंधैर्यंचाश्रयस्वेत्याह नाचक्षुरिति चष्टेपश्यत्यनेनेतिचक्षुर्विवेकः । संस्कृतएवायंश्लोकोनीतिप्रदर्शनार्थः २४ तत्रमार्गविवेकंतावदाह अनाप्तैरिति अनाप्तैःशत्रुभिर्दत्तंस्वीकारितंशस्त्रंगृहमलोहजंपूर्ववदाग्नेयद्रव्यसमूहजमादत्तेस्वीकरोतिचेन्नरस्तर्हिश्वावित्शल्लकस्तस्यशर

कक्षघ्नःशिशिरघ्नश्चमहाकक्षेबिलौकसः ॥ नदहेदितिचात्मानंयोरक्षतिसजीवति २३ नाचक्षुर्वेत्तिपंथानंनाचक्षुर्विंदतेदिशः ॥ नाधृतिर्भूतिमाप्नोतिबुध्यस्वैवंप्रबो धितः २४ अनाप्तैर्दत्तमादत्तेनरःशस्त्रमलोहजम् ॥ श्वाविच्छरणमासाद्यप्रमुच्येतहुताशनात् २५ चरन्मार्गान्विजानातिनक्षत्रैर्विंदतेदिशः ॥ आत्मनाचात्मनः पंचपीडयन्नानुपीड्यते २६ एवमुक्तःप्रत्युवाचधर्मराजोयुधिष्ठिरः ॥ विदुरंविदुषांश्रेष्ठंज्ञातमित्येवपांडवः २७ अनुशिक्ष्यानुगम्यैतान्कृत्वाचैवप्रदक्षिणम् ॥ पांडवानभ्यनुज्ञायविदुरःप्रययौगृहान् २८ निवृत्तेविदुरेचापिभीष्मेपौरजनेतथा ॥ अजातशत्रुमासाद्यकुंतीवचनमब्रवीत् २९ क्षत्तायदब्रवीद्वाक्यंजनमध्येऽब्रुव न्निव ॥ त्वयाचसतथेत्युक्तोजानीमोनचतद्वयम् ३० यदीदंशक्यमस्माभिर्ज्ञातुंनचसदोषवत् ॥ श्रोतुमिच्छामितत्सर्वंसंवादंतवतस्यच ३१ ॥ युधिष्ठिरउवाच ॥ गृहादग्निश्चबोद्धव्यइतिमांविदुरोऽब्रवीत् ॥ पंथाश्चवोनाविदितःकश्चित्स्यादितिधर्मधीः ३२

णंगृहंतद्वत् तस्यहिबिलमुभयतोमुखंभवति तादृशंबिलमासाद्यप्राप्यहुताशनात्प्रमुच्येतआत्मानंमोचयेत् तेनबिलप्रवेशेनमार्गांतरेणसद्यएवबिलाद्बहिर्निःसरतांयुष्माकंनांतरूष्मणामरणंभविष्यती त्युक्तं २५ बिलान्निःसृतानामपिमार्गज्ञानंकथंभवेदित्याशंक्यमृगयाव्याजेनसर्वेमार्गाज्ञातव्याइत्याशयेनाह चरन्मार्गान्विजानातीति एवंज्ञातेष्वपिमार्गेषुहास्तिनपुरंप्रतिनागंतव्यमित्याशयेना ह नक्षत्रैर्विंदतेदिशइति । ननुकथमस्माभिर्लोकानामविदितंबिलंकारयितुंशक्यंकथंवाविदेशेवंधुंश्चत्यक्त्वास्थातव्यमित्याशंक्याह आत्मनेति आत्मनः अहंयमौशस्त्वंचधर्मपुत्रः अतोऽहंतव आत्मातस्यममआत्मेवात्मासखाकश्चिन्मयानियोक्तव्यस्तेनसहायेनबिलादिसंपादयताहेतुना । पंचइंद्रियाणिविदेशवासादिदुःखविषयासमर्पणेनपीडयन् । हेतौशतृप्रत्ययः । मत्प्रहितेनभृत्येन स्वधैर्येणेतियावत् । एताभ्यांद्वाभ्यामुपेतोनानुतप्यतेमयाऽकृत्यंकृतमितिपश्चात्तापंनप्राप्नोति । मदीयआप्तःसुरंगंकृत्वादास्यतितेनप्रमार्गेणदेशांतरेएवगंतव्यंनतुहास्तिनपुरेप्रवेष्टव्यं । ज्ञातकपटोहिप्रब लःशत्रुःप्रत्यक्षमेवप्रहरेदितिप्रागुक्तएवाशयः । धैर्येसतिपुनर्लक्ष्मीप्राप्तिर्भविष्यतीतिभावः २६ । २७ । २८ । २९ अब्रुवन्निवव्यक्तंवाचमकुर्वन्निव ३० । ३१ । ३२

३३ । ३४ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे पंचचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥ ॥ ७ ॥ ततइति १ आगतानितिच्छेदः २ । ३ । ४ । ५ । ६ । ७
८ । ९ । १० शिवमित्याख्यामात्रं अर्थतस्त्वशिवंमारणार्थंकृतत्वात् ११ । १२ । १३ । १४ मुंजःशरवल्कः १५ । १६ इमामापदंभाविनीं दृष्टवान्तर्कतः तेनहेतुनाऽशिवं

जितेंद्रियश्चवसुधांप्राप्स्यतीतिचमेऽब्रवीत् ॥ विज्ञातमितितत्सर्वंप्रत्युक्तोविदुरोमया ३३ ॥ वैशंपायनउवाच ॥ अष्टमेऽहनिरोहिण्यांप्रयाताःफाल्गुनस्यते ॥
वारणावतमासाद्यददृशुर्नागरंजनम् ३४ ॥ इतिश्रीमहाभारते आदिपर्वणिजतुगृहपर्वणि वारणावतगमनेपंचचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥ ॥
वैशंपायनउवाच ॥ ततःसर्वाःप्रकृतयोनगराद्वारणावतात् ॥ सर्वमंगलसंयुक्तायथाशास्त्रमतंद्रिताः १ श्रुत्वागतान्पांडुपुत्राञ्नानायानैःसहस्रशः ॥ अभिजग्मुर्नर
श्रेष्ठान्श्रुत्वैवपरयामुदा २ तेसमासाद्यकौंतेयान्वारणावतकाजनाः ॥ कृत्वाजयाशिषःसर्वेपरिवार्यावतस्थिरे ३ तैर्वृतःपुरुषव्याघ्रोधर्मराजोयुधिष्ठिरः ॥ विबभौ
देवसंकाशोवज्रपाणिरिवामरैः ४ सत्कृताश्चैवपौरैस्तेपौरान्सत्कृत्यचानघ ॥ अलंकृतंजनाकीर्णंविविशुर्वारणावतम् ५ तेप्रविश्यपुरींवीरास्तूर्णंजग्मुरथोगृहान् ॥
ब्राह्मणानांमहीपालरतानांस्वेषुकर्मसु ६ नगराधिकृतानांचगृहाणिरथिनांतदा ॥ उपतस्थुर्नरश्रेष्ठावैश्यशूद्रगृहाण्यपि ७ अर्चिताश्चनरैःपौरैःपांडवाभर
तर्षभ ॥ जग्मुरावसथंपश्चात्पुरोचनपुरःसराः ८ तेभ्योभक्ष्याणिपानानिशयनानिशुभानिच ॥ आसनानिचमुख्यानिप्रददौसपुरोचनः ९ तत्रतेसत्कृतास्ते
नसुमहार्हपरिच्छदाः ॥ उपास्यमानाःपुरुषैरूषुःपुरनिवासिभिः १० दशरात्रोषितानांतुतत्रतेषांपुरोचनः ॥ निवेदयामासगृहंशिवाख्यमशिवंतदा ११ तत्रते
पुरुषव्याघ्राविविशुःसपरिच्छदाः ॥ पुरोचनस्यवचनात्कैलासमिवगुह्यकाः १२ तच्चागारमभिप्रेक्ष्यसर्वधर्मभृतांवरः ॥ उवाचाग्नेयमित्येवंभीमसेनंयुधिष्ठिरः १३
॥ युधिष्ठिरउवाच ॥ जिघ्राणोऽस्यवसागंधंसर्पिर्जतुविमिश्रितम् ॥ कृतंहिव्यक्तमाग्नेयमिदंवेश्मपरंतप १४ शणसर्जरसंव्यक्तमानीयगृहकर्मणि ॥ मुंजबल्वजवं
शादिद्रव्यंसर्वंघृतोक्षितम् १५ शिल्पिभिःसुकृतंह्याप्तैर्विनीतैर्वेश्मकर्मणि ॥ विश्वस्तंमामयंपापोदग्धुकामःपुरोचनः १६ तथाहिवर्ततेमंदःसुयोधनवशे
स्थितः ॥ इमांतुतांमहाबुद्धिर्विदुरोदृष्टवांस्तथा १७ आपदंतेनमांपार्थसंबोधितवान्पुरा ॥ तेवयंबोधितास्तेननित्यमस्मद्धितैषिणा १८ पित्राकनीयसास्नेहाबु
द्धिमंतोऽशिवंगृहम् ॥ अनार्यैःसुकृतंगूढैर्दुर्योधनवशानुगैः १९ ॥ भीमसेनउवाच ॥ यदीदंगृहमाग्नेयंविहितंमन्यतेभगवान् ॥ तत्रैवसाधुगच्छामोयत्रपूर्वोषि
तावयम् २० ॥ युधिष्ठिरउवाच ॥ इहयत्तैर्निराकारैर्वस्तव्यमितिरोचये ॥ अप्रमत्तैर्विचिन्वद्भिर्गतिमिष्टांध्रुवामितः २१ यदिविंदेतचाकारमस्माकंसपुरोचनः ॥
क्षिप्रकारीततोभूत्वाप्रसह्यापिदहेतनः २२ नायंबिभेत्युपक्रोशादधर्माद्वापुरोचनः ॥ तथाहिवर्ततेमंदःसुयोधनवशेस्थितः २३

गृहमित्यस्मान्बोधितवानितिसंबंधः १७ । १८ । १९ । २० योगरूपकेणगृहवासकर्तव्यतामाह इहेति निराकारैरनाविष्कृतबाह्यचेष्टैः । इष्टांगतिंनिरुपद्रवंमार्गं । पक्षेइहदेहेनिराकारै
राकारविशेषमनालंब्यस्थेयं । यत्तैःशमादिपरैः । अप्रमत्तैःस्मृतिमद्भिः । ध्रुवांगतिंमोक्षं २१ । २२ उपक्रोशाद्गर्हातः २३

अयंभीष्मःइतिसंबंधः २४ दग्धेष्वस्मास्वग्निदेषुकोपोधर्मइत्येवकारणंकृत्वाभीष्मोऽन्येचकुप्येरन् २५ दाहस्यदाहात् स्पशैश्चारैः २६ अपदंदेशकोशाद्यक्षमत्वंतत्रस्थितान् अपक्षानसहायान्
प्रयोगैरुपायैः २७ छन्नावासंगूढस्थानं वस्तव्यमधिष्ठातव्यं २८ । २९ कचित्कालेछन्नावासमेवाह भौममिति गूढःश्वासोऽपियेषांतान् इतरैरविदितकर्तव्यानित्यर्थः ३० अत्र

अपिचायंप्रदग्धेषुभीष्मोऽस्मासुपितामहः ॥ कोपंकुर्यात्किमर्थंवाकौरवान्कोपयीतसः २४ अथवाऽपीहदग्धेषुभीष्मोऽस्माकंपितामहः ॥ धर्मइत्येवकुप्ये
रन्येचान्येकुरुपुंगवाः २५ वयंतुयदिदाहस्यबिभ्यतःप्रद्रवेमहि ॥ स्पशैर्नोघातयेत्सर्वान्राज्यलुब्धःसुयोधनः २६ अपदस्थान्पदेतिष्ठन्नपक्षान्पक्षसंस्थितः ॥
हीनकोशान्महाकोशःप्रयोगैर्घातयेद्ध्रुवम् २७ तदस्माभिरिमंपापंतंचपापंसुयोधनम् ॥ वंचयद्भिर्निवस्तव्यंछन्नावासंकचित्कचित् २८ तेवयंमृगयाशीलाश्चरामवसु
धामिमाम् ॥ तथानोविदितामार्गाभविष्यंतिपलायताम् २९ भौमंचबिलमद्यैवकरवामसुसंवृतम् ॥ गूढश्वासान्नस्तत्रहुताशःसंप्रधक्ष्यति ३० वसतोऽत्रयथाचा
स्मान्नबुध्येतपुरोचनः ॥ पौरोवापिजनःकश्चित्तथाकार्यमतंद्रितैः ३१ ॥ इतिश्रीमहाभारतेआदिपर्वणिजतुगृहपर्वणिभीमसेनयुधिष्ठिरसंवादेषट्चत्वारिंशदधिकशत
तमोऽध्यायः ॥ १४६ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ विदुरस्यसुहृत्कश्चित्खनकःकुशलोनरः ॥ विविक्तेपांडवान्राजन्निदंवचनमब्रवीत् १ प्रहितोविदुरेणास्मि
खनकःकुशलोह्यहम् ॥ पांडवानांप्रियंकार्यमितिकिंकरवाणिवः २ प्रच्छन्नंविदुरेणोक्तःश्रेयस्त्वमिहपांडवान् ॥ प्रतिपादयविश्वासादितिकिंकरवाणिवः ३ कृष्णप
क्षेचतुर्दश्यांरात्रावस्यांपुरोचनः ॥ भवनस्यतवद्वारिप्रदास्यतिहुताशनम् ४ मात्रासहप्रदग्धव्याःपांडवाःपुरुषर्षभाः ॥ इतिव्यवसितंतस्यधार्तराष्ट्रस्यदुर्मतेः ५
किंचिच्चविदुरेणोक्तोम्लेच्छवाचाऽसिपांडव ॥ त्वयाचतत्तथेत्युक्तमेतद्विश्वासकारणम् ६ उवाचतंसत्यधृतिःकुंतीपुत्रोयुधिष्ठिरः ॥ अभिजानामिसौम्यत्वांसुहृदं
विदुरस्यवै ७ शुचिमाप्तंप्रियंचैवसदाचदृढभक्तिकं ॥ नविद्यतेकवेःकिंचिदविज्ञातंप्रयोजनम् ८ यथातस्यतथानस्त्वंनिर्विशेषावयंत्वयि ॥ भवतश्चयथातस्यपा
लयास्मान्यथाकविः ९ इदंशरणमाग्नेयंमदर्थमितिमेमतिः ॥ पुरोचनेनविहितंधार्तराष्ट्रस्यशासनात् १० सपापःकोषवांश्चैवससहायश्चदुर्मतिः ॥ अ
स्मानपिचपापात्मानित्यकालंप्रबाधते ११ सभवान्मोक्षयत्वस्मान्यत्नेनास्माद्धुताशनात् ॥ अस्मास्विहहिदग्धेषुसकामःस्यात्सुयोधनः १२ समृद्ध
मायुधागारमिदंतस्यदुरात्मनः ॥ वप्रांतंनिष्प्रतीकारमाश्रित्येदंकृतंमहत् १३ इदंतदशुभंनूनंतस्यकर्मचिकीर्षितम् ॥ प्रागेवविदुरोवेदतेनास्मानन्व
बोधयत् १४ सेयमापदनुप्राप्ताक्षत्तायांदृष्टवान्पुरा ॥ पुरोचनस्याविदितानस्मांस्त्वंप्रतिमोचय १५

बिले ३१ ॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेषट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥ ॥ विदुरस्येति १ । २ प्रच्छन्नंयथास्यात्तथापांडवान्श्रेयःप्रतिपादये
त्युक्तोऽहंवःकिंकरवाणि ३ । ४ । ५ म्लेच्छवाचाम्लेच्छभाषया ६ । ७ कवेःसर्वज्ञस्यक्रांतदर्शिनोवा ८ यथावयंतस्यतथाभवतश्चपालनीयाः अतोऽस्मान्यथाकविःपालय
तितथात्वमपिपालयेत्यर्थः ९ शरणंगृहं १० । ११ । १२ वप्रांतंप्राकारमूलं निष्प्रतीकारंबहिर्निर्गमनप्रकारशून्यं १३ । १४ । १५

परिखाप्राकारपरिधिभूतोगर्तस्तां नामप्रसिद्धं । उत्किरन्परिखापरिष्कारव्याजेन बिलान्मृदमुत्किरन्बहिःक्षिपन्महाबिलंसुरंगाख्यंचकार १६ मध्येनमध्यतः १७ व्यदधाद्विहितवान् सपुरोच
नस्तेचपंचगृहद्वारिक्षपांवसंतिस्म १८ दिवाचमृगयांचरंत्यतोनदग्धुंपुरोचनश्छिद्रंमापेतिभावः १९ । २० ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे सप्तचत्वारिंशदधिकशततमा



सतथेतिप्रतिश्रुत्यखनकोयत्नमास्थितः ॥ परिखामुत्किरन्नामचकारचमहाबिलम् १६ चक्रेचवेश्मनस्तस्यमध्येनातिमहद्बिलम् ॥ कपाटयुक्तमज्ञातंसमंभूम्याश्च
भारत १७ पुरोचनभयादेवव्यदधात्संवृतंमुखम् ॥ सतस्यतुगृहद्वारिवसत्यशुभधीःसदा ॥ तत्रतेसायुधाःसर्वेवसंतिस्मक्षपांनृप १८ दिवाचरंतिमृगयांपांडवेयावना
द्वनम् ॥ विश्वस्तवदविश्वस्तावंचयंतःपुरोचनम् ॥ अतुष्टास्तुष्टवद्राजन्नूषुःपरमविस्मिताः १९ नचैनानन्वबुध्यंतनरानगरवासिनः ॥ अन्यत्रविदुरामात्यात्तस्मा
त्खनकसत्तमात् २० ॥ इति श्रीमहाभारते आदिपर्वणि जतुगृहपर्वणिजतुगृहवासे सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥ ॥ वैशंपायनउवाच ॥
तांस्तुदृष्ट्वासुमनसःपरिसंवत्सरोषितान् ॥ विश्वस्तानिवसंलक्ष्यहर्षंचक्रेपुरोचनः १ पुरोचनेतथाहृष्टेकौंतेयोऽथयुधिष्ठिरः ॥ भीमसेनार्जुनौचोभौयमौप्रोवाचधर्म
वित् २ अस्मानयंसुविश्वस्तान्वेत्तिपापःपुरोचनः ॥ वंचितोऽयंनृशंसात्माकालंमन्येपलायने ३ आयुधागारमादीप्यदग्ध्वाचैवपुरोचनम् ॥ षट्प्राणिनोनि
धायेहद्रवामोऽनभिलक्षिताः ४ अथदानापदेशेनकुंतीब्राह्मणभोजनम् ॥ चक्रेनिशिमहाराजआजग्मुस्तत्रयोषितः ५ ताविहृत्ययथाकामंभुक्त्वापीत्वाचभार
त ॥ जग्मुर्निशिगृहानेवसमनुज्ञाप्यमाधवीम् ६ निषादीपंचपुत्रातुतस्मिन्भोज्येयदृच्छया ॥ अन्नार्थिनीसमभ्यागात्सपुत्राकालचोदिता ७ सापीत्वामदिरां
मत्तासपुत्रामदविह्वला ॥ सहसर्वैःसुतैराजंस्तस्मिन्नेवनिवेशने ८ सुष्वापविगतज्ञानामृतकल्पानराधिप ॥ अथप्रवातेतुमलेनिशिसुप्तेजनेतदा ९ तदुपादीप
यद्भीमःशेतेयत्रपुरोचनः ॥ ततोजतुगृहद्वारंदीपयामासपांडवः १० समंततोददौपश्चादग्निंतत्रनिवेशने ॥ ज्ञात्वातुतद्गृहंसर्वमादीप्तंपांडुनंदनाः ११ सुरंगांवि
विशुस्तूर्णंमात्रासार्धमरिंदमाः ॥ ततःप्रतापःसुमहाञ्छब्दश्चैवविभावसोः १२ प्रादुरासीत्तदातेनबुबुधेसजनव्रजः ॥ तदवेक्ष्यगृहंदीप्तमाहुःपौराःकृशाननाः १३
॥ पौराऊचुः ॥ दुर्योधनप्रयुक्तेनपापेनाकृतबुद्धिना ॥ गृहमात्मविनाशायकारितंदाहितंचतत् १४ अहोधिग्धृतराष्ट्रस्यबुद्धिर्नातिसमंजसा ॥ यःशुचीन्पांडुदा
यादान्दाहयामासशत्रुवत् १५ दिष्ट्यात्विदानींपापात्मादग्धोऽयमतिदुर्मतिः ॥ अनागसःसुविश्वस्तान्योददाहनरोत्तमान् १६ ॥ वैशंपायनउवाच ॥ एवं
तेविलपंतिस्मवारणावतकाजनाः ॥ परिवार्यगृहंतच्चतस्थूरात्रौसमंततः १७ पांडवाश्चापितेसर्वेसहमात्रासुदुःखिताः ॥ बिलेनतेननिर्गत्यजग्मुर्दुतमलक्षिताः १८
तेननिद्रोपरोधेनसाध्वसेनचपांडवाः ॥ नशेकुःसहसागंतुंसहमात्रापरंतपाः १९ भीमसेनस्तुराजेंद्रभीमवेगपराक्रमः ॥ जगामभ्रातॄनादायसर्वान्मातरमेवच २० 

ऽध्यायः ॥ १४७ ॥ ॥ तांस्त्विति १ । २ । ३ षट्प्राणिनइति अन्यथापलायनशंकयापुनरस्मदन्वेषणेमतिःस्यात्सामाभूदितिभावः ४ । ५ । ६ । ७ । ८ । ९ । १०
११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

२१ । २२ ॥ इति आदिपर्वणिनीलकंठीयेभारतभावदीपेअष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥ ॥ ७ ॥ ॥ एतस्मिन्निति यथार्थंप्रत्ययंयथार्थसंकेतं शुचिंनाविकं मापयानान्जलपरि

स्कंधमारोप्यजननींयमावंकेनवीर्यवान् ॥ पार्थौगृहीत्वापाणिभ्यांभ्रातरौसुमहाबलः २१ उरसापादपान्भंजन्महींपद्भ्यांविदारयन् ॥ सजगामाशुतेजस्वीवातरंहा
वृकोदरः २२ ॥ इति श्रीमहाभारतेआदिपर्वणिजतुगृहपर्वणिजतुगृहदाहेअष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥ वैशंपायनउवाच ॥ एतस्मिन्नेवकाले
तुयथासंप्रत्ययंकविः ॥ विदुरःप्रेषयामासतद्वनंपुरुषंशुचिम् १ सगत्वातुयथोद्देशंपांडवान्ददृशेवने ॥ जनन्यासहकौरव्यमापयानान्नदीजलम् २ विदितंतन्महा
बुद्धेर्विदुरस्यमहात्मनः ॥ ततस्तस्यापिचारेणचेष्टितंपापचेतसः ३ ततःप्रवासितोविद्वान्विदुरेणनरस्तदा ॥ पार्थानांदर्शयामासमनोमारुतगामिनीम् ४ स
र्ववातसहांनावंयंत्रयुक्तांपताकिनीम् ॥ शिवेभागीरथीतीरेनरैर्विस्रंभिभिःकृताम् ५ ततःपुनरथोवाचज्ञापकंपूर्वचोदितम् ॥ युधिष्ठिरनिबोधेदंसंज्ञार्थंवचनंकवेः ६
कक्षघ्नःशिशिरघ्नश्चमहाकक्षेबिलौकसः ॥ नहंतीत्येवमात्मानंयोरक्षतिसजीवति ७ तेनमांप्रेषितंविद्धिविश्वस्तंसंज्ञयाऽनया ॥ भूयश्चैवाहमांक्षत्ताविदुरःसर्वतोऽर्थ
वित् ८ कर्णंदुर्योधनंचैवभ्रातृभिःसहितंरणे ॥ शकुनिंचैवकौंतेयविजेताऽसिनसंशयः ९ इयंवारिपथेयुक्तानौरप्सुसुखगामिनी ॥ मोचयिष्यतिवःसर्वानस्माद्देशान्नसं
शयः १० अथतान्व्यथितान्दृष्ट्वासहमात्रानरोत्तमान् ॥ नावमारोप्यगंगायांप्रस्थितानब्रवीत्पुनः ११ विदुरोमूर्ध्न्युपाघ्रायपरिष्वज्यवचोमुहुः ॥ अरिष्टंग
च्छताव्यग्राःपंथानमितिचाब्रवीत् १२ इत्युक्त्वासतुतान्वीरान्पुमान्विदुरचोदितः ॥ तारयामासराजेंद्रगंगांनावानरर्षभान् १३ तारयित्वाततोगंगांपा
रंप्राप्तांश्चसर्वशः ॥ जयाशिषःप्रयुज्याथयथागतमगाद्द्विसः १४ पांडवाश्चमहात्मानःप्रतिसंदिश्यवैकवेः ॥ गंगामुत्तीर्यवेगेनजग्मुर्गूढमलक्षिताः १५ ॥ इति
श्रीमहाभारते आदिपर्वणि जतुगृहपर्वणि गंगोत्तरणेऊनपंचाशदधिकशततमोऽध्यायः ॥ १४९ ॥ ॥ वैशंपायनउवाच ॥ अथरात्र्यांव्यतीतायाम
शेषोनागरोजनः ॥ तत्राजगामत्वरितोदिदृक्षुःपांडुनंदनान् १ निर्वापयंतोज्वलनंतेजनाददृशुस्ततः ॥ जातुषंतद्गृहंदग्धममात्यंचपुरोचनम् २ नूनंदुर्योधनेने
दंविहितंपापकर्मणा ॥ पांडवानांविनाशायेत्येवंतेचुक्रुशुर्जनाः ३ विदितेधृतराष्ट्रस्यधार्तराष्ट्रोनसंशयः ॥ दग्धवान्पांडुदायादान्नह्येनंप्रतिषिद्धवान् ४ नूनं
शांतनवोपीहनधर्ममनुवर्तते ॥ द्रोणश्चविदुरश्चैवकृपश्चान्येचकौरवाः ५ तेवयंधृतराष्ट्रस्यप्रेषयामोदुरात्मनः ॥ संवृत्तस्तेपरःकामःपांडवान्दग्धवानसि ६ ततो
व्यपोहमानास्तेपांडवार्थंहुताशनम् ॥ निषादींददृशुर्दग्धांपंचपुत्रामनागसम् ७ खनकेनतुतेनैववेश्मशोधयताबिलम् ॥ पांसुभिःपिहितंतच्चपुरुषैस्तैर्नलक्षि
तम् ८ ततस्तेज्ञापयामासुर्धृतराष्ट्रस्यनागराः ॥ पांडवानग्निनादग्धानमात्यंचपुरोचनम् ९

माणंपरीक्षमाणान् १ । २ तस्यचेष्टितंचारेणविदुरस्यविदितंयतस्ततोहेतोर्विदुरेणततःस्वस्थानान्नरःप्रवासितःप्रेषितइतिसार्धश्लोकोवाक्यं ३ सनरोदर्शयामास ४ । ५ । ६ । ७ । ८ । ९ । १०
११ । १२ । १३ । १४ ॥ इति आदिपर्वणि नी० भारतभावदीपे ऊनपंचाशदधिकशततमोऽध्यायः ॥ १४९ ॥ ॥ अथेति १ । २ । ३ । ४ । ५ । ६ व्यपोहमानाःनिर्वापयंतः ७ । ८ । ९

१० । ११ । १२ कुल्यान्यस्थीनि कारयंतुसंस्कारयंतु । 'कर्ळ्जनपदेगोत्रेसजातीयगणेऽपिच । भवनेचतनौक्लीबंकंटकार्यौषधौकुली'इतिमेदिनी । 'कुल्यंस्यात्कीकसेऽपि'इतिच । कुल्यानिचैत्यानी त्यन्येमहावृक्षेणवामहाप्रासादेनवाअंकितानिचत्वराणीत्यर्थः १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ ॥ इति आदिपर्वणि नी०भा०पंचाशदधिकशततमोऽ

श्रुत्वातुधृतराष्ट्रस्तद्राजासुमहदप्रियम् ॥ विनाशंपांडुपुत्राणांविललापसुदुःखितः १० अद्यपांडुर्मृतोराजाममभ्रातामहायशाः ॥ तेषुवीरेषुदग्धेषुमात्रासहविशेषतः ११ गच्छंतुपुरुषाःशीघ्रंनगरंवारणावतम् ॥ सत्कारयंतुतान्वीरान्कुंतिराजसुतांचताम् १२ कारयंतुचकुल्यानिशुभानिचमहांतिच ॥ येचतत्रमृतास्तेषांसुहृदोयांतुतानपि १३ एवंगतेमयाशक्यंयद्यत्कारयितुंहितम् ॥ पांडवानांचकुंत्याश्चतत्सर्वंक्रियतांधनैः १४ एवमुक्त्वाततश्चक्रेज्ञातिभिःपरिवारितः ॥ उदकंपांडुपुत्राणांधृतराष्ट्रोंऽबिकासुतः १५ रुरुदुःसहिताःसर्वेभृशंशोकपरायणाः ॥ हायुधिष्ठिरकौरव्यहाभीमइतिचापरे १६ हाफाल्गुनेतिचाप्यन्येहायमावितिचापरे ॥ कुंतीमार्ताश्चशोचंतउदकंचक्रिरेजनाः १७ अन्येपौरजनाश्चैवमन्वशोचंतपांडवान् ॥ विदुरस्त्वल्पशश्चक्रेशोकंवेदपरंहिसः १८ पांडवाश्चापिनिर्गत्यनगराद्वारणावतात् ॥ नदींगंगामनुप्राप्तामातृषष्ठामहाबलाः १९ दाशानांभुजवेगेननद्याःस्रोतोजवेनच ॥ वायुनाचानुकूलेनतूर्णंपारमवाप्नुवन् २० ततोनावंपरित्यज्यप्रययुर्दक्षिणांदिशम् ॥ विज्ञायनिशिपंथानंनक्षत्रगणसूचितम् २१ यतमानावनंराजन्गहनंप्रतिपेदिरे ॥ ततःश्रांताःपिपासार्त्तानिद्रांधाःपांडुनंदनाः २२ पुनरूचुर्महावीर्यंभीमसेनमिदंवचः ॥ इतःकष्टतरंकिंनुयद्वयंगहनेवने ॥ दिशश्चनविजानीमोगंतुंचैवनशक्नुमः २३ तंचपापंनजानीमोयदिदग्धःपुरोचनः ॥ कथंतुविप्रमुच्येमभयादस्मादलक्षिताः २४ पुनरस्मानुपादायतथैवव्रजभारत ॥ त्वंहिनोबलवानेकोयथासततगस्तथा २५ इत्युक्तोधर्मराजेनभीमसेनोमहाबलः ॥ आदायकुंतींभ्रातॄंश्चजगामाशुमहाबलः २६ ॥ इति श्रीमहाभारते आदिपर्वणि जतुगृहपर्वणि पांडववनप्रवेशे पंचाशदधिकशततमोऽध्यायः ॥ १५० ॥ ॥ ६ ॥ ॥ वैशंपायनउवाच ॥ तेनविक्रममाणेनऊरुवेगसमीरितम् ॥ वनंसवृक्षविटपंव्याघूर्णितमिवाभवत् १ जंघावातोववौचास्यशुचिशुक्रागमेयथा ॥ आवर्जितलतावृक्षंमार्गंचक्रेमहाबलः २ समृद्ध्रन्पुष्पितांश्चैवफलितांश्चवनस्पतीन् ॥ अवरुज्ययंयौगुल्मान्पथस्तस्यसमीपजान् ३ सरोषितइवक्रुद्धोवनेभंजन्महाद्रुमान् ॥ त्रिप्रस्रुतमदःशुष्मीषष्टिवर्षीमतंगराट् ४ गच्छतस्तस्यवेगेनतार्क्ष्यमारुतरंहसः ॥ भीमस्यपांडुपुत्राणांमूर्छेवसमजायत ५ असकृच्चापिसंतीर्यदूरपारंभुजप्लवैः ॥ पथिप्रच्छन्नमासेदुर्धार्तराष्ट्रभयात्तदा ६ कृच्छ्रेणमातरंचैवसुकुमारींयशस्विनीम् ॥ अवहत्सतुपृष्ठेनरोधःसुविषमेषुच ७

ध्यायः ॥ १५० ॥ तेनेति १ शुचिशुक्रागमेज्येष्ठाषाढयोःसमये आवर्जिताःसमीकृतालतावृक्षाश्चयस्मिन् २ अवरुज्यभंक्त्वा ३ रोषितोरोषंप्रापितः त्रिषुगंडकर्णमूलगुह्यदेशेषुप्रस्रुतोमदोयस्यसः शुष्मीतेजस्वी । 'शुष्मंतेजसिसूर्येना'इतिमेदिनी । षष्टिवर्षीतिपूर्णयौवनः ४ । ५ दूरपारंगंगामवाहं वनेपितस्माद्भिम्यतीतिभावः भुजप्लवैर्भुजाभ्यांप्लवनैः बहुत्वंव्यापारभेदात् ६ रोधःसुखभागेषु ७



८ अनार्त्तैर्वैरनृतुभवैरुत्पातरूपैरित्यर्थः ९ गुल्मःस्तंबः क्षुपोह्रस्वशाखोवृक्षः अवभुग्नोनामितः १० । ११ तृषातृष्णया १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ गव्यूतिमात्रात्क्रोशद्वयात्

अगमच्चवनोद्देशमल्पमूलफलोदकम् ॥ क्रूरपक्षिमृगंघोरंसायाह्नेभरतर्षभ ८ घोरासमभवत्संध्यादारुणामृगपक्षिणः ॥ अप्रकाशादिशःसर्वावातैरासन्ननार्त्तवैः ९ शीर्णपर्णफलैराजन्बहुगुल्मक्षुपैर्द्रुमैः ॥ भग्नावभुग्नभूयिष्ठैर्नानाद्रुमसमाकुलैः १० तेश्रमेणचकौरव्यास्तृष्णयाचप्रपीडिताः ॥ नाशक्नुवंस्तदागंतुंनिद्रयाचप्रवृद्धया ११ न्यविशंतहितेसर्वेनिरास्वादेमहावने ॥ ततस्तृषापरिक्लांताकुंतीपुत्रानथाब्रवीत् १२ मातासतीपांडवानांपंचानांमध्यतःस्थिता ॥ तृष्णयाहिपरीताऽस्मिपुत्रान्भृशमथाब्रवीत् १३ तच्छ्रुत्वाभीमसेनस्यमातृस्नेहात्प्रजल्पितम् ॥ कारुण्येनमनस्तप्तंगमनायोपचक्रमे १४ ततोभीमोवनंघोरंप्रविश्यविजनंमहत् ॥ न्यग्रोधंविपुलच्छायंरमणीयंददर्शह १५ तत्रनिक्षिप्यतान्सर्वानुवाचभरतर्षभः ॥ पानीयंमृगयामीहविश्रमध्वमितिप्रभो १६ एतेरुवंतिमधुरंसारसाजलचारिणः ॥ ध्रुवमत्रजलस्थानंमहच्चेतिमतिर्मम १७ अनुज्ञातःसगच्छेतिभ्रात्राज्येष्ठेनभारत ॥ जगामतत्रयत्रस्मसारसाजलचारिणः १८ सतत्रपीत्वापानीयंस्नात्वाचभरतर्षभ ॥ तेषामर्थेचजग्राहभ्रातॄणांभ्रातृवत्सलः ॥ उत्तरीयेणपानीयमानयामासभारत १९ गव्यूतिमात्रादागत्यत्वरितोमातरंप्रति ॥ शोकदुःखपरीतात्मानिशश्वासोरगोयथा २० ससुप्तांमातरंदृष्ट्वाभ्रातॄंश्चवसुधातले ॥ भृशंशोकपरीतात्माविललापवृकोदरः २१ अतःकष्टतरंकिंनुद्रष्टव्यंहिभविष्यति ॥ यत्पश्यामिमहीसुप्तान्भ्रातॄनद्यसुमंदभाक् २२ शयनेषुपरार्ध्येषुयेपुरावारणावते ॥ नाधिजग्मुस्तदानिद्रांतेऽद्यसुप्तामहीतले २३ स्वसारंवसुदेवस्यशत्रुसंघावमर्दिनः ॥ कुंतिराजसुतांकुंतींसर्वलक्षणपूजिताम् २४ स्नुषांविचित्रवीर्यस्यभार्यांपांडोर्महात्मनः ॥ तथैवचास्मज्जननींपुंडरीकोदरप्रभाम् २५ सुकुमारतरामेनांमहार्हशयनोचिताम् ॥ शयानांपश्यताऽद्येहपृथिव्यामतथोचिताम् २६ धर्मादिंद्राच्चवाताच्चसुषुवेयासुतानिमान् ॥ सेयंभूमौपरिश्रांताशेतेप्रासादशायिनी २७ किंनुदुःखतरंशक्यंमयाद्रष्टुमतःपरम् ॥ योऽहमद्यनरव्याघ्रान्सुप्तान्पश्यामिभूतले २८ त्रिषुलोकेषुयोराज्यंधर्मनित्योऽर्हतेनृपः ॥ सोऽयंभूमौपरिश्रांतःशेतेप्राकृतवत्कथम् ॥ २९ अयंनीलांबुदश्यामोनरेष्वप्रतिमोऽर्जुनः ॥ शेतेप्राकृतवद्भूमौततोदुःखतरंनुकिम् ३० अश्विनाविवदेवानांयाविमौरूपसंपदा ॥ तौप्राकृतवदद्येमौप्रसुप्तौधरणीतले ३१ ज्ञातयोयस्यनैवस्युर्विषमाःकुलपांसनाः ॥ सजीवेत्सुखंलोकेग्रामद्रुमइवैकजः ३२ एकोवृक्षोहियोग्रामेभवेत्पर्णफलान्वितः ॥ चैत्योभवतिनिर्ज्ञातिरर्चनीयःसुपूजितः ३३ येषांचबहवःशूराज्ञातयोधर्ममाश्रिताः ॥ तेजीवंतिसुखंलोकेभवंतिचनिरामयाः ३४ बलवंतःसमृद्धार्थामित्रबांधवनंदनाः ॥ जीवंत्यन्योन्यमाश्रित्यद्रुमाःकाननजाइव ३५वयंतुधृतराष्ट्रेणसपुत्रेणदुरात्मना ॥ विवासितानदग्धाश्चकथंचिद्दैवसंश्रयात् ३६तस्मान्मुक्तावयंदाहादिमंवृक्षमुपाश्रिताः ॥ कांदिशंप्रतिपत्स्यामःप्राप्ताःक्लेशमनुत्तमम् ३७ सकामोभवदुर्बुद्धेधार्त्तराष्ट्राल्पदर्शन ॥ नूनंदेवाःप्रसन्नास्तेनानुज्ञांमेयुधिष्ठिरः ३८

२० । २१ सुमंदभागतिमंदभाग्यः २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ एकजएकएवजातोऽसहायः ३२ । ३३ ३४ बांधवानांनंदनाःसुखदाः ३५ । ३६ । ३७ । ३८

तुभ्यंतव ३९ । ४० । ४१ । ४२ । ४३ लक्षयेयामिकानामाक्रोशादिना ४४ । ४५ ॥ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे एकपंचादशधिकशततमोऽध्यायः ॥ १५१ ॥ ॥ ७ ॥

प्रयच्छतिवधेतुभ्यंतेनजीवसिदुर्मते ॥ नन्वद्यससुतामात्यंसकर्णानुजसौबलम् ३९ गत्वाक्रोधसमाविष्टःप्रेषयिष्येयमक्षयम् ॥ किंतुशक्यंमयाकर्तुंयत्तेनकुप्यते
नृपः ४० धर्मात्मापांडवश्रेष्ठःपापाचारयुधिष्ठिरः ॥ एवमुक्त्वामहाबाहुःक्रोधसंदीप्तमानसः ४१ करंकरेणनिष्पिष्यनिःश्वसन्दीनमानसः ॥ पुनर्दीनमनाभूत्वा
शांतार्चिरिवपावकः ४२ भ्रातॄन्महीतलेसुप्तानवैक्षतवृकोदरः ॥ विश्वस्तानिवसंविष्टान्पृथग्जनसमानिव ४३ नातिदूरेणनगरंवनादस्माद्विलक्षये ॥ जागर्तव्ये
स्वपंतीमेहंतजागर्म्यहंस्वयम् ४४ प्राश्यंतीमेजलंपश्चात्प्रतिबुद्धाजितक्लमाः ॥ इतिभीमोव्यवस्यैवजजागारस्वयंतदा ४५ ॥ इतिश्रीमहाभारतेआदिपर्वणिजतुगृ
हपर्वणिभीमजलाहरणेएकपंचाशदधिकशततमोऽध्यायः ॥ १५१ ॥ ॥ ७ ॥ समाप्तंजतुगृहपर्व ॥ ॥ अथहिडिंबवधपर्व ॥ ॥ वैशंपायनउवाच ॥ तत्र
तेषुशयानेषुहिडिंबोनामराक्षसः ॥ अविदूरेवनात्तस्माच्छालवृक्षंसमाश्रितः १ क्रूरोमानुषमांसादोमहावीर्यपराक्रमः ॥ प्रावृड्जलधरश्यामःपिंगाक्षोदारुणाकृतिः
२ दंष्ट्राकरालवदनःपिशितेप्सुःक्षुधार्दितः ॥ लंबस्फिग्लंबजठरोरक्तश्मश्रुशिरोरुहः ३ महावृक्षगलस्कंधःशंकुकर्णोविभीषणः ॥ यदृच्छयातानपश्यत्पांडुपुत्रा
न्महारथान् ४ विरूपरूपःपिंगाक्षःकरालोघोरदर्शनः ॥ पिशितेप्सुःक्षुधार्तश्चतानपश्यद्यदृच्छया ५ उर्ध्वांगुलिःसकंडूयन्धुन्वन्रूक्षान्शिरोरुहान् ॥ जृंभमाणो
महावक्त्रःपुनःपुनरवेक्ष्यच ६ हृष्टोमानुषमांसस्यमहाकायोमहाबलः ॥ आघ्रायमानुषंगंधंभगिनीमिदमब्रवीत् ७ उपपन्नश्चिरस्याद्यभक्षोऽयंममसुप्रियः ॥ स्नेह
स्रवान्प्रस्रवतिजिह्वापर्येतिमेसुखम् ८ अष्टौदंष्ट्राःसुतीक्ष्णाग्राश्चिरस्यापातदुःसहाः ॥ देहेषुमज्जयिष्यामिस्निग्धेषुपिशितेषुच ९ आक्रम्यमानुषंकंठमाच्छिद्यधम
नीमपि ॥ उष्णंनवंप्रपास्यामिफेनिलंरुधिरंबहु १० गच्छजानीहिकेत्वेतेशेरतेवनमाश्रिताः ॥ मानुषोबलवान्गंधोघ्राणंतर्पयतीवमे ११ हत्वैतान्मानुषान्सर्वा
नानयस्वममांतिकम् ॥ अस्मद्विषयसुप्तेभ्योनैतेभ्योभयमस्तिते १२ एषामुत्कृत्यमांसानिमानुषाणांयथेष्टतः ॥ भक्षयिष्यावसहितौकुरुतूर्णंवचोमम १३ भक्ष
यित्वाचमांसानिमानुषाणांप्रकामतः ॥ नृत्यावसहितावावांदत्ततालावनेकशः १४ एवमुक्ताहिडिंबातुहिडिंबेनतदावने ॥ भ्रातुर्वचनमाज्ञायत्वरमाणेवराक्षसी ॥
१५ जगामतत्रयत्रस्मपांडवाभरतर्षभ ॥ ददर्शतत्रसागत्वापांडवान्पृथयासह ॥ शयानान्भीमसेनंचजाग्रतंत्वपराजितम् १६ दृष्ट्वैवभीमसेनंसाशालपोतमिवो
द्गतम् ॥ राक्षसीकामयामासरूपेणाप्रतिमंभुवि १७ अयंश्यामोमहाबाहुःसिंहस्कंधोमहाद्युतिः ॥ कंबुग्रीवःपुष्कराक्षोभर्तायुक्तोभवेन्मम १८ नाहंभ्रातृवचोजा
तुकुर्यांक्रूरोपसंहितम् ॥ पतिस्नेहोऽतिबलवान्नतथाभ्रातृसौहृदम् १९ 

तत्रेति १ । २ पिशितेप्सुर्मांसार्थी स्फिग्जंघामूलं ३ । ४ । ५ । ६ । ७ पर्येतिमानुषमांसस्यलाभंसूचयंतीचलतीव ८ । ९ धमनींनाडीं १० । ११ । १२ । १३ । १४ । १५
१६ शालपोतमिवशालांकुरमिव १७ श्यामस्तरुणः अग्रेनवहेमाभमितिवक्ष्यमाणत्वात् १८ क्रूरोपसंहितंहिंसायुक्तं १९

२० । २१ । २२ । २३ । २४ । २५ विभक्षयिषताभक्षयितुमिच्छता २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ ॥ ॥ इतिआदिपर्वणि

मुहूर्तमेवतृप्तिश्चभवेद्भ्रातुर्ममैवच ॥ हतैरेतैरहत्वातुमोदिष्येशाश्वतीःसमाः २० साकामरूपिणीरूपंकृत्वामानुषमुत्तमम् ॥ उपतस्थेमहाबाहुंभीमसेनंशनैःशनैः
२१ लज्जमानेवललनादिव्याभरणभूषिता ॥ स्मितपूर्वमिदंवाक्यंभीमसेनमथाब्रवीत् २२ कुतस्त्वमसिसंप्राप्तःकश्चासिपुरुषर्षभ ॥ कइमेशेरतेचेहपुरुषादेवरू
पिणः २३ केयंवैबृहतीश्यामासुकुमारीतवानघ ॥ शेतेवनमिदंप्राप्यविश्वस्तास्वगृहेयथा २४ नेदंजानातिगहनंवनंराक्षससेवितम् ॥ वसतिह्यत्रपापात्माहि
डिंबोनामराक्षसः २५ तेनाहंप्रेषिताभ्रात्रादुष्टभावेनरक्षसा ॥ विभक्षयिषतामांसंयुष्माकममरोपमाः २६ साऽहंत्वामभिसंप्रेक्ष्यदेवगर्भसमप्रभम् ॥ नान्यं
भर्तारमिच्छामिसत्यमेतद्ब्रवीमिते २७ एतद्विज्ञायधर्मज्ञयुक्तंमयिसमाचर ॥ कामोपहतचित्तांगिभजमानांभजस्वमाम् २८ त्रास्यामित्वांमहाबाहोराक्षसात्पु
रुषादकात् ॥ वत्स्यावोगिरिदुर्गेषुभर्ताभवममानघ २९ अंतरिक्षचरीह्यस्मिकामतोविचरामिच ॥ अतुलामाप्नुहिप्रीतिंतत्रतत्रमयासह ३० ॥ भीमसेनउवाच ॥
मातरंभ्रातरंज्येष्ठंसुखसुप्तानकथंत्विमान् ॥ परित्यजेतकोन्वद्यप्रभवन्निहराक्षसि ३१ कोहिसुप्तानिमान्भ्रातॄन्दत्वाराक्षसभोजनम् ॥ मातरंचनरोगच्छेत्कामार्त
इवमद्विधः ३२ ॥ राक्षस्युवाच ॥ यत्तेप्रियंतत्करिष्येसर्वानेतान्प्रबोधय ॥ मोक्षयिष्याम्यहंकामंराक्षसात्पुरुषादकात् ३३ ॥ भीमसेनउवाच ॥ सुखसुप्तान्वनेभ्रातॄ
न्मातरंचैवराक्षसि ॥ नभयाद्बोधयिष्यामिभ्रातुस्तवदुरात्मनः ३४ नहिमेराक्षसाभीरुसोढुंशक्ताःपराक्रमम् ॥ नमनुष्यानगंधर्वानयक्षाश्चारुलोचने ३५ गच्छवा
तिष्ठवाभद्रेयद्वाऽपीच्छसितत्कुरु ॥ तंवाप्रेषयतन्वंगिभ्रातरंपुरुषादकम् ३६ ॥ ॥ इतिश्रीमहाभारतेआदिपर्वणिहिडिंबवधपर्वणिभीमहिडिंबासंवादेद्विपंचाश
दधिकशततमोऽध्यायः ॥ १५२ ॥ ॥ वैशंपायनउवाच ॥ तांविदित्वाचिरगतांहिडिंबोराक्षसेश्वरः ॥ अवतीर्यद्रुमात्तस्मादाजगामाशुपांडवान् १ लोहि
ताक्षोमहाबाहुरूर्ध्वकेशोमहाननः ॥ मेघसंघातवर्ष्माचतीक्ष्णदंष्ट्रोभयानकः २ तमापतंतंदृष्ट्वैवतथाविकृतदर्शनम् ॥ हिडिंबोवाचवित्रस्ताभीमसेनमिदंवचः ३
आपतत्येषदुष्टात्मासंक्रुद्धःपुरुषादकः ॥ साऽहंत्वांभ्रातृभिःसार्धंयद्ब्रवीमितथाकुरु ४ अहंकामगमावीररक्षोबलसमन्विता ॥ आरुहेमांममश्रोणिंनेष्यामित्वांवि
हायसा ५ प्रबोधयैतान्संसुप्तान्मातरंचपरंतप ॥ सर्वानेवगमिष्यामिगृहीत्वावोविहायसा ६ ॥ भीमउवाच ॥ माभैस्त्वंपृथुसुश्रोणिनैषकश्चिन्मयिस्थिते ॥ अहमे
 नंहनिष्यामिप्रेक्षंत्यास्तेसुमध्यमे ७ नायंप्रतिबलोभीरुराक्षसापसदोमम ॥ सोढुंयुधिपरिस्पंदमथवासर्वराक्षसाः ८ पश्यबाहूसुवृत्तौमेहस्तिहस्तनिभाविमौ ॥
ऊरूपरिघसंकाशौसंहतंचाप्युरोमहत् ९ विक्रमंमेयथेंद्रस्यसाऽद्यद्रक्ष्यसिशोभने ॥ मावमंस्थाःपृथुश्रोणिमत्वामामिहमानुषम् १०

नीलकंठीये भारतभावदीपे द्विपंचाशदधिकशततमोऽध्यायः ॥ १५२ ॥ ॥ ७ ॥ ॥ ७ ॥ तामिति १ मेघसंघातवर्ष्माअतिकृष्णशरीरः २ । ३ । ४
५ । ६ । ७ । ८ । ९ । १०

११ । १२ । १३ ॥ वाससमितिसमासांतश्छन्द् तेनअकारांतःशद्बः ॥ १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

॥ हिडिंबोवाच ॥ नाहमन्येनरव्याघ्रत्वामहंदेवरूपिणम् ॥ दृष्टप्रभावस्तुमयामानुषेष्वेवराक्षसः ११ ॥ वैशंपायनउवाच ॥ तथासंजल्पतस्तस्यभीमसेनस्यभा
रत ॥ वाचःशुश्रावताःक्रुद्धोराक्षसःपुरुषादकः १२ अवेक्षमाणस्तस्याश्चहिडिंबोमानुषंवपुः ॥ स्रग्दामपूरितशिखंसमग्रेंदुनिभाननम् १३ सुभ्रूनासाक्षिकेशां
तंसुकुमारनखत्वचम् ॥ सर्वाभरणसंयुक्तंसुसूक्ष्मांबरवाससम् १४ तांतथामानुषंरूपंबिभ्रतींसुमनोहरम् ॥ पुंस्कामांशंकमानश्चचुक्रोधपुरुषादकः १५ संक्रुद्धो
राक्षसस्तस्याभगिन्याःकुरुसत्तम ॥ उत्फाल्यविपुलेनेत्रेततस्तामिदमब्रवीत् १६ कोहिमेभोक्तुकामस्यविघ्नंचरतिदुर्मतिः ॥ नबिभेषिहिडिंबेकिंमत्कोपाद्विप्रमो
हिता १७ धिक्त्वामसतिपुंस्कामेममविप्रियकारिणि ॥ पूर्वेषांराक्षसेंद्राणांसर्वेषामयशस्करि १८ यानिमानाश्रिताऽकार्षीर्विप्रियंसुमहन्मम ॥ एषतानद्यवैसर्वा
न्हनिष्यामित्वयासह १९ एवमुक्त्वाहिडिंबांसहिडिंबोलोहितेक्षणः ॥ वधायाभिपपातैनान्दंतैर्दंतानुपस्पृशन् २० तमापतंतंसंप्रेक्ष्यभीमःप्रहरतांवरः ॥ भर्त्सयामा
सतेजस्वीतिष्ठतिष्ठेतिचाब्रवीत् २१ ॥ वैशंपायनउवाच ॥ भीमसेनस्तुतंदृष्ट्वाराक्षसंप्रहसन्निव ॥ भगिनींप्रतिसंक्रुद्धमिदंवचनमब्रवीत् २२ किंतेहिडिंबएतैर्वा
सुखसुप्तैःप्रबोधितैः ॥ मामासादयदुर्बुद्धेतरसात्वंनराशन २३ मय्येवप्रहरैहित्वंनस्त्रियंहंतुमर्हसि ॥ विशेषतोऽनपकृतेपरेणापकृतेसति २४ नहीयंस्ववशाबाला
कामयत्यद्यमामिह ॥ चोदितैषाह्यनंगेनशरीरांतरचारिणा २५ भगिनीतवदुर्वृत्तरक्षसांवैयशोहर ॥ त्वन्नियोगेनचैवेयंरूपंममसमीक्ष्यच २६ कामयत्यद्यमां
भीरुस्तवनैषापराध्यति ॥ अनंगेनकृतेदोषेनेमांगर्हितुमर्हसि २७ मयितिष्ठतिदुष्टात्मन्नस्त्रियंहंतुमर्हसि ॥ संगच्छस्वमयासार्द्धमेकेनैकोनराशन २८ अहमेको
गमिष्यामित्वामद्ययमसादनम् ॥ अद्यमद्बलनिष्पिष्टंशिरोराक्षसदीर्यताम् ॥ कुंजरस्येवपादेनविनिष्पिष्टंबलीयसः २९ अद्यगात्राणितेकंकाःश्येनागोमायव
स्तथा ॥ कर्षंतुभुविसंहृष्टानिहतस्यमयामृधे ३० क्षणेनाद्यकरिष्येऽहमिदंवनमराक्षसम् ॥ पुरायद्दूषितंनित्यंत्वयाभक्षयतानरान् ३१ अद्यत्वांभगिनीरक्षः
कृष्यमाणंमयाऽसकृत् ॥ द्रक्ष्यत्यद्रिप्रतीकाशंसिंहेनेवमहाद्विपम् ३२ निराबाधास्त्वयिहतेमयाराक्षसपांसन ॥ वनमेतच्चरिष्यंतिपुरुषावनचारिणः ३३ हिडिं
बउवाच ॥ गर्जितेनवृथाकिंतेकत्थितेनचमानुष ॥ कृत्वैतत्कर्मणासर्वंकत्थेथामाचिरंकृथाः ३४ बलिनंमन्यसेयच्चाप्यात्मानंसपराक्रमम् ॥ ज्ञास्यस्यद्यसमाग
म्यमयाऽऽत्मानंबलाधिकम् ३५ नतावदेतान्हिंसिष्येस्वपंत्वेतेयथासुखम् ॥ एषत्वामेवदुर्बुद्धेनिहन्म्यद्याप्रियंवदम् ३६ पीत्वातवासृग्गात्रेभ्यस्ततःपश्चादिमा
नपि ॥ हनिष्यामिततःपश्चादिमांविप्रियकारिणीम् ३७ ॥ वैशंपायनउवाच ॥ एवमुक्त्वाततोबाहुंप्रगृह्यपुरुषादकः ॥ अभ्यद्रवतसंक्रुद्धोभीमसेनमरिंदमम् ३८ ॥१४२॥

२८ गमिष्यामिगमयिष्यामि नयिष्यामीतिवापाठः ॥ २९ । ३० । ३१ ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८

३९ । ४० । ४१ । ४२ । ४३ । आकर्षेतुःआचकर्षतुः ४४ । ४५ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेत्रिपंचाशदधिकशततमोऽध्यायः ॥ १५३ ॥ प्रबुद्धाइति १ । २ । ३ । ४ । ५ जिघांसितुंहंतुं

तस्याभिद्रवतस्तूर्णंभीमोभीमपराक्रमः ॥ वेगेनप्रहितंबाहुंनिजग्राहहसन्निव ३९ निगृह्यतंबलाद्भीमोविस्फुरंतंचकर्षह ॥ तस्माद्देशाद्धनूंष्यष्टौसिंहःक्षुद्रमृगंय
था ४० ततःसराक्षसःक्रुद्धःपांडवेनबलार्दितः ॥ भीमसेनंसमालिंग्यव्यनदद्भैरवंरवम् ४१ पुनर्भीमोबलादेनंविचकर्षमहाबलः ॥ माशब्दःसुखसुप्तानांभ्रातॄ
णांमेभवेदिति ४२ अन्योन्यंतौसमासाद्यविचकर्षतुरोजसा ॥ हिडिंबोभीमसेनश्चविक्रमंचक्रतुःपरम् ४३ बभंजतुस्तदावृक्षाँल्लताश्चाकर्षतुस्तदा ॥ मत्ताविि
वचसंरब्धौवारणौषष्टिहायनौ ४४ तयोःशब्देनमहताविबुद्धास्तेनरर्षभाः ॥ सहमात्राचदद्दृशुर्हिडिंबामग्रतःस्थिताम् ४५ ॥ इतिश्रीमहाभारतेआदिपर्वणिहि
डिंबवधपर्वणिहिडिंबयुद्धेत्रिपंचाशदधिकशततमोध्यायः ॥ १५३ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ प्रबुद्धास्तेहिडिंबायारूपंदृष्ट्वाऽतिमानुषम् ॥ विस्मिताः
पुरुषव्याघ्रावभूवुःपृथयासह १ ततःकुंतीसमीक्ष्यैनांविस्मितारूपसंपदा ॥ उवाचमधुरंवाक्यंसांत्वपूर्वमिदंशनैः २ कस्यत्वंसुरगर्भाभेकाचाऽसिवरवर्णिनि ॥ केन
कार्येणसंप्राप्ताकुतश्चागमनंतव ३ यदिवाऽस्यवनस्यत्वंदेवतायदिवाऽप्सराः ॥ आचक्ष्वममतत्सर्वंकिमर्थंचेहतिष्ठसि ४ ॥ हिडिंबोवाच ॥ यदेतत्पश्यसिवनंनील
मेघनिभंमहत् ॥ निवासोराक्षसस्यैषहिडिंबस्यममैवच ५ तस्यमांराक्षसेंद्रस्यभगिनींविद्धिभाविनि ॥ भ्रात्रासंप्रेषितामार्येत्वांसपुत्रांजिघांसितुं ६ क्रूर
बुद्धेरहंतस्यवचनादागतात्विह ॥ अद्राक्षंनवहेमाभंतवपुत्रंमहाबलम् ७ ततोऽहंसर्वभूतानांभाववि चरताशुभे ॥ चोदितातवपुत्रस्यमन्मथेनवशानुगा ८ ततोवृ
तोमयाभर्तातवपुत्रोमहाबलः ॥ अपनेतुंचयतितोनचैवशक्तितोमया ९ चिरायमाणांमांज्ञात्वाततःसपुरुषादकः ॥ स्वयमेवागतोहंतुमिमान्सर्वांस्तवात्मजान् १०
सतेनममकांतेनतवपुत्रेणधीमता ॥ बलादितोविनिष्पिष्यव्यपनीतोमहात्मना ११ विकर्षंतौमहावेगौगर्जमानौपरस्परं ॥ पश्यैवंयुधिविक्रांतावेतौचनररा
क्षसौ १२ ॥ वैशंपायनउवाच ॥ तस्याःश्रुत्वैववचनमुत्पपातयुधिष्ठिरः ॥ अर्जुनोनकुलश्चैवसहदेवश्चवीर्यवान् १३ तौतेदद्दृशुरासक्तौविकर्षंतौपरस्परं ॥
कांक्षमाणौजयंचैवसिंहाविवबलोत्कटौ १४ अथान्योन्यंसमाश्लिष्यविकर्षंतौपुनःपुनः ॥ दावाग्निधूमसदृशंचक्रतुःपार्थिवंरजः १५ वसुधारेणुसंवीतौवसुधाधरस
न्निभौ ॥ बभ्राजतुर्यथाशैलौनीहारेणाभिसंवृतौ १६ राक्षसेनतदाभीमंक्लिश्यमानंनिरीक्ष्यच ॥ उवाचेदंवचःपार्थःप्रहसञ्छनकैरिव १७ भीमभाभैर्महाबाहोन
त्वांबुध्यामहेवयं ॥ समेतंभीमरूपेणरक्षसाश्रमकर्शिताः १८ साहाय्येऽस्मिस्थितःपार्थपातयिष्यामिराक्षसम् ॥ नकुलःसहदेवश्चमातरंगोपयिष्यतः १९
भीमउवाच ॥ उदासीनोनिरीक्षस्वनकार्यःसंभ्रमस्त्वया ॥ नजात्वयंपुनर्जीवेन्मद्बाह्वंतरमागतः २० ॥ अर्जुनउवाच ॥ किमनेनचिरंभीमजीवतापापरक्षसा ॥
गंतव्येनचिरंस्थातुमिहशक्यमरिंदम २१ पुरासंरज्यतेप्राचीपुरासंध्याप्रवर्तते रौद्रेमुहूर्तेरक्षांसिप्रबलानिभवंत्युत २२

स्वार्थेतव् ६ । ७ भावेविचेते ८ । ९ । १० व्यपनीतोदूरेनीतः ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० गंतव्येसतिचिरंस्थातुंनशक्यं २१ । २२

विभीषणंविशेषेणभयंकरं पुराप्रागेवमायांविकुरुतेरक्षोरौद्रेमुहूर्तेऽतःअस्मिन्सारंबलंअर्पयनिपातय एनंशीघ्रंजहीत्यर्थः २३ । २४ आभ्रामयत्समंताद्भ्रामितवान् २५ वृथावृद्धोदीर्घत्वंगतः
वृथामरणंबाहुयुद्धेनहतस्यस्वर्गकीर्त्योरभावात् २६ । २७ क्रोधोद्दीपनायार्जुनउवाच यदिवेति २८ । २९ । ३० । ३१ योक्रयित्वानिबध्यउरोदेशेगृहीत्वाप्रतीपंविनाम्ययष्टिवन्मध्यदेशेभंक्त्वा

त्वरस्वभीममाक्रीडजहिरक्षोविभीषणम् ॥ पुराविकुरुतेमायांभुजयोःसारमर्पय २३ ॥ वैशंपायनउवाच ॥ अर्जुनेनैवमुक्तस्तुभीमोरोषाज्ज्वलन्निव ॥ बलमाहा
रयामासयद्वायोर्जगतःक्षये २४ ततस्तस्यांबुदाभस्यभीमोरोषात्तुरक्षसः ॥ उक्षिप्याभ्रामयद्देहंतूर्णंशतगुणंतदा २५ ॥ भीमउवाच ॥ वृथामांसैर्वृथापुष्टोवृथा
वृद्धोवृथामतिः ॥ वृथामरणमर्हस्त्वंवृथाऽद्यनभविष्यसि २६ क्षेममद्यकरिष्यामियथावनमकंटकम् ॥ नपुनर्मानुषान्हत्वाभक्षयिष्यसिराक्षस २७ ॥ अर्जुनउवाच॥
यदिवामन्यसेभारंत्वमिमंराक्षसंयुधि ॥ करोमितवसाहाय्यंशीघ्रमेषनिपात्यताम् २८ अथवाऽप्यहमेवैनंहनिष्यामिवृकोदर ॥ कृतकर्मापरिश्रांतःसाधुतावदुपारम
२९ ॥ वैशंपायनउवाच ॥ तस्यतद्वचनंश्रुत्वाभीमसेनोऽत्यमर्षणः ॥ निष्पिष्यैनंबलाद्भूमौपशुमारममारयत् ३० समार्यमाणोभीमेननननादविपुलंस्वनम् ॥
पूरयंस्तद्वनंसर्वंजलार्द्रइवदुंदुभिः ३१ बाहुभ्यांयोक्रयित्वातंबलवान्पांडुनंदनः ॥ मध्येभंक्त्वामहाबाहुर्हर्षयामासपांडवान् ३२ हिडिंबंनिहतंदृष्ट्वासंहृष्टास्तेतर
स्विनः ॥ अपूजयन्नरव्याघ्रंभीमसेनमरिंदमम् ३३ अभिपूज्यमहात्मानंभीमंभीमपराक्रमम् ॥ पुनरेवार्जुनोवाक्यमुवाचेदंवृकोदरम् ३४ नदूरंनगरंमन्येवनाद
स्मादहंविभो ॥ शीघ्रंगच्छामभद्रंतेननोविद्यात्सुयोधनः ३५ ततःसर्वेतथेत्युक्त्वामात्रासहमहारथाः ॥ प्रययुःपुरुषव्याघ्राहिडिंबाचैवराक्षसी ३६ ॥ इति श्रीम
हाभारते आदिपर्वणि हिडिंबवधपर्वणि हिडिंबवधे चतुष्पंचाशदधिकशततमोऽध्यायः ॥ १५४ ॥ ॥ भीमसेनउवाच ॥ स्मरंतिवैरंरक्षांसिमायामाश्रित्य
मोहिनीम् ॥ हिडिंबेव्रजपंथानंत्वमिमंभ्रातृसेवितम् १ ॥ युधिष्ठिरउवाच ॥ क्रुद्धोऽपिपुरुषव्याघ्रभीममास्मस्त्रियंवधीः ॥ शरीरगुप्त्यभ्यधिकंधर्मंगोपायपांडव
२ वधाभिप्रायमायांतमवधीस्त्वंमहाबलम् ॥ रक्षसस्तस्यभगिनीकिंनःक्रुद्धाकरिष्यति ३ ॥ वैशंपायनउवाच ॥ हिडिंबातुततःकुंतीमभिवाद्यकृतांजलिः ॥
युधिष्ठिरंतुकौंतेयमिदंवचनमब्रवीत् ४ आर्येजानासियद्दुःखमिहस्त्रीणामनंगजम् ॥ तदिदंमामनुप्राप्तंभीमसेनकृतंशुभे ५ सोढंतत्परमंदुःखंमयाकालप्रतीक्षया ॥
सोऽयमभ्यागतःकालोभवितामेसुखोदयः ६ मयाह्युत्सृज्यसुहृदःस्वधर्मंस्वजनंतथा ॥ वृतोऽयंपुरुषव्याघ्रस्तवपुत्रःपतिःशुभे ७ वीरेणाऽहंतथाऽनेनत्वयाचापियश
स्विनी ॥ प्रत्याख्यातानजीवामिसत्यमेतद्ब्रवीमिते ८ तदर्हसिकृपांकर्तुंमयित्वंवरवर्णिनि ॥ मत्वामूढेतितन्मांत्वंभक्तावाऽनुगतेतिवा ९ भर्त्राऽनेनमहाभागेसंयो
जयसुतेनह ॥ तमुपादायगच्छेयंयथेष्टंदेवरूपिणम् ॥ पुनश्चैवानयिष्यामिविस्रंभंकुरुमेशुभे १०

योक्रयित्वापशुमारममारयत्पांडवांश्चहर्षयामासेत्यन्वयः ३२ । ३३ । ३४ । ३५ । ३६ ॥ इति आदिपर्वणिनीलकंठीये भारतभावदीपे चतुष्पंचाशदधिकशततमोऽध्यायः ॥ १५४ ॥ ॥
स्मरंतीति भ्रातृसेवितंपंथानंमृत्युं १ । २ । ३ अभिवाद्यआर्येइत्याभाष्य चौरादिकस्यवदेरूपं ४ । ५ । ६ । ७ । ८ । ९ । १०

११ वहिष्यामिप्रापयिष्यामि आर्येइद् प्रवक्ष्यामीतिपाठेऽपिवहेरेवरूपं गतिंगम्यदेशं १२ आवृत्यांगीकृत्य १३ व्यसनंबाधकं १४ । १५ । १६ । १७ । १८ । १९ । २० । २१
२२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० शंकुकर्णौतीक्ष्णाग्रस्तब्धकर्णौ ३१ । ३२ दीर्घघोणंदीर्घनासिकं । विकटेवक्रेउद्बद्धेउद्बोपिंडिके जानुगुल्फांतरपाश्चात्यप्रदेशःपिं

अहंहिमनसाध्यातासर्वान्नेष्यामिवःसदा ॥ वृजिनात्तारयिष्यामिदुर्गेषुविषमेषुच ११ पृष्ठेनवोवहिष्यामिशीघ्रंगतिमभीप्सतः ॥ यूयंप्रसादंकुरुतभीमसेनोभजे
तमाम् १२ आपदस्तरणेप्राणान्धारयेद्येनतेनवा ॥ सर्वमावृत्यकर्तव्यंतंधर्ममनुवर्तता १३ आपत्सुयोधारयतिधर्मंधर्मविदुत्तमः ॥ व्यसनंह्येवधर्मस्यधर्मिणा
मापदुच्यते १४ पुण्यंप्राणान्धारयतिपुण्यंप्राणदमुच्यते ॥ येनयेनाचरेद्धर्मंतस्मिन्गर्हानविद्यते १५ ॥ ॥ युधिष्ठिरउवाच ॥ एवमेतद्यथाऽऽत्थत्वंहिडिं
बेनात्रसंशयः ॥ स्थातव्यंतुत्वयासत्येयथाब्रूयांसुमध्यमे १६ स्नातंकृताह्निकंभद्रेकृतकौतुकमंगलम् ॥ भीमसेनंभजेथास्त्वंप्रागस्तगमनाद्रवेः १७ अहःसुवि
हरानेनयथाकामंमनोजवा ॥ अयंत्वानयितव्यस्तेभीमसेनःसदानिशि १८ ॥ ॥ वैशंपायनउवाच ॥ तथेतितत्प्रतिज्ञायभीमसेनोऽब्रवीदिदम् ॥ शृणुराक्ष
सिसत्येनसमयंतेवदाम्यहम् १९ यावत्कालेनभवतिपुत्रस्योत्पादनंशुभे ॥ तावत्कालंगमिष्यामित्वयासहसुमध्यमे २० ॥ ॥ वैशंपायनउवाच ॥ तथेतित
त्प्रतिज्ञायहिडिंबाराक्षसीतदा ॥ भीमसेनमुपादायसोर्ध्वमाचक्रमेततः २१ शैलशृंगेषुरम्येषुदेवतायतनेषुच ॥ मृगपक्षिविघुष्टेषुरमणीयेषुसर्वदा २२ कृत्वाचरू
पंपरमंसर्वाभरणभूषिता ॥ संजल्पंतीसुमधुरंरमयामासपांडवम् २३ तथैववनदुर्गेषुपुष्पितद्रुमवल्लिषु ॥ सरःसुरमणीयेषुपद्मोत्पलयुतेषुच २४ नदीद्वीपप्रदेशेषुवै
डूर्यसिकतासुच ॥ सुतीर्थवनतोयासुतथागिरिनदीषुच २५ काननेषुविचित्रेषुपुष्पितद्रुमवल्लिषु ॥ हिमवद्गिरिकुंजेषुगुहासुविविधासुच २६ प्रफुल्लशतपत्रेषुसरः
स्वमलवारिषु ॥ सागरस्यप्रदेशेषुमणिहेमचितेषुच २७ पल्वलेषुचरम्येषुमहाशालवनेषुच ॥ देवारण्येषुपुण्येषुतथापर्वतसानुषु २८ गुह्यकानांनिवासेषुताप
सायतनेषुच ॥ सर्वर्तुफलरम्येषुमानसेषुसरःसुच २९ बिभ्रतीपरमंरूपंरमयामासपांडवम् ॥ रमयंतीतथाभीमंतत्रतत्रमनोजवा ३० प्रजज्ञेराक्षसीपुत्रंभीमसेनान्म
हाबलम् ॥ विरूपाक्षंमहावक्त्रंशंकुकर्णविभीषणम् ३१ भीमनादंसुताम्रोष्ठंतीक्ष्णदंष्ट्रंमहाबलम् ॥ महेष्वासंमहावीर्यंमहासत्वंमहाभुजम् ३२ महाजवंमहाकायंमहामा
यमरिंदमम् ॥ दीर्घघोणंमहोरस्कंविकटोद्बद्धपिंडिकम् ३३ अमानुषंमानुषजंभीमवेगंमहाबलम् ॥ यःपिशाचानतीत्यान्यान्बभूवातिवराक्षसान् ३४ बालोऽपि
यौवनंप्राप्तोमानुषेषुविशांपते ॥ सर्वास्त्रेषुपरंवीरःप्रकर्षमगमद्बली ३५ सद्योहिगर्भान्राक्षस्योलभंतेप्रसवंतिच ॥ कामरूपधराश्चैवभवंतिबहुरूपिकाः ३६ प्रणम्यवि
कचःपादावग्रहीत्सपितुस्तदा ॥ मातुश्चपरमेष्वासस्तौचनामास्यचक्रतुः ३७ घटोहास्योत्कचइतिमातातंप्रत्यभाषत ॥ अब्रवीत्तेननामास्यघटोत्कचइतिस्मह ३८

डिका तेद्वेयस्यतंविकटोद्बद्धपिंडिकं ३३ । ३४ । ३५ । ३६ विकचःकेशहीनः ३७ घटइति घयसादइयाद्धटःशिरः । 'घटःसमाधिभेदेनाशिरःकूटकटेपुच'इतिमेदिनी । हस्पष्टं अस्यपुत्रस्यउ
त्कचःविकेशोपतस्ततोघटःउत्कचोयस्येतियोगाद्धटोत्कचइतिनाम्नाब्रवीत् ३८

आत्मनित्यःस्ववशः ३९ संवाससमयःसहवासकालः जीर्णोऽतीतः । पुत्रोत्पत्तिपर्यंतमेवतस्यकृतत्वात् ४० । ४१ । ४२ । ४३ । ४४ समयमेवाह कृत्येति ४५ घटोत्कचोत्पत्ति

अनुरक्तश्चतानासीत्पांडवान्सघटोत्कचः ॥ तेषांचदयितोनित्यमात्मनित्योबभूवह ३९ संवाससमयोजीर्णइत्याभाष्यततस्तुतान् ॥ हिडिंबासमयंकृत्वास्वां
गतिंप्रत्यपद्यत ४० घटोत्कचोमहाकायःपांडवान्पृथयासह ॥ अभिवाद्ययथान्यायमब्रवीच्चप्रभाष्यताम् ४१ किंकरोम्यहमार्याणांनिःशंकंवदतानघाः ॥ तंब्रुवं
तंभैमसेनिंकुंतीवचनमब्रवीत् ४२ त्वंकुरूणांकुलेजातःसाक्षाद्भीमसमोह्यसि ॥ ज्येष्ठःपुत्रोऽसिपंचानांसाहाय्यंकुरुपुत्रक ४३ ॥ वैशंपायनउवाच ॥ पृथयाऽ
प्येवमुक्तस्तुप्रणम्यैववचोऽब्रवीत् ॥ यथाहिरावणोलोकेइंद्रजिच्चमहाबलः ॥ वर्ष्मवीर्यसमोलोकेविशिष्टश्चाभवंनृषु ४४ कृत्यकालउपस्थास्येपितॄनितिघटोत्क
चः ॥ आमंत्र्यरक्षसांश्रेष्ठःप्रतस्थेचोत्तरांदिशम् ४५ सहिसृष्टोमघवताशक्तिहेतोर्महात्मना ॥ कर्णस्याप्रतिवीर्यस्यप्रतियोद्धामहारथः ४६ ॥ इति श्रीमहाभारते
आदिपर्वणि हिडिंबवधपर्वणि घटोत्कचोत्पत्तौ पंचपंचाशदधिकशततमोऽध्यायः ॥ १५५ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ तेवनेनवनंगत्वाघ्नंतोमृग
गणान्बहून् ॥ अपक्रम्ययुराजंस्त्वरमाणामहारथाः १ मत्स्यांस्त्रिगर्तान्पंचालान्कीचकानंतरेणच ॥ रमणीयान्वनोद्देशान्प्रेक्षमाणाःसरांसिच २ जटाःकृत्वा
ऽऽत्मनःसर्वेवल्कलाजिनवाससः ॥ सहकुंत्यामहात्मानोबिभ्रतस्तापसंवपुः ३ क्वचिद्वहंतोजननींत्वरमाणामहारथाः ॥ क्वचिच्छंदेनगच्छंतस्तेजग्मुःप्रसभंपुनः ४
ब्राह्मंवेदमधीयानावेदांगानिचसर्वशः ॥ नीतिशास्त्रंचसर्वज्ञाददृशुस्तेपितामहम् ५ तेऽभिवाद्यमहात्मानंकृष्णद्वैपायनंतदा ॥ तस्थुःप्रांजलयःसर्वेसहमात्रापरं
तपाः ६ ॥ व्यासउवाच ॥ मयेदंव्यसनंपूर्वंविदितंभरतर्षभाः ॥ यथातुतैरधर्मेणधार्तराष्ट्रैर्विवासिताः ७ तद्विदित्वाऽस्मिसंप्राप्तश्चिकीर्षुःपरमंहितम् ॥ नविषादो
ऽत्रकर्तव्यःसर्वमेतत्सुखायवः ८ समास्तेचैवमेसर्वेयूयंचैवनसंशयः ॥ दीनतोबालतश्चैवस्नेहंकुर्वंतिमानवाः ॥ तस्मादभ्यधिकःस्नेहोयुष्मासुममसांप्रतम् ९ स्ने
हपूर्वंचिकीर्षामिहितंवस्तन्निबोधत ॥ इदंनगरमभ्याशेरमणीयंनिरामयम् ॥ वसतेहप्रतिच्छन्नाममागमनकांक्षिणः १० ॥ वैशंपायनउवाच ॥ एवंसतान्स
माश्वास्यव्यासःसत्यवतीसुतः ॥ एकचक्रामभिगतःकुंतीमाश्वासयत्प्रभुः ११ ॥ व्यासउवाच ॥ जीवपुत्रिसुतस्तेऽयंधर्मनित्योयुधिष्ठिरः ॥ धर्मेणपृथिवींजि
त्वामहात्मापुरुषर्षभः ॥ पृथिव्यांपार्थिवान्सर्वान्प्रशासिष्यतिधर्मराट् १२ पृथिवीमखिलांजित्वासर्वांसागरमेखलाम् ॥ भीमसेनार्जुनबलाद्भोक्ष्यतेनात्रसंशयः
१३ पुत्रास्तवचमाद्र्याश्चसर्वएवमहारथाः ॥ स्वराष्ट्रेविहरिष्यंतिसुखंसुमनसःसदा १४ यक्ष्यंतिचनरव्याघ्रानिर्जित्यपृथिवीमिमाम् ॥ राजसूयाश्वमेधाद्यैःक्रतु
भिर्भूरिदक्षिणैः १५ अनुगृह्यसुहृद्वर्गंभोगैश्वर्यसुखेनच ॥ पितृपैतामहंराज्यमिमेभोक्ष्यंतितेसुताः १६ ॥ वैशंपायनउवाच ॥ एवमुक्त्वानिवेश्यैनान्ब्राह्मणस्य ॥१४४॥
निवेशने ॥ अब्रवीत्पांडवश्रेष्ठमृषिर्द्वैपायनस्तदा १७ प्रयोजनमाह सहीति ४६ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेपंचपंचाशदधिकशततमोऽध्यायः ॥ १५५ ॥

तेइति वनेनवनंवनाद्वनं १।२।३।४ ब्राह्मंवेदंब्रह्मप्रतिपादकमुपनिषद्भागंब्राह्मणयोग्यंवा पितामहंव्यासं ५।६।७।८।९।१० एकचक्रामभिगतः तैःसहेतिशेष ११।१२।१३।१४।१५।१६।१७

१८।१९ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेषट्पंचाशदधिकशततमोऽध्यायः ॥ १५६ ॥ एकचक्रामिति १।२ पार्थिवान्पृथिवीसंबंधिनः ३ भैक्षंभिक्षालब्धमन्नंचेरुर्भक्षितवंतः आपदिक्षत्रि

इहमासंप्रतीक्षध्वमागमिष्याम्यहंपुनः ॥ देशकालौविदित्वैवलप्स्यध्वंपरमांमुदम् १८ सतैःप्रांजलिभिःसर्वैस्तथेत्युक्तोनराधिप ॥ जगामभगवान्व्यासोयथा
गतमृषिःप्रभुः १९ ॥ इतिश्रीमहाभारतेआदिपर्वणिहिडिंबवधपर्वणिएकचक्राप्रवेशेव्यासदर्शनेषट्पंचाशदधिकशततमोऽध्यायः ॥ १५६ ॥ ॥ समाप्तंचहि
डिंबवधपर्व ॥ अथबकवधपर्व ॥ ॥ जनमेजयउवाच ॥ एकचक्रांगतास्तेतुकुंतीपुत्रामहारथाः ॥ अतऊर्ध्वंद्विजश्रेष्ठकिमकुर्वतपांडवाः १ ॥ वैशंपायन
उवाच ॥ एकचक्रांगतास्तेतुकुंतीपुत्रामहारथाः ॥ ऊषुर्नातिचिरंकालंब्राह्मणस्यनिवेशने ॥ २ रमणीयानिपश्यंतोवनानिविविधानिच ॥ पार्थिवानपि
चोद्देशान्सरितश्चसरांसिच ३ चेरुर्भैक्षंतदातेतुसर्वएवविशांपते ॥ बभूवुर्नागराणांचस्वैर्गुणैःप्रियदर्शनाः ४ निवेदयंतिस्मतदाकुंत्याभैक्षंसदानिशि ॥ त
याविभक्तान्भागांस्तेभुंजतेस्मपृथक्पृथक् ५ अर्धंतेभुंजतेवीराःसहमात्रापरंतपाः ॥ अर्धंसर्वस्यभैक्षस्यभीमोभुंक्तेमहाबलः ६ तथातुतेषांवसतांतस्मिन्राष्ट्रेम
हात्मनां ॥ अतिचक्रामसुमहान्कालोऽथभरतर्षभ ७ ततःकदाचिद्भैक्षायगतास्तेपुरुषर्षभाः संगत्याभीमसेनस्तुतत्रास्तेपृथयासह ८ अथार्तिजंमहाशब्दं
ब्राह्मणस्यनिवेशने ॥ भृशमुत्पातितंघोरंकुंतीशुश्रावभारत ९ रोरूयमाणांस्तान्दृष्ट्वापरिदेवयतश्चसा ॥ कारुण्यात्साधुभावाच्चकुंतीराजन्नचक्षमे १० म
थ्यमानेवदुःखेनहृदयेनपृथातदा ॥ उवाचभीमंकल्याणीकृपान्वितमिदंवचः ११ वसामसुसुखंपुत्रब्राह्मणस्यनिवेशने ॥ अज्ञातावार्तराष्ट्रस्यसत्कृतावीतम
न्यवः १२ साचिंतयेसदापुत्रब्राह्मणस्यास्यकिंन्वहम् ॥ प्रियंकुर्यामितिगृहेयत्कुर्युरुषिताःसुखम् १३ एतावान्पुरुषस्तातकृतंयस्मिन्ननश्यति ॥ यावच्च
कुर्यादन्योऽस्यकुर्याद्भ्यधिकंततः १४ तदिदंब्राह्मणस्यास्यदुःखमापतितंध्रुवम् ॥ तत्रास्ययदिसाहाय्यंकुर्यामसुकृतंभवेत् १५ ॥ भीमसेनउवाच ॥ ॥ ज्ञा
यतामस्ययदुःखंयतश्चैवसमुत्थितम् ॥ विदित्वाव्यवसिष्यामियद्यपिस्यात्सुदुष्करम् १६ ॥ वैशंपायनउवाच ॥ ॥ एवंतौकथयंतौचभूयःशुश्रुवतुःस्वनम् ॥
आर्तिजंतस्यविप्रस्यसभार्यस्यविशांपते १७ अंतःपुरंततस्तस्यब्राह्मणस्यमहात्मनः ॥ विवेशत्वरिताकुंतीबद्धवत्सेवसौरभी १८ ततस्तंब्राह्मणंतत्रभार्ययाचसु
तेनच ॥ दुहित्राचैवसहितंददर्शावनताननम् १९ ॥ ब्राह्मणउवाच ॥ धिगिदंजीवितंलोकेगतसारमनर्थकम् ॥ दुःखमूलंपराधीनंभृशमप्रियभागिच २० जीविते
परमंदुःखंजीवितेपरमोज्वरः ॥ जीवितेवर्तमानस्यदुःखानामागमोध्रुवः २१ आत्माह्येकोहिधर्मार्थौकामंचैवनिषेवते ॥ एतैश्चविप्रयोगोऽपिदुःखंपरमनंतकम् २२
आहुःकेचित्परंमोक्षंसचनास्तिकथंचन ॥ अर्थप्राप्तौतुनरकःकृत्स्नएवोपपद्यते २३ अर्थेप्सुतापरंदुःखमर्थप्राप्तौततोऽधिकम् ॥ जातस्नेहस्यचार्थेषुविप्रयोगेमहत्तरं २४

यस्यापितदौचित्यात् ४।५।६।७।८।९ परिदेवयतःविविधंलालप्यमानान् १०।११।१२ गृहेसुखमुषिताः दुर्वासःप्रभृतयइव १३ कृतमुपकृतंननश्यतिप्रत्युपकारंविनानावसीदति एता
वानेवपुरुषोनचान्यः १४।१५।१६।१७ सौरभीकामधेनुसंततिर्गौः १८।१९।२०।२१।२२।२३।२४

योगमुपायं २५ । २६ । २७ भूतपूर्वाःपूर्वंभूताः नष्टाइत्यर्थः २८ । २९ । ३० मातृसमांआदिभूमिसमां गोसमांवा । 'मातागौर्याऽऽदिजननीगोत्रह्माण्यादिभूमिषु'इतिमेदिनी ३१ । ३२ । ३३
३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे सप्तपंचाशदधिकशततमोऽध्यायः ॥ १५७ ॥ ॥ ७ ॥ ॥ नेति वेद्यस्यविद्यावतः १ । २



नहियोगंप्रपश्यामियेनमुच्येयमापदः ॥ पुत्रदारेणवासार्धंप्राद्रवेयमनामयम् २५ यतितंवैमयापूर्वंवेत्थब्राह्मणितत्तथा ॥ क्षेमंयतस्ततोगंतुंत्वयातुममनश्रुतम् २६
इहजाताविवृद्धाऽस्मिपिताचापिममेतिवै ॥ उक्तवत्यसिदुर्मेधेयाच्यमानामयाऽसकृत् २७ स्वर्गतोऽपिपिताद्वृद्धस्तथामाताचिरंतव ॥ बांधवाभूतपूर्वाश्चतत्र
वासेतुकारतिः २८ सोऽयंतेबंधुकामायाअशृण्वंत्यावचोमम ॥ बंधुप्रणाशःसंप्राप्तोभृशंदुःखकरोमम २९ अथवामद्विनाशोऽयंनहिशक्ष्यामिकंचन ॥ परित्यक्तु
महंबंधुंस्वयंजीवन्नृशंसवत् ३० सहधर्मचरींदांतांनित्यंमातृसमांमम ॥ सखायंविहितांदेवैर्नित्यंपरमिकांगतिम् ३१ पित्रामात्राचविहितांसदागार्हस्थ्यभागि
नीम् ॥ वरयित्वायथान्यायंमंत्रवत्परिणीयच ३२ कुलीनांशीलसंपन्नामपत्यजननीमपि ॥ त्वामहंजीवितस्यार्थेसाध्वीमनपकारिणीम् ३३ परित्यक्तुंनशक्ष्यामि
भार्यांनित्यमनुव्रताम् ॥ कुतएवपरित्यक्तुंसुतंशक्ष्याम्यहंस्वयम् ३४ बालमप्राप्तवयसमजातव्यंजनाकृतिम् ॥ भर्तुरर्थायनिक्षिप्तांन्यासंधात्रामहात्मना ३५ यया
दौहित्रजाँल्लोकानाशंसेपितृभिःसह ॥ स्वयमुत्पाद्यतांबालांकथमुत्स्रष्टुमुत्सहे ३६ मन्यंतेकेचिदधिकंस्नेहंपुत्रेपितुर्नराः ॥ कन्यायांकेचिदपरेममतुल्यावुभौ
स्मृतौ ३७ यस्यांलोकाःप्रसूतिश्चस्थितानित्यमथोसुखम् ॥ अपापांतामहंबालांकथमुत्स्रष्टुमुत्सहे ३८ आत्मानमपिचोत्सृज्यतप्स्यामिपरलोकगः ॥ त्यक्ताह्ये
तेमयाव्यक्तंनेहशक्ष्यंतिजीवितुम् ३९ एषांचान्यतमत्यागोनृशंसोगर्हितोबुधैः ॥ आत्मत्यागेकृतेचेमेमरिष्यंतिमयाविना ४० सकृच्छ्रामहमापन्नोनशक्तस्तर्तु
मापदम् ॥ अहोधिक्कांगतिंत्वद्यगमिष्यामिसबांधवः ॥ सर्वैःसहमृतंश्रेयोनचमेजीवितंक्षमम् ४१ ॥ इति श्रीम०आदि०बकवधपर्वणि ब्राह्मणचिंतायांसप्तपंचा
शदधिकशततमोऽध्यायः ॥ १५७ ॥ ब्राह्मण्युवाच ॥ नसंतापस्त्वयाकार्यःप्राकृतेनेवकर्हिचित् ॥ नहिसंतापकालोऽयंवैद्यस्यतवविद्यते १ अवश्यंनिधनंसर्वैर्गंत
व्यमिहमानवैः ॥ अवश्यभाविन्यर्थेवैसंतापोनेहविद्यते २ भार्यापुत्रोऽथदुहितासर्वमात्मार्थमिष्यते ॥ व्यथांजहिसुबुद्ध्याचात्स्वयंयास्यामितत्रच ३ एतद्धिपरमं
नार्याःकार्यंलोकेसनातनम् ॥ प्राणानपिपरित्यज्ययद्भर्तुर्हितमाचरेत् ४ तच्चतत्रकृतंकर्मतवापीदंसुखावहम् ॥ भवत्यमुत्रचाक्षय्यंलोकेऽस्मिंश्चयशस्करम् ५ एषचै
वगुरुर्धर्मोयंप्रवक्ष्याम्यहंतव ॥ अर्थश्चतवधर्मश्चभूयानत्रप्रदृश्यते ६ यदर्थमिष्यतेभार्याप्राप्तःसोऽर्थस्त्वयामयि ॥ कन्याचैकाकुमारश्चकृताऽहमनृणात्वया ७ समर्थः
पोषणेचासिसुतयोरक्षणेतथा ॥ नत्वहंसुतयोःशक्तातथारक्षणपोषणे ८ ममहित्वद्विहीनायाःसर्वप्राणधनेश्वर ॥ कथंस्यातांसुतौबालौभरेयंचकथंत्वहम् ९ कथंहिवि ॥१४५॥
धवाऽनाथाबालपुत्राविनात्वया ॥ मिथुनंजीवयिष्यामिस्थितासाधुगतेपथि १०अहंकृतावलिप्तैश्चप्रार्थ्यमानामिमांसुताम्॥अयुक्तैस्तवसंबंधेकथंशक्ष्यामिरक्षितुम् ११
३ । ४ तत्रभर्तृहितनिमित्तं तच्चप्राणत्यागरूपंकर्म ५ । ६ । ७ । ८ । ९ । १० अहंकृताःगर्विताः अवलिप्ताःकलंकिताः 'अवलेपस्तुगर्वेस्याल्लेपनेदूषणेऽपिच इतिमेदिनी ११

१२ । १३ मार्गेसत्कुलसंबंधरूपे १४ गुणान्विद्यादीन् १५ । १६ ध्वांक्षाःकाकाः १७ । १८ । १९ । २० । २१पराव्युष्टिर्महद्भाग्यं । 'व्युष्टिःफलेसमृद्धौस्त्री'इतिमेदिनी २२ । २३ । २४ । २५
२६ । २७ फलार्थेविधातव्यमितिसंबंधः २८ आत्मनासमंसर्वंनेतिएषबुधानांनिश्चयः २९ । ३० । ३१ । ३२ त्वत्त्वत्तः प्रसूतिःसंततिः अजीवितंमरणं ३३ । ३४ । ३५ पूर्वस्यलंघनेतंविनाभर्त्रैं

उत्सृष्टमामिषंभूमौप्रार्थयंतियथाखगाः ॥ प्रार्थयंतिजनाःसर्वेपतिहीनांतथास्त्रियम् १२ साऽहंविचाल्यमानावैप्रार्थ्यमानादुरात्मभिः ॥ स्थातुंपथिनशक्ष्यामिस
ज्जनेष्टेद्विजोत्तम १३ कथंतवकुलस्यैकामिमांबालामनागसम् ॥ पितृपैतामहेमार्गेनियोक्तुमहमुत्सहे १४ कथंशक्ष्यामिबालेऽस्मिन्गुणानाधातुमीप्सितान् ॥ अना
थेसर्वतोलुप्तेयथात्वंधर्मदर्शिवान् १५ इमामपिचतेबालामनाथांपरिभूयमाम् ॥ अनर्हाःप्रार्थयिष्यंतिशूद्रावेदश्रुतिंयथा १६ तांचेदहंनदित्सेयंत्वद्गुणैरुपबृंहि
ताम् ॥ प्रमथ्यैनांहरेयुस्तेहविर्ध्वांक्षाइवाध्वरात् १७ संप्रेक्षमाणापुत्रंतेनानुरूपमिवात्मनः ॥ अनर्हवशमापन्नामिमांचापिसुतांतव १८ अवज्ञाताचलोकेषुत
थात्मानमजानती ॥ अवलिप्तैर्नरैर्ब्रह्मन्मरिष्यामिनसंशयः १९ तौचहीनौमयाबालौत्वयाचैवतथात्मजौ ॥ विनश्येतांनसंदेहोमत्स्याविवजलक्षये २० त्रितयं
सर्वथाऽप्येवंविनशिष्यत्यसंशयम् ॥ त्वयाविहीनंतस्मात्त्वंमांपरित्यक्तुमर्हसि २१ व्युष्टिरेषापरास्त्रीणांपूर्वंभर्तुःपरांगतिम् ॥ गंतुंब्रह्मन्सपुत्राणामितिधर्मविदो
विदुः २२ परित्यक्तःसुतश्चायंदुहितेयंतथामया ॥ बांधवाश्चपरित्यक्तास्त्वदर्थंजीवितंचमे २३ यज्ञैस्तपोभिर्नियमैर्दानैश्चविविधैस्तथा ॥ विशिष्यतेस्त्रियाभर्तु
र्नित्यंप्रियहितेस्थितिः २४ तदिदंयच्चिकीर्षामिधर्म्यंपरमसंमतम् ॥ इष्टंचैवहितंचैवतवचैवकुलस्यच २५ इष्टानिचाप्यपत्यानिद्रव्याणिसुहृदःप्रियाः ॥ आप
द्धर्मप्रमोक्षायभार्याचापिसतांमतम् २६ आपदर्थेधनंरक्षेद्दारान्रक्षेद्धनैरपि ॥ आत्मानंसततंरक्षेद्दारैरपिधनैरपि २७ दृष्टादृष्टफलार्थंहिभार्यापुत्रोधनंगृहम् ॥
सर्वमेतद्विधातव्यंबुधानामेषनिश्चयः २८ एकतोवाकुलंकृत्स्नमात्मावाकुलवर्धनः ॥ नसमंसर्वमेवेतिबुधानामेषनिश्चयः २९ सकुरुष्वमयाकार्यंतारयात्मानमा
त्मना ॥ अनुजानीहिमामार्यसुतौमेपरिपालय ३० अवध्यांस्त्रियमित्याहुर्धर्मज्ञाधर्मनिश्चये ॥ धर्मज्ञान्राक्षसानाहुर्नहन्यात्सचमामपि ३१ निःसंशयंवधःपुं
सांस्त्रीणांसंशयितोवधः ॥ अतोमामेवधर्मज्ञप्रस्थापयितुमर्हसि ३२ भुक्तंप्रियाण्यवाप्तानिधर्मश्चचरितोमहान् ॥ त्वत्प्रसूतिःप्रियाप्राप्तानमांतप्स्यत्यजीवितम्
३३ जातपुत्राचवृद्धाचप्रियकामाचतेसदा ॥ समीक्ष्यैतदहंसर्वंव्यवसायंकरोम्यतः ३४ उत्सृज्यापिहिमामार्यप्राप्स्यस्यन्यामपिस्त्रियम् ॥ ततःप्रतिष्ठितोध
र्मोभविष्यतिपुनस्तव ३५ नचाप्यधर्मःकल्याणबहुपत्नीकृतांनृणाम् ॥ स्त्रीणामधर्मःसुमहान्भर्तुःपूर्वस्यलंघने ३६ एतत्सर्वंसमीक्ष्यत्वमात्मत्यागंचगर्हितम् ॥
आत्मानंतारयाद्याशुकुलंचेमौचदारकौ ३७ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तयाभर्त्तातांसमालिंग्यभारत ॥ मुमोचबाष्पंशनकैःसभार्योभृशदुःखितः ३८
॥ इति श्रीमहाभारते आदिपर्वणि बकवधपर्वणि ब्राह्मणीवाक्ये अष्टपंचाशदधिकशततमोऽध्यायः ॥ १५८ ॥ ॥
तरकरणे ३६ । ३७ । ३८ ॥ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे अष्टपंचाशदधिकशततमोऽध्यायः ॥ १५८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

तयोरिति १ । २ त्यक्तव्यांअवश्यदेयांपरित्यज्यरक्षसेदत्वा ३ प्लववत्नौकयेवमयातरध्वंदुःसहदुःखनदीमतिक्रामध्वं ४ । ५ पुत्रःपुन्नाम्नोनरकात्त्रायतइतियोगात्पुत्रइत्यर्थः तत्स्वयमिति दौहित्रापेक्ष यासंनिहितादुहितैवाहंतारयामीत्यर्थः ६ । ७ । ८ । ९ । १० । ११ । १२ फलसंस्थासफलमरणा १३ तत्रराक्षससमीपे १४ प्रसवार्थवंशार्थं १५ । १६ अमृतेवजीवंतीव इहलोकेकीर्तेःसत्त्वात् १७

वैशंपायनउवाच ॥ तयोर्दुःखितयोर्वाक्यमतिमात्रंनिशम्यतु ॥ ततोदुःखपरीतांगीकन्यातावभ्यभाषत १ किमेवंभृशदुःखार्तौरोरूयेतामनाथवत् ॥ ममापि
श्रूयतांवाक्यंश्रुत्वाचक्रियतांक्षमम् २ धर्मतोऽहंपरित्याज्यायुवयोर्नात्रसंशयः ॥ त्यक्तव्यांमांपरित्यज्यत्राहिसर्वंमयैकया ३ इत्यर्थमिष्यतेऽपत्यंतारयिष्यति
मामिति ॥ अस्मिन्नुपस्थितेकालेतरध्वंप्लववन्मया ४ इहवातारयेदुर्गादुतवाप्रेत्यभारत ॥ सर्वथातारयेत्पुत्रःपुत्रइत्युच्यतेबुधैः ५ आकांक्षंतेचदौहित्रान्मयि
नित्यंपितामहाः ॥ तत्स्वयंवैपरित्रास्येरक्षंतीजीवितंपितुः ६ भ्राताचममबालोऽयंगतेलोकममुंत्वयि ॥ अचिरेणैवकालेनविनश्येतनसंशयः ७ तातेऽपिहिग
तेस्वर्गंविनष्टेचममानुजे ॥ पिंडःपितॄणांव्युच्छिद्येत्ततेषांविप्रियंभवेत् ८ पित्रात्यक्तातथामात्राभ्रात्राचाहमसंशयम् ॥ दुःखाद्दुःखतरंप्राप्यम्रियेयमतथोचिता ९
त्वयित्वरोगेनिर्मुक्तेमाताभ्राताचमेशिशुः ॥ संतानश्चैवपिंडश्चप्रतिष्ठास्यत्यसंशयम् १० आत्मापुत्रःसखाभार्याकृच्छ्रंतुदुहिताकिल ॥ सकृच्छ्रान्मोचयात्मानंमां
चधर्मेनियोजय ११ अनाथाकृपणाबालायत्रक्वचनगामिनी ॥ भविष्यामित्वयातातविहीनाकृपणासदा १२ अथवाऽहंकरिष्यामिकुलस्यास्यविमोचनम् ॥ फलसंस्था
भविष्यामिकृत्वाकर्मसुदुष्करम् १३ अथवायास्यसेतत्रत्यक्त्वामांद्विजसत्तम ॥ पीडिताऽहंभविष्यामितदवेक्षस्वमामपि १४ तदस्मदर्थंधर्मार्थंप्रसवार्थंचसत्तम ॥
आत्मानंपरिरक्षस्वत्यक्तव्यांमांचतंत्यज १५ अवश्यकरणीयेचमात्वांकालोऽत्यगादयम् ॥ किंत्वतःपरमंदुःखंयद्वयंस्वर्गतेत्वयि १६ याचमानाःपरादन्नंपरि
धावेमहिश्ववत् ॥ त्वयित्वरोगेनिर्मुक्तेक्लेशादस्मात्सबांधवे ॥ अमृतेवसतीलोकेभविष्यामिसुखान्विता १७ इतःप्रदानेदेवाश्चपितरश्चेतिनःश्रुतम् ॥ त्वयादत्तेनतो
येनभविष्यंतिहितायवै १८ ॥ वैशंपायनउवाच ॥ एवंबहुविधंतस्यानिशम्यपरिदेवितम् ॥ पितामाताचसाचैवकन्याप्ररुरुदुस्त्रयः १९ ततःप्ररुदितान्सर्वा
न्निशम्याथसुतस्तदा ॥ उत्फुल्लनयनोबालःकलमव्यक्तमब्रवीत् २० मापितारुदमामातर्मास्वसस्त्वितिचाब्रवीत् ॥ प्रहसन्निवसर्वांस्तानेकैकमनुसर्पति २१ ततः
सतृणमादायप्रहृष्टःपुनरब्रवीत् ॥ अनेनाहंहनिष्यामिराक्षसंपुरुषादकम् २२ तथाऽपितेषांदुःखेनपरीतानांनिशम्यतत् ॥ बालस्यवाक्यमव्यक्तंहर्षःसमभवन्म
हान् २३ अयंकालइतिज्ञात्वाकुंतीसमुपसृत्यतान् ॥ गतासूनमृतेनेवजीवयंतीदमब्रवीत् २४ ॥ इति श्रीमहाभारते आदिपर्वणि बकवधपर्वणि
ब्राह्मणकन्यापुत्रवाक्येऊनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

इतःप्रदानेअस्मिन्राक्षसाहारायकन्यादानेदुर्दानत्वात्पितुर्दुर्मरणाचकन्यायादेवाश्चपितरश्चहितायनेतिश्रुतंयद्यपितथाऽपित्वयादत्तेनतोयेनतवममचहितायतेभविष्यंतीत्यर्थः १८ । १९ कलंमधुरं २० हेपितःमारुदरोदनंमाकुरु एतेनबाललीलापिभाविशुभाशुभसूचिकेतिसूचितं २१ । २२ । २३ । २४ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपे ऊनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥



कुतइति कुतोमूलंकुतउत्थितमित्यर्थः १ । २ । ३ । ४ । ५ शालिवाहोविंशतिखारीपरिमितशालितंडुलौदनः । वाहोविंशतिखारिकइत्युक्तेः ६ वारःपर्यायागतोदिवसः ७ । ८ वेत्र कीयगृहेस्थानविशेषे इतोऽदूरेराजाऽस्त्ययमिहनगरेनयंनआस्थितः अस्यनगरस्यावेक्षांनकरोतीत्यर्थः । स्वयंराक्षसंहंतुमशक्तत्वादुपायमप्यन्यद्वारानकुरुतेयतोमंदधीः ९ एतदर्हाःएतस्य दुःखस्ययोग्यावयं तत्रहेतुःवसामइत्यादिः विषयेदेशेनित्यवास्तव्यानित्यंवासकर्तारः नित्यमुद्विग्नाइत्यपिपठंति १० कस्यकेनहेतुना कस्यकेनपुंसावक्तव्याइतोमागच्छतेतिवक्तुंशक्याः कृष्या

॥ कुंत्युवाच ॥ कुतोमूलमिदंदुःखंज्ञातुमिच्छामितत्त्वतः ॥ विदित्वाऽप्यपकर्षेयंशक्यंचेदपकर्षितुम् १ ॥ ब्राह्मणउवाच ॥ उपपन्नंसतामेतद्यद्ब्रवीषितपोधने ॥
नतुदुःखमिदंशक्यंमानुषेणव्यपोहितुम् २ समीपेनगरस्यास्यबकोवसतिराक्षसः ॥ ईशोजनपदस्यास्यपुरस्यचमहाबलः ३ पुष्टोमानुषमांसेनदुर्बुद्धिःपुरुषाद
कः ॥ रक्षत्यसुरराण्नित्यमिमंजनपदंबली ४ नगरंचैवदेशंचरक्षोबलसमन्वितः ॥ तत्कृतेपरचक्राच्चभूतेभ्यश्चननोभयम् ५ वेतनंतस्यविहितंशालिवाहस्यभो
जनम् ॥ महिषौपुरुषश्चैकोयस्तदादायगच्छति ६ एकैकश्चापिपुरुषस्तत्प्रयच्छतिभोजनम् ॥ सवारोबहुभिर्वर्षैर्भवत्यसुकरोनरैः ७ तद्विमोक्षाययेकेचिद्यतंति
पुरुषाःक्वचित् ॥ सपुत्रदारांस्तान्हत्वातद्रक्षोभक्षयत्युत ८ वेत्रकीयगृहेराजानायंनयमिहास्थितः ॥ उपायंतंनकुरुतेयत्नादपिसमंदधीः ॥ अनामयंजनस्या
स्ययेनस्याद्यशाश्वतम् ९ एतदर्हावयंनूनंवसामोदुर्बलस्यये ॥ विषयेनित्यवास्तव्याःकुराजानमुपाश्रिताः १० ब्राह्मणाःकस्यवक्तव्याःकस्यवाच्छंदचारिणः ॥
गुणैरेतेहिवत्स्यंतिकामगाःपक्षिणोयथा ११ राजानंप्रथमंविंदेत्ततोभार्यांततोधनम् ॥ त्रयस्यसंचयेनास्यज्ञातीन्पुत्रांश्चतारयेत् १२ विपरीतंमयाचेदंत्रयंसर्वमु
पार्जितम् ॥ तदिमामापदंप्राप्यभृशंतप्यामहेवयम् १३ सोऽयमस्माननुप्राप्तोवारःकुलविनाशनः ॥ भोजनंपुरुषश्चैकःप्रदेयंवेतनंमया १४ नचमेविद्यतेवित्तंसंक्रे
तुंपुरुषंक्वचित् ॥ सुहृज्जनंप्रदातुंचनशक्ष्यामिकदाचन १५ गतिंचैवनपश्यामितस्मान्मोक्षायरक्षसः ॥ सोऽहंदुःखार्णवेमग्नोमहत्यसुकरेभृशम् १६ सहैवैतैर्गमि
ष्यामिबांधवैरद्यराक्षसम् ॥ ततोनःसहितान्क्षुद्रःसर्वानेवोपभोक्ष्यति १७ ॥ ॥ इति श्रीमहाभारते आदिपर्वणिबकवधपर्वणिकुंतीप्रश्नेषष्ट्यधिकशततमो
ऽध्यायः ॥ १६० ॥ ॥ कुंत्युवाच ॥ नविषादस्त्वयाकार्योभयादस्मात्कथंचन ॥ उपायःपरिदृष्टोऽत्रतस्मान्मोक्षायरक्षसः १ एकस्तवसुतोबालःकन्या
चैकातपस्विनी ॥ नचैतयोस्तथापत्न्यागमनंतवरोचये २ ममपंचसुताब्रह्मंस्तेषामेकोगमिष्यति ॥ त्वदर्थंबलिमादायतस्यपापस्यरक्षसः ३ ब्राह्मणउवाच ॥
नाहमेतत्करिष्यामिजीवितार्थीकथंचन ॥ ब्राह्मणस्यातिथेश्चैवस्वार्थेप्राणान्वियोजयन् ४

दिकारित्वाभावात् अतएवच्छंदचारिणः गुणैर्देशस्यराज्ञोवा वत्स्यंतिवासंकरिष्यंति नतुनिर्बंधेनेत्यर्थः ११ संचयेनसमृद्ध्या अराजकेहिराष्ट्रेकृताभार्याचोरहार्यास्यात् अभार्यस्यापत्यनोधनंरा जहार्यंस्यात् १२ विपरीतंकुराज्येभार्योद्वहनादुद्वाहानंतरंधनालाभाच १३ । १४ । १५ । १६ । १७ ॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेषष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥
नविषादइति १ । २ । ३ एतत्त्वदुक्तं अकुलीनास्वधर्मिष्ठास्वपिमज्जासुनविद्यतेतत्कथंमादृशेषुस्यादित्यर्थः ४

ब्राह्मणार्थमात्मादिविसर्जनमेवआत्मनःश्रेयोमयाबोद्धव्यमितिसंबंधः ५ । ६ अबुद्धिपूर्वकब्रह्मवधाद्बुद्धिपूर्वकृतेआत्मवधेस्वल्पंपापं तदपिममपरेणकृतेवधेनास्तीत्याहसार्द्धेन अबुद्धीत्यादिना ७
८ अभिसंधिकृतेबुद्धिपूर्वकृते ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ विमकुर्युर्बाधेरन् १७ नन्वयमपिताम्बाधतांनेत्याह गुरुणाचेति आह्वयेद्वाह्वदाचरेत्कवलयेत् समम

नत्वेतदकुलीनासुनाधर्मिष्ठासुविद्यते ॥ यद्ब्राह्मणार्थेविसृजेदात्मानमपिचात्मजम् ५ आत्मनस्तुमयाश्रेयोबोद्धव्यमितिरोचते ॥ ब्रह्मवध्याऽऽत्मवध्यावाश्रेया
नात्मवधोमम ६ ब्रह्मवध्यापरंपापंनिष्कृतिर्नात्रविद्यते ॥ अबुद्धिपूर्वकृत्वाऽपिवरमात्मवधोमम ७ नत्वहंवधमाकांक्षेस्वयमेवात्मनःशुभे ॥ परैःकृतेवधेपापंनकिं
चिन्मयिविद्यते ८ अभिसंधिकृतेतस्मिन्ब्राह्मणस्यवधेमया ॥ निष्कृतिंनप्रपश्यामिनृशंसंक्षुद्रमेवच ९ आगतस्यगृहंत्यागस्तथैवशरणार्थिनः ॥ याचमानस्य
चवधोनृशंसोगर्हितोबुधैः १० कुर्यान्ननिंदितंकर्मननृशंसंकथंचन ॥ इतिपूर्वेमहात्मानआपद्धर्मविदोविदुः ११ श्रेयांस्तुसहदारस्यविनाशोऽद्यममस्वयम् ॥ ब्रा
ह्मणस्यवधंनाहमनुमंस्येकदाचन १२ ॥ कुंत्युवाच ॥ ममाप्येषामतिर्ब्रह्मन्विप्रारक्ष्याइतिस्थिरा ॥ नचाप्यनिष्टःपुत्रोमेयदिपुत्रशतंभवेत् १३ नचासौराक्षसः
शक्तोममपुत्रविनाशने ॥ वीर्यवान्मंत्रसिद्धश्चतेजस्वीचसुतोमम १४ राक्षसायचतत्सर्वंप्रापयिष्यतिभोजनम् ॥ मोक्षयिष्यतिचात्मानमितिमेनिश्चितामतिः
१५ समागताश्चवीरेणदृष्टपूर्वाश्चराक्षसाः ॥ बलवंतोमहाकायानिहताश्चाप्यनेकशः १६ नत्विदंकेषुचिद्ब्रह्मन्व्याहर्तव्यंकथंचन ॥ विद्यार्थिनोहिमेपुत्रान्विप्र
कुर्युःकुतूहलात् १७ गुरुणाचाननुज्ञातोग्राहयेद्यत्सुतोमम ॥ नसकुर्यात्तथाकार्यंविद्ययेतिसतांमतम् १८ एवमुक्तस्तुपृथयासविप्रोभार्ययासह ॥ हृष्टःसंपूजया
मासतद्वाक्यममृतोपमम् १९ ततःकुंतीचविप्रश्चसहितावनिलात्मजम् ॥ तमब्रूतांकुरुष्वेतिसतथेत्यब्रवीच्चतौ २० ॥ इतिश्रीमहाभारतेआदिपर्वणिबकवधपर्वणिभी
मबकवधांगीकारेएकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥ वैशंपायनउवाच ॥ करिष्यइतिभीमेनप्रतिज्ञातेऽथभारत ॥ आजग्मुस्तेततःसर्वेभैक्षमादायपांडवाः
१ आकारेणैवतंज्ञात्वापांडुपुत्रोयुधिष्ठिरः ॥ रहःसमुपविश्यैकस्ततःपप्रच्छमातरम् २ ॥ युधिष्ठिरउवाच ॥ किंचिकीर्षत्ययंकर्मभीमोभीमपराक्रमः ॥ भवत्यनुमतेक
च्चित्स्वयंवाकर्तुमिच्छति ३ ॥ कुंत्युवाच ॥ ममैववचनादेषकरिष्यतिपरंतपः ॥ ब्राह्मणार्थेमहत्कृत्यंमोक्षायनगरस्यच ४ ॥ युधिष्ठिरउवाच ॥ किमिदंसाहसंतीक्ष्णं
भवत्यादुष्करंकृतम् ॥ परित्यागंहिपुत्रस्यनप्रशंसंतिसाधवः ५ कथंपरसुतस्यार्थेस्वसुतंत्यक्तुमिच्छसि ॥ लोकवेदविरुद्धंहिपुत्रत्यागात्कृतंत्वया ६ यस्यबाहूसमा
श्रित्यसुखंसर्वेशयामहे ॥ राज्यंचापहृतंक्षुद्रैराजिहीर्षामहेपुनः ७ यस्यदुर्योधनोवीर्यंचिंतयन्नमितौजसः ॥ नशेतेरजनीःसर्वादुःखाच्छकुनिनासह ८ यस्यवी
रस्यवीर्येणमुक्ताजतुगृहाद्वयम् ॥ अन्येभ्यश्चैवपापेभ्योनिहतश्चपुरोचनः ९ यस्यवीर्यंसमाश्रित्यवसुपूर्णांवसुंधराम् ॥ इमांमन्यामहेप्राप्तांनिहत्यधृतराष्ट्रजान् १० 

सुतस्तत्कार्यंतथानकुर्याद्यथाविद्ययाशिक्षयागुर्वाज्ञयाकुर्यादिति १८ । १९ २० ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥ ॥ करिष्येइति
१ । २ । ३ मोक्षायबकभयादितिशेषः ४ । ५ । ६ । ७ । ८ । ९ । १०

११ । १२ । १३ । १४ विश्वासोऽसाध्यमपिसाधयेदितिप्रत्ययः १५ निर्व्यूढाबहिर्निष्कासिताः । निगूढाइतिपाठे गूढारक्षिताः वारणावताद्वारणावर्तंत्यक्तापथीतिशेषः १६ । १७ । १८ प्रतिकार्ये

तस्यव्यवसितस्त्यागोबुद्धिमास्थायकांत्वया ॥ कच्चिद्दुःखैर्बुद्धिस्तेविलुप्तागतचेतसः ११ ॥ कुंत्युवाच ॥ युधिष्ठिरनसंतापस्त्वयाकार्योवृकोदरे ॥ नचायंबु
द्धिदौर्बल्याद्व्यवसायःकृतोमया १२ इहविप्रस्यभवनेवयंपुत्रसुखोषिताः ॥ अज्ञाताधार्तराष्ट्राणांसत्कृतावीतमन्यवः १३ तस्यप्रतिक्रियापार्थमयेयंप्रसमीक्षिता ॥
एतावानेवपुरुषःकृतंयस्मिन्ननश्यति १४ यावच्चकुर्यादन्योऽस्यकुर्याद्बहुगुणंततः ॥ दृष्ट्वाभीमस्यविक्रांतंतदाजतुगृहेमहत् ॥ हिडिंबस्यवधाच्चैवविश्वासोमेवृको
दरे १५ बाह्वोर्बलंहिभीमस्यनागायुतसमंमहत् ॥ येनयूयंगजप्रख्यानिर्व्यूढावारणावतात् १६ वृकोदरेणसदृशोबलेनान्योनविद्यते ॥ योऽत्युदीयाद्युधिश्रेष्ठमपि
चक्रधरंस्वयम् १७ जातमात्रःपुराचैषममांकात्पतितोगिरौ ॥ शरीरगौरवादस्यशिलागात्रैर्विचूर्णिता १८ तदहंप्रज्ञयाज्ञात्वाबलंभीमस्यपांडव ॥ प्रतिकार्येचविप्र
स्यततःकृतवतीमतिम् १९ नेदंलोभान्नचाज्ञानान्नचमोहाद्विनिश्चितम् ॥ बुद्धिपूर्वंतुधर्मस्यव्यवसायःकृतोमया २० अर्थौद्वावपिनिष्पन्नौयुधिष्ठिरभविष्यतः ॥
प्रतीकारश्चवासस्यधर्मश्चचरितोमहान् २१ योब्राह्मणस्यसाहाय्यंकुर्यादर्थेषुकर्हिचित् ॥ क्षत्रियःसशुभाँल्लोकानाप्नुयादितिमेमतिः २२ क्षत्रियस्यैवकुर्वाणःक्षत्रि
योवधमोक्षणम् ॥ विपुलांकीर्तिमाप्नोतिलोकेऽस्मिंश्चपरत्रच २३ वैश्यस्यार्थेचसाहाय्यंकुर्वाणःक्षत्रियोभुवि ॥ ससर्वेष्वपिलोकेषुप्रजारंजयतेध्रुवम् २४ शूद्रंतु
मोचयेद्राजाशरणार्थिनमागतम् ॥ प्राप्नोतीहकुलेजन्मसद्रव्येराजपूजिते २५ एवंमांभगवान्व्यासःपुरापौरवनंदन ॥ प्रोवाचासुकरप्रज्ञस्तस्मादेवंचिकीर्षि
तम् २६ ॥ इतिश्रीमहाभारतेआदिपर्वणिबकवधपर्वणिकुंतीयुधिष्ठिरसंवादेद्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥ ॥ युधिष्ठिरउवाच ॥ उपपन्नमिदं
मातस्त्वयायद्बुद्धिपूर्वकम् ॥ आर्तस्यब्राह्मणस्यैतदनुक्रोशादिदंकृतम् १ ध्रुवमेष्यतिभीमोऽयंनिहत्यपुरुषादकम् ॥ सर्वथाब्राह्मणस्यार्थेयदनुक्रोशवत्यसि २ य
थात्विदंनविंदेयुर्नरानगरवासिनः ॥ तथाऽयंब्राह्मणोवाच्यःपरिग्राह्यश्चयत्नतः ३ ॥ वैशंपायनउवाच ॥ ततोरात्र्यांव्यतीतायामन्नमादायपांडवः ॥ भीमसेनो
ययौतत्रयत्रासौपुरुषादकः ४ आसाद्यतुवनंतस्यरक्षसःपांडवोबली ॥ आजुहावततोनाम्नातदन्नमुपपादयन् ५ ततःसराक्षसःक्रुद्धोभीमस्यवचनात्तदा ॥ आज
गामसुसंक्रुद्धोयत्रभीमोव्यवस्थितः ६ महाकायोमहावेगोदारयन्निवमेदिनीम् ॥ लोहिताक्षःकरालश्चलोहितश्मश्रुमूर्धजः ७ आकर्णाद्भिन्नवक्त्रश्चशंकुकर्णोविभी
षणः ॥ त्रिशिखांभ्रुकुटिंकृत्वासंदश्यदशनच्छदम् ८ भुंजानमन्नंतंदृष्ट्वाभीमसेनंसराक्षसः ॥ विवृत्यनयनेक्रुद्धइदंवचनमब्रवीत् ९ कोऽयमन्नमिदंभुंक्तेमदर्थमुपक
ल्पितम् ॥ पश्यतोममदुर्बुद्धिर्यियासुर्यमसादनम् १०



शत्रौमतिंकृतवती प्रतिकर्तुमितिशेषः १९ । २० प्रतीकारःप्रत्युपकारः २१ । २२ । २३ । २४ । २५ । २६ ॥ इति आदिपर्वणिनीलकंठीयेभारतभावदीपेद्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥
उपपन्नमिति कृतंत्राणमितिशेषः १ । २ परिग्राह्योऽनुग्राह्यः ३ । ४ । ५ । ६ । ७ भिन्नवक्त्रोविदीर्णवक्त्रः भ्रुकुटिंभ्रूमध्यं त्रिशिखांत्रिरेखां ८ । ९ यियासुर्गंतुमिच्छुः यमसादनंयमगृहं १०

११ । १२ । १३ । १४ उपदेवत्वाद्राक्षसस्यतत्स्पर्शेपिदोषाभावाद्भुंक्तएवेतिभावः १५ । १६ । १७ । १८ । १९ । २० परिजग्राहआलिंगितवान् २१ विस्फुरंतमितिपुंस्त्वंबकनाम
लिंगापेक्षया २२ । २३ । २४ । २५ शिरोधरांकंधरां २६ चक्रेकृतं कटिकंधरयोर्योजनेनपृष्ठवंशंबभंजेत्यर्थः रवंतमितिरववत् प्राग्वल्लिंगं २७ । २८ ॥ इति आदिपर्वणि नीलकंठीये

भीमसेनस्ततःश्रुत्वाप्रहसन्निवभारत ॥ राक्षसंतमनादृत्यभुंक्तएवपराङ्मुखः ११ रवंसभैरवंकृत्वासमुद्यम्यकरावुभौ ॥ अभ्यद्रवद्भीमसेनंजिघांसुःपुरुषादकः १२
तथाऽपिपरिभूयैनंप्रेक्षमाणोवृकोदरः ॥ राक्षसंभुंक्तएवान्नंपांडवःपरवीरहा १३ अमर्षेणतुसंपूर्णःकुंतीपुत्रंवृकोदरम् ॥ जघानपृष्ठेपाणिभ्यामुभाभ्यांपृष्ठतःस्थितः
१४ तथाबलवताभीमःपाणिभ्यांभृशमाहतः ॥ नैवावलोकयामासराक्षसंभुंक्तएवसः १५ ततःसभूयःसंक्रुद्धोवृक्षमादायराक्षसः ॥ ताडयिष्यंस्तदाभीमंपुनरभ्यद्रव
द्बली १६ ततोभीमःशनैर्भुक्त्वातदन्नंपुरुषर्षभः ॥ वार्युपस्पृश्यसंहृष्टस्तस्थौयुधिमहाबलः १७ क्षिप्तंक्रुद्धेनतंवृक्षंप्रतिजग्राहवीर्यवान् ॥ सव्येनपाणिनाभीमःप्रह
सन्निवभारत १८ ततःसपुनरुद्यम्यवृक्षान्बहुविधान्बली ॥ प्राहिणोद्भीमसेनायतस्मैभीमश्चपांडवः १९ तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ॥ घोररूपंमहारा
जनरराक्षसराजयोः २० नामविश्राव्यतुबकःसमभिद्रुत्यपांडवम् ॥ भुजाभ्यांपरिजग्राहभीमसेनंमहाबलम् २१ भीमसेनोऽपितद्रक्षःपरिरभ्यमहाभुजः ॥ विस्फु
रंतंमहाबाहुंविचकर्षबलाद्बली २२ सकृष्यमाणोभीमेनकर्षमाणश्चपांडवम् ॥ समयुज्यततीव्रेणक्रमेनपुरुषादकः २३ तयोर्वेगेनमहताप्रथिवीसमकंपत ॥ पादपां
श्चमहाकायांश्चूर्णयामासतुस्तदा २४ हीयमानंतुतद्रक्षःसमीक्ष्यपुरुषादकम् ॥ निष्पिष्यभूमौजानुभ्यांसमाजघ्नेवृकोदरः २५ ततोऽस्यजानुनापृष्ठमवपीड्यबला
दिव ॥ बाहुनापरिजग्राहदक्षिणेनशिरोधराम् २६ सव्येनचकटीदेशेगृह्यवाससिपांडवः ॥ तद्रक्षोद्विगुणंचक्रेरवंतंभैरवंरवम् २७ ततोऽस्यरुधिरंवक्त्रात्प्रादुरासी
द्विशांपते ॥ भज्यमानस्यभीमेनतस्यघोरस्यरक्षसः २८ ॥ इतिश्रीमहाभारतेआदिपर्वणिबकवधपर्वणिबकभीमसेनयुद्धेत्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥
वैशंपायनउवाच ॥ ततःसभग्नपार्श्वांगोनदित्वाभैरवंरवम् ॥ शैलराजप्रतीकाशोगतासुरभवद्बकः १ तेनशब्देनवित्रस्तोजनस्तस्याथरक्षसः ॥ निष्पपातगृहा
द्राजन्सहैवपरिचारिभिः २ तान्भीतान्विगतज्ञानान्भीमःप्रहरतांवरः ॥ सांत्वयामासबलवान्समयेचन्यवेशयत् ३ नहिंस्यामानुषाभूयोयुष्माभिरितिकर्हिचित् ॥
हिंसतांहिवधःशीघ्रमेवमेवभवेदिति ४ तस्यतद्वचनंश्रुत्वातानिरक्षांसिभारत ॥ एवमस्त्वितितंप्राहुर्जगृहुःसमयंचतम् ५ ततःप्रभृतिरक्षांसितत्रसौम्यानिभारत ॥
नगरेप्रत्यदृश्यंतनरैर्नगरवासिभिः ६ ततोभीमस्तमादायगतासुंपुरुषादकम् ॥ द्वारदेशेविनिक्षिप्यजगामानुपलक्षितः ७ दृष्ट्वाभीमबलोद्भूतंबकंविनिहतंतदा ॥
ज्ञातयोऽस्यभयोद्विग्नाःप्रतिजग्मुस्ततस्ततः ८ ततःसभीमस्तंहत्वागत्वाब्राह्मणवेश्मतत् ॥ आचचक्षेयथावृत्तंराज्ञःसर्वमशेषतः ९

भारतभावदीपे त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥ ततइति भग्नानिपार्श्वानिपर्शवोंऽगानिचहस्तपादादीनियस्यसतथा १ । २ । ३ । ४ । ५ । ६ । ७ । ८ गत्वागतवान् ।
अन्येभ्योऽपिदृश्यंतइतिगमेःक्विप् ततोऽनुनासिकलोपेतुगागमेचैतद्रूपं । आचचक्षेब्राह्मणइतिशेषः ९



कल्यंप्रातःकाले १० । ११ । १२ । १३ । १४ । १५ आज्ञापितंराजकीयैरितिशेषः अशनेराक्षसस्यभोजनार्थं १६ । १७ । १८ । १९ अन्नममदंब्राह्मणेनराक्षसोहतइतिश्रुत्वाब्राह्मणानांसुखार्थमिहम
त्सर्वंब्राह्मणपूजनादिकंचक्रुः २० । २१ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥ ॥ ७ ॥ ॥ तेतथापुरुषव्याघ्राइति १ ब्रह्मउपनिषदं

ततोनराविनिष्क्रांतानगरात्कल्यमेवतु ॥ ददृशुर्निहतंभूमौराक्षसंरुधिरोक्षितम् १० तमद्रिकूटसदृशंविनिकीर्णंभयानकम् ॥ दृष्ट्वासंहृष्टरोमाणोबभूवुस्तत्रनगाराः
११ एकचक्रांततोगत्वाप्रवृत्तिंप्रददुःपुरे ॥ ततःसहस्रशोराजन्नरानगरवासिनः १२ तत्राजग्मुर्बकंद्रष्टुंसस्त्रीवृद्धकुमारकाः ॥ ततस्तेविस्मिताःसर्वेकर्मदृष्ट्वाऽति
मानुषम् ॥ दैवतान्यर्चयांचक्रुःसर्वएवविशांपते १३ ततःप्रगणयामासुःकस्यवारोऽद्यभोजने ॥ ज्ञात्वाचागम्यतंविप्रंपप्रच्छुःसर्वएवते १४ एवंपृष्टःसबहुशो
रक्षमाणश्चपांडवान् ॥ उवाचनागरान्सर्वानिदंविप्रर्षभस्तदा १५ आज्ञापितंमामशनेरुदंतंसहबंधुभिः ॥ ददर्शब्राह्मणःकश्चिन्मंत्रसिद्धोमहामनाः १६ परिपृ
च्छ्यसमांपूर्वंपरिक्लेशंपुरस्यच ॥ अब्रवीद्ब्राह्मणश्रेष्ठोविश्वास्यप्रहसन्निव १७ प्रापयिष्याम्यहंतस्माअन्नमेतद्दुरात्मने ॥ मन्निमित्तंभयंचापिनकार्यमितिचाब्रवीत्
१८ सतदन्नमुपादायगतोबकवनंप्रति ॥ तेननूनंभवेदेतत्कर्मलोकहितंकृतम् १९ ततस्तेब्राह्मणाःसर्वेक्षत्रियाश्चसुविस्मिताः ॥ वैश्याःशूद्राश्चमुदिताश्चक्रुर्ब्र
ह्ममहंतदा २० ततोजानपदाःसर्वेआजग्मुर्नगरंप्रति ॥ तदद्भुततमंदृष्ट्वापार्थास्तत्रैवचावसन् २१ ॥ इति श्रीमहाभारते आदिपर्वणि बकवधप० बकवधे चतुःषष्ट्य
धिकशततमोऽध्यायः ॥ १६४ ॥ ॥ समाप्तंचबकवधपर्व ॥ अथचैत्ररथपर्व ॥ जनमेजयउवाच ॥ तेतथापुरुषव्याघ्रानिहत्यबकराक्षसम् ॥ अतऊर्ध्वं
ततोब्रह्मन्किमकुर्वतपांडवाः १ ॥ वैशंपायनउवाच ॥ तत्रैवन्यवसन्राजन्निहत्यबकराक्षसम् ॥ अधीयानाःपरंब्रह्मब्राह्मणस्यनिवेशने २ ततःकतिपयाहस्यब्राह्म
णःसंशितव्रतः ॥ प्रतिश्रयार्थीतद्वेश्मब्राह्मणस्याजगामह ३ ससम्यक्पूजयित्वातंविप्रंविप्रर्षभस्तदा ॥ ददौप्रतिश्रयंतस्मैसदासर्वातिथिव्रतः ४ ततस्तेपांडवाःसर्वे
सहकुंत्यानरर्षभाः ॥ उपासांचक्रिरेविप्रंकथयंतंकथाःशुभाः ५ कथयामासदेशांश्चतीर्थानिसरितस्तथा ॥ राज्ञश्चविविधाश्चर्यान्देशांश्चैवपुराणिच ६ सतत्राकथयद्वि
प्रःकथांतेजनमेजय ॥ पंचालेष्वद्भुताकारंयाज्ञसेन्याःस्वयंवरम् ७ धृष्टद्युम्नस्यचोत्पत्तिमुत्पत्तिंचशिखंडिनः ॥ अयोनिजत्वंकृष्णायाद्रुपदस्यमहामखे ८ तदद्भुतत
मंश्रुत्वालोकेतस्यमहात्मनः ॥ विस्तरेणैवपप्रच्छुःकथांतेपुरुषर्षभाः ९ ॥ ॥ पांडवाऊचुः ॥ ॥ कथंद्रुपदपुत्रस्यधृष्टद्युम्नस्यपावकात् ॥ वेदीमध्याच्चकृष्णायाः
संभवःकथमद्भुतः १० कथंद्रोणान्महेष्वासात्सर्वाण्यस्त्राण्यशिक्षत ॥ कथंविप्रसखायौतौभिन्नौकस्यकृतेनवा ११ ॥ वैशंपायनउवाच ॥ एवंतैश्चोदितोराजन्सविप्रः
पुरुषर्षभैः ॥ कथयामासतत्सर्वंद्रौपदीसंभवंतदा १२ ॥ इति श्रीमहाभारते आदिपर्वणि चैत्ररथपर्वणि द्रौपदीसंभवे पंचषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

परमत्यंतमधीयानाइतिसंबंधः २ शंसितव्रतइतितालव्यादिर्दंत्यमध्यपाठेशंसामशंसासंजातायस्यतच्छंसितंव्रतंयस्यसः प्रशस्यव्रतइत्यर्थः प्रतिश्रयार्थीवासार्थी ३ अतिथिव्रतोऽतिथिपूजनैकनिष्ठः
४ । ५ । ६ याज्ञसेन्याःद्रौपद्याः ७ । ८ । ९ । १० हेविप्र तौद्रोणद्रुपदौ भिन्नौवैरंप्राप्तौ ११ । १२ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे पंचषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

गंगाद्वारमिति १ ततोगंगामितिपाठेतुगंगां ततःपूर्वंभरद्वाजागमनात्पूर्वमभिषेक्तुमागतामित्यर्थः २ व्यहरद्विशेषेणहृतवान् । चकमेकामितवात् ३ कुमाराणांसनत्कुमारादीनांसमूहःकौ
मारंतत्तुल्यस्यब्रह्मचारिणः ४ । ५ । ६ । ७ । ८ । ९ एकतममेकतरं । अस्त्रसमुदायस्याविवक्षितत्वाद्वातमप् १० । ११ । १२ समनुज्ञाप्यनिशम्य । मारणतोषणनिशामनेष्विज्ञाइति

॥ ब्राह्मणउवाच ॥ गंगाद्वारंप्रतिमहान्बभूवर्षिर्महातपाः ॥ भरद्वाजोमहाप्राज्ञःसततंसंशितव्रतः १ सोऽभिषेक्तुंगतोगंगांपूर्वमेवागतांसतीम् ॥ ददर्शाप्सरसंत
त्रघृताचीमाप्लुतामृषिः २ तस्यावायुर्नदीतीरेवसनंव्यहरत्तदा ॥ अपकृष्टांबरांदृष्ट्वातामृषिश्चकमेतदा ३ तस्यांसंसक्तमनसःकौमारब्रह्मचारिणः ॥ चिरस्यरेत
श्चस्कंदतदृषिर्द्रोणआदधे ४ ततःसमभवद्द्रोणःकुमारस्तस्यधीमतः ॥ अध्यगीष्टसवेदांश्चवेदांगानिचसर्वशः ५ भरद्वाजस्यतुसखापृषतोनामपार्थिवः ॥ तस्या
पिद्रुपदोनामतदासमभवत्सुतः ६ सनित्यमाश्रमंगत्वाद्रोणेनसहपार्षतः ॥ चिक्रीडाध्ययनंचैवचकारक्षत्रियर्षभः ७ ततस्तुपृषतेतीतेसराजाद्रुपदोऽभवत् ॥ द्रोणो
ऽपिरामंशुश्राववदित्संतंवसुसर्वशः ८ वनंतुप्रस्थितंरामंभरद्वाजसुतोऽब्रवीत् ॥ आगतंवित्तकामंमांविद्धिद्रोणंद्विजोत्तम ९ ॥ रामउवाच ॥ शरीरमात्रमेवाद्यमया
समवशेषितम् ॥ अस्त्राणिवाशरीरंवाब्रह्मन्नेकतमंवृणु १० ॥ द्रोणउवाच ॥ अस्त्राणिचैवसर्वाणितेषांसंहारमेवच ॥ प्रयोगंचैवसर्वेषांदातुमर्हतिमेभवान् ११
॥ ब्राह्मणउवाच ॥ तथेत्युक्त्वाततस्तस्मैप्रददौभृगुनंदनः ॥ प्रतिगृह्यतदाद्रोणःकृतकृत्योऽभवत्तदा १२ संप्रहृष्टमनाद्रोणोरामात्परमसंमतम् ॥ ब्रह्मास्त्रंसमनु
ज्ञाप्यनरेष्वभ्यधिकोऽभवत् १३ ततोद्रुपदमासाद्यभारद्वाजःप्रतापवान् ॥ अब्रवीत्पुरुषव्याघ्रःसखायंविद्धिमामिति १४ ॥ द्रुपदउवाच ॥ नाश्रोत्रियःश्रोत्रिय
स्यनारथीरथिनःसखा ॥ नाराजापार्थिवस्यापिसखिपूर्वंकिमिष्यते १५ ॥ ब्राह्मणउवाच ॥ सविनिश्चित्यमनसापांचाल्यंप्रतिबुद्धिमान् ॥ जगामकुरुमुख्यानां
नगरंनागसाह्वयम् १६ तस्मैपौत्रान्समादायवसूनिविविधानिच ॥ प्राप्तायप्रददौभीष्मःशिष्यान्द्रोणायधीमते १७ द्रोणःशिष्यांस्ततःपार्थानिदंवचनमब्रवीत् ॥
समानीयतुतान्शिष्यान्द्रुपदस्यासुखायवै १८ आचार्यवेतनंकिंचिद्धृदिसंपरिवर्ततेमम ॥ कृतास्त्रैस्तत्प्रदेयंस्यात्तदृतंवदतानघाः ॥ सोऽर्जुनप्रमुखैरुक्तस्तथाऽस्त्वि
तिगुरुस्तदा १९ यदाचपांडवाःसर्वेकृतास्त्राःकृतनिश्चयाः ॥ ततोद्रोणोऽब्रवीद्भूयोवेतनार्थमिदंवचः २० पार्षतोद्रुपदोनामच्छत्रवत्यांनरेश्वरः ॥ तस्मादा
कृष्यतद्राज्यंममशीघ्रंप्रदीयताम् २१ ततःपांडुसुताःपंचनिर्जित्यद्रुपदंयुधि ॥ द्रोणायदर्शयामासुर्बद्ध्वाससचिवंतदा २२ ॥ द्रोणउवाच ॥ प्रार्थयामित्वयासख्यं
पुनरेवनराधिप ॥ अराजाकिलनोराज्ञःसखाभवितुमर्हति २३ अतःप्रयतितंराज्येयज्ञसेनत्वयासह ॥ राजाऽसिदक्षिणेकूलेभागीरथ्याऽहमुत्तरे २४ ॥ ब्राह्मणउवाच ॥
एवमुक्तोहिपांचाल्योभारद्वाजेनधीमता ॥ उवाचास्त्रविदांश्रेष्ठोद्रोणंब्राह्मणसत्तमम् २५ एवंभवतुभद्रंतेभारद्वाजमहामते ॥ सख्यंतदेवभवतुशश्वद्यदभिमन्यसे २६ 

मित्यात्तहृखः । ज्ञाप्येत्यपपाठः माप्येत्यपिपठंति १३ । १४ पूर्वंसखाइतिसखिपूर्वं । बाल्येकृतंसख्यंकिंकथमिष्यतेप्राज्ञैर्नकथमपीत्यर्थः । बालोहिमौढ्यादतुल्येनापिसख्यमिच्छतिनतुप्राज्ञइतिभा
वः १५ । १६ समादायहस्तेगृहीत्वाप्रददौ १७ । १८ । १९ । २० छत्रवत्यामहिच्छत्रे २१ । २२ । २३ राज्येराज्यार्थंत्वयासहसंगम्येतिशेषः भागीरथ्याऽहमितिसंधिरार्षः २४ । २५ । २६

उक्तावचनेनैवसख्यंकृत्वानतुमनसा ब्राह्मणस्याद्रोहित्वेपिक्षत्रियस्यदीर्घद्रोहित्वात् २७ तदेवाह असत्कारइति २८ ॥ इति आदिपर्वणि नी० भा० षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥ अमर्षी
ति १ । २ पुत्रान्बंधूंश्चविगित्यब्रवीदित्यन्वयः ३ । ४ कल्माषींकृष्णवर्णांयमुनामभितः गंगाकूलेचपरिभ्रमन्कल्माषपादस्यकल्माषीमभितःसमीपेइत्यन्ये ५ । ६ परमेब्रह्मणिविदेवास्थातुंशीलं

एवमन्योऽन्यमुक्त्वातौकृत्वासख्यमनुत्तमम् ॥ जग्मतुर्द्रोणपांचाल्यौयथागतमरिंदमौ २७ असत्कारःसतुमहान्मुहूर्तमपितस्यतु ॥ नापैतिहृदयाद्राज्ञोदुर्म
नाःसकृशोऽभवत् २८ ॥ इति श्रीमहाभारते आदिपर्वणि चैत्ररथपर्वणि द्रौपदीसंभवे षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥ ब्राह्मणउवाच ॥ अमर्षीद्रु
पदोराजाकर्मसिद्धान्द्विजर्षभान् ॥ अन्विच्छन्परिचक्रामब्राह्मणावसथान्बहून् १ पुत्रजन्मपरीप्सन्वैशोकोपहतचेतनः ॥ नास्तिश्रेष्ठमपत्यंमेइतिनित्यमचिं
तयत् २ जातान्पुत्रान्सनिर्वेदाद्धिग्बंधूनितिचाब्रवीत् ॥ निःश्वासपरमश्चासीद्द्रोणंप्रतिचिकीर्षया ३ प्रभावंविनयंशिक्षांद्रोणस्यचरितानिच ॥ क्षात्रेणचब
लेनास्यचिंतयन्नाभ्यगच्छत ४ प्रतिकर्तुंनृपश्रेष्ठोयतमानोऽपिभारत ॥ अभितःसोऽथकल्माषींगंगाकूलेपरिभ्रमन् ५ ब्राह्मणावसथंपुण्यमाससादमहीपतिः ॥
तत्रनास्नातकःकश्चिन्नचासीदव्रतीद्विजः ६ तथैवचमहाभागःसोपश्यत्संशितव्रतौ ॥ याजोपयाजौब्रह्मर्षीशाम्यंतौपरमेष्ठिनौ ७ संहिताध्ययनेयुक्तौगोत्रतश्चा
पिकाश्यपौ ॥ तारणेयौयुक्तरूपौब्राह्मणावृषिसत्तमौ ८ सतावामंत्रयामाससर्वकामैरतंद्रितः ॥ बुद्ध्वाबलंतयोस्तत्रकनीयांसमुपह्वरे ९ प्रपेदेच्छंदयन्कामैरुप
याजंधृतव्रतम् ॥ पादशुश्रूषणेयुक्तःप्रियवाक्सर्वकामदः १० अर्चयित्वायथान्यायमुपयाजमुवाचसः ॥ येनमेकर्मणाब्रह्मन्पुत्रःस्याद्द्रोणमृत्यवे ११ उपयाज
कृतेतस्मिन्गवांदाताऽस्मितेऽर्बुदम् ॥ यद्वातेऽन्यद्द्विजश्रेष्ठमनसःसुप्रियंभवेत् ॥ सर्वंतत्तेप्रदाताऽहंनहिमेत्रास्तिसंशयः १२ इत्युक्तोनाहमित्येवंतमृषिःप्रत्य
भाषत ॥ आराधयिष्यन्द्रुपदःसतंपर्यचरत्पुनः १३ ततःसंवत्सरस्यांतेद्रुपदंसद्विजोत्तमः ॥ उपयाजोऽब्रवीत्कालेराजन्मधुरयागिरा १४ ज्येष्ठोभ्रातामग्राह्ला
द्विचरन्गहनेवने ॥ अपरिज्ञातशौचायांभूमौनिपतितंफलम् १५ तदपश्यमहंभ्रातुरसांप्रतमनुव्रजन् ॥ विमर्शंसंकरादानेनायंकुर्यात्कदाचन १६ दृष्ट्वाफलस्य
नापश्यद्दोषान्पापानुबंधकान् ॥ विविनक्तिनशौचंयःसोऽन्यत्रापिकथंभवेत् १७ संहिताध्ययनंकुर्वन्वसन्गुरुकुलेचयः ॥ भैक्षमुत्सृष्टमन्येषांभुंक्तेस्मचयदातदा
१८ कीर्तयन्गुणमन्नानामघृणीचपुनःपुनः ॥ तंवैफलार्थिनंमन्येभ्रातरंतर्कचक्षुषा १९ तंवैगच्छस्वनृपतेसत्वांसंयाजयिष्यति ॥ जुगुप्समानोनृपतिर्मनसेदंविचिं
तयन् २० उपयाजवचःश्रुत्वायाजस्याश्रममभ्यगात् ॥ अभिसंपूज्यपूजार्हमथयाजमुवाचह २१

ययोस्तौ ७ तारणेयौकुमारीप्रभवौ कर्णवत्कानीनौ'तरणिर्द्युमणौपुंसिकुमारीनौकयोःस्त्रीयाम्'इतिमेदिनी । सूर्यभक्तौवा । ब्राह्मणौब्रह्मविदौ । ऋषिसत्तमौमंत्रद्रष्टृषुश्रेष्ठौ ८ उपह्वरएकांते ९
प्रपेदेशरणंगतवान् १० । ११ तस्मिन्कार्येकृतेसतिअर्बुदंदशकोटीर्दाताऽस्मिदास्यामि १२ । १३ । १४ । १५ असांप्रतमयुक्तमनुव्रजन्नपश्यं विमर्शंविचारं संकरादानेसंकरोदोषसंपर्कः तद्युक्तवस्त्वा
दाने १६ । १७ उत्सृष्टंउच्छिष्टं १८ अघृणीलज्जाहीनः १९ हेनृपतेतंगच्छ हेस्वेहेआत्मीय मनसाइदंयाजचरितंजुगुप्समानोनिंदन् विचिंतयन्नवकार्यंचेतिचेतिशेषः २० । २१

अष्टावयुतानिददानि । रिक्तपाणिर्नपश्येतराजानंदेवतांगुरुमितिस्मृतेरुपायनमात्रमेतन्नदक्षिणाअर्बुदमतिज्ञानात् २२ पराजैष्टपराजितवान् । विपराभ्यांजेरितितङ् २३ तस्यतस्मात् अग्रणीः श्रेष्ठः २४ । २५ । २६ । २७ । २८ ब्रह्मक्षत्रेइतिसार्धःश्लोकः चोप्यर्थे ब्रह्मतेजःसहितक्षत्रतेजसिद्रोणगतेविहितेश्रेष्ठेसत्यपिकेवलंब्राह्मंत्वदीयंविशिष्यतेक्षात्राद्बलात् अहंतुहीनोब्राह्मबलेन भीत इतिपाठेब्राह्माद्बलाद्धीतोब्राह्मंतेजःप्रपेदिवान्शरणंकृतवान् २९ । ३० येनपुत्रंलभेयंतत्कर्मकुरु याज्यार्थंद्रुपदस्येष्टसाधनंयागमुपकल्पयन्मनसातत्प्रयोगंस्मृतवान् अडभावआर्षः ३१ गुर्वर्थो गुरुश्चासावर्थश्चेति अतिभारोऽयंयद्द्रोणहंतुःपुत्रस्योत्पादनमितिहेतोरुपयाजमकाममप्यचोदयदुपकल्पनेप्रेरितवान् । आत्मन्यप्रत्ययंचेतइतिन्यायेनोपयाजमपिनिश्चयार्थंसंवादितवान् ३२ वै

अयुतानिददान्यष्टौगवांयाजयमांविभो ॥ द्रोणवैराभिसंतप्तंप्रह्लादयितुमर्हसि २२ सहिब्रह्मविदांश्रेष्ठोब्रह्मास्त्रेचाप्यनुत्तमः ॥ तस्माद्द्रोणःपराजैष्टमांवैससखि विग्रहे २३ क्षत्रियोनास्तितस्यास्यांपृथिव्यांकश्चिदग्रणीः ॥ कौरवाचार्यमुख्यस्यभारद्वाजस्यधीमतः २४ द्रोणस्यशरजालानिप्राणिदेहहराणिच ॥ षडरत्नि धनुश्चास्यदृश्यतेपरमंमहत् २५ सहिब्राह्मणवेषेणक्षात्रंवेगमसंशयम् ॥ प्रतिहंतिमहेष्वासोभारद्वाजोमहामनाः २६ क्षत्रोच्छेदायविहितोजामदग्न्यइवास्थितः ॥ तस्यह्यस्त्रबलंघोरमप्रधृष्यंनरैर्भुवि २७ ब्राह्मंसंधारयंस्तेजोहुताहुतिरिवानलः ॥ समेत्यसदहत्याजौक्षात्रधर्मपुरःसरः २८ ब्रह्मक्षत्रेचविहितेब्राह्मंतेजोविशिष्यते॥ सोऽहंक्षात्राद्बलाद्धीनोब्राह्मंतेजःप्रपेदिवान् २९ द्रोणाद्विशिष्टमासाद्यभवंतंब्रह्मवित्तमम् ॥ द्रोणांतकमहंपुत्रंलभेयंयुधिदुर्जयम् ३० तत्कर्मकुरुमेयाजवितराम्यर्बुदंगवाम् ॥ तथेत्युक्त्वातुतंयाजोयाज्यार्थमुपकल्पयत् ३१ गुर्वर्थइतिचाकाममुपयाजमचोदयत् ॥ याजोद्रोणविनाशायप्रतिजज्ञेतथाचसः ३२ ततस्तस्यनरेंद्रस्यउपयाजोमहातपाः ॥ आचख्यौकर्मवैतानंतदापुत्रफलायवै ३३ सचपुत्रोमहावीर्योमहातेजामहाबलः ॥ इष्यतेयद्विधोराजन्भवितातेतथाविधः ३४ भारद्वाजस्यहंतारंसोऽभिसंधायभूपतिः ॥ आजह्रेतत्तथासर्वंद्रुपदःकर्मसिद्धये ३५ याजस्तुहवनस्यांतेदेवीमाज्ञापयत्तदा ॥ प्रेहिमांराज्ञिपृषतिमिथुनंत्वामुपास्थितम् ३६ ॥ राज्ञ्युवाच ॥ अवलिप्तंमुखंब्रह्मन्दिव्यान्गंधान्बिभर्मिच ॥ सुतार्थेनोपलब्धाऽस्मितिष्ठयाजममप्रिये ३७ ॥ याजउवाच ॥ याजेनश्रपितंहव्यमुपयाजाभिमंत्रितम् ॥ कथंकामंनसंदध्यात्सात्वंविप्रेहितिष्ठवा ३८ ॥ ब्राह्मणउवाच ॥ एवमुक्तातुयाजेनहुतेहविषिसंस्कृते ॥ उत्तस्थौपावकात्तस्मात्कुमारोदेवसन्निभः ३९ ज्वालावर्णोघोररूपःकिरीटीवर्मचोत्तमम् ॥ बिभ्रत्सखड्गःसशरोधनुष्मान्विनदन्मुहुः ४०

तानंश्रोतान्निसाध्यं आचख्यौआख्यातवान् ३३ सचेतिउपयाजउवाच ३४ वैशंपायनउवाचभारद्वाजस्येति आजह्रेकृतवान् कर्मसिद्धयेकर्मफलसिध्यर्थं ३५ प्रेहिमकर्षेणशीघ्रमेहि हविर्ग्रहीतुमितिशेषः पृषतिपृषतस्नुषे । इतएवसंबंधात्पुंयोगेङीष् । अन्येतुपार्षतीतिपाठंकल्पयंति ३६ अवलिप्तंदूषितंलालादिना अमक्षालितत्वादितिभावः । 'अवलेपस्तुगर्वेस्यालेपनेदूषणेपिच'इतिमेदिनी । गंधानंगरागादिजान् । अस्नाताऽस्मीतिभावः । यादतोयावत्तेतस्यैश्यावदन्यास्नातितस्याअप्सुमारुकइत्याद्युक्तातिस्रोरात्रीर्व्रतंचरेदितिविहितावस्पृश्याधर्मवेती । तदेवाह नोपलब्धास्मि उपलब्धुंस्प्रष्टुंयोग्यानास्मि । तस्मान्मलवद्वाससासंवदेतेतितयासहसंवादस्यापिनिषेधात् अतोहेतोर्हेयाजममप्रियेइष्टेसुतार्थेसुतरूपेप्रयोजनेतिष्ठ । शुद्धिकालंप्रतीक्षस्वेत्यर्थः ३७ श्रपितंपक्वं क्षेत्रेरेतःसेकंचविनाआवयोःसामर्थ्यान्मिथुनमुत्पत्स्यतइत्यर्थः । विप्रेहिदूरंवागच्छतिष्ठवा प्रयोगविधिस्तुनविलंबंसहतेइत्यर्थः ३८ । ३९ । ४० ॥१५०॥

४१ नेयंसेहेनसोढवती अयोनिजस्यधृष्टद्युम्नस्यतेजसोदुःसहत्वादितिभावः ४२ । ४३ । ४४ । ४५ अमरवर्णिनीदेवकुमारीदुष्प्रवधायोयतादुर्गेत्यर्थः ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ धृष्टत्वात् प्रगल्भत्वात् धृष्णुत्वादितिपाठेपालनेशक्तत्वात् । अत्यंतममर्षःशत्रूत्कर्षासहिष्णुत्वंतद्वत्वात् । द्युम्नंवित्तंतच्चराज्ञांबलमेवकवचकुंडलादिकंवासहोत्पन्नंतदादिर्यस्यशस्त्रास्त्रशौर्योत्साहादे

सोऽध्यारोहद्रथवरंतेनचप्रययौतदा ॥ ततःप्रणेदुःपंचालाःप्रहृष्टाःसाधुसाध्विति ४१ हर्षाविष्टांस्ततश्चैतान्नेयंसेहेवसुंधरा ॥ भयापहोराजपुत्रःपंचालानांयशस्करः ४२ राज्ञःशोकापहोजातएषद्रोणवधायवै ॥ इत्युवाचमहद्भूतमदृश्यंखेचरंतदा ४३ कुमारीचापिपांचालीवेदीमध्यात्समुत्थिता ॥ सुभगादर्शनीयांगीस्वसितायतलोचना ४४ श्यामापद्मपलाशाक्षीनीलकुंचितमूर्धजा ॥ ताम्रतुंगनखीसुभ्रूश्चारुपीनपयोधरा ४५ मानुषंविग्रहंकृत्वासाक्षादमरवर्णिनी ॥ नीलोत्पलसमोगंधोयस्याःक्रोशात्प्रधावति ४६ याबिभर्तिपरंरूपंयस्यानास्त्युपमाभुवि ॥ देवदानवयक्षाणामीप्सितांदेवरूपिणीम् ४७ तांचापिजातांसुश्रोणींवागुवाचाशरीरिणी ॥ सर्वयोषिद्वराकृष्णानिनीषुःक्षत्रियान्क्षयम् ४८ सुरकार्यमियंकालेकरिष्यतिसुमध्यमा ॥ अस्याहेतोःकौरवाणांमहदुत्पत्स्यतेभयम् ४९ तच्छ्रुत्वासर्वपंचालाःप्रणेदुःसिंहसंघवत् ॥ नचैतान्हर्षसंपूर्णानियंसेहेवसुंधरा ५० तौदृष्ट्वापार्षतीयाजंप्रपेदेवैसुतार्थिनी ॥ नवैमदन्यांजननींजानीयातामिमाविति ५१ तथेत्युवाचतांयाजोराज्ञःप्रियचिकीर्षया ॥ तयोश्चनामनीचक्रुर्द्विजाःसंपूर्णमानसाः ५२ धृष्टत्वादत्यमर्षित्वाद्द्युम्नाद्युत्संभवादपि ॥ धृष्टद्युम्नःकुमारोयंद्रुपदस्यभवत्विति ५३ कृष्णेत्येवाब्रुवन्कृष्णांकृष्णाऽभूत्साहिवर्णतः ॥ तथातन्मिथुनंजज्ञेद्रुपदस्यमहामखे ५४ धृष्टद्युम्नंतुपांचाल्यमानीयस्वंनिवेशनम् ॥ उपाकरोदस्त्रहेतोर्भारद्वाजःप्रतापवान् ५५ अमोक्षणीयंदैवंहिभाविमत्वामहामतिः ॥ तथातत्कृतवान्द्रोणआत्मकीर्त्यनुरक्षणात् ५६ ॥ इति श्रीम० आदिपर्वणि चैत्ररथपर्वणि द्रौपदीसंभवेसप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥ ॥ वैशंपायनउवाच ॥ एतच्छ्रुत्वातुकौंतेयाःशल्यविद्धाइवाभवन् ॥ सर्वेचास्वस्थमनसोबभूवुस्तेमहाबलाः १ ततःकुंतीसुतान्दृष्ट्वासर्वांस्तद्गतचेतसः ॥ युधिष्ठिरमुवाचेदंवचनंसत्यवादिनी २ ॥ कुंत्युवाच ॥ चिररात्रोषिताःस्मेहब्राह्मणस्यनिवेशने ॥ रममाणाःपुरेरम्येलब्धभैक्षामहात्मनः ३ यानीहरमणीयानिवनान्युपवनानिच ॥ सर्वाणितानिदृष्टानिपुनःपुनररिंदम ४ पुनर्दृष्टुंहितानीहप्रीणयंतिननस्तथ ॥ भैक्षंचनतथावीरलभ्यतेकुरुनंदन ५ तेवयंसाधुपंचालान्गच्छामयदिमन्यसे ॥ अपूर्वदर्शनंवीररमणीयंभविष्यति ६ सुभिक्षाश्चैवपंचालाःश्रूयंतेशत्रुकर्शन ॥ यज्ञसेनश्चराजाऽसौब्रह्मण्यइतिशुश्रुम ७ एकत्रचिरवासश्चक्षमोनचमतोमम ॥ तेतत्रसाधुगच्छामोयदित्वंपुत्रमन्यसे ८ ॥ युधिष्ठिरउवाच ॥ भवत्यायन्मतंकार्यंतदस्माकंपरंहितम् ॥ अनुजांस्तुनजानामिगच्छेयुर्नेतिवापुनः ९ ॥ वैशंपायनउवाच ॥ ततःकुंतीभीमसेनमर्जुनंयमजौतथा ॥ उवाचगमनंतेचतथेत्येवाब्रुवंस्तदा १०

स्तइद्युम्नादितस्योत्संभवादुत्कर्षेणोत्पत्तेश्च ५३ । ५४ उपाकरोदुपकृतवान् अस्त्रहेतोरस्त्रदानेनहेतुनाराज्यार्धस्यहृतत्वात्तावतैवोपाकरोत् ५५ कीर्त्यनुरक्षणात् अन्यथाद्रोणोद्वेषाद्याचनविद्यांदत्तवानित्यकीर्तिःस्यात् ५६ ॥ इति आदिपर्वणि नी० भा० सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥ एतच्छ्रुत्वातुकौंतेयाइतिस्पष्टार्थोऽध्यायः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

११ ॥ इति आदिपर्वणि नी० भारतभावदीपेअष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥ ॥ वसत्स्विति प्रतस्थेइत्युक्तंततःप्रागेवाजगामेत्यर्थः १ । २ । ३ अयीतिकोमलामंत्रणे ४ । ५ विलग्नमध्याकृशमध्या ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ पार्षतीपार्षतदुहिता १५ । १६ ॥ इतिआदिपर्वणिनी०भा०ऊनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥ गतेइति १ सोमाश्रयश्चंद्रधरोरु

ताआमंत्र्यतंविप्रंकुंतीराजन्सुतैःसह ॥ प्रतस्थेनगरींरम्यांद्रुपदस्यमहात्मनः ११ ॥ इतिश्रीमहाभारतेआदिपर्वणिचैत्ररथपर्वणिपांचालदेशयात्रायामष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥ ॥ वैशंपायनउवाच ॥ वसत्सुतेषुप्रच्छन्नंपांडवेषुमहात्मसु ॥ आजगामाथतान्द्रष्टुंव्यासःसत्यवतीसुतः १ तमागतमभिप्रेक्ष्यप्रत्युद्गम्यपरंतपाः ॥ प्रणिपत्याभिवाद्यैनंतस्थुःप्रांजलयस्तदा २ समनुज्ञाप्यतान्सर्वानासीनान्मुनिरब्रवीत् ॥ प्रच्छन्नंपूजितःपार्थैःप्रीतिपूर्वमिदंवचः ३ अपिधर्मेणवर्तध्वंशास्त्रेणचपरंतपाः ॥ अपिविप्रेषुपूजावःपूजार्हेषुनहीयते ४ अथधर्मार्थवद्वाक्यमुक्त्वासभगवानृषिः ॥ विचित्राश्चकथास्तास्ताःपुनरेवेदमब्रवीत् ५ ॥ ॥ व्यासउवाच ॥ आसीत्तपोवनेकाचिदृषेःकन्यामहात्मनः ॥ विलग्नमध्यासुश्रोणीसुभ्रूःसर्वगुणान्विता ६ कर्मभिःस्वकृतैःसातुदुर्भगासमपद्यत ॥ नाध्यगच्छत्पतिंसातुकन्यारूपवतीसती ७ ततस्तप्तुमथारेभेपत्यर्थमसुखाततः ॥ तोषयामासतपसासाकिलोग्रेणशंकरम् ८ तस्याःसभगवांस्तुष्टस्तामुवाचयशस्विनीम् ॥ वरंवरयभद्रंतेवरदोऽस्मीतिशंकरः ९ अथेश्वरमुवाचेदमात्मनःसावचोहितम् ॥ पतिंसर्वगुणोपेतमिच्छामीतिपुनःपुनः १० तामथप्रत्युवाचेदमीशानोवदतांवरः ॥ पंचतेपतयोभद्रेभविष्यंतीतिभारताः ११ एवमुक्ताततःकन्यादेवंवरदमब्रवीत् ॥ एकमिच्छाम्यहंदेवत्वत्प्रसादात्पतिंप्रभो १२ पुनरेवाब्रवीद्देवइदंवचनमुत्तमम् ॥ पंचकृत्वस्त्वयाह्युक्तःपतिंदेहीत्यहंपुनः १३ देहमन्यंगतायास्तेयथोक्तंतद्भविष्यति ॥ द्रुपदस्यकुलेजज्ञेसाकन्यादेवरूपिणी १४ निर्दिष्टाभवतांपत्नीकृष्णापार्षत्यनिंदिता ॥ पांचालनगरेतस्मान्निवसध्वंमहाबलाः ॥ सुखिनस्तामनुप्राप्यभविष्यथनसंशयः १५ एवमुक्त्वामहाभागःपांडवान्सपितामहः ॥ पार्थानामंत्र्यकुंतींचप्रातिष्ठतमहातपाः १६ ॥ इतिश्रीमहाभा०आ०चै०द्रौपदीजन्मांतरकथनेऊनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥ वैशंपायनउवाच ॥ गतेभगवतिव्यासेपांडवाहृष्टमानसाः ॥ तेप्रतस्थुःपुरस्कृत्यमातरंपुरुषर्षभाः १ आमंत्र्यब्राह्मणंपूर्वमभिवाद्यानुमान्यच ॥ समैरुदङ्मुखैर्मार्गैर्यथोद्दिष्टंपरंतपाः २ तेत्वगच्छन्नहोरात्रात्तीर्थंसोमाश्रयायणम् ॥ आसेदुःपुरुषव्याघ्रागंगायांपांडुनंदनाः ३ उल्मुकंतुसमुद्यम्यतेषामग्रेधनंजयः ॥ प्रकाशार्थंययौतत्ररक्षार्थंचमहारथः ४ तत्रगंगाजलेरम्येविविक्तेक्रीडयन्स्त्रियः ॥ ईर्ष्युर्गंधर्वराजोवैजलक्रीडामुपागतः ५ शब्दंतेषांसशुश्रावनदींसमुपसर्पताम् ॥ तेनशब्देनचाविष्टश्चुक्रोधबलवद्बली ६ सदृष्ट्वापांडवांस्तत्रसहमात्रापरंतपान् ॥ विस्फारयन्धनुर्घोरमिदंवचनमब्रवीत् ७ संध्यासंरज्यतेघोरापूर्वरात्रागमेषुया ॥ अशीतिभिर्लवैर्हीनंतन्मुहूर्तंप्रचक्षते ८

द्रस्तस्यस्थानंसोमाश्रयायणं २ । ३ उल्मुकंज्वलत्काष्ठं ४ । ५ बलवदतिशायितं ६ । ७ पूर्वरात्रागमेषुपश्चिमायांदिशिअर्धास्तमितार्कमंडलरूपायांसंध्यासंरज्यतेरक्ताभवतितत्पांमुहूर्तंप्रस्थानकालमशीतिभिर्लवैर्निमेषार्द्धैर्हीनंप्रचक्षते ८

तत्रेवमुहूर्तेयक्षादीनांकर्मचारेषुविहितमन्यन्मनुष्याणांकर्मचारेषुस्मृतमित्यन्वयः संध्यायामशीतिलवोपरिरात्रौयक्षादीनामेवसंचारकालः अन्यदहर्मनुष्याणामित्यर्थः ९ । १० जलंप्राप्नुवतोनरान् ११ । १२ । १३ । १४ 'ननंहसाःशृंगिणोवानचदेवांजनस्रजः' ॥ कुबेरस्ययथोष्णीषंकिंमांसमुपसर्पथ' इतिप्राचीनःपाठोदेवबोधादिभिर्व्याख्यातत्वात् हसंतिविकसंतितेहसाः नर्मतोहसायेषांतेनंहसाः भक्तानुग्राहकादेवाःसर्वत्राप्रतिहतगतयस्तेभवंतोन भूचरत्वात् । कौणपाइतिपाठेतुराक्षसाःकरालाकृतयोयूयंन रम्याकृतित्वात् । नकुलसाइतिपाठेऽपिसएवार्थः कुलंस्यंतिअंतंनयंतितेकुलसाः कुलकंटकाइत्यर्थः । शृंगिणःकापालिकाआभिचारिकावीरसाधनादिपरास्तेऽपिनिशीथेजलप्रवेशार्हाः नचशृंगकपालादितिचिह्नंयुष्मासुदृश्यते । नचदेवांजनस्रजः देवानांसंबंधिन्यंजनादीनिदिव्यदृष्टिप्रदा

विहितंकामचाराणांयक्षगंधर्वरक्षसाम् ॥ शेषमन्यन्मनुष्याणांकर्मचारेषुवैस्मृतम् ९ लोभात्प्रचारंचरतस्तासुवेलासुवैनरान् ॥ उपक्रांतानिगृह्णीमोराक्षसैःसहबालिशान् १० अतोरात्रौप्राप्नुवतोजलंब्रह्मविदोजनाः ॥ गर्हयंतिनरान्सर्वान्बलस्थान्नृपतीनपि ११ आरात्तिष्ठतमामह्यंसमीपमुपसर्पत ॥ कस्मान्मांनाभिजानीतप्राप्तंभागीरथीजलम् १२ अंगारपर्णंगंधर्वंवित्तमांस्वबलाश्रयम् ॥ अहंहिमानीचेर्ष्युश्चकुबेरस्यप्रियःसखा १३ अंगारपर्णमित्येवंख्यातंचेदंवनंमम ॥ अनुगंगंचरन्कामांश्चित्रंयत्ररमाम्यहम् १४ नकौणपाःशृंगिणोवानदेवानचमानुषाः ॥ इदंसमुपसर्पंतितत्किंसमनुसर्पथ १५ ॥ अर्जुनउवाच ॥ समुद्रेहिमवत्पार्श्वेनद्यामस्यांचदुर्मते ॥ रात्रावहनिसंध्यायांकस्यगुप्तःपरिग्रहः १६ भुक्तोवाऽप्यथवाऽभुक्तोरात्रावहनिखेचर ॥ नकालनियमोह्यस्तिगंगांप्राप्यसरिद्वराम् १७ वयंचशक्तिसंपन्नाअकालेत्वामधृष्णुम ॥ अशक्ताहिरणेक्रूरयुष्मानर्चंतिमानवाः १८ पुराहिमवतश्चैषाहेमशृंगाद्विनिःसृता ॥ गंगागत्वासमुद्रांभःसप्तधासमपद्यत १९ गंगांचयमुनांचैवप्लक्षजातांसरस्वतीम् ॥ रथस्थांसरयूंचैवगोमतींगंडकींतथा २० अपर्युषितपापास्तेनदीःसप्तपिबंतिये ॥ इयंभूत्वाचैकवप्राशुचिराकाशगापुनः २१ देवेषुगंगागंधर्वप्राप्नोत्यलकनंदताम् ॥ तथापितॄन्वैतरणीदुस्तरापापकर्मभिः ॥ गंगाभवतिवैप्राप्यकृष्णद्वैपायनोऽब्रवीत् २२ असंबाधादेवनदीस्वर्गसंपादनीशुभा ॥ कथमिच्छसितांरोद्धुंनैषधर्मःसनातनः २३ अनिवार्यमसंबाधंतववाचाकथंवयम् ॥ नस्पृशेमयथाकामंपुण्यंभागीरथीजलम् २४ वैशंपायनउवाच ॥ अंगारपर्णस्तच्छ्रुत्वाक्रुद्धआनम्यकार्मुकम् ॥ मुमोचबाणान्निशितानहीनाशीविषानिव २५ उल्मुकंभ्रामयंस्तूर्णंपांडवश्चर्मचोत्तरम् ॥ व्यपोहतशरांस्तस्यसर्वानेवधनंजयः २६ ॥ अर्जुनउवाच ॥ विभीषिकावैगंधर्वनास्त्रज्ञेषुप्रयुज्यते ॥ अस्त्रज्ञेषुप्रयुक्तेयंफेनवत्प्रविलीयते २७

निस्रजश्चआकाशादिगतिप्रदायेषुसंतितेगंधर्वयक्षादयः उल्मुकधारित्वात् जलेशब्दकरत्वाच्चयक्षादिसंघविदामप्यज्ञातत्वात् कुबेरस्योष्णीषमिवोष्णीषंशिरोमंडनभूतंसंतंमांकिंसमनुसर्पथहेलयाउपयाथ । यद्वाकुबेरस्यकुत्सितशरीरस्यहीनशक्तेर्यथोष्णीषंयःकश्चिद्धेलयाउपसर्पतितद्वन्मांकथंजानीथेत्यर्थः १५ यत्तुरात्रौजलंनस्प्रष्टव्यमित्युक्तंतत्राह समुद्रेइति १६ । १७ अहंहिमानीत्युक्तंतत्राह वयमितिअधृष्णुमधर्षितवंतः १८ सप्तधावस्वोकसारानलिनीपावनीसीताचक्षुःसिंधुरलकनंदेतिसप्तधागत्वासमुद्रांभःसमपद्यतेतियोजना १९ । २० अपर्युषितपापानिःशेषितपापाः । एकप्राकाशरूपंवप्रंतटंयस्याःसा । 'तटंवप्रं' इतिमेदिनी २१ । २२ असंबाधानिःसंकटा इतरनदीवत्प्रावृषिरजस्वलात्वेनक्षणमप्यस्पृश्यत्वंनप्राप्नोतीत्यर्थः २३ । २४ अहीन्सर्पान् आशीविषाश्चिपदंष्ट्रान् २५ चर्मच्छत्राकारमायुधपातत्राणं व्यपोहतापसारितवान् २६ । २७

मानुपानतिमानुषाधिकान्लक्षयेऽतोदिव्येनास्त्रेणयोत्स्ये २८ । २९ । ३० । ३१ विप्लुतंरथाच्युतं अतएवमपूर्ढं ३२ । ३३ । ३४ । ३५ स्त्रीनाथोरक्षितायस्यतं ३६ । ३७ अंगारवद्भास्वरं दुःस्पर्शीचपर्णवाहनंरथोयस्यसोंऽगारपर्णस्तस्यभावस्तत्तां ३८ लाभंलाभवत्सुखदंसखायं ३९ । ४० संभृताऽर्जितातपसा ४१ प्राणैर्योजयेन्नहन्यात् ४२ । ४३ । ४४ । यदिति यद्धर्मिस्व रूपंपश्येत् यादृशंयद्धर्मैर्विशिष्टंसामान्यतोविशेषतश्चसर्वंसर्वावस्थंवस्तुसर्वदास्वसंकल्पानुसारेणपश्येदित्यर्थः ४५ अनुनेष्यामिपश्चात्प्रापयिष्यामि ४६ विशेषिताःविशिष्टाः अविशिष्टास्तुल्याः

मानुषानतिगंधर्वान्सर्वान्गंधर्वलक्षये ॥ तस्मादस्त्रेणदिव्येनयोत्स्येहंनतुमायया २८ पुराऽस्त्रमिदमाग्नेयंप्रादात्किलबृहस्पतिः ॥ भरद्वाजायगंधर्वगुरुर्मान्यःशतक्रतोः २९ भरद्वाजादग्निवेश्यअग्निवेश्याद्गुरुर्मम ॥ साध्विदंमह्यमददद्द्रोणोब्राह्मणसत्तमः ३० ॥ वैशंपायनउवाच ॥ इत्युक्त्वापांडवःक्रुद्धोगंधर्वायमुमोचह ॥ प्रदीप्तमस्त्रमाग्नेयंददाहास्यरथंतुतत् ३१ विरथंविप्लुतंतंतुसगंधर्वंमहाबलः ॥ अस्त्रतेजःप्रमूढंचप्रपतंतमवाङ्मुखम् ३२ शिरोरुहेषुजग्राहमाल्यवत्सुधनंजयः ॥ भ्रातॄन्प्रतिचकर्षाथसोऽस्त्रपातादचेतसम् ३३ युधिष्ठिरंतस्यभार्याप्रपेदेशरणार्थिनी ॥ नाम्नाकुंभीनसीनामपतित्राणमभीप्सती ३४ ॥ गंधर्व्युवाच ॥ त्रायस्वमांमहाभागपतिंचेमंविमुंचमे ॥ गंधर्वींशरणंप्राप्तानाम्नाकुंभीनसीप्रभो ३५ ॥ युधिष्ठिरउवाच ॥ युद्धेजितंयशोहीनंस्त्रीनाथमपराक्रमम् ॥ कोनिहन्याद्रिपुंतातमुंचेमंरिपुसूदन ३६ ॥ अर्जुनउवाच ॥ जीवितंप्रतिपद्यस्वगच्छगंधर्वमाशुचः ॥ प्रदिशत्यभयंतेऽद्यकुरुराजोयुधिष्ठिरः ३७ ॥ गंधर्वउवाच ॥ जितोऽहंपूर्वकंनामसुंचाम्यंगारपर्णताम् ॥ नचश्लाघेबलेनांगनन्नाम्नाजनसंसदि ३८ साध्विमंलब्धवाँल्लाभंयोऽहंदिव्यास्त्रधारिणम् ॥ गांधर्व्यामाययेच्छामिसंयोजयितुमर्जुनम् ३९ अस्त्राग्निनाविचित्रोऽयंदग्धोमेरथउत्तमः ॥ सोऽहंचित्ररथोभूत्वानाम्नादग्धरथोऽभवम् ४० संभृताचैवविद्येयंतपसेहमयापुरा ॥ निवेदयिष्येतामद्यप्राणदायमहात्मने ४१ संस्तंभयित्वातरसाजितंशरणमागतम् ॥ योरिपुंयोजयेत्प्राणैःकल्याणंकिंनसोऽर्हति ४२ चाक्षुषीनामविद्येयंयांसोमायददौमनुः ॥ ददौसविश्वावसवेममविश्वावसुर्ददौ ४३ सेयंकापुरुषंप्राप्तागुरुदत्ताप्रणश्यति ॥ आगमोऽस्यामयाप्रोक्तोवीर्यंप्रतिनिबोधमे ४४ यच्चक्षुषाद्रष्टुमिच्छेत्त्रिषुलोकेषुकिंचन ॥ तत्पश्येद्यादृशंचेच्छेत्तादृशंद्रष्टुमर्हति ४५ एकपादेनषण्मासान्स्थितोविद्यांलभेदिमाम् ॥ अनुनेष्याम्यहंविद्यांस्वयंतुभ्यंव्रतेकृते ४६ विद्ययाह्यनयाराजन्वयंनृभ्योविशेषिताः ॥ अविशिष्टाश्चदेवानामनुभावप्रदर्शिनः ४७ गंधर्वजानामश्वानामहंपुरुषसत्तम ॥ भ्रातृभ्यस्तवतुभ्यंचपृथग्दाताशतंशतम् ४८ देवगंधर्ववाहास्तेदिव्यवर्णामनोजवाः ॥ क्षीणाक्षीणाभवंत्येतेनहीयंतेचरंहसः ४९ पुराकृतंमहेंद्रस्यवज्रंवृत्रनिबर्हणम् ॥ दशधाशतधाचैवतच्छीर्णंवृत्रमूर्धनि ५०



अनुभावस्याऽऽकाशगमनादृश्यत्वादेःप्रदर्शिनोदर्शनशीलाः ४७ । ४८ क्षीणाश्चाऽक्षीणाश्चक्षीणाक्षीणाः वृद्धास्तरुणावाएतेनभवंति रंहसोवेगाच्चनहीयंतेइतिनकारानुषंगेणयोज्यं । क्षीणाःक्षीणाइतिपाठेसमर्थाःसमर्थाइत्यर्थः ऐश्वर्यार्थस्यक्षयतेःक्तरिनिष्ठायांदैर्घ्येणत्वंच एवंरंहसोवेगातिशयान्नहीयंतेअपित्वधिकमधिकंसमर्थाभवंतीत्यर्थः ४९ अश्वोत्पत्तिमाहचतुर्भिः पुरेति ५०

भागीकृतःशीर्णत्वादनेकधाभूतोवज्रभागस्तेषुतेषुस्थानेषुदेवैरुपास्यते । स्थानान्येवसामान्यतोविशेषतश्चाह लोकेइति यशोधनमुत्कृष्टंस्पृहणीयंसैवव्रतनुर्वज्रस्यस्वरूपं सैवेतितिविधेयलिंगापेक्षयास्त्रीत्वं तत्रेपयसिदध्यानयतिसावैश्वदेव्यामिक्षेतिवत् ५१ ब्राह्मणस्यपाणिर्हविःप्रदत्वाद्वज्रः । इतरेषामार्त्विज्याभावेनहविःप्रक्षेपानर्हत्वात् । अतःसदेवैरुपास्यते । रथोहिदेवब्राह्मणद्विषांनाशहेतुत्वाद्वज्रंदेवोपास्यं । दानकर्मणोरपिब्रह्मक्षत्रप्रीतिकरत्वाद्वज्रत्वं । तेनवज्रवंतोब्राह्मणादयोदेवैरुपजीव्यंतइत्यर्थः ५२ प्रकृतेकिमायातंतदाह क्षत्रेति क्षत्रवज्रंरथस्तस्यभागेनांशत्वेन अवध्याअवधिभूताःवाजिनोवेगवंतः । रथस्यवज्रत्वेअश्वोत्कर्षएवमुख्यंकारणंनध्वजादिकमित्यर्थः । रथांगंरथचालकं । वडवाअश्वा । येशूरास्तेचरथांगं । रथिनातुल्योऽश्वइत्यर्थः ५३ स्वीयेष्वश्वेषुविशेषमाह कामे

ततोभागीकृतोदेवैर्वज्रभागउपास्यते ॥ लोकेयशोधनंकिंचित्सैववज्रतनुःस्मृता ५१ वज्रपाणिर्ब्राह्मणःस्यात्क्षत्रंवज्ररथंस्मृतम् ॥ वैश्यावैदानवज्राश्वकर्मवज्रायवीयसः ५२ क्षत्रवज्रस्यभागेनअवध्यावाजिनःस्मृताः ॥ रथांगंवडवासूतेशूराश्चाश्वेषुयेमताः ५३ कामवर्णाःकामजवाःकामतःसमुपस्थिताः ॥ इतिगंधर्वजाःकामंपूरयिष्यंतिमेहयाः ५४ ॥ अर्जुनउवाच ॥ यदिप्रीतेनमेदत्तंसंशयेजीवितस्यवा ॥ विद्याधनंश्रुतंवाऽपिनतद्गंधर्वरोचये ५५ ॥ गंधर्वउवाच ॥ संयोगोवैप्रीतिकरोमहत्सुप्रतिदृश्यते ॥ जीवितस्यप्रदानेनप्रीतोविद्यांददामिते ५६ त्वत्तोऽप्यहंग्रहीष्यामिअस्त्रमाग्नेयमुत्तमम् ॥ तथैवयोग्यंबीभत्सोचिरायभरतर्षभ ५७ ॥ अर्जुनउवाच ॥ त्वत्तोऽस्त्रेणवृणोम्यश्वान्संयोगःशाश्वतोऽस्तुनौ ॥ सखेतद्ब्रूहिगंधर्वयुष्मभ्योयद्भयंभवेत् ५८ कारणंब्रूहिगंधर्वकिंतद्येनस्मधर्षिताः ॥ यांतोवेदविदःसर्वेसंतोरात्रावरिंदमाः ५९ ॥ गंधर्वउवाच ॥ अनग्नयोऽनाहुतयोनचविप्रपुरस्कृताः ॥ यूयंततोधर्षिताःस्थमयावैपांडुनंदनाः ६० यक्षराक्षसगंधर्वाःपिशाचोरगदानवाः ॥ विस्तरंकुरुवंशस्यधीमंतःकथयंतिते ६१ नारदप्रभृतीनांतुदेवर्षीणांमयाश्रुतम् ॥ गुणान्कथयतांवीरपूर्वेषांतवधीमताम् ६२ स्वयंचापिमयादृष्टश्चरतासागरांबराम् ॥ इमांवसुमतींकृत्स्नांप्रभावःसुकुलस्यते ६३ वेदेधनुषिचाचार्यमभिजानामितेऽर्जुन ॥ विश्रुतंत्रिषुलोकेषुभारद्वाजंयशस्विनम् ६४ धर्मंवायुंचशक्रंचविजानाम्यश्विनौतथा ॥ पांडुंचकुरुशार्दूलषडेतान्कुरुवर्धनान् ॥ पितॄनेतानहंपार्थदेवमानुषसत्तमान् ६५ दिव्यात्मानोमहात्मानःसर्वशस्त्रभृतांवराः ॥ भवंतोभ्रातरःशूराःसर्वेसुचरितव्रताः ६६ उत्तमांचमनोबुद्धिंभवतांभावितात्मनाम् ॥ जानन्नपिचवःपार्थकृतवानिहधर्षणाम् ६७ स्त्रीसकाशेचकौरव्यनपुमान्क्षंतुमर्हति ॥ धर्षणामात्मनःपश्यन्बाहुद्रविणमाश्रितः ६८ नक्तंचबलमस्माकंभूयएवाभिवर्धते ॥ यतस्ततोमांकौंतेयसदारंमन्युराविशत् ६९ सोऽहंत्वयेहविजितःसंख्येतापत्यवर्धन ॥ येनतेनेहविधिनाकीर्त्यमानंनिबोधमे ७०

ति गंधर्वजाः गंधर्वलोकजाः ५४ प्रीतेनदत्तमपिप्रतिप्रदानमंतरेणनरोचये । 'ददातिप्रतिगृह्णातिगुह्यमाख्यातिपृच्छति ॥ भुंक्तेभोजयतेचैवषड्विधंप्रीतिलक्षणं'इत्युक्तेः । अन्यथाऋणित्वंममस्यादितिभावः । पक्षांतरेतुममयशोहानिः ५५ आर्यपक्षमाहतेसंयोगइत्यादिना ५६ । ५७ युष्मभ्योयुष्मत्तःयतस्माद्धेतोः ५८ । ५९ अनग्नयोदारहीनत्वात् । अनाहुतयःसमावृत्तत्वात् । आश्रमविशेषहीनोऽब्राह्मणोधर्षणीयइत्यर्थः ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ मनोबुद्धिंमनःसहितांबुद्धिंसंकल्पनिश्चयौ भावितात्मनांशोधितचित्तानां ६७ बाहुद्रविणंबाहुबलं ६८ । ६९ । ७०

७१ कामवृत्तःकृतदारः ७२ । ७३ । ७४ । ७५ । ७६ लाभंलब्धवर्धनं ७७ । ७८ । ७९ । ८० ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

ब्रह्मचर्यपरोधर्मःसचापिनियतस्त्वयि ॥ यस्मात्तस्मादहंपार्थरणेऽस्मिविजितस्त्वया ७१ यस्तुस्यात्क्षत्रियःकश्चित्कामवृत्तःपरंतप ॥ नक्तंचयुधियुध्येतनसजी वेत्कथंचन ७२ यस्तुस्यात्कामवृत्तोऽपिपार्थब्रह्मपुरस्कृतः ॥ जयेन्नक्तंचरान्सर्वान्सपुरोहितधूर्गतः ७३ तस्मात्तापत्ययत्किंचिन्नृणांश्रेयइहेप्सितम् ॥ तस्मि न्कर्मणियोक्तव्यादांतात्मानःपुरोहिताः ७४ वेदेषडंगेनिरताःशुचयःसत्यवादिनः ॥ धर्मात्मानःकृतात्मानःस्युर्नृपाणांपुरोहिताः ७५ जयश्चनियतोराज्ञःस्व र्गश्चतदनंतरम् ॥ यस्यस्याद्धर्मविद्वाग्मीपुरोधाःशीलवाञ्शुचिः ७६ लाभंलब्धुमलब्धंवालब्धंवापरिरक्षितुम् ॥ पुरोहितंप्रकुर्वीतराजागुणसमन्वितम् ७७ पुरोहितमतेतिष्ठेद्यइच्छेद्भूतिमात्मनः ॥ प्राप्तुंवसुमतींसर्वांसर्वशःसागरांबराम् ७८ नहिकेवलशौर्येणतापत्याभिजनेनच ॥ जयेदब्राह्मणःकश्चिद्भूमिंभूमिपतिःक्व चित् ७९ तस्मादेवंविजानीहिकुरूणांवंशवर्धन ॥ ब्राह्मणप्रमुखंराज्यंशक्यंपालयितुंचिरम् ८० ॥ इति श्रीमहाभारते आदिपर्वणि चैत्ररथपर्वणि गंधर्वपराभवे सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥ ॥ ७ ॥ ॥ अर्जुनउवाच ॥ तापत्यइतियद्वाक्यमुक्तवानसिमामिह ॥ तदहंज्ञातुमिच्छामितापत्यार्थं विनिश्चितम् १ तपतीनामकाचैषातापत्यायत्कृतेवयम् ॥ कौंतेयाहिवयंसाधोतत्त्वमिच्छामिवेदितुम् २ ॥ वैशंपायनउवाच ॥ एवमुक्तःसगंधर्वःकुंतीपुत्रंधनं जयम् ॥ विश्रुतंत्रिषुलोकेषुश्रावयामासवैकथाम् ३ ॥ गंधर्वउवाच ॥ हंततेकथयिष्यामिकथामेतांमनोरमाम् ॥ यथावदखिलांपार्थसर्वबुद्धिमतांवर ४ उक्त वानस्मियेनत्वांतापत्यइतियद्वचः ॥ तत्तेऽहंकथयिष्यामिशृणुष्वैकमनाभव ५ यएषदिविधिष्ण्येननाकंव्याप्नोतितेजसा ॥ एतस्यतपतीनामबभूवसदृशीसुता ६ विवस्वतोवैदेवस्यसावित्र्यवरजाविभो ॥ विश्रुतात्रिषुलोकेषुतपतीतपसायुता ७ नदेवीनासुरीचैवनयक्षीनचराक्षसी ॥ नाप्सरानचगंधर्वीतथारूपेणकाचन ८ सुविभक्तानवद्यांगीस्वसितायतलोचना ॥ स्वाचाराचैवसाध्वीचसुवेषाचैवभामिनी ९ नतस्याःसदृशंकंचित्त्रिषुलोकेषुभारत ॥ भर्तारंसवितामेनेरूपशीलगुण श्रुतैः १० संप्राप्तयौवनांपश्यन्देयांदुहितरंतुताम् ॥ नोपलेभेततःशांतिंसंप्रदानंविचिंतयन् ११ अथर्क्षपुत्रःकौंतेयकुरूणामृषभोवली ॥ सूर्यमाराधयामास नृपःसंवरणस्तदा १२ अर्घ्यमाल्योपहाराद्यैर्गंधैश्चनियतःशुचिः ॥ नियमैरुपवासैश्चतपोभिर्विविधैरपि १३ शुश्रूषुरनहंवादीशुचिःपौरवनंदन ॥ अंशुमंतं समुद्यंतंपूजयामासभक्तिमान् १४ ततःकृतज्ञंधर्मज्ञंरूपेणासदृशंभुवि ॥ तपत्याःसदृशंमेनेसूर्यःसंवरणंपतिम् १५ दातुमैच्छत्ततःकन्यांतस्मैसंवरणायताम् ॥ नृपोत्तमायकौरव्यविश्रुताभिजनायच १६

पुरोहितप्रसादादेवतापत्यत्वंख्यापयितुंतापत्येतिसंबोधनंकृतंतदर्थंपृच्छति तापत्यइति तापत्यार्थंतापत्यपदार्थं १ । २ । ३ । ४ । ५ धिष्ण्येनमंडलेन ६ । ७ । ८ । ९ । १० संप्रदानंदानमात्रं ११ । १२ । १३ । १४ । १५ । १६



१७ । १८ सुहृदांदुर्हृदामपिमध्येश्रीमान् १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ क्षुपःगुल्मः'ह्रस्वशाखाशिफःक्षुपः'इत्यमरः २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७

यथाहिदिविदीप्तांशुःप्रभासयतितेजसा ॥ तथाभुविमहीपालोदीप्त्यासंवरणोऽभवत् १७ यथाऽर्चयंतिचादित्यमुद्यंतंब्रह्मवादिनः ॥ तथासंवरणंपार्थब्राह्मणावरजाः प्रजाः १८ ससोममतिकांतत्वादादित्यमतितेजसा ॥ बभूवनृपतिःश्रीमान्सुहृदांदुर्हृदामपि १९ एवंगुणस्यनृपतेस्तथावृत्तस्यकौरव ॥ तस्मैदातुंमनश्चक्रेतप तींतपनःस्वयम् २० सकदाचिदथोराजाश्रीमानमितविक्रमः ॥ चचारमृगयांपार्थपर्वतोपवनेकिल २१ चरतोमृगयांतस्यक्षुत्पिपासासमन्वितः ॥ ममाररा ज्ञः कौंतेयगिरावप्रतिमोहयः २२ समृताश्वश्चरन्पार्थपद्भ्यामेवगिरौनृपः ॥ ददर्शासदृशींलोकेकन्यामायतलोचनाम् २३ सएकएकामासाद्यकन्यांपरबलार्दनः ॥ तस्थौनृपतिशार्दूलःपश्यन्नविचलेक्षणः २४ सहितांतर्कयामासरूपतोनृपतिःश्रियम् ॥ पुनःसंतर्कयामासरवेर्भ्रष्टामिवप्रभाम् २५ वपुषावर्चसाचैवशिखामिववि भावसोः ॥ प्रसन्नत्वेनकांत्याचचंद्ररेखामिवामलाम् २६ गिरिपृष्ठेतुसायस्मिन्स्थितास्वसितलोचना ॥ विभ्राजमानाशुशुभेप्रतिमेवहिरण्मयी २७ तस्यारूपे णसगिरिर्वेषेणचविशेषतः ॥ ससवृक्षक्षुपलतोहिरण्मयइवाभवत् २८ अवमेनेचतांदृष्ट्वासर्वलोकेषुयोषितः ॥ अवाप्तंचात्मनोमेनेसराजाचक्षुषःफलम् २९ जन्म प्रभृतियत्किंचिद्दृष्टवान्समहीपतिः ॥ रूपंनसदृशंतस्यास्तर्कयामासकिंचन ३० तयाबद्धमनश्चक्षुःपाशैर्गुणमयैस्तदा ॥ नचचालततोदेशाद्बुबुधेनचकिंचन ३१ अस्यानूनंविशालाक्ष्याःसदेवासुरमानुषम् ॥ लोकंनिर्मथ्यधात्रेदंरूपमाविष्कृतंकृतम् ३२ एवंसंतर्कयामासरूपद्रविणसंपदा ॥ कन्यामसदृशींलोकेनृपः संवरणस्तदा ३३ तांचदृष्ट्वैवकल्याणींकल्याणाभिजनोनृपः ॥ जगाममनसाचिंतांकामबाणेनपीडितः ३४ दह्यमानःसतीव्रेणनृपतिर्मन्मथाग्निना ॥ अप्रगल्भां प्रगल्भस्तांतदोवाचमनोहराम् ३५ काऽसिकस्यासिरंभोरुकिमर्थंचेहतिष्ठसि ॥ कथंचनिर्जनेरण्येचरस्येकाशुचिस्मिते ३६ त्वंहिसर्वानवद्यांगीसर्वाभरणभू षिता ॥ विभूषणमिवैतेषांभूषणानामभीप्सितम् ३७ नदेवींनासुरींचैवनयक्षींनचराक्षसीम् ॥ नचभोगवतींमन्येनगंधर्वींनमानुषीम् ३८ याहिदृष्टामयाकाश्चि च्छ्रुतावाऽपिवरांगनाः ॥ नतासांसदृशींमन्येत्वामहंमत्तकाशिनि ३९ दृष्ट्वैवचारुवदनेचंद्रात्कांततरंतव ॥ वदनंपद्मपत्राक्षंमांमथ्नातीवमन्मथः ४० एवंतांसमही पालोबभाषेनतुसातदा ॥ कामार्तंनिर्जनेऽरण्येप्रत्यभाषतकिंचन ४१ ततोलालप्यमानस्यपार्थिवस्यायतेक्षणा ॥ सौदामिनीवचाभ्रेषुतत्रैवांतरधीयत ४२ तामन्वेष्टुंसनृपतिःपरिचक्रामसर्वतः ॥ वनंवनजपत्राक्षींभ्रमन्नुन्मत्तवत्तदा ४३ अपश्यमानःसतुतांबहुतत्रविलप्यच ॥ निश्चेष्टःपार्थिवश्रेष्ठोमुहूर्तंसव्यतिष्ठत ४४ ॥ इति श्रीमहाभारते आदिपर्वणि चैत्ररथपर्वणि तपत्युपाख्याने एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥ ॥ ७ ॥ ॥ गंधर्वउवाच ॥ अथतस्यामदृ श्यायांनृपतिःकाममोहितः ॥ पातनःशत्रुसंघानांपपातधरणीतले १ तस्मिन्निपतितेभूमावथसाचारुहासिनी ॥ पुनःपीनायतश्रोणीदर्शयामासतंनृपम् २

३८ मत्तेवकाशतइतिमत्तकाशिनी ३९ । ४० । ४१ । ४२ वनजपत्राक्षींजलजपत्राक्षीं ४३ । ४४ ॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेएकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥ अथेति १ । २

संहननोपपन्नमत्यर्थंकाठिन्येनयुक्तं स्फुरतानामयितुमसामर्थ्यात्करान्निःसरत्कोटितया । अतएवविक्षिप्यमाणाःदंडेनवीटाइव धनुषाधनुष्कोट्या शमयांबभूवुरितिद्वयोःसंबंधः १८ । १९ चक्रवालं
मंडलं २० । २१ । २२ सामर्षहासं नीचकुलयोगादमर्षः सूर्यापराधत्वाद्धासः २३ । २४ धनुरादायमानःपरीक्षमाणः देष्ठशोधनेऽस्यरूपं २५ अभ्याशंसमीपं २६ धनुषाआकृष्यमाणेन २७ आ

तत्कार्मुकंसंहननोपपन्नंसज्यंनशेकुर्मनसाऽपिकर्तुम् ॥ तेविक्रमंतःस्फुरताद्दढेनविक्षिप्यमाणाधनुषानरेंद्राः १८ विचेष्टमानाधरणीतलस्थायथावलंशैक्ष्यगुणक्र
माश्च ॥ गतौजसःस्रस्तकिरीटहाराविनिःश्वसंतःशमयांबभूवुः १९ हाहाकृतंतद्धनुषादृढेनविस्रस्तहारांगदचक्रवालम् ॥ कृष्णानिमित्तंविनिवृत्तकामंराज्ञां
तदामंडलमार्तमासीत् २० सर्वान्नृपांस्तान्प्रसमीक्ष्यकर्णोधनुर्धराणांप्रवरोजगाम ॥ उद्धृत्यतूर्णंधनुरुद्यतंतत्सज्यंचकाराशुयुयोजबाणान् २१ दृष्ट्वासूतंमेनिरे
पांडुपुत्राभित्त्वानीतंलक्ष्यवरंधरायाम् ॥ धनुर्धरारागकृतप्रतिज्ञमत्यग्निसोमार्कमथार्कपुत्रम् २२ दृष्ट्वातुतंद्रौपदीवाक्यमुच्चैर्जगादनाहंवरयामिसूतम् ॥ सामर्षहा
संप्रसमीक्ष्यसूर्यंतत्याजकर्णःस्फुरितंधनुस्तत् २३ एवंतेषुनिवृत्तेषुक्षत्रियेषुसमंततः ॥ चेदीनामधिपोवीरोबलवानंतकोपमः २४ दमघोषसुतोधीरःशिशुपालो
महामतिः ॥ धनुरादायमानस्तुजानुभ्यामगमन्महीम् २५ ततोराजामहावीर्योजरासंधोमहाबलः ॥ धनुषोऽभ्याशमागत्यतस्थौगिरिरिवाचलः २६ धनुषापी
ड्यमानस्तुजानुभ्यामगमन्महीम् ॥ ततउत्थायराजासस्वराष्ट्राण्यभिजग्मिवान् २७ ततःशल्योमहावीरोमद्रराजोमहाबलः ॥ तदप्यारोप्यमाणस्तुजानुभ्या
मगमन्महीम् २८ तस्मिंस्तुसंभ्रांतजनेसमाजेनिक्षिप्तवादेषुजनाधिपेषु ॥ कुंतीसुतोजिष्णुरियेषकर्तुंसज्यंधनुस्तत्सशरंप्रवीरः २९ ॥ इतिश्रीमहाभारतेआदि
पर्वणिस्वयंवरपर्वणिसर्वराजपराङ्मुखीभवनेसप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥ ॥ ७ ॥ वैशंपायनउवाच ॥ यदानिवृत्ताराजानोधनुषःसज्यकर्म
णः ॥ अथोदतिष्ठद्विप्राणांमध्याज्जिष्णुरुदारधीः १ उदक्रोशन्विप्रमुख्याविधुन्वंतोऽजिनानिच ॥ दृष्ट्वासंप्रस्थितंपार्थमिंद्रकेतुसमप्रभम् २ केचिदासन्विमनसः
केचिदासन्मुदाऽन्विताः ॥ आहुःपरस्परंकेचिन्निपुणाबुद्धिजीविनः ३ यत्कर्णशल्यप्रमुखैःक्षत्रियैर्लोकविश्रुतैः ॥ नानतंबलवद्भिर्हिधनुर्वेदपरायणैः ४ तत्कथंत्व
कृतास्त्रेणप्राणतोदुर्बलीयसा ॥ बटुमात्रेणशक्यंहिसज्यंकर्तुंधनुर्द्विजाः ५ अवहास्याभविष्यंतिब्राह्मणाःसर्वराजसु ॥ कर्मण्यस्मिन्नसंसिद्धेचापलादपरीक्षिते ६
यद्येपदर्पाद्धर्षाद्वाऽप्यथब्राह्मणचापलात् ॥ प्रस्थितोधनुरायंतुंवार्यतांसाधुमागमत् ७ ॥ ब्राह्मणाऊचुः ॥ नावहास्याभविष्यामोनचलाघवमास्थिताः ॥ नच
विद्विष्टतांलोकेगमिष्यामोमहीक्षिताम् ८ केचिदाहुर्युवाश्रीमान्नागराजकरोपमः ॥ पीनस्कंधोरुबाहुश्चधैर्येणहिमवानिव ९ सिंहखेलगतिःश्रीमान्मत्तनागेंद्रविक्र
मः ॥ संभाव्यमस्मिन्कर्मेदमुत्साहाच्चानुमीयते १०

रोप्यमाणःसज्जीकर्तुमिच्छन् २८ निक्षिप्तवादेषुत्यक्तधनुरुद्यमनकथेषु २९ ॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेसप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७॥ यदेति जिष्णुरर्जुनः १ ।२ । ३ । ४
प्राणतःशक्तितः ५ । ६ । दर्पाद्गर्वात् हर्षादौत्सुक्यात् चापलादनवस्थितत्वात् ७ । ८ । ९ । १०

लोकेषुब्रह्मलोकांतेषु नृपुपुरुषेषु संस्थानचारिषुदेवासुराद्याकारेश्वरत्सुतत्कर्मनविद्यतेयत्ब्राह्मणानामसाध्यमितिसंबंधः ११ । १२ । १३ महद्भ्रस्वंमहदपिक्षुद्रंभवतियत्रतत्कर्म तदेवोदाहरति
जामदग्न्येनेति १४ ब्राह्मणवचसाक्षुद्रेणापिमहत्कर्मकर्तुंशक्यमित्यभिप्रेत्यसर्वेऽप्येकमत्येनाहुः तस्मादिति १५ । १६ । १७ । १८ राधेयःकर्णः १९ । २० । २१ । २२ विव्य

शक्तिरस्यमहोत्साहानह्यशक्तःस्वयंव्रजेत् ॥ नचतद्विद्यतेकिंचित्कर्मलोकेषुयद्भवेत् ११ ब्राह्मणानामसाध्यंचनृपुसंस्थानचारिषु ॥ अब्भक्षावायुभक्षाश्चफला
हाराद्दढव्रताः १२ दुर्बलाअपिविप्राहिबलीयांसःस्वतेजसा ॥ ब्राह्मणोनावमंतव्यःसदसद्वासमाचरन् १३ सुखंदुःखंमहद्भ्रस्वंकर्मयत्समुपागतम् ॥ जामदग्न्येन
रामेणनिर्जिताःक्षत्रियायुधि १४ पीतःसमुद्रोऽगस्त्येनअगाधोब्रह्मतेजसा ॥ तस्माद्ब्रुवंतुसर्वेऽत्रबटुरेषधनुर्महान् १५ आरोपयतुशीघ्रं वैतथेत्यूचुर्द्विजर्षभाः ॥
एवंतेषांविलपतांविप्राणांविविधागिरः १६ अर्जुनोधनुषोऽभ्याशेतस्थौगिरिरिवाचलः ॥ सतद्धनुःपरिक्रम्यप्रदक्षिणमथाकरोत् १७ प्रणम्यशिरसादेवमी
शानंवरदंप्रभुं ॥ कृष्णांचमनसाकृत्वाजगृहेचार्जुनोधनुः १८ यत्पार्थिवैरुक्मसुनीथवक्रैराधेयदुर्योधनशल्यशाल्वैः ॥ तदाधनुर्वेदपरैर्नृसिंहैःकृतंनसज्यंमहतो
ऽपियत्नात् १९ तदर्जुनोवीर्यवतांसदर्पस्तदैंद्रिरिंद्रावरजप्रभावः ॥ सज्यंचचक्रेनिमिषांतरेणशरांश्चजग्राहदशार्धसंख्यान् २० विव्याधलक्ष्यंनिपपाततच्च
च्छिद्रेणभूमौसहसाऽतिविद्धं ॥ ततोंऽतरिक्षेचबभूवनादःसमाजमध्येचमहान्निनादः २१ पुष्पाणिदिव्यानिववर्षदेवःपार्थस्यमूर्ध्निद्विषतांनिहंतुः २२ चैला
निविव्यधुस्तत्रब्राह्मणाश्चसहस्रशः ॥ विलक्षितास्ततश्चक्रुर्हाहाकारांश्चसर्वशः ॥ न्यपतंश्चात्रनभसःसमंतात्पुष्पवृष्टयः २३ शतांगानिचतूर्याणिवादकाः
समवादयन् ॥ सूतमागधसंघाश्चाप्यस्तुवंस्तत्रसुस्वराः २४ तंदृष्ट्वाद्रुपदःप्रीतोबभूवरिपुसूदनः ॥ सहसैन्यैश्चपार्थस्यसाहाय्यार्थमियेषसः २५ तस्मिं
स्तुशब्देमहतिप्रवृद्धेयुधिष्ठिरोधर्मभृतांवरिष्ठः ॥ आवासमेवोपजगामशीघ्रंसार्धंयमाभ्यांपुरुषोत्तमाभ्याम् २६ विद्धंतुलक्ष्यंप्रसमीक्ष्यकृष्णापार्थंचशक्रप्रतिमं
निरीक्ष्य ॥ आदायशुक्लांबरमाल्यदामजगामकुंतीसुतमुत्स्मयंती २७ सतामुपादायविजित्यरंगेद्विजातिभिस्तैरभिपूज्यमानः ॥ रंगान्निरक्रामदचिंत्यकर्मा
पत्न्यातयाचाप्यनुगम्यमानः २८ ॥ इतिश्रीमहाभारतेआदिपर्वणिस्वयंवरपर्वणिलक्ष्यच्छेदनेऽष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥ वैशंपायन
उवाच ॥ तस्मैदित्सतिकन्यांतुब्राह्मणायतदानृपे ॥ कोपआसीन्महीपानामालोक्यान्योन्यमंतिकात् १ अस्मानयमतिक्रम्यतृणीकृत्यचसंगतान् ॥ दातुमिच्छ
तिविप्रायद्रौपदींयोषितांवरां २ अवरोप्येहवृक्षंतुफलकालेनिपात्यते ॥ निहन्मैनंदुरात्मानंयोऽयमस्मान्नमन्यते ३

धुर्विजयध्वजवदुच्छ्रितवंतः विलक्षिताःविषमंलक्षितंदृष्टिर्येषांतेतथाभूताःशत्रवःलक्ष्येणविनाकृतावा २३ शतमनंतान्यंगानिनखांगुलिदंडधनुर्ज्यावक्रादीनिवादनोपायायेषांतानि ।'अंगगात्रांति
कोपायप्रतीकेषु'इतिविश्वः २४ साहाय्यार्थं द्रौपद्यलाभात्क्षुब्धैर्नृपांतरैर्युद्धप्रसक्तौसत्यां २५ । २६ उत्स्मयंतीउत्तमपतिलाभादत्यंतगर्वंकुर्वती २७ । २८ ॥ इतिआदिपर्वणिनीलकंठीये
भारतभावदीपेअष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥ ॥ तस्मैदित्सतीति १ । २ । ३

अवरोप्येत्यस्यव्याख्याअयंहीतिव्यवहितश्लोकेन ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ संत्रासाद्ब्राह्मणकोपेनसर्वंक्षत्रंनश्येदितिशंकोत्थाद्भयात् १३ । १४ । १५ । १६ । १७

नह्यर्हत्येषसंमाननंनापिवृद्धक्रमंगुणैः ॥ हन्मैनंसहपुत्रेणदुराचारंनृपद्विषम् ४ अयंहिसर्वानाहूयसत्कृत्यचनराधिपान् ॥ गुणवद्भोजयित्वान्नंततःपश्चान्नमन्यते ५
अस्मिन्राजसमावायेदेवानामिवसन्नये ॥ किमयंसदृशंकंचिन्नृपतिंनैवदृष्टवान् ६ नचविप्रेष्वधीकारोविद्यतेवरणंप्रति ॥ स्वयंवरःक्षत्रियाणामितीयंप्रथिताश्रुतिः
७ अथवायदिकन्येयंनचकंचिद्बुभूषति ॥ अग्नावेनांपरिक्षिप्ययामराष्ट्राणिपार्थिवाः ८ ब्राह्मणोयदिचापल्याल्लोभाद्वाकृतवानिदम् ॥ विप्रियंपार्थिवेंद्राणांनैष
वध्यःकथंचन ९ ब्राह्मणार्थंहिनोराज्यंजीवितंहिवसूनिच ॥ पुत्रपौत्रंचयच्चान्यदस्माकंविद्यतेधनम् १० अवमानभयाच्चैवस्वधर्मस्यचरक्षणात् ॥ स्वयंवराणा
मन्येषांमाभूदेवंविधागतिः ११ इत्युक्त्वाराजशार्दूलाहृष्टाःपरिघबाहवः ॥ द्रुपदंतुजिघांसंतःसायुधाःसमुपाद्रवन् १२ तान्गृहीतशरावापान्क्रुद्धानापततो
बहून् ॥ द्रुपदोवीक्ष्यसंत्रासाद्ब्राह्मणाञ्छरणंगतः १३ वेगेनापततस्तांस्तुप्रभिन्नानिववारणान् ॥ पांडुपुत्रौमहेष्वासौप्रतियातावरिंदमौ १४ ततःसमुत्पेतुरु
दायुधास्तेमहीक्षितोबद्धगोधांगुलित्राः ॥ जिघांसमानाःकुरुराजपुत्रावमर्षयंतोऽर्जुनभीमसेनौ १५ ततस्तुभीमोऽद्भुतभीमकर्मामहाबलोवज्रसमानसारः ॥
उत्पाट्यदोर्भ्यांद्रुममेकवीरोनिष्पत्रयामासयथागजेंद्रः १६ तंवृक्षमादायरिपुप्रमाथीदंडीवदंडंपितृराजउग्रम् ॥ तस्थौसमीपेपुरुषर्षभस्यपार्थस्यपार्थःपृथुदी
र्घबाहुः १७ तत्प्रेक्ष्यकर्मातिमनुष्यबुद्धिर्जिष्णुःसहिभ्रातुरचिंत्यकर्मा ॥ विसिस्मियेचापिभयंविहायतस्थौधनुर्गृह्यमहेंद्रकर्मा १८ तत्प्रेक्ष्यकर्मातिमनुष्यबुद्धिर्जिष्णोः
सहभ्रातुरचिंत्यकर्मा ॥ दामोदरोभ्रातरमुग्रवीर्यंहलायुधंवाक्यमिदंबभाषे १९ यएषसिंहर्षभखेलगामीमहद्धनुःकर्षतितालमात्रम् ॥ एषोऽर्जुनोनात्रविचार्यमस्ति
यद्यस्मिसंकर्षणवासुदेवः २० यस्त्वेषवृक्षंतरसाऽवभज्यराज्ञांनिकारेसहसाप्रवृत्तः ॥ वृकोदरान्नान्यइहैतदद्यकर्तुंसमर्थःसमरेपृथिव्याम् २१ योऽसौपुरस्तात्क
मलायताक्षस्तनुर्महासिंहगतिर्विनीतः ॥ गौरःप्रलंबोज्ज्वलचारुघोणोविनिःसृतःसोऽच्युतधर्मपुत्रः २२ यौतौकुमाराविवकार्तिकेयौद्वावाश्विनेयावितिमेवितर्कः ॥
मुक्ताहितस्माज्जतुवेश्मदाहान्मयाश्रुताःपांडुसुताःपृथाच २३ तमब्रवीन्निर्जलतोयदाभोहलायुधोऽनंतरजंप्रतीतः ॥ प्रीतोऽस्मिदृष्ट्वाहिपितृष्वसारंपृथांविमुक्तांस
हकौरवाग्र्यैः २४ ॥ इति श्रीमहाभारते आदिपर्वणि स्वयंवरपर्वणि कृष्णवाक्येऊननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥ वैशंपायनउवाच ॥ अजिनानिविधु
न्वंतःकरकांश्चद्विजर्षभाः ॥ ऊचुस्तेभीर्नकर्तव्यावयंयोत्स्यामहेपरान् १ तानेवंवदतोविप्रानर्जुनःप्रहसन्निव ॥ उवाचप्रेक्षकाभूत्वायूयंतिष्ठथपार्श्वतः २ अहमेना
नजिह्माग्रैःशतशोविकिरञ्छरैः ॥ वारयिष्यामिसंक्रुद्धान्मंत्रैराशीविषानिव ३ इतितद्धनुरानम्यशुल्कावाप्तंमहाबलः ॥ भ्रात्राभीमेनसहितस्तस्थौगिरिरिवाचलः ४ ॥१६४॥

१८ । १९ । २० । २१ घोणानासा २२ कार्त्तिकेयावित्यभूतोपमा २३ । २४ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे ऊननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥ ॥
अजिनानीति १ । २ । ३ शुल्कावाप्तंपणप्राप्तं ४

५ । ६ । ७ । ८ । ९ । १० । ११ विजिगीषिणौविजिगीषावंतौ १२ शूराणामर्थवद्भिर्वचनैःशूरार्थवचनैः १३ । १४ प्रतिहन्यप्रतिहत्य । वाल्यपीतिपक्षेऽनुनासिकलोपाभावान्नतुक् । ततप्रति

ततःकर्णमुखान्दृष्ट्वाक्षत्रियान्युद्धदुर्मदान् ॥ संपेततुरभीतौतौगजौप्रतिगजानिव ५ ऊचुश्चवाचःपरुषास्तेराजानोयुयुत्सवः ॥ आहवेहिद्विजस्यापिवधोदृष्टोयुयु
त्सतः ६ इत्येवमुक्त्वाराजानःसहसादुद्रुवुर्द्विजान् ॥ ततःकर्णोमहातेजाजिष्णुंप्रतिययौरणे ७ युद्धार्थीवासिताहेतोर्गजःप्रतिगजंयथा ॥ भीमसेनंययौशल्योमद्रा
णामीश्वरोबली ८ दुर्योधनादयःसर्वेब्राह्मणैःसहसंगताः ॥ मृदुपूर्वमयत्नेनप्रत्ययुध्यंस्तदाऽऽहवे ९ ततोऽर्जुनःप्रत्यविध्यदापतंतंशितैःशरैः ॥ कर्णंवैकर्तनंश्रीमा
न्विकृष्यबलवद्धनुः १० तेषांशराणांवेगेनशितानांतिग्मतेजसाम् ॥ विमुह्यमानोराधेयोयत्नात्तमनुधावति ११ तावुभावप्यनिर्देश्यौलाघवाज्जयतांवरौ ॥ अयु
ध्येतांसुसंरब्धावन्योन्यविजिगीषिणौ १२ कृतेप्रतिकृतंपश्यपश्यबाहुबलंचमे ॥ इतिशूरार्थवचनैरभाषेतांपरस्परम् १३ ततोऽर्जुनस्यभुजयोर्वीर्यमप्रतिमंभुवि॥
ज्ञात्वावैकर्तनःकर्णःसंरब्धःसमयोधयत् १४ अर्जुनेनप्रयुक्तांस्तान्बाणान्वेगवतस्तदा ॥ प्रतिहन्यननादोच्चैःसैन्यानितदपूजयन् १५ ॥ कर्णउवाच ॥ तुष्यामि
तेविप्रमुख्यभुजवीर्यस्यसंयुगे ॥ अविषादस्यचैवास्यशस्त्रास्त्रविजयस्यच १६ किंत्वंसाक्षाद्धनुर्वेदोरामोवाविप्रसत्तम ॥ अथसाक्षाद्धरिहयःसाक्षाद्वाविष्णुरच्युतः
१७ आत्मप्रच्छादनार्थंवैबाहुवीर्यमुपाश्रितः ॥ विप्ररूपंविधायेदंमन्येमांप्रतियुध्यते १८ नहिमामाहवेक्रुद्धमन्यःसाक्षाच्छचीपतेः ॥ पुमान्योधयितुंशक्तःपांड
वाद्वाकिरीटिनः १९ तमेवंवादिनंतत्रफाल्गुनःप्रत्यभाषत ॥ नास्मिकर्णधनुर्वेदोनास्मिरामःप्रतापवान् २० ब्राह्मणोऽस्मियुधांश्रेष्ठःसर्वशस्त्रभृतांवरः ॥ ब्राह्मे
पौरंदरेचास्त्रेनिष्ठितोगुरुशासनात् २१ स्थितोऽस्म्यद्यरणेजेतुंत्वांवैवीरस्थिरोभव ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुराधेयोयुद्धात्कर्णोन्यवर्तत २२ ब्राह्मंतेज
स्तदाऽजय्यंमन्यमानोमहारथः ॥ अपरस्मिन्वनोद्देशेवीरौशल्यवृकोदरौ २३ बलिनौयुद्धसंपन्नौविद्ययाचबलेनच ॥ अन्योन्यमाह्वयंतौतुमत्ताविवमहागजौ
२४ मुष्टिभिर्जानुभिश्चैवनिघ्नंतावितरेतरम् ॥ प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः २५ आचकर्षतुरन्योऽन्यंमुष्टिभिश्चापिजघ्नतुः ॥ ततश्चटचटाशब्दःसुघोरोह्य
भवत्तयोः २६ पाषाणसंपातनिभैःप्रहारैरभिजघ्नतुः ॥ मुहूर्तंतौतदाऽन्योन्यंसमरेपर्यकर्षताम् २७ ततोभीमःसमुत्क्षिप्यबाहुभ्यांशल्यमाहवे ॥ अपातयत्कुरुश्रे
ष्ठोब्राह्मणाजहसुस्तदा २८ तत्राश्चर्यंभीमसेनश्चकारपुरुषर्षभः ॥ यच्छल्यंपातितंभूमौनावधीद्बलिनंबली २९ पातितेभीमसेनेनशल्येकर्णेचशंकिते ॥ शंकि
ताःसर्वराजानःपरिवव्रुर्वृकोदरम् ३० ऊचुश्चसहितास्तत्रसाध्विमौब्राह्मणर्षभौ ॥ विज्ञायेतांक्वजन्मानौक्वनिवासौतथैवच ३१ कोहिराधासुतंकर्णंशक्तोयोधयि
तुंरणे ॥ अन्यत्ररामाद्द्रोणाद्वापांडवाद्वाकिरीटिनः ३२ कृष्णाद्वादेवकीपुत्रात्कृपाद्वाऽपिशरद्वतः ॥ कोवादुर्योधनंशक्तःप्रतियोधयितुंरणे ३३

हननं १५ । १६ । १७ मन्येत्वांयस्मान्मांप्रतियुध्यसे १८ । १९ । २० । २१ । २२ वनोद्देशेरंगदशानिवासस्थाने । 'वनंनपुंसकंनीरेनिवासालयकानने' इतिमेदिनी २३ । २४ प्रकर्षणंदूरेनोदनं ।
आकर्षणमर्वाक्कर्षणं । अभ्याकर्षणमभिमुखमास्फालनं । विकर्षणंतिर्यक्पातनं २५ । २६ । २७ समुत्क्षिप्यकूष्मांडफलवदपातयत् २८ । २९ । ३० । ३१ । ३२ । ३३

३४ अवहारोयुद्धान्निवर्त्तनं ३५ सापराधाअपीतिसंधिरार्षः अथअथवाकालांतरेउपलभ्य ३६ संयुगेतत्कर्मकृत्वातूष्णींभूताविति शेषः ३७ । ३८ । ३९ ब्रह्मब्राह्मणजातिःउत्तरंउत्कृष्टंयस्मि न्सब्रह्मोत्तरः ४० । ४१ । ४२ । ४३ अभिगच्छतिउपस्थितेसति ४४ । ४५ । ४६ भार्गववेश्मकुलालगृहं ४७ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे नवत्यधिकशत

तथैवमद्राधिपतिंशल्यंबलवतांवरम् ॥ बलदेवादृतेवीरात्पांडवाद्वावृकोदरात् ३४ वीराद्दुर्योधनाद्वाऽन्यःशक्तःपातयितुंरणे ॥ क्रियतामवहारोस्माद्युद्धाद्ब्राह्मणसं
वृतात् ३५ ब्राह्मणाहिसदारक्ष्याःसापराधाऽपिनित्यदा ॥ अथैनानुपलभ्येहपुनर्योत्स्यामहृष्टवत् ३६ तांस्तथावादिनःसर्वान्प्रसमीक्ष्यक्षितीश्वरान् ॥ अथान्या
न्पुरुषांश्चापिकृत्वातत्कर्मसंयुगे ३७ ॥ वैशंपायनउवाच ॥ तत्कर्मभीमस्यसमीक्ष्यकृष्णःकुंतीसुतौतौपरिशंकमानः ॥ निवारयामासमहीपतींस्तान्धर्मेणलब्धे
त्यनुनीयसर्वान् ३८ एवंतेविनिवृत्तास्तुयुद्धाद्युद्धविशारदाः ॥ यथावासंययुःसर्वेविस्मिताराजसत्तमाः ३९ वृत्तोब्रह्मोत्तरोरंगःपांचालीब्राह्मणैर्वृता ॥ इतिब्रुवंतः
प्रययुर्येतत्रासन्समागताः ४० ब्राह्मणैस्तुप्रतिच्छन्नौरौरवाजिनवासिभिः ॥ कृच्छ्रेणजग्मतुस्तौतुभीमसेनधनंजयौ ४१ विमुक्तौजनसंबाधाच्छत्रुभिःपरिविक्ष
तौ ॥ कृष्णयाऽनुगतौतत्रनृवीरौतौविरेजतुः ४२ पौर्णमास्यांघनैर्मुक्तौचंद्रसूर्याविवोदितौ ॥ तेषांमातावहुविधंविनाशंपर्यचिंतयत् ४३ अनागच्छत्सुपुत्रेषुभै
क्षकालेऽभिगच्छति ॥ धार्त्तराष्ट्रैर्हतानस्युर्विज्ञायकुरुपुंगवाः ४४ मायान्वितैर्वारक्षोभिःसुघोरैर्दृढवैरिभिः ॥ विपरीतंमतंजातंव्यासस्यापिमहात्मनः ४५ इत्ये
वंचिंतयामाससुतस्नेहावृतापृथा ॥ ततःसुप्तजनप्रायेदुर्दिनेमेघसंप्लुते ४६ महत्यथापराह्णेतुघनैःसूर्यइवावृतः ॥ ब्राह्मणैःप्राविशत्तत्रजिष्णुर्भार्गववेश्मतत् ४७
॥ इति श्रीमहाभारते आदिपर्वणि स्वयंवरपर्वणि पांडवप्रत्यागमने नवत्यधिकशततमोऽध्यायः ॥ १९० ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ गत्वातुतां
भार्गवकर्मशालांपार्थौपृथांप्राप्यमहानुभावौ ॥ तांयाज्ञसेनींपरमप्रतीतौभिक्षेत्यथावेदयतांनराग्र्यौ १ कुटीगतासात्वनवेक्ष्यपुत्रौप्रोवाचभुंक्तेतिसमेत्यसर्वे ॥ पश्चा
च्चकुंतीप्रसमीक्ष्यकृष्णांकष्टंमयाभाषितमित्युवाच २ साऽधर्मभीतापरिचिंतयंतीतांयाज्ञसेनींपरमप्रतीताम् ॥ पाणौगृहीत्वोपजगामकुंतीयुधिष्ठिरंवाक्यमुवाचचे
दम् ३ ॥ कुंत्युवाच ॥ इयंतुकन्याद्रुपदस्यराज्ञस्तवानुजाभ्यांमयिसन्निविष्टा ॥ यथोचितंपुत्रमयाऽपिचोक्तंसमेत्यभुंक्तेतिनृपप्रमादात् ४ मयाकथंनानृतमुक्तम
द्यभवेत्कुरूणामृषभब्रवीहि ॥ पंचालराजस्यसुतामधर्मोनचोपवर्त्तेतनविभ्रमेच्च ५ ॥ वैशंपायनउवाच ॥ सएवमुक्तोमतिमान्नृवीरोमात्रामुहूर्त्तंतुविचिंत्यराजा ॥
कुंतींसमाश्वास्यकुरुप्रवीरोधनंजयंवाक्यमिदंबभाषे ६ त्वयाजिताफाल्गुनयाज्ञसेनीत्वयैवशोभिष्यतिराजपुत्री ॥ प्रज्वाल्यतामग्निरमित्रसाहगृहाणपाणिंविधि
वत्त्वमस्याः ७ ॥ अर्जुनउवाच ॥ मामांनरेंद्रत्वमधर्मभाजंकृथानधर्मोऽयमशिष्टदृष्टः ॥ भवान्निवेश्यःप्रथमंततोऽयंभीमोमहाबाहुरचिंत्यकर्मा ८ ॥१६९॥

तमोऽध्यायः ॥ १९० ॥ ॥ ७ ॥ ॥ गत्वेति १ । २ अधर्मोबहुभर्तृतारूपस्तस्माद्भीता ३ । ४ अधर्मोबहुभर्तृतारूपः विभ्रमेच्चतेनाधर्मेणतिर्यग्योनौपुनःपुनर्विशेषेणभ्रमेत् ५
६ । ७ नधर्मोऽयंदृष्टः अयंकः यंमांभवानशिष्टशासितवान् । निवेश्यःविवाह्यः ८

९ । १० । ११ । १२ । १३ । १४ । १५ भेदभयंयस्यद्रौपदीतस्येतरेशत्रवःस्युरितिभेदः १६ । १७ रौहिणेयोवलदेवः १८ । १९ । २० । २१ । २२ । २३ शत्रुसाहाःशत्रुवेगस्यसोढारः २४ यद्व

अहंततोनकुलोऽनंतरंमेपश्चादयंसहदेवस्तरस्वी ॥ वृकोदरोऽहंचयमौचराजन्नियंचकन्याभवतोनियोज्याः ९ एवंगतेयत्करणीयमत्रधर्म्यंयशस्यंकुरुतद्विचिंत्य ॥
पंचालराजस्यहितंचयत्स्यात्प्रशाधिसर्वेस्मवशेस्थितास्ते १० ॥ वैशंपायनउवाच ॥ जिष्णोर्वचनमाज्ञायभक्तिस्नेहसमन्वितम् ॥ दृष्टिंनिवेशयामासुःपांचाल्यां
पांडुनंदनाः ११ दृष्ट्वातेतत्रपश्यंतींसर्वेकृष्णांयशस्विनीम् ॥ संप्रेक्ष्यान्योन्यमासीनाहृदयैस्तामधारयन् १२ तेषांतुद्रौपदींदृष्ट्वासर्वेषाममितौजसाम् ॥ संप्रमथ्ये
द्रियग्रामंप्रादुरासीन्मनोभवः १३ काम्यंहिरूपंपांचाल्याविधात्राविहितंस्वयम् ॥ बभूवाधिकमन्याभ्यःसर्वभूतमनोहरम् १४ तेषामाकारभावज्ञःकुंतीपुत्रोयुधि
ष्ठिरः ॥ द्वैपायनवचःकृत्स्नंसस्मारमनुजर्षभः १५ अब्रवीत्सहितान्भ्रातृन्मिथोभेदभयान्नृपः ॥ सर्वेषांद्रौपदीभार्याभविष्यतिहिनःशुभा १६ ॥ वैशंपायनउवा
च ॥ भ्रातुर्वचस्तत्प्रसमीक्ष्यसर्वेज्येष्ठस्यपांडोस्तनयास्तदानीम् ॥ तमेवार्थंध्यायमानामनोभिःसर्वेचतेतस्थुरदीनसत्वाः १७ वृष्णिप्रवीरस्तुकुरुप्रवीरानाशंस
मानःसहरौहिणेयः ॥ जगामतांभार्गवकर्मशालांयत्रासतेतेपुरुषप्रवीराः १८ तत्रोपविष्टंपृथुदीर्घबाहुंददर्शकृष्णःसहरौहिणेयः ॥ अजातशत्रुंपरिवार्यतांश्चाप्युपोप
विष्टान्ज्वलनप्रकाशान् १९ ततोऽब्रवीद्वासुदेवोऽभिगम्यकुंतीसुतंधर्मभृतांवरिष्ठम् ॥ कृष्णोऽहमस्मीतिनिपीड्यपादौयुधिष्ठिरस्याजमीढस्यराज्ञः २० तथैव
तस्याप्यनुरौहिणेयस्तौचापिहृष्टाःकुरवोऽभ्यनंदन् ॥ पितृष्वसुश्चापियदुप्रवीरावगृह्णतांभारतमुख्यपादौ २१ अजातशत्रुश्चकुरुप्रवीरःपप्रच्छकृष्णंकुशलंविलो
क्य ॥ कथंवयंवासुदेवत्वयेहगूढावसंतोविदिताश्चसर्वे २२ तमब्रवीद्वासुदेवःप्रहस्यगूढोप्यग्निर्ज्ञायतएवराजन् ॥ तंविक्रमंपांडवेयानतीत्यकोऽन्यःकर्त्ताविद्यतेमानु
षेषु २३ दिष्ट्यासर्वेपावकाद्विप्रमुक्तायूयंघोरात्पांडवाःशत्रुसाहाः ॥ दिष्ट्यापापोधृतराष्ट्रस्यपुत्रःसहामात्योनसकामोऽभविष्यत् २४ भद्रंवोऽस्तुनिहितंयद्गुहायां
विवर्धध्वंज्वलनाइवैधमानाः ॥ मावोविदुःपार्थिवाःकेचिदेवयास्यावहेशिबिरायैवतावत् ॥ सोऽज्ञातःपांडवेनाव्ययश्रीःप्रायाच्छीघ्रंबलदेवेनसार्धम् २५ ॥ इतिश्री
महाभारतेआदिपर्वणिस्वयंवरपर्वणिरामकृष्णागमनेएकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥ वैशंपायनउवाच ॥ धृष्टद्युम्नस्तुपांचाल्यःपृष्ठतःकुरुनंदनौ ॥
अन्वगच्छत्तदायांतौभार्गवस्यनिवेशने १ सोऽज्ञायमानःपुरुषानवधायसमंततः ॥ स्वयमाराग्निलीनोऽभूद्भार्गवस्यनिवेशने २ सोयंचभीमस्तुरिपुप्रमाथीजिष्णु
र्यमौचापिमहानुभावौ ॥ भैक्षंचरित्वातुयुधिष्ठिरायनिवेदयांचक्रुरदीनसत्वाः ३ ततस्तुकुंतीद्रुपदात्मजांतामुवाचकालेवचनंवदान्या ॥ त्वमग्रमादायकुरुष्वभद्रेव
लिंचविप्रायचदेहिभिक्षाम् ४ येचान्नमिच्छंतिददस्वतेभ्यःपरिश्रितायेपरितोमनुष्याः ॥ ततश्चशेषंप्रविभज्यशीघ्रमर्धंचतुर्धाममचात्मनश्च ५

द्गुहायांबुद्धौवोनिहितंतद्वोऽस्तु २५ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥ धृष्टद्युम्नइति १ सःअज्ञायमानः पांडवैरितरैश्च आरात्समीपे २ । ३
अग्रंप्रथममादायबलिंकुरुष्वभिक्षांचदेहि ४ परिश्रिताःअन्येऽन्नोपजीविनः चतुर्धाममचात्मनश्चेत्यर्धपोढार्धंभीमायेत्यर्थः ५

संहननोपपन्नोदृढःपुष्टश्च ६ साधुविशंकमानास्वस्यश्रेयस्तर्कयंती । 'शंकात्रासेवितर्केच'इतिमेदिनी ७ । ८ अगस्त्येनशास्ताशिक्षितातांदक्षिणामभितः सर्वेऽपिदक्षिणामभितःपुरस्तात् शिरोदेशस्येव
पादांतरेपादसमीपप्रदेशे ९ पादोपधानीवसर्वेषांपादस्पर्शंलभमानाकुशेषुकुशासनेषु १० पृतनाधिकाराःसेनाधीशयोग्याः ११ । १२ । १३ अप्रतिविंदमानःअजानन् १४ भूम्निपदंहीनवर्णयोगात् वै
श्यपक्षेतुनपातित्वं । शूद्रपक्षेतु 'पद्युवाएतत्स्मशानंयच्छूद्रः' इतिशूद्रस्यपापयुक्तश्मशानत्वश्रुतेस्तत्रमालावत्सुकुमारीबालापतितेतिस्पष्टमुक्तं १५ सवर्णप्रवरःक्षत्रियश्रेष्ठः उद्रिक्तवर्णोब्राह्मणः

अर्धंतुभीमायचदेहिभद्रेयएपनागर्षभतुल्यरूपः ॥ गौरोयुवासंहननोपपन्नएषोहिवीरोबहुभुक्सदैव ६ साहृष्टरूपेवतुराजपुत्रीतस्यावचःसाधुविशंकमाना ॥ यथा
वदुक्तंप्रचकारसाध्वीतेचापिसर्वेबुभुजुस्तदन्नम् ७ कुशैस्तुभूमौशयनंचकारमाद्रीपुत्रःसहदेवस्तरस्वी ॥ यथास्वकीयान्यजिनानिसर्वेसंस्तीर्यवीराःसुषुपुर्धरण्याम्
८ अगस्त्यशास्तामभितोदिशंतुशिरांसितेषांकुरुसत्तमानाम् ॥ कुंतीपुरस्तात्तुबभूवतेषांपादांतरेचाथबभूवकृष्णा ९ अशेतभूमौसहपांडुपुत्रैःपादोपधानीवकृता
कुशेषु ॥ नतत्रदुःखंमनसाऽपितस्यानचावमेनेकुरुपुंगवांस्तान् १० तेतत्रशूराःकथयांबभूवुःकथाविचित्राःपृतनाधिकाराः ॥ अस्त्राणिदिव्यानिरथांश्चनागान्
खड्गान्गदाश्चापिपरश्वधांश्च ११ तेषांकथास्ताःपरिकीर्त्यमानाःपंचालराजस्यसुतस्तदानीम् ॥ शुश्रावकृष्णांचतदानिषण्णांतेचापिसर्वेददृशुर्मनुष्याः १२ धृ
ष्टद्युम्नोराजपुत्रस्तुसर्वंवृत्तंतेषांकथितंचैवरात्रौ ॥ सर्वंराज्ञेद्रुपदायाखिलेननिवेदयिष्यंस्त्वरितोजगाम १३ पंचालराजस्तुविषण्णरूपस्तान्पांडवानप्रतिविंदमानः ॥
धृष्टद्युम्नंपर्यपृच्छन्महात्माक्वसागताकेननीताचकृष्णा १४ कच्चिन्नशूद्रेणनहीनजेनवैश्येनवाकरदेनोपपन्ना ॥ कच्चित्पदंमूर्ध्निनपंकदिग्धंकच्चिन्नमालापतिताश्म
शाने १५ कच्चित्सवर्णप्रवरोमनुष्यउद्रिक्तवर्णोऽप्युतएवकच्चित् ॥ कच्चिन्नवामोममभूर्ध्निपादःकृष्णाभिमर्शेनकृतोऽद्यपुत्र १६ कच्चिन्नतप्स्येपरमप्रतीतःसंयुज्य
पार्थेननरर्षभेण ॥ वदस्वतत्त्वेनमहानुभावकोऽसौविजेतादुहितुर्ममाद्य १७ विचित्रवीर्यस्यसुतस्यकच्चित्कुरुप्रवीरस्यध्रियंतिपुत्राः ॥ कच्चित्तुपार्थेनयवीयसा
ऽद्यधनुर्गृहीतंनिहतंचलक्ष्यम् १८ ॥ इतिश्रीमहाभारतेआदिपर्वणिस्वयंवरपर्वणिधृष्टद्युम्नप्रत्यागमनेद्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥ ॥ ६ ॥
समाप्तंस्वयंवरपर्व ॥ ॥ अथवैवाहिकपर्व ॥ ॥ वैशंपायनउवाच ॥ ततस्तथोक्तःपरिहृष्टरूपःपित्रेशशंसाथसराजपुत्रः ॥ धृष्टद्युम्नःसोमकानांप्रबर्होवृत्तंयथा
येनहृताचकृष्णा १ ॥ धृष्टद्युम्नउवाच ॥ योऽसौयुवाव्यायतलोहिताक्षःकृष्णाजिनीदेवसमानरूपः ॥ यःकार्मुकाग्र्यंकृतवानधिज्यंलक्ष्यंचयःपातितवान्पृथि
व्याम् २ असज्जमानश्चततस्तरस्वीवृतोद्विजाग्र्यैरभिपूज्यमानः ॥ चक्रामवज्रीवदितेःसुतेषुसर्वैश्चदेवैर्ऋषिभिश्चजुष्टः ३ कृष्णाप्रगृह्याजिनमन्वयात्तंनागंयथाना
गवधूःप्रहृष्टा ॥ अमृष्यमाणेषुनराधिपेषुक्रुद्धेषुवैतत्रसमापतत्सु ४

मूर्ध्निपादस्तुवेषमात्रेणब्राह्मणत्वानिश्चयात्शौर्यस्यचकर्णैकलव्ययोःसूतशूद्रयोरपिदृष्टत्वात्संभावितः १६ कच्चिदितिकामप्रवेदने । पार्थेनसंयुज्यपरमप्रतीतोत्र्यंतहृष्टोऽसि तादृशशौर्यस्याप्यत्रासंभवात्
१७ ध्रियंतिजीवंति १८ ॥ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥ ततइति प्रवर्हउत्तमः १ । २ । ३ । ४

महीमरोहंवृक्षं ५ । ६ । ७ उक्तातास्याभितिशेषः ८ ब्राह्मणसात्ब्राह्मणाधीनं ९ दर्भाणांअजिनाग्रस्यपर्यैजिनंचतदास्तरणंचेतिसमासः १० । ११ । १२ । १३ विद्याम वेदितुमिच्छामः १४ । १५

ततोऽपरःपार्थिवसंघमध्येप्रवृद्धमारुज्यमहीप्ररोहं ॥ प्रकालयन्नेवसपार्थिवौघान्क्रुद्धोऽन्तकःप्राणभृतोयथैव ५ तौपार्थिवानांमिषतांनरेंद्रकृष्णामुपादायगतौन
राग्र्यौ ॥ विभ्राजमानाविवचंद्रसूर्यौबाह्यांपुराद्भार्गवकर्मशालां ६ तत्रोपविष्टार्चिरिवानलस्यतेषांजनित्रीतिममप्रतर्कः ॥ तथाविधैरेवनरप्रवीरैरुपोपविष्टैस्त्रि
भिरग्निकल्पैः ७ तस्यास्ततस्तावभिवाद्यपादावुक्ताचकृष्णात्वभिवादयेति ॥ स्थितांचतत्रैवनिवेद्यकृष्णांभिक्षाप्रचारायगतानराग्र्याः ८ तेषांतुभैक्षंप्रतिगृ
ह्यकृष्णादत्त्वावलिंब्राह्मणसाच्चकृत्वा ॥ तांचैववृद्धांपरिवेष्यतांश्चनरप्रवीरान्स्वयमप्यभुंक्त ९ सुप्तास्तुतेपार्थिवसर्वएवकृष्णाचतेषांचरणोपधाने ॥ आसी
त्पृथिव्यांशयनंचतेषांदर्भाजिनाग्र्यास्तरणोपपन्नम् १० तेनर्दमानाइवकालमेघाःकथाविचित्राः कथयांबभूवुः ॥ नवैश्यशूद्रौपयिकीःकथास्तानचद्विजानांक
थयंतिवीराः ११ निःसंशयंक्षत्रियपुंगवास्तेयथाहियुद्धंकथयंतिराजन् ॥ आशाहिनोव्यक्तमियंसमृद्धामुक्तान्हिपार्थान्शृणुमोऽग्निदाहात् १२ यथाहिलक्ष्यं
निहतंधनुश्चसज्यंकृतंतेनतथाप्रसह्य ॥ यथाहिभाषंतिपरस्परंतेछन्नाध्रुवंतेप्रचरंतिपार्थाः १३ ततःसराजाद्रुपदःप्रहृष्टःपुरोहितंप्रेषयामासतेषाम् ॥ विद्याम
युष्मानितिभाषमाणोमहात्मनःपांडुसुतास्तुकच्चित् १४ गृहीतवाक्योनृपतेःपुरोधागत्वाप्रशंसामभिधायतेषां ॥ वाक्यंसमग्रंनृपतेर्यथावदुवाचचानुक्रमविक्र
मेण १५ विज्ञातुमिच्छत्यवनीश्वरोवःपंचालराजोवरदोवरार्हः ॥ लक्ष्यस्यवेद्धारमिमंहिदृष्ट्वाहर्षस्यनांतंप्रतिपद्यतेसः १६ आख्यातचज्ञातिकुलानुपूर्वीपदं
शिरःसुद्विषतांकुरुध्वम् ॥ प्रल्हादयध्वंत्द्दयंममेदंपंचालराजस्यचसानुगस्य १७ पांडुर्हिराजाद्रुपदस्यराज्ञःप्रियःसखाचात्मसमोबभूव ॥ तस्यैषकामोद्रु
हितामभेयंस्नुषांप्रदास्यामिहिकौरवाय १८ अयंहिकामोद्रुपदस्यराज्ञोत्दृदिस्थितोनित्यमनिंदितांगाः ॥ यदर्जुनोवैपृथुदीर्घबाहुर्धर्मेणविंदेतसुतांममैताम् १९
कृतंहितत्स्यात्सुकृतंममेदंयशश्चपुण्यंचहितंतदेतत् ॥ अथोक्तवाक्यंहिपुरोहितंस्थितंततोविनीतंसमुदीक्ष्यराजा २० समीपतोभीममिदंशशासप्रदीयतांपाद्यम
र्घ्यंतथाऽस्मै ॥ मान्यःपुरोधाद्रुपदस्यराज्ञस्तस्मैप्रयोज्याऽभ्यधिकाहिपूजा २१ भीमस्ततस्तत्कृतवान्नरेंद्रतांचैवपूजांप्रतिगृह्यहर्षात् ॥ सुखोपविष्टंतुपुरोहितं
तदायुधिष्ठिरोब्राह्मणमित्युवाच २२ पंचालराजेनसुतानिसृष्टास्वधर्मदृष्टेनयथानकामात् ॥ प्रदिष्टशुल्काद्रुपदेनराज्ञासातेनवीरेणतथानुवृत्ता २३ नतत्रवर्णेषुकृ
ताविवक्षानचापिशीलेनकुलेनगोत्रे ॥ कृतेनसज्येनहिकार्मुकेणविद्धेनलक्ष्येणहिसाविसृष्टा २४ सेयंतथाऽनेनमहात्मनेहकृष्णाजितापार्थिवसंघमध्ये ॥ नैवंगतेसौम
किरद्यराजासंतापमर्हत्यसुखायकर्तुम् २५ कामश्चयोऽसौद्रुपदस्यराज्ञःसचापिसंपत्स्यतिपार्थिवस्य ॥ संप्राप्यरूपांहिनरेंद्रकन्यामिमामहंब्राह्मणसाधुमन्ये २६

१६ आख्यातकथयत १७ । १८ । १९ । २० । २१ । २२ शुल्कंमूल्यपणं तेनैवअनुवृत्ताअनुसृता २३ तदेवाह कृतेनेति २४ सौमकिर्द्रुपदः २५ संप्राप्यरूपामस्माकंयोग्यस्वरूपां २६

२७ । २८ । २९ ॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेत्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥ ॥ ७ ॥ ॥ जन्यार्थमिति जन्यार्थंवरपक्षीयजनार्थं कृष्णांचतत्रैवाप्रवस्वंपाणि ग्रहणविधिना कृष्णाचेतिपाठेआप्नोतुअन्नंभवदीयत्वाद्भवद्भिःसहैवेतिभावः १ । २ परियाप्यप्रस्थाप्य ३ पुनःक्षत्रियत्वंपरीक्षितुंद्रव्याण्युपसंजहारएकत्रकृत्वादर्शितवान् ४ फलवर्मगवादीनि

नतद्धनुर्मंदबलेनशक्यंमौर्व्यासमायोजयितुंतथाहि ॥ नचाकृतास्त्रेणनहीनजेनलक्ष्यंतथापातयितुंहिशक्यम् २७ तस्मान्नतापंदुहितुर्निमित्तंपंचालराजोर्हतिकर्तुमद्य ॥ नचापितत्पातनमन्यथेहकर्तुंहिशक्यंभुविमानवेन २८ एवंब्रुवत्येवयुधिष्ठिरेतुपंचालराजस्यसमीपतोऽन्यः ॥ तत्राजगामाशुनरोद्वितीयोनिवेदयिष्यन्निहसिद्धमन्नम् २९ ॥ इति श्रीमहाभारते आदिपर्वणि वैवाहिकपर्वणिपुरोहितयुधिष्ठिरसंवादे त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥ ॥ ७ ॥

॥ दूतउवाच ॥ जन्यार्थमन्नंद्रुपदेनराज्ञाविवाहहेतोरुपसंस्कृतंच ॥ तदाप्नुवध्वंकृतसर्वकार्याःकृष्णांचतत्रैवचिरंनकार्यम् १ इमेरथाःकांचनपद्मचित्राःसदश्वयुक्तावसुधाधिपार्हाः ॥ एतान्समारुह्यपरैतसर्वेपंचालराजस्यनिवेशनंतत् २ ॥ वैशंपायनउवाच ॥ ततःप्रयाताःकुरुपुंगवास्तेपुरोहितंतंपरियाप्यसर्वे ॥ आस्थाययानानिमहांतितानिकुंतीचकृष्णाचसहैकयाने ३ श्रुत्वातुवाक्यानिपुरोहितस्ययान्युक्तवान्भारतधर्मराजः ॥ जिज्ञासयैवाथकुरूत्तमानांद्रव्याण्यनेकान्युपसंजहार ४ फलानिमाल्यानिचसंस्कृतानिवर्माणिचर्माणितथाऽऽसनानि ॥ गाश्चैवराजन्नथचैवरज्जूर्बीजानिचान्यानिकृषीनिमित्तम् ५ अन्येषुशिल्पेषुचयान्यपिस्युःसर्वाणिकृत्यान्यखिलेनतत्र ॥ क्रीडानिमित्तान्यपियानितत्रसर्वाणितत्रोपजहारराजा ६ वर्माणिचर्माणिचभानुमंतिखड्गामहांतोऽश्वरथाश्चचित्राः ॥ धनूंषिचाग्र्याणिशराश्चचित्राःशक्त्यृष्टयःकांचनभूषणाश्च ७ प्रासाभुशुंडयश्चपरश्वधाश्चसांग्रामिकंचैवतथैवसर्वम् ॥ शय्यासनान्युत्तमवस्तुवंतितथैववासोविविधंचतत्र ८ कुंतीतुकृष्णांपरिगृह्यसाध्वीमंतःपुरंद्रुपदस्याविवेश ॥ स्त्रियश्चतांकौरवराजपत्नींप्रत्यर्चयामासुरदीनसत्वाः ९ तान्सिंहविक्रांतगतीन्निरीक्ष्यमहर्षभाक्षानजिनोत्तरीयान् ॥ गूढोत्तरांसान्भुजगेंद्रभोगप्रलंबबाहून्पुरुषप्रवीरान् १० राजाचराज्ञःसचिवाश्चसर्वेपुत्राश्चराज्ञःसुहृदस्तथैव ॥ प्रेष्याश्चसर्वेनिखिलेनराजन्हर्षंसमापेतुरतीवतत्र ११ तेतत्रवीराःपरमासनेषुसपादपीठेष्वविशंकमानाः ॥ यथानुपूर्वंविविशुर्नराग्र्यास्तथामहार्हेषुनविस्मयंतः १२ उच्चावचंपार्थिवभोजनीयंपात्रीषुजांबूनदराजतीषु ॥ दासाश्चदास्यश्चसुमृष्टवेषाःसंभोजकाश्चाप्युपजह्रुरन्नम् १३ तेतत्रभुक्त्वापुरुषप्रवीरायथात्मकामंसुभृशंप्रतीताः ॥ उत्क्रम्यसर्वाणिवसूनिराजन्सांग्रामिकंतेविविशुर्नृवीराः १४

क्रमात्त्रैवर्णिकयोग्यानि ५ कृंततीतिकृत्यानि । कृतीछेदनेऽस्मात्क्यप् शिल्पिनांप्रहरणानिवास्यादीनि क्रीडानिमित्तानिशुष्केषिसदोरंजनादिरूपाब्राह्मणक्षत्रियादीनांक्रीडास्तासांसाधनानि अल्पानियज्ञपात्राणि कृत्रिमाश्वादीनिसरंगपटानिच तत्रदेशे तत्रकाले तत्रपरीक्षणेनिमित्ते ६ । ७ उत्तमवस्तूनिरत्नखचिततांबूलधानीप्रभृतीनितद्वंति मतोर्मस्यवत्वमार्षं ८ । ९ गूढोत्तरांसान्गूढजत्रून् १० । ११ । १२ सुमृष्टःअभ्यंजनवासोलंकरणादिभिःसम्यक्परिष्कृतःपांडवानांवेषोयैस्तेसुमृष्टवेषाः । तेचसंभोजकाश्चयथायोग्यंतांबूलादिकमपूपादिकंचान्नमदनीयमुपाजह्रुः १३ । १४



१५ ॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेचतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥ ॥ ७ ॥ ॥ ततइति ब्राह्मेणब्राह्मणार्थमुचितेनाभ्युत्थानादिना परिग्रहेणआतिथ्येन १ । २ । ३

तल्लक्षयित्वाद्रुपदस्यपुत्रोराजाचसर्वैःसहमंत्रिमुख्यैः ॥ समर्थयामासुरुपेत्यहृष्टाःकुंतीसुतान्पार्थिवराजपुत्रान् १५ ॥ इति श्रीमहाभारते आदिपर्वणि वैवाहिकपर्वणि युधिष्ठिरादिपरीक्षणे चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ ततआहूयपांचाल्योराजपुत्रंयुधिष्ठिरम् ॥ परिग्रहेणब्राह्मेणपरिगृह्यमहाद्युतिः १ पर्यपृच्छददीनात्माकुंतीपुत्रंसुवर्चसम् ॥ कथंजानीमभवतःक्षत्रियान्ब्राह्मणानुत २ वैश्यान्वागुणसंपन्नानथवाशूद्रयोनिजान् ॥ मायामास्थायवाविप्रांश्चरतःसर्वतोदिशम् ३ कृष्णाहेतोरनुप्राप्तादेवाःसंदर्शनार्थिनः ॥ ब्रवीतुनोभवान्सत्यंसंदेहोह्यत्रनोमहान् ४ अपिनःसंशयस्यांतेमनःसंतुष्टिमावहेत् ॥ अपिनोभागधेयानिशुभानिस्युःपरंतप ५ इच्छयाब्रूहितत्सत्यंसत्यंराजसुशोभते ॥ इष्टापूर्तेनचतथावक्तव्यमनृतंनतु ६ श्रुत्वाह्यमरसंकाशतववाक्यमरिंदम ॥ ध्रुवंविवाहकरणमास्थास्यामिविधानतः ७ ॥ युधिष्ठिरउवाच ॥ माराजन्विमनाभूस्त्वंपांचाल्यप्रीतिरस्तुते ॥ ईप्सितस्तेध्रुवःकामःसंवृत्तोऽयमसंशयम् ८ वयंहिक्षत्रियाराजन्पांडोःपुत्रामहात्मनः ॥ ज्येष्ठंमांविद्धिकौंतेयंभीमसेनार्जुनाविमौ ९ आभ्यांतवसुताराजन्निर्जिताराजसंसदि ॥ यमौचतत्रकुंतीचयत्रकृष्णाव्यवस्थिता १० व्येतुतेमानसंदुःखंक्षत्रियाःस्मोनरर्षभ ॥ पद्मिनीवसुतेयंतेह्रदादन्यह्रदंगता ११ इतितथ्यंमहाराजसर्वमेतद्ब्रवीमिते ॥ भवान्हिगुरुरस्माकंपरमंचपरायणम् १२ ॥ वैशंपायनउवाच ॥ ततःसद्रुपदोराजाहर्षव्याकुललोचनः ॥ प्रतिवक्तुंमुदायुक्तोनाशकत्तंयुधिष्ठिरम् १३ यत्नेनतुसतंहर्षंसन्निगृह्यपरंतपः ॥ अनुरूपंतदावाचाप्रत्युवाचयुधिष्ठिरम् १४ पप्रच्छचैनंधर्मात्मायथातेप्रद्रुताःपुरात् ॥ सतस्मैसर्वमाचख्यावानुपूर्व्येणपांडवः १५ तच्छ्रुत्वाद्रुपदोराजाकुंतीपुत्रस्यभाषितम् ॥ विगर्हयामासतदाधृतराष्ट्रंनरेश्वरम् १६ अश्वासयामासचतंकुंतीपुत्रंयुधिष्ठिरम् ॥ प्रतिजज्ञेचराज्यायद्रुपदोवदतांवरः १७ ततःकुंतीचकृष्णाचभीमसेनार्जुनावपि ॥ यमौचराज्ञासंदिष्टंविविशुर्भवनंमहत् १८ तत्रतेन्यवसन्राजन्यज्ञसेनेनपूजिताः ॥ प्रत्याश्वस्तस्ततोराजासहपुत्रैरुवाचतम् १९ गृह्णातुविधिवत्पाणिमद्ययंकुरुनंदनः ॥ पुण्येऽहनिमहाबाहुरर्जुनःकुरुतांक्षणम् २० ॥ वैशंपायनउवाच ॥ तमब्रवीत्ततोराजाधर्मात्माचयुधिष्ठिरः ॥ ममापिदारसंबंधःकार्यस्तावद्विशांपते २१ ॥ द्रुपदउवाच ॥ भवान्वाविधिवत्पाणिंगृह्णातुदुहितुर्मम ॥ यस्यवामन्यसेवीरतस्यकृष्णामुपादिश २२ ॥ युधिष्ठिरउवाच ॥ सर्वेषांमहिषीराजन्द्रौपदीनोभविष्यति ॥ एवंप्रव्याहृतंपूर्वंममभात्राविशांपते २३ अहंचाप्यनिविष्टोवैभीमसेनश्चपांडवः ॥ पार्थेनविजिताचैषारत्नभूतासुतातव २४

४ । ५ इष्टंयागादि । आपूर्तंवाप्यादि । तवधर्मकृत्यंनश्येयचसत्यंब्रूयाइत्यर्थः ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ क्षणंदेवपूजादिपर्वोत्सवंविवाहात्माकालीनंकुलधर्मं । 'क्षणःपर्वोत्सवेऽपिस्यात्तथामानेऽप्यनेहसः' इतिमेदिनी २० । २१ । २२ । २३ अनिविष्टःअकृतविवाहः २४

समयोनियमः २५ ज्वलनेज्वलनसमीपे करान्गृह्णातुपंचपाणिग्रहणानिकरोतु २६ पुंसःपुमांसः । यद्वापुंसःवेवकर्तुःपरमात्मनःसकाशात्नश्रूयंते । तस्मान्नैकाद्वोपतीविदतइतिवेदविरुद्धंच । अवि
हितंनिषिद्धंचेतदित्यर्थः २७ । २८ सूक्ष्मःनैकस्यैबहवःसहपतयइतिश्रुत्यासहेतियुगपद्बहुपतित्वनिषेधोविहितोनतुसमयभेदेनततश्चापिनिषिद्धं । मात्रासमेत्यभुंक्तेत्याज्ञप्तंचनलंघनीयं । पित्रोरा
ज्ञयानिषिद्धमपिकर्तव्यंपरशुरामकृतमातृवधवत्किमुतानिषिद्धमितिभावः । पूर्वेषांप्रचेतःप्रभृतीनां तैर्यातंवर्त्मबहूनामेकपत्नीत्वमनुयामहे तच्चआनुपूर्व्येणैवनत्वक्रमेण २९ । ३० । ३१ । ३२

एषनःसमयोराजन्रत्नस्यसहभोजनम् ॥ नचतंहातुमिच्छामःसमयंराजसत्तम २५ सर्वेषांधर्मतःकृष्णामहिषीनोभविष्यति ॥ आनुपूर्व्येणसर्वेषांगृह्णातुज्वलने
करान् २६ ॥ द्रुपदउवाच ॥ एकस्यबह्व्योविहितामहिष्यःकुरुनंदन ॥ नैकस्याबहवःपुंसःश्रूयंतेपतयःक्वचित् २७ लोकवेदविरुद्धंत्वंनाधर्मंधर्मविच्छुचिः ॥
कर्तुमर्हसिकौंतेयकस्मात्तेबुद्धिरीदृशी २८ ॥ युधिष्ठिरउवाच ॥ सूक्ष्मोधर्मोमहाराजनास्यविद्मोवयंगतिम् ॥ पूर्वेषामानुपूर्व्येणयातंवर्त्मानुयामहे २९ नमेवा
गनृतंप्राहनाधर्मेधीयतेमतिः ॥ एवंचैववदत्यंबाममचैतन्मनोगतम् ३० एषधर्मोध्रुवोराजंश्चरैनमविचारयन् ॥ माचशंकातत्रतेस्यात्कथंचिदपिपार्थिव ३१
॥ द्रुपदउवाच ॥ त्वंचकुंतीचकौंतेयधृष्टद्युम्नश्चमेसुतः ॥ कथयंत्वितिकर्तव्यंश्वःकालेकरवामहे ३२ ॥ वैशंपायनउवाच ॥ तेसमेत्यततःसर्वेकथयंतिस्मभारत ॥
अथद्वैपायनोराजन्नभ्यागच्छद्यदृच्छया ३३ ॥ इतिश्रीमहाभारते आदिपर्वणि वैवाहिकपर्वणि द्वैपायनागमनेपंचनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥ ॥
॥ वैशंपायनउवाच ॥ ततस्तेपांडवाःसर्वेपांचाल्यश्चमहायशाः ॥ प्रत्युत्थायमहात्मानंकृष्णंसर्वेऽभ्यवादयन् १ प्रतिनंद्यसतांपूजांपृष्ट्वाकुशलमंततः ॥ आसनेकां
चनेशुद्धेनिषसादमहामनाः २ अनुज्ञातास्तुतेसर्वेकृष्णेनामिततेजसा ॥ आसनेषुमहार्हेषुनिषेदुर्द्विपदांवराः ३ ततोमुहूर्तान्मधुरांवाणीमुच्चार्यपार्षतः ॥ पप्रच्छ
तंमहात्मानंद्रौपद्यर्थेविशांपते ४ कथमेकाबहूनांस्याद्धर्मपत्नीनसंकरः ॥ एतन्मेभगवान्सर्वंप्रब्रवीतुयथातथम् ५ ॥ व्यासउवाच ॥ अस्मिन्धर्मेविप्रलब्धेलोकवे
दविरोधके ॥ यस्ययस्यमतंयद्यच्छ्रोतुमिच्छामितस्यतत् ६ ॥ द्रुपदउवाच ॥ अधर्मोऽयंममतोविरुद्धोलोकवेदयोः ॥ नह्येकाविद्यतेपत्नीबहूनांद्विजसत्तम ७
नचाप्याचरितःपूर्वैरयंधर्मोमहात्मभिः ॥ नचाप्यधर्मोविद्वद्भिश्चरितव्यःकथंचन ८ ततोऽहंनकरोम्येनंव्यवसायंक्रियांप्रति ॥ धर्मःसदैवसंदिग्धःप्रतिभातिहि
मेत्वयम् ९ ॥ धृष्टद्युम्नउवाच ॥ यवीयसःकथंभार्यांज्येष्ठोभ्राताद्विजर्षभ ॥ ब्रह्मन्समभिवर्तेतसद्वृत्तःसंस्तपोधन १० नतुधर्मस्यसूक्ष्मत्वाद्गतिविद्मःकथंचन ॥
अधर्मोधर्मइतिवाव्यवसायोनशक्यते ११ कर्तुमस्मद्विधैर्ब्रह्मंस्ततोऽयंनव्यवस्यते ॥ पंचानांमहिषीकृष्णाभवत्वितिकथंचन १२ ॥ युधिष्ठिरउवाच ॥ नमेवाग
नृतंप्राहनाधर्मेधीयतेमतिः ॥ वर्ततेहिमनोमेऽत्रनैषोऽधर्मःकथंचन १३ 

३३ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपे पंचनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥ ततस्तेइति कृष्णंव्यासं १ । २ । ३ । ४ । ५ विप्रलब्धेअतिगहनतयाशास्त्रीयेनकापठ्येनहते
अतएवलोकवेदविरोधके ६ । ७ । ८ क्रियांप्रतिव्यवसायंनिश्चयं ९ । १० । ११ । १२ नमेइति वक्तृत्वंवाचएवधर्मोनपुरुषस्यनिर्विशेषस्यअतउक्तंनमेवागिति । एवंमतिमनसोरपिज्ञेयं । वागादी
नांवक्तृत्वादिधर्मवतामसंगेनपुंसासंबंधस्तुनवास्तवःसंभवति । अतएवोक्तं । 'निःसंगस्यससंगेनकूटस्थस्यविकारिणा ॥ आत्मनोऽनात्मनायोगोवास्तवोनोपपद्यते'इति । अत्रपंचानामेकपत्नीत्वे १३

१४ । १५ । १६ । १७ । १८ । १९ । २० राजानंद्रुपदं २१ उभौव्यासद्रुपदौ २२ अत्रयत्तद्देवाददुरित्यादिनात्रिपथगोनदीमित्यंतेनारायणुपाख्यानग्रंथोऽध्यायद्वयात्मकःक्वचित्पुस्तकेपठ्यत
२३ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥ पुरेति शमितायज्ञेपशुवधकर्तातस्यकर्मशामित्रं १ यमोदीक्षितः सत्रेहियेयजमानास्तऋत्विजःसर्वे

श्रूयतेहिपुराणेऽपिजटिलानामगौतमी ॥ ऋषीनध्यासितवतीसप्तधर्मभृतांवरा १४ तथैवमुनिजावार्क्षीतपोभिर्भावितात्मनः ॥ संगताऽभूद्दशभ्रातॄनेकनाम्नःप्रचे
तसः १५ गुरोर्हिवचनंप्राहुर्धर्म्यंधर्मज्ञसत्तम ॥ गुरूणांचैवसर्वेषांमातापरमकोगुरुः १६ साचाप्युक्तवतीवाचंभैक्षवद्भुज्यतामिति ॥ तस्मादेतदहंमन्येपरंधर्मंद्वि
जोत्तम १७ ॥ कुंत्युवाच ॥ एवमेतद्यथाप्राहधर्मचारीयुधिष्ठिरः ॥ अनृतान्मेभयंतीव्रंमुच्येऽहमनृतात्कथम् १८ ॥ व्यासउवाच ॥ अनृतान्मोक्ष्यसेभद्रेधर्म
श्चैषसनातनः ॥ ननुवक्ष्यामिसर्वेषांपांचालशृणुमेस्वयम् १९ यथाऽयंविहितोधर्मोयतश्चायंसनातनः ॥ यथाचप्राहकौंतेयस्तथाधर्मोनसंशयः २० ॥ वैशंपा
यनउवाच ॥ ततउत्थायभगवान्व्यासोद्वैपायनःप्रभुः ॥ करेगृहीत्वाराजानंराजवेश्मसमाविशत् २१ पांडवाश्चापिकुंतीचधृष्टद्युम्नश्चपार्षतः ॥ विविशुर्यत्रतत्रैव
प्रतीक्षंतेस्मतावुभौ २२ ततोद्वैपायनस्तस्मैनरेंद्रायमहात्मने ॥ आचख्यौतद्यथाधर्मोबहूनामेकपत्निता २३ ॥ इतिश्रीमहाभारते आदिपर्वणिवैवाहिकपर्वणि
व्यासवाक्ये षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥ ॥ व्यासउवाच ॥ पुरावैनैमिषारण्येदेवाःसत्रमुपासते ॥ तत्रवैवस्वतोराजनशामित्रमकरोत्तदा १
ततोयमोदीक्षितस्तत्रराजन्नामारयत्कंचिदपिप्रजानाम् ॥ ततःप्रजास्ताबहुलाबभूवुःकालातिपातान्मरणप्रहीणाः २ सोमश्चशक्रोवरुणःकुबेरःसाध्यारुद्रावसवो
ऽथाश्विनौच ॥ प्रजापतिर्भुवनस्यप्रणेतासमाजग्मुस्तत्रदेवास्तथाऽन्ये ३ ततोऽब्रुवन्लोकगुरुंसमेताभयात्तीव्रान्मानुषाणांविवृद्ध्या ॥ तस्माद्भयादुद्विजंतःसुखे
प्सवःप्रयामसर्वेशरणंभवंतम् ४ ॥ पितामहउवाच ॥ किंवोभयंमानुषेभ्योयूयंसर्वेयदाऽमराः ॥ मावोमर्त्यसकाशाद्वैभयंभवितुमर्हति ५ ॥ देवाऊचुः ॥ मर्त्याअ
मर्त्याःसंवृत्तानविशेषोऽस्तिकश्चन ॥ अविशेषादुद्विजंतोविशेषार्थमिहागताः ६ ॥ श्रीभगवानुवाच ॥ वैवस्वतोव्याप्टतःसत्रहेतोस्तेनत्विमेनम्रियंतेमनुष्याः ॥
तस्मिन्नेकाग्रेकृतसर्वकार्येततएषांभवितैवांतकालः ७ वैवस्वतस्यैवतनुर्विभक्तावीर्येणयुष्माकमुतप्रवृद्धा ॥ सैषामंतोभविताह्यंतकालेनतत्रवीर्यंभवितानरेषु ८ ॥ व्यास
उवाच ॥ ततस्तुतेपूर्वजदेववाक्यंश्रुत्वाजग्मुर्यत्रदेवायजंते ॥ समासीनास्तेसमेतामहाबलाभागीरथ्यांददृशुःपुंडरीकम् ९ दृष्ट्वाचतद्विस्मितास्तेबभूवुस्तेषामिंद्रस्त
त्रशूरोजगाम ॥ सोऽपश्यद्योषामथपावकप्रभांयत्रदेवीगंगासततंप्रसूता १० सातत्रयोषारुदतीजलार्थिनीगंगांदेवींव्यवगाह्यव्यतिष्ठत् ॥ तस्याऽश्रुबिंदुःपतितो
 जलेयस्तत्पद्ममासीदथतत्रकांचनम् ११ तदद्भुतंप्रेक्ष्यवज्रीतदानीमपृच्छत्तांयोषितमंतिकाद्वै ॥ कात्वंभद्रेरोदिषिकस्यहेतोर्वाक्यंतथ्यंकामयेऽहंब्रवीहि १२

षांतेषांदीक्षाऽस्तियजमानत्वात् कालातिपातान्मरणकालातिक्रमात् २ यत्रप्रजापतिस्तत्रसोमादयःसमाजग्मुः ३ । ४ । ५ । ६ तस्मिन्कृतसर्वकार्येसमापितयज्ञेसत्येषांलोकानामंतकालोभविता
७ अतःवैवस्वतस्यैवतनुःमृत्युःप्रवृद्धायोगबलेनविपुलाविभक्ताद्वैधीभावंगतासतीसाएषामंतोविनाशोभविता वीर्यंदेवतासाम्यं ८ । ९ । १० तस्याःअश्रुबिंदुः संधिरार्षः ११ कामयेश्रोतुं १२

१३ युवतीसहायंरुद्रं १४ अक्षैर्हेतुभिःप्रमत्तमसावधानं १५ संस्तंभितोवज्रंमोक्तुमुद्यतःसन् । अतएवस्थाणुरिव १६ क्रीडयापर्याप्तंक्रीडासमाप्ता १७। १८ एनंबिलद्वाररोधिनमद्रिराजंनिवर्त्तयदूरीकुरु यथाबलादिकंतवाममेयंतथानिवर्त्तय १९ । २० ततःशीघ्रमप्रवेशाद्धेतोः २१ । २२ एवंदरींप्रविशेत्युक्तउवाचहेभवअद्यत्वमशेषस्यभुवनस्यआद्यःपतिरसि । अद्येत्यनेनमांजित्वैवनत्वन्यथेतिसूचितं

॥ रुद्रउवाच ॥ त्वंवेत्स्यसेमामिहयाऽस्मिशक्रयदर्थंचाहंरोदिमिमंदभाग्या ॥ आगच्छराजन्पुरतोगमिष्येद्रष्टाऽसितद्रोदिमियत्कृतेऽहम् १३ ॥ व्यासउवाच ॥ तांगच्छंतीमन्वगच्छत्तदानींसोऽपश्यदारात्तरुणंदर्शनीयम् ॥ सिद्धासनस्थंयुवतीसहायंक्रीडंतमक्षैर्गिरिराजमूर्ध्नि १४ तमब्रवीद्देवराजोममेदंत्वंविद्धिविद्वन्भुवनंव शेस्थितम् ॥ ईशोऽहमस्मीतिसमन्युरब्रवीद्दृष्ट्वातमक्षैःसुभृशंप्रमत्तम् १५ क्रुद्धंचशक्रंप्रसमीक्ष्यदेवोजहासशक्रंचशनैरुदैक्षत ॥ संस्तंभितोऽभूदथदेवराजस्तेनेक्षि तःस्थाणुरिवावतस्थे १६ यदातुपर्याप्तमिहास्यक्रीडयातदादेवींरुदतींतामुवाच ॥ आनीयतामेषयतोऽहमाराद्वैनंदर्पःपुनरप्याविशेत १७ ततःशक्रःस्पृष्टमात्र स्तयातुस्रस्तैरंगैःपतितोऽभूद्धरण्याम् ॥ तमब्रवीद्भगवानुग्रतेजामैवंपुनःशक्रकृथाःकथंचित् १८ निवर्त्तयैनंचमहाद्रिराजंबलंचवीर्यंचतवाप्रमेयम् ॥ छिद्रस्यचै वाविशमध्यमस्ययत्रासतेत्वद्विधाःसूर्यभासः १९ सतद्विवृत्यविवरंमहागिरेस्तुल्यद्युतींश्चतुरोऽन्यान्ददर्श ॥ सतानभिप्रेक्ष्यबभूवदुःखितःकच्चिन्नाहंभवितावैयथेमे २० ततोदेवोगिरिशोवज्रपाणिंविवृत्यनेत्रेकुपितोऽभ्युवाच ॥ दरीमेतांप्रविशत्वंशतक्रतोयन्मांबाल्यादवमंस्थाःपुरस्तात् २१ उक्तस्त्वेवंविभुनादेवराजःप्रावेपता र्त्तोभृशमेवाभिषंगात् ॥ स्रस्तैरंगैरनिलेनेवनुन्नमश्वत्थपत्रंगिरिराजमूर्ध्नि २२ सप्रांजलिर्वैवृषवाहनेनप्रवेपमानःसहसैवमुक्तः ॥ उवाचदेवंबहुरूपमुग्रमद्याशेषस्य भुवनस्यत्वंभवाऽऽद्यः २३ तमब्रवीदुग्रवर्चाःप्रहस्यनैवंशीलाःशेषमिहाप्नुवंति ॥ एतेप्येवंभवितारःपुरस्तात्तस्मादेतांदरीमाविश्यशेष्व २४ तत्रह्येवंभवितारोनसंश योयोनिंसर्वेमानुषीमाविशध्वम् ॥ तत्रयूयंकर्मकृत्वाऽविषह्यंबहूनन्यान्निधनंप्रापयित्वा २५ आगंतारःपुनरेवेंद्रलोकंस्वकर्मणापूर्वचितंमहार्हम् ॥ सर्वंमयाभाषितमे तदेवंकर्तव्यमन्यद्विविधार्थयुक्तम् २६ ॥ पूर्वेंद्राऊचुः ॥ गमिष्यामोमानुषंदेवलोकाद्दुराधरोविहितोयत्रमोक्षः ॥ देवास्त्वस्मानादधीरन्जनन्यांधर्मोवायुर्मघवा नाश्विनौच ॥ अस्त्रैर्दिव्यैर्मानुषान्योधयित्वाआगंतारःपुनरेवेंद्रलोकम् २७ ॥ व्यासउवाच ॥ एतच्छ्रुत्वावज्रपाणिर्वचस्तुदेवश्रेष्ठंपुनरेवेदमाह ॥ वीर्येणाहंपुरुषं कार्यहेतोर्दद्यामेषांपंचमंमत्प्रसूतम् २८ विश्वभुग्भूतधामाचशिबिरिंद्रःप्रतापवान् ॥ शांतिश्चतुर्थस्तेषांवैतेजस्वीपंचमःस्मृतः २९ तेषांकामंभगवानुग्रधन्वाप्र दादिष्टंसन्निसर्गाद्यथोक्तम् ॥ तांचाप्येषांयोपितंलोककांतांश्रियंभार्यांव्यदधान्मानुषेषु ३० तैरेवसार्धंतुततःसदेवोजगामनारायणमप्रमेयम् ॥ अनंतमव्यक्तम जंपुराणंसनातनंविश्वमनंतरूपम् ३१

२३ शेषंप्रसादं 'शेषःसंकर्षणेवधे ॥ अनंतेनाम्प्रसादेच'इतिमेदिनी २४ । २५ । २६ दुराधरोदुष्प्रापः २७ वीर्येणशुक्रद्वारापुरुषमंशभूतंदद्यां । स्वयंतुआधिकारिकत्वाद्दिवितिष्ठेयमितिभावः २८ तेज स्वीइंद्रांशः २९ सन्निसर्गात्सुस्वभावात् श्रियमिति द्रौपदीस्वर्गश्रीःतां ३० तैर्विश्वभुगादिभिः सदेवोमहादेवः ३१



व्यदधाद्विहितवान्आज्ञप्तवानित्यर्थः उद्धबर्हउद्धृतवान् ३२ अत्रकेशावेवरेतोरूपौ पांडवानामिवरामकृष्णयोरपिप्रकरणसंगत्यर्थंसाक्षाद्देवरेतसउत्पत्तेरवश्यवक्तव्यत्वात् । अतएवदेवक्यांरोहि ण्यांचसाक्षात्केशप्रवेशउच्यतेनतुवसुदेवे । तथासतितुदेवानांरेतोवर्षंवर्षस्यरेतऔषधयइत्यादिश्रौतप्रनाडद्याऽस्मदादिवत्तयोरपिव्यवधानेनदेवप्रभवत्वंस्यात् । तथाच एतन्नानावताराणांनिधानंबीजम व्ययमितिभगवतःसाक्षान्मत्स्याद्यवतारबीजत्वमुच्यमानंविरुध्येत अपिचकेशरेतसोर्देहजत्वेसमानेऽपिरेतःप्रभवत्वेऽर्वाक्स्रोतस्त्वेनमनुष्यत्वंपुत्रत्वंचस्यात् । तथाचकृष्णस्तुभगवान्स्वयमितिश्रीमद्भा

सचापितद्व्यदधात्सर्वमेवततःसर्वेसंबभूवुर्धरण्याम् ॥ सचापिकेशौहरिरुद्बबर्हशुक्लमेकमपरंचापिकृष्णम् ३२ तौचापिकेशौनिविशेतांयदूनांकुलेस्त्रियौदेवकींरो हिणींच ॥ तयोरेकोबलदेवोबभूवयोऽसौश्वेतस्तस्यदेवस्यकेशः ॥ कृष्णोद्वितीयःकेशवःसंबभूवकेशोयोऽसौवर्णतःकृष्णउक्तः ३३ येतेपूर्वंशक्ररूपानिबद्धास्त स्यांदर्यापर्वतस्योत्तरस्य ॥ इहैवतेपांडवावीर्यवंतःशक्रस्यांशःपांडवःसव्यसाची ३४ एवमेतेपांडवाःसंबभूवुर्येतेराजन्पूर्वमिंद्राबभूवुः ॥ लक्ष्मीश्चैषांपूर्वमेवोप दिष्टाभार्यायैषाद्रौपदीदिव्यरूपा ३५ कथंहिस्त्रीकर्मणातेमहीतलात्समुत्तिष्ठेदन्यतोदैवयोगात् ॥ यस्यारूपंसोमसूर्यप्रकाशंगंधश्चास्याःक्रोशमात्रात्प्रवाति ३६ इदंचान्यत्प्रीतिपूर्वंनरेंद्रददानितेवरमत्यद्भुतंच ॥ दिव्यंचक्षुःपश्यकुंतीसुतांस्त्वंपुण्यैर्दिव्यैःपूर्वदेहैरुपेतान् ३७ ॥ वैशंपायनउवाच ॥ ततोव्यासःपरमोदार कर्माशुचिर्विप्रस्तपसातस्यराज्ञः ॥ चक्षुर्दिव्यंप्रददौतांश्चसर्वान्राजाऽपश्यत्पूर्वदेहैर्यथावत् ३८ ततोदिव्यान्हेमकिरीटमालिनःशक्रप्रख्यान्पावकादित्यवर्णान् ॥ बद्धापीडांश्चारुरूपांश्चयूनोव्यूढोरस्कांस्तालमात्रान्ददर्श ३९ दिव्यैर्वस्त्रैररजोभिःसुगंधैर्माल्यैश्चाग्र्यैःशोभमानानतीव ॥ साक्षात्त्र्यक्षान्वावसूंश्चापिरुद्राना दित्यान्वासर्वगुणोपपन्नान् ४० तान्पूर्वेंद्रानभिवीक्ष्याभिरूपान्शक्रात्मजंचेंद्ररूपंनिशम्य ॥ प्रीतोराजाद्रुपदोविस्मितश्चदिव्यांमायांतामवेक्ष्याप्रमेयाम् ४१ तां चैवाग्र्यांस्त्रियमतिरूपयुक्तांदिव्यांसाक्षात्सोमवह्निप्रकाशाम् ॥ योग्यांतेषांरूपतेजोयशोभिःपत्नींमत्वाहृष्टवान्पार्थिवेंद्रः ४२ सतद्दृष्ट्वामहदाश्चर्यरूपंजग्राहपा दौसत्यवत्याःसुतस्य ॥ नैतच्चित्रंपरमर्षेत्वयीतिप्रसन्नचेताःसउवाचचैनम् ४३ ॥ व्यासउवच ॥ आसीत्तपोवनेकाचिदृषेःकन्यामहात्मनः ॥ नाध्यगच्छत्प तिंसातुकन्यारूपवतीसती ४४ तोषयामासतपसासाकिलोग्रेणशंकरम् ॥ तामुवाचेश्वरःप्रीतोवृणुकाममितिस्वयम् ४५ सैवमुक्ताऽब्रवीत्कन्यादेवंवरदमीश्वरम् ॥ पतिंसर्वगुणोपेतमिच्छामीतिपुनःपुनः ४६ ददौतस्यैसदेवेशस्तंवरंप्रीतमानसः ॥ पंचतेपतयोभद्रेभविष्यंतीतिशंकरः ४७ साप्रसादयतीदेवमिदंभूयोऽभ्यभा षत ॥ एकंपतिंगुणोपेतंत्वत्तोऽर्हामीतिशंकर ४८ तांदेवदेवःप्रीतात्मापुनःप्राहशुभंवचः ॥ पंचकृत्वस्त्वयोक्तोऽहंपतिंदेहीतिवैपुनः ४९

गवतोक्तिःसंगच्छते । नचकेशोद्धरणात्कृष्णस्याप्यंशत्वंप्रतीयतइतिवाच्यं । केशस्यदेहावयवत्वाभावात् । तस्मान्नसुचिवधेकर्त्तव्येयथाऽपांफेनेवज्रस्यप्रवेशएवंदेवकीरोहिण्योर्जठरप्रवेशेकर्त्त व्येकेशद्वयेनद्वारभूतेनभगवतःकार्त्स्न्येनैवाविर्भावोद्रष्टव्यइतियुक्तं ३३ । ३४ । ३५ । ३६ दिव्यंद्योतमानंदिविहितंवा सार्वज्ञ्यप्रदत्वात् ३७ तस्यराज्ञः तस्मैराज्ञे ३८ बद्धापीडान्नृप रिहितालंकारान तालमात्रान्तालवृक्षप्रमाणान् ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९

९० । ९१ । ९२ । ९३ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपे सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥ ॥ ७ ॥ ॥ अश्रुत्वेति विहितस्यदैवोपस्थापितस्यअप
यानंउपेक्षा तदेवविधानंप्राकृतंउपपन्नंकर्तुंयुक्तं १ ग्रंथिर्ग्रंथना स्वकर्मणाइदानींतनेनविहितंसिद्धं निमित्तंतपः २ । ३ । ४ पौर्व्यंपुंस्यत्यनेनेतितं नतुपुंर्व्यंतस्यावैवाहिकत्वात् पौर्व्यमिति

तत्तथाभविताभद्रंवचस्तद्भद्रमस्तुते ॥ देहमन्यंगतायास्तेसर्वमेतद्भविष्यति ९० द्रुपदैषाहिसाजज्ञेसुतावैदेवरूपिणी ॥ पंचानांविहितापत्नीकृष्णापार्षत्यनिं
दिता ९१ स्वर्गश्रीःपांडवार्थंतुसमुत्पन्नामहामखे ॥ सेहतप्त्वातपोघोरंदुहितृत्वंतवागता ९२ सैषादेवीरुचिरादेवजुष्टापंचानामेकास्वकृतेनेहकर्मणा ॥ सृष्टास्व
यंदेवपत्नीस्वयंभुवाश्रुत्वाराजन्द्रुपदेष्टंकुरुष्व ९३ ॥ इतिश्रीमहाभारते आदिपर्वणि वैवाहिकपर्वणि पंचेंद्रोपाख्याने सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥
॥ द्रुपदउवाच ॥ अश्रुत्वैवंवचनंतेमहर्षेमयापूर्वंयतितंसंविधातुम् ॥ नवैशक्यंविहितस्यापयानंतदेवेदमुपपन्नंविधानम् १ दिष्टस्यग्रंथिरनिवर्तनीयःस्वकर्मणा
विहितंनेहकिंचित् ॥ कृतंनिमित्तंहिवरैकहेतोस्तदेवेदमुपपन्नंविधानम् २ यथैवकृष्णोक्तवतीपुरस्तान्नैकान्पतीन्मेभगवान्ददातु ॥ सचाप्येवंवरमित्यब्रवीत्तांदेवो
हिवेत्तापरमंयदत्र ३ यदिचैवंविहितःशंकरेणधर्मोऽधर्मोवानात्रममापराधः ॥ गृह्णंत्विमेविधिवत्पाणिमस्यायथोपजोषंविहितैषांहिकृष्णा ४ ॥ वैशंपायनउवाच ॥
ततोऽब्रवीद्भगवान्धर्मराजमद्यैवपुण्याहमुतवःपांडवेयाः ॥ अद्यपौष्यंयोगमुपैतिचंद्रमाःपाणिंकृष्णायास्त्वंगृहाणाद्यपूर्वम् ५ ततोराजायज्ञसेनःसपुत्रोजन्यार्थमुक्तंब
हुतत्तदग्र्यम् ॥ समानयामाससुतांचकृष्णामाप्लाव्यरत्नैर्बहुभिर्विभूष्य ६ ततस्तुसर्वेसुहृदोनृपस्यसमाजग्मुःसहितामंत्रिणश्च ॥ द्रष्टुंविवाहंपरमप्रतीताद्विजाश्चपौ
राश्चयथाप्रधानाः ७ ततोऽस्यवेश्माग्र्यजनोपशोभितंविस्तीर्णपद्मोत्पलभूषिताजिरम् ॥ बलौघरत्नौघविचित्रमाबभौनभोयथानिर्मलतारकान्वितम् ८ ततस्तु
तेकौरवराजपुत्राविभूषिताःकुंडलिनोयुवानः ॥ महार्हवस्त्रांबरचंदनोक्षिताःकृताभिषेकाःकृतमंगलक्रियाः ९ पुरोहितेनाग्निसमानवर्चसासहैवधौम्येनयथाविधिप्र
भो ॥ क्रमेणसर्वेविविशुस्ततःसदोमहर्षभागोष्ठमिवाभिनंदिनः १० ततःसमाधायसवेदपारगोजुहावमंत्रैर्ज्वलितंहुताशनम् ॥ युधिष्ठिरंचाप्युपनीयमंत्रविन्नि
योजयामाससहैवकृष्णया ११ प्रदक्षिणंतौप्रगृहीतपाणीपरिणाययामाससवेदपारगः ॥ ततोऽभ्यनुज्ञायतमाजिशोभिनंपुरोहितोराजगृहाद्विनिर्ययौ १२ क्रमेण
चानेननराधिपात्मजावरस्त्रियस्तेजगृहुस्तदाकरम् ॥ अहन्यहन्युत्तमरूपधारिणोमहारथाःकौरववंशवर्धनाः १३ इदंचतत्राद्भुतरूपमुत्तमंजगाददेवर्षिरतीतमानु
षम् ॥ महानुभावाकिलसासुमध्यमाबभूवकन्यैवगतेगतेऽहनि १४ कृतेविवाहेद्रुपदोधनंददौमहारथेभ्योबहुरूपमुत्तमम् ॥ शतंरथानांवरहेममालिनां
चतुर्युजांहेमखलीनमालिनाम् १५ 

पाठे पुष्यायहितंबहुसंततिप्रदमित्यर्थः हेआद्यहेज्येष्ठ ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ चतुर्युजामश्वचतुष्टययुजां हेममयंखलीनमश्वमुखस्थंनियामकं'लगाम'
इतिभाषयाप्रसिद्धंरथमसंबाधाखलीनंयुगंतेनमालिनां १५

पद्मानिगजोत्तमलक्षणानितद्वतांपद्मिनांश्रीमतांवा । यद्वाहेमशृंगिणामितिदृष्टांतानुगुण्यात्पद्मंपद्माकारंगजपल्याणमष्टकोणमष्टस्तंभंशिखरकलशादियुक्तंतद्वतां १७ । १८ ॥ इति आदिपर्वणि
नीलकंठीये भारतभावदीपेऽष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥ ॥ ७ ॥ पांडवैरिति १ । २ क्षुमाअतसीतद्विकारभूतंवल्कंक्षौमं ३ । ४ । ५ । ६ जीवसूःआयुष्मत्संततिप्रसूः ७ । ८ अ

शतंगजानामपिपद्मिनांतथाशतंगिरीणामिवहेमशृंगिणाम् ॥ तथैवदासीशतमग्र्ययौवनंमहार्हवेषाभरणांबरस्रजम् १६ पृथक्पृथक्दिव्यदृशांपुनर्ददौतदाधनंसौ
मकिरग्निसाक्षिकम् ॥ तथैववस्त्राणिविभूषणानिप्रभावयुक्तानिमहानुभावः १७ कृतेविवाहेचततस्तुपांडवाःप्रभूतरत्नामुपलभ्यतांश्रियम् ॥ विजह्रुरिंद्रप्रतिमाम
हाबलाःपुरेतुपांचालनृपस्यतस्यह १८ ॥ इतिश्रीमहाभारतेआदिपर्वणिवैवाहिकपर्वणिद्रौपदीविवाहेअष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥ ॥ वैशं
पायनउवाच ॥ पांडवैःसहसंयोगंगतस्यद्रुपदस्यह ॥ नबभूवभयंकिंचिद्देवेभ्योऽपिकथंचन १ कुंतीमासाद्यतानार्योद्रुपदस्यमहात्मनः ॥ नामसंकीर्तयंत्योऽस्याज
ग्मुःपादौस्वमूर्धभिः २ कृष्णाचक्षौमसंवीताकृतकौतुकमंगला ॥ कृताभिवादनाश्वश्र्वातस्थौप्रह्वाकृतांजलिः ३ रूपलक्षणसंपन्नांशीलाचारसमन्विताम् ॥ द्रौप
दीमवदत्प्रेम्णापृथाशीर्वचनंस्नुषाम् ४ यथेंद्राणीहरिहयेस्वाहाचैवविभावसौ ॥ रोहिणीचयथासोमेदमयंतीयथानले ५ यथावैश्रवणेभद्रावसिष्ठेचाप्यरुंधती ॥ य
थानारायणेलक्ष्मीस्तथात्वंभवभर्तृषु ६ जीवसूर्वीरसूर्भद्रेबहुसौख्यसमन्विता ॥ सुभगाभोगसंपन्नायज्ञपत्नीपतिव्रता ७ अतिथीनागतान्साधून्वृद्धान्बालांस्त
थागुरून् ॥ पूजयंत्ययथान्यायंशश्वद्गच्छंतुतेसमाः ८ कुरुजांगलमुख्येषुराष्ट्रेषुनगरेषुच ॥ अनुत्वमभिषिच्यस्वनृपतिंधर्मवत्सला ९ पतिभिर्निर्जितामुर्वींविक्रमेण
महाबलैः ॥ कुरुब्राह्मणसात्सर्वामश्वमेधेमहाक्रतौ १० पृथिव्यांयानिरत्नानिगुणवंतिगुणान्विते ॥ तान्याप्नुहित्वंकल्याणिसुखिनीशरदांशतम् ११ यथाचत्वा
भिनंदामिवध्वद्यक्षौमसंवृताम् ॥ तथाभूयोऽभिनंदिष्येजातपुत्रांगुणान्विताम् १२ ॥ वैशंपायनउवाच ॥ ततस्तुकृतदारेभ्यःपांडुभ्यःप्राहिणोद्धरिः ॥ वैदूर्य
मणिचित्राणिहैमान्याभरणानिच १३ वासांसिचमहार्हाणिनानादेश्यानिमाधवः ॥ कंबलाजिनरत्नानिस्पर्शवंतिशुभानिच १४ शयनासनयानानिविविधानिम
हांतिच ॥ वैदूर्यवज्रचित्राणिशतशोभाजनानिच १५ रूपयौवनदाक्षिण्यैरुपेताश्चस्वलंकृताः ॥ प्रेष्याःसंप्रददौकृष्णोनानादेश्याःस्वलंकृताः १६ गजान्विनीतान्
भद्रांश्चसदश्वांश्चस्वलंकृतान् ॥ रथांश्चदांतान्सौवर्णैःशुभ्रैःपट्टैरलंकृतान् १७ कोटिशश्चसुवर्णंचतेषामकृतकंतथा ॥ वीथीकृतममेयात्माप्राहिणोन्मधुसूदनः १८
तत्सर्वंप्रतिजग्राहधर्मराजोयुधिष्ठिरः ॥ मुदापरमयायुक्तोगोविंदप्रियकाम्यया १९ इतिश्रीम० आ० वैवा० ऊननवत्यधिकशततमोऽध्यायः १९९ ॥ समाप्तं वैवाहिकपर्व ॥

भिषिच्यस्वाभिषेकंप्राप्नुहि नृपतिंपट्टाभिषिक्तंराजानमनु ९ । १० । ११ हेवधु अद्य १२ । १३ । १४ । १५ प्रेष्याःदासीः १६ भद्रान्भद्रजातीयान् १७ अकृतकंजांबूनदमाकरेषुधमनादिनाअनु
त्पादितं । वीथीकृतंधान्यराशिवत्पृथक्पृथक्मालयाराशीकृतं । राशीकृतमितिपाठेपिंडीकृतं । कृताकृतमितिपाठेघटितमघटितंच १८ । १९ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपेऊननवत्य
धिकशततमोऽध्यायः ॥ १७३ ॥ ॥ ७ ॥ ॥ ७ ॥

ततइति चरैश्चारैः १ । २ । ३ सेनांगानांरथगजादीनांपातनः ४ । ५ विस्मयेहेतुमाह सपुत्रेति ६ । ७ । ८ । ९ अव्रीडइतिच्छेदः । व्रीडन्नित्येवपाठः अन्यथामंदमंदमित्यस्यानुपपत्तिः

॥ अथविदुरागमनराज्यलंभपर्व ॥ ॥ वैशंपायनउवाच ॥ ततोराज्ञांचरैराप्तैःप्रवृत्तिरुपनीयत ॥ पांडवैरुपसंपन्नाद्रौपदीपतिभिःशुभा १ येनतद्धनुरादायलक्ष्यंवि
द्धंमहात्मना ॥ सोऽर्जुनोजयतांश्रेष्ठोमहाबाणधनुर्धरः २ यःशल्यंमद्रराजंवैप्रोत्क्षिप्यापातयद्बली ॥ त्रासयामाससंक्रुद्धोवृक्षेणपुरुषान्रणे ३ नचास्यसंभ्रमःक
श्चिदासीत्तत्रमहात्मनः ॥ सभीमोभीमसंस्पर्शःशत्रुसेनांगपातनः ४ ब्रह्मरूपधरान्श्रुत्वाप्रशांतान्पांडुनंदनान् ॥ कौंतेयान्मनुजेंद्राणांविस्मयःसमजायत ५ सपु
त्राहिपुराकुंतीदग्धाजतुगृहेश्रुता ॥ पुनर्जातानिवचतांस्तेऽमन्यंतनराधिपाः ६ धिगकुर्वंस्तदाभीष्मंधृतराष्ट्रंचकौरवम् ॥ कर्मणाऽतिनृशंसेनपुरोचनकृतेनवै ७
वृत्तेस्वयंवरेचैवराजानःसर्वएवते ॥ यथागतंविप्रजग्मुर्विदित्वापांडवान्वृतान् ८ अथदुर्योधनोराजाविमनाभ्रातृभिःसह ॥ अश्वत्थाम्नामातुलेनकर्णेनचकृपेणच
९ विनिवृत्तोवृतंदृष्ट्वाद्रौपद्याश्वेतवाहनम् ॥ तंतुदुःशासनोऽव्रीडोमंदंमंदमिवाब्रवीत् १० यद्यसौब्राह्मणोनस्याद्विंदेतद्रौपदींनसः ॥ नहितंतत्त्वतोराजन्वेदकश्चिद्ध
नंजयम् ११ दैवंचपरमंमन्येपौरुषंचाप्यनर्थकम् ॥ धिगस्तुपौरुषंतातयेयंतेयत्रपांडवाः १२ एवंसंभाषमाणास्तेनिंदंतश्चपुरोचनम् ॥ विविशुर्हास्तिनपुरं
दीनाविगतचेतसः १३ त्रस्ताविगतसंकल्पादृष्ट्वापार्थान्महौजसः ॥ मुक्तान्हव्यभुजश्चैवसंयुक्तान्द्रुपदेनच १४ धृष्टद्युम्नंतुसंचिंत्यतथैवचशिखंडिनम् ॥ द्रुपद
स्यात्मजांश्चान्यान्सर्वयुद्धविशारदान् १५ विदुरस्त्वथतांश्रुत्वाद्रौपदींपांडवैर्वृताम् ॥ व्रीडितान्धार्तराष्ट्रांश्चभग्नदर्पानुपागतान् १६ ततःप्रीतमनाःक्षत्ताधृतरा
ष्ट्रंविशांपते ॥ उवाचदिष्ट्याकुरवोवर्धंतइतिविस्मितः १७ वैचित्रवीर्यस्तुनृपोनिशम्यविदुरस्यतत् ॥ अब्रवीत्परमप्रीतोदिष्ट्यादिष्ट्येतिभारत १८ मन्यतेसवृतं
पुत्रंज्येष्ठंद्रुपदकन्यया ॥ दुर्योधनमविज्ञानात्प्रज्ञाचक्षुर्नरेश्वरः १९ अथत्वाज्ञापयामासद्रौपद्याभूषणंबहु ॥ आनीयतांवैकृष्णेतिपुत्रंदुर्योधनंतदा २० अथास्य
पश्चाद्विदुरआचख्यौपांडवान्वृतान् ॥ सर्वान्कुशलिनोवीरान्पूजितान्द्रुपदेनह २१ तेषांसंबंधिनश्चान्यान्बहून्बलसमन्वितान् ॥ समागतान्पांडवेयैस्तस्मिन्नेवस्वयं
वरे २२ धृतराष्ट्रउवाच ॥ यथैवपांडोःपुत्रास्तुतथैवाभ्यधिकामम ॥ यथाचाभ्यधिकाबुद्धिर्ममतान्प्रतितच्छृणु २३ यत्तेकुशलिनोवीरामित्रवंतश्चपांडवाः ॥ ते
षांसंबंधिनश्चान्येबहवश्चमहाबलाः २४ कोहिद्रुपदमासाद्यमित्रंक्षत्तःसबांधवम् ॥ नबुभूषेद्भवेनार्थीगतश्रीरपिपार्थिवः २५ ॥ वैशंपायनउवाच ॥ तंतथाभाषमा
णंतुविदुरःप्रत्यभाषत ॥ नित्यंभवतुतेबुद्धिरेषाराजञ्छतंसमाः ॥ इत्युक्त्वाप्रययौराजन्विदुरःस्वंनिवेशनम् २६ ततोदुर्योधनश्चापिराधेयश्चविशांपते ॥ धृतरा
ष्ट्रमुपागम्यवचोब्रूतामिदंतदा २७ सन्निधौविदुरस्यत्वांदोषंवक्तुंनशक्नुवः ॥ विविक्तमितिवक्ष्यावःकिंतवेदंचिकीर्षितम् २८ 

१० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ वैचार्थे कृष्णाभूषणंचतत्परिधानार्थमानीयतामित्यर्थः २० । २१ । २२ । २३ । २४ गतश्रीर्नष्टश्रीःक्षोभवेनऐश्वर्येणार्थीनबुभूषेद्भवितु
मिच्छेदपितुसर्वोऽपीच्छेत् २५ । २६ । २७ । २८

सपत्नवृद्धिंतत्कृतांवृद्धिं । वृद्धिमितिपाठःस्वच्छः । हेवरश्रेष्ठ द्विषतांद्विषतःशत्रून् २९ । ३० प्राप्तकालस्यकर्मणश्चिकीर्षांकर्त्तव्यतां ३१ ॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेद्विशततमोऽ
ध्यायः ॥ २०० ॥ ॥ अहमिति विवेक्तुंव्यक्तीकर्तुं १ इंगितैश्चेष्टितैः २ यद्यकर्तव्यं ३ आप्तकारिभिरवंचकैः ४ । ५ । ६ भिद्यमाना।अस्मत्तःपृथग्भवंतः ७ । ८ व्युत्थापनंतुस्वभर्तॄणांत्यागःसचबहु

सपत्नवृद्धिंयत्तातमन्यसेवृद्धिमात्मनः ॥ अभिष्टौषिचयत्क्षत्तुःसमीपेद्विषतांवर २९ अन्यस्मिन्नृपकर्तव्येत्वमन्यत्कुरुषेऽनघ ॥ तेषांबलविघातोहिकर्तव्यस्तात
नित्यशः ३० तेवयंप्राप्तकालस्यचिकीर्षांमंत्रयामहे ॥ यथानोनग्रसेयुस्तेसपुत्रबलबांधवान् ३१ ॥ इतिश्रीमहाभारतेआदिपर्वणिविदुरागमनराज्यलंभपर्वणिदु
र्योधनवाक्येद्विशततमोऽध्यायः ॥ २०० ॥ ॥ धृतराष्ट्रउवाच ॥ अहमप्येवमेवैतच्चिकीर्षामियथायुवाम् ॥ विवेक्तुंनाहमिच्छामित्याकारंविदुरंप्रति १ तत
स्तेषांगुणानेवकीर्त्तयामिविशेषतः ॥ नावबुध्येतविदुरोममाभिप्रायमिंगितैः २ यच्चत्वंमन्यसेप्राप्तंतद्ब्रवीहिसुयोधन ॥ राधेयमन्यसेयच्चप्राप्तकालंवदाशुमे ३
॥ दुर्योधनउवाच ॥ अद्यतान्कुशलैर्विप्रैःसुगुप्तैराप्तकारिभिः ॥ कुंतीपुत्रान्भेदयामोमाद्रीपुत्रौचपांडवौ ४ अथवाद्रुपदोराजामहद्भिर्वित्तसंचयैः ॥ पुत्राश्चास्य
प्रलोभ्यंताममात्याश्चैवसर्वशः ५ परित्यजेद्यथाराजाकुंतीपुत्रंयुधिष्ठिरम् ॥ अथतत्रैववातेषांनिवासंरोचयंतुते ६ इहैषांदोषवद्वासंवर्णयंतुपृथक्पृथक् ॥ तेभिद्यमा
नास्तत्रैवमनःकुर्वंतुपांडवाः ७ अथवाकुशलाःकेचिदुपायनिपुणानराः ॥ इतरेतरतःपार्थान्भेदयंत्वनुरागतः ८ व्युत्थापयंतुवाकृष्णांबहुत्वात्सुकरंहितत् ॥ अ
थवापांडवांस्तस्यांभेदयंतुततश्चताम् ९ भीमसेनस्यवाराजन्नुपायकुशलैर्नरैः ॥ मृत्युर्विधीयतांछन्नैःसहितेषांबलाधिकः १० तमाश्रित्यहिकौंतेयःपुराचास्मान्न
मन्यते ॥ सहितीक्ष्णश्चशूरश्चतेषांचैवपरायणम् ११ तस्मिंस्त्वभिहतेराजन्हतोत्साहाहतौजसः ॥ यतिष्यंतेनराज्यायसहितेषांव्यपाश्रयः १२ अजेयोह्यर्जुनः
संख्येपृष्ठगोपेवृकोदरे ॥ तमृतेफाल्गुनोयुद्धेराधेयस्यनपादभाक् १३ तेजानानास्तुदौर्बल्यंभीमसेनमृतेमहत् ॥ अस्मान्बलवतोज्ञात्वानयतिष्यंतिदुर्बलाः १४
इहागतेषुवातेषुनिदेशवशवर्त्तिषु ॥ प्रवर्त्तिष्यामहेराजन्यथाशास्त्रंनिबर्हणम् १५ अथवादर्शनीयाभिःप्रमदाभिर्विलोभ्यताम् ॥ एकैकस्तत्रकौंतेयस्ततःकृष्णा
विरज्यताम् १६ प्रेष्यतांचैवराधेयस्तेषामागमनायवै ॥ तैस्तैःप्रकारैःसन्नीयपात्यंतामाप्तकारिभिः १७ एतेषामप्युपायानांयस्तेनिर्दोषवान्मतः ॥ तस्यप्रयो
गमातिष्ठपुराकालोऽतिवर्त्तते १८ यावद्ध्यकृतविश्वासाद्रुपदेपार्थिवर्षभे ॥ तावदेवहितेशक्यानशक्यास्तुततःपरम् १९ एषाममतिस्तातनिग्रहायप्रव
र्त्तते ॥ साध्वीवायदिवाऽसाध्वीकिंवाराधेयमन्यसे २० ॥ ॥ इतिश्रीमहाभारते आदिपर्वणि विदुरागमनराज्यलंभपर्वणि दुर्योधनवाक्ये एकाधिक
द्विशततमोऽध्यायः ॥ २०१ ॥ ॥



त्वदोषेणसुकरः । अथवेति तस्याःभर्तृषुवैषम्यंप्रदर्श्यपांडवानेववातस्यांभेदयंतु ततश्चतांलप्स्यामहेइतिशेषः ९ । १० । ११ । १२ नपादभाक्नचतुर्थांशतुल्यः १३ । १४ । १५ एकैकःकौंतेयःप्रलो
भनीयःतत्रतेषु ततःप्रलोभ्यमानात् १६ सन्नीयऐक्यंनीत्वा १७ । १८ शक्याःघातयितुमितिशेषः १९ । २० ॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेएकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

दुर्योधनेति १ । २ जातपक्षाःसहायवंतस्तदन्येअजातपक्षाः ३ । ४ दिष्टकृतेनदैवनिर्माणेनशकिताःशक्तिमंतः जतुगृहादिभ्यआत्मानंमोचयितुंशक्ताअभूवन्नित्यर्थः ५ । ६ परिद्यूनान्शोच्यान्भिक्षा



॥ कर्णउवाच ॥ दुर्योधनतवप्रज्ञानसम्यगितिमेमतिः ॥ नह्युपायेनतेशक्याःपांडवाःकुरुवर्धन १ पूर्वमेवहितेसूक्ष्मैरुपायैर्यतितास्त्वया ॥ निग्रहीतुंतदावीरनचै वशकितास्त्वया २ इहैववर्त्तमानास्तेसमीपेतवपार्थिव ॥ अजातपक्षाःशिशवःशकितानैवबाधितुम् ३ जातपक्षाविदेशस्थाविवृद्धाःसर्वशोऽद्यते ॥ नोपायसा ध्याःकौंतेयाममैषामतिरच्युत ४ नचतेव्यसनैर्योक्तुंशक्यादिष्टकृतेनच ॥ शकिताश्चेप्सवश्चैवपितृपैतामहंपदम् ५ परस्परेणभेदश्चनाधातुंतेषुशक्यते ॥ एक स्यांयेरताःपत्न्यांनभिद्यंतेपरस्परम् ६ नचापिकृष्णाशक्येतेतेभ्योभेदयितुंपरैः ॥ परिद्यूनान्वृतवतीकिमुताद्यमृजावतः ७ ईप्सितश्चगुणःस्त्रीणामेकस्याबहुभर्तृ ता ॥ तंचप्राप्तवतीकृष्णानसाभेदयितुंक्षमा ८ आर्यव्रतश्चपांचाल्योनसराजाधनप्रियः ॥ नसंत्यक्ष्यतिकौंतेयान्राज्यदानैरपिध्रुवम् ९ यथाऽस्यपुत्रोगुणवान नुरक्तश्चपांडवान् ॥ तस्मान्नोपायसाध्यांस्तानहंमन्येकथंचन १० इदंत्वद्यक्षमंकर्तुमस्माकंपुरुषर्षभ ॥ यावन्नकृतमूलास्तेपांडवेयाविशांपते ११ तावत्प्रहरणीया स्तेतत्तुभ्यंतातरोचताम् ॥ अस्मत्पक्षोमहान्यावद्यावत्पांचालकोलघुः ॥ तावत्प्रहरणंतेषांक्रियतांमाविचारय १२ वाहनानिप्रभूतानिमित्राणिचकुलानिच ॥ या वन्नतेषांगांधारेतावद्विक्रमपार्थिव १३ यावच्चराजापांचाल्योनोद्यमेकुरुतेमनः ॥ सहपुत्रैर्महावीर्यैस्तावद्विक्रमपार्थिव १४ यावन्नायातिवार्ष्णेयःकर्षन्यादववाहि नीम् ॥ राज्यार्थेपांडवेयानांपांचाल्यसदनंप्रति १५ वसूनिविविधान्भोगान्राज्यमेवचकेवलम् ॥ नात्याज्यमस्तिकृष्णस्यपांडवार्थेकथंचन १६ विक्रमेणमही प्राप्ताभरतेनमहात्मना ॥ विक्रमेणचलोकांस्त्रीन्जितवान्पाकशासनः १७ विक्रमंचप्रशंसंतिक्षत्रियस्यविशांपते ॥ स्वकोहिधर्मःशूराणांविक्रमःपार्थिवर्षभ १८ तेबलेनवयंराजन्महताचतुरंगिणा ॥ प्रमथ्यद्रुपदंशीघ्रमानयामेहपांडवान् १९ नहिसाम्नानदानेननभेदेनचपांडवाः ॥ शक्याःसाधयितुंतस्माद्विक्रमेणैवतान्ज हि २० तान्विक्रमेणजित्वेमामखिलांभुंक्ष्वमेदिनीम् ॥ अतोनान्यंप्रपश्यामिकार्योपायंजनाधिप २१ ॥ वैशंपायनउवाच ॥ श्रुत्वातुराधेयवचोधृतराष्ट्रःप्रताप वान् ॥ अभिपूज्यततःपश्चादिदंवचनमब्रवीत् २२ उपपन्नंमहाप्राज्ञेकृतास्त्रेसूतनंदने ॥ त्वयिविक्रमसंपन्नमिदंवचनमीदृशम् २३ भूयएवतुभीष्मश्चद्रोणोविदुर एवच ॥ युवांचकुरुतंबुद्धिंभवेद्यानःसुखोदया २४ ततआनाय्यतान्सर्वान्मंत्रिणःसुमहायशाः ॥ धृतराष्ट्रोमहाराजमंत्रयामासवैतदा २५ ॥ ॥ इतिश्री महाभारतेआदिपर्वणिविदुरागमनराज्यलंभपर्वणिधृतराष्ट्रमंत्रणेद्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥ ॥ ॥१७२॥

भोजित्वादिना मृजावतःसुवेषान् ७ । ८ । ९ । १० । ११ लघुरल्पकः १२ । १३ । १४ १५ । १६ । १७ । १८ आनयामस्ववशमितिशेषः । १९ । २० । २१ । २२ । २३ । २४ । २५ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥ ॥ ७ ॥

नरोचतेइति १ । २ । ३ । ४ । ५ । ६ । ७ मधुरेणमीत्या ८ । ९ । १० । ११ । १२ म्रियंतेजीवंति सकामोनासीत् अत्ययंनाशं १३ । १४ दोषेणयुक्तं गच्छतिजाना ति १५ संमंतव्यंसंमतंकर्तव्यं १६ । १७ अधर्मेणजतुगृहदाहादिना १८ । १९ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे त्र्यधिकद्विशततमोऽध्यायः २०३ ॥ मंत्रायेति हितैर्मंत्रैः

॥ भीष्मउवाच ॥ नरोचतेविग्रहोमेपांडुपुत्रैःकथंचन ॥ यथैवधृतराष्ट्रोमेतथापांडुरसंशयम् १ गांधार्याश्चयथापुत्रास्तथाकुंतीसुतामम ॥ यथाचममतेरक्ष्याधृ तराष्ट्रतथातव २ यथाचममराज्ञश्चतथादुर्योधनस्यते ॥ तथाकुरूणांसर्वेषामन्येषामपिपार्थिव ३ एवंगतेविग्रहंतैर्नरोचेसंधायवीरैर्दीयतामर्धभूमिः ॥ तेषामपी यंप्रपितामहानांराज्यंपितुश्चैवकुरूत्तमानां ४ दुर्योधनयथाराज्यंत्वमिदंतातपश्यसि ॥ ममपैतृकमित्येवंतेपिपश्यंतिपांडवाः ५ यदिराज्यंनतेप्राप्ताःपांडवेयायश स्विनः ॥ कुतएवतवापीदंभारतस्यापिकस्यचित् ६ अधर्मेणचराज्यंत्वंप्राप्तवान्भरतर्षभ ॥ तेऽपिराज्यमनुप्राप्ताःपूर्वमेवेतिमेमतिः ७ मधुरेणैवराज्यस्यतेषाम र्धंप्रदीयतां ॥ एतद्धिपुरुषव्याघ्रहितंसर्वजनस्यच ८ अतोऽन्यथाचेत्क्रियतेनहितंनोभविष्यति ॥ तवाऽप्यकीर्तिःसकलाभविष्यतिनसंशयः ९ कीर्तिरक्षणमाति ष्ठकीर्तिर्हिपरमंबलम् ॥नष्टकीर्तेर्मनुष्यस्यजीवितंह्यफलंस्मृतम् १० यावत्कीर्तिर्मनुष्यस्यनप्रणश्यतिकौरव ॥ तावज्जीवतिगांधारेनष्टकीर्तिस्तुनश्यति ११ त मिमंसमुपातिष्ठधर्मंकुरुकुलोचितम् ॥ अनुरूपंमहाबाहोपूर्वेषामात्मनःकुरु १२ दिष्ट्याध्रियंतेपार्थाहिदिष्ट्याजीवतिसापृथा ॥ दिष्ट्यापुरोचनःपापोनसकामोऽ त्ययंगतः १३ यदाप्रभृतिदग्धास्तेकुंतिभोजसुतासुताः ॥ तदाप्रभृतिगांधारेनशक्नोम्यभिवीक्षितुम् १४ लोकेप्राणभृतांकंचिच्छ्रुत्वाकुंतींतथागतां ॥ नचापिदोषे णतथालोकोमन्येत्पुरोचनम् ॥ यथात्वांपुरुषव्याघ्रलोकोदोषेणगच्छति १५ तदिदंजीवितंतेषांतवकिल्बिषनाशनम् ॥ संमंतव्यंमहाराजपांडवानांचदर्शनम् १६ नचापितेषांवीराणांजीवतांकुरुनंदन ॥ पित्र्योंऽशःशक्यआदातुमपिवज्रभृतास्वयम् १७ तेसर्वेऽवस्थिताधर्मेसर्वेचैवैकचेतसः ॥ अधर्मेणनिरस्ताश्चतुल्येराज्येविशेष तः १८ यदिधर्मस्त्वयाकार्योयदिकार्यंप्रियंचमे ॥ क्षेमंचयदिकर्तव्यंतेषामर्धंप्रदीयतां १९ ॥ इतिश्रीमहाभारतेआदिपर्वणिविदुरागमनराज्यलंभपर्वणिभीष्मवा क्येत्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥ द्रोणउवाच ॥ मंत्रायसमुपानीतैर्धृतराष्ट्रहितैर्नृप ॥ धर्म्यमर्थ्यंयशस्यंचवाच्यमित्यनुशुश्रुम १ ममाप्येषामतिस्तात याभीष्मस्यमहात्मनः ॥ संविभज्यास्तुकौंतेयाधर्मएषसनातनः २ प्रेष्यतांद्रुपदायाशुनरःकश्चित्प्रियंवदः ॥ बहुलंरत्नमादायतेषामर्थायभारत ३ मिथः कृत्यंचतस्मैसआदायवसुगच्छतु ॥ वृद्धिंचपरमांब्रूयात्त्वत्संयोगोद्भवांतथा ४ संप्रीयमाणंत्वांब्रूयाद्राजन्दुर्योधनंतथा ॥ असकृद्द्रुपदेचैवधृष्टद्युम्नेचभारत ५ उचितत्वंप्रियत्वंचयोगस्यापिचवर्णयेत् ॥ पुनःपुनश्चकौंतेयान्माद्रीपुत्रौचसांत्वयन् ६

१ । २ तेषांपांडवानां ३ मिथःकृत्यंसांबंधिकंवरपक्षीयैर्वध्वलंकारादि कन्यापक्षीयैर्वरालंकारादि तस्मैद्रुपदायतदर्थे एतन्मिथःकृत्येएवश्वशुरोजामातुरदायंगृह्णीयान्नान्यथेतिसिद्धं वृद्धिंचेति त्व त्संयोगादस्माकंमहत्त्वाप्तिर्जातेतिधृतराष्ट्रोदुर्योधनश्चमन्यतइतितत्रवक्तव्यमित्यर्थः ४ । ५ योगस्यसंबंधस्य ६

संप्रयच्छतुत्वदीयोऽमात्यादिः ७ तथाआभरणानिप्रयच्छेत्वित्यनुषज्यप्रत्येकंद्रुपदपुत्राणामित्यादिषुयोज्यं ८ । ९ । १० । ११ औपयिकमवश्यकर्त्तव्यं १२ अनंतरोअंतरंगोभीष्मद्रोणौ १३
नन्वंतरंगोचेत्कथंमच्छ्रेयोनानुमंत्रयेतामित्याशंक्यांतरंगाभासाविमौनत्वंतरंगावित्याहदुष्टेनेति दुष्टेनमित्रद्रोहवता । मनसासंकल्पेन । प्रच्छन्नेनशत्रुहितेप्सुनाऽपिस्वामिहितवदाभासमानेन ।
अंतरात्मनाबुद्ध्या । योब्रूयान्मंत्रं । ससतांसाधूनांविश्वस्तानांस्वामिनांमतमिष्टंनिःश्रेयसंकल्याणंकथंकुर्यान्नकथमपि । शठमित्रंहिपातयत्येवनहितायेत्यर्थः १४ ननुशठमित्रत्वंत्वस्यत्व
य्यप्याशंक्येततथाचसर्वत्रानाश्वासप्रसंगइत्याशंक्यदैवमेवमुख्यंवृद्धिह्रासादिहेतुरित्याह नमित्राणीति मित्राणिसाध्वसाधूनि अर्थकृच्छ्रेषुकार्यसंकटेषु श्रेयसेइतरायनाशायवानप्रभवंति हिय

हिरण्मयानिशुभ्राणिबहून्याभरणानिच ॥ वचनात्तवराजेंद्रद्रौपद्याःसंप्रयच्छतु ७ तथाद्रुपदपुत्राणांसर्वेषांभरतर्षभ ॥ पांडवानांचसर्वेषांकुंत्यायुक्तानियानिच ८
एवंसांत्वसमायुक्तंद्रुपदंपांडवैःसह ॥ उक्त्वासोऽनंतरंब्रूयात्तेषामागमनंप्रति ९ अनुज्ञातेषुवीरेषुबलंगच्छतुशोभनम् ॥ दुःशासनोविकर्णश्चाप्यानेतुंपांडवा
निह १० ततस्तेपांडवाःश्रेष्ठाःपूज्यमानाःसदात्वया ॥ प्रकृतीनामनुमतेपदेस्थास्यंतिपैतृके ११ एतत्तवमहाराजपुत्रेषुतेषुचैवहि ॥ वृत्तमौपयिकंमन्ये
भीष्मेणसहभारत १२ ॥ कर्णउवाच ॥ योजितावर्थमानाभ्यांसर्वकार्येष्वनंतरौ ॥ नमंत्रयेतांत्वच्छ्रेयःकिमद्भुततरंततः १३ दुष्टेनमनसायोवैप्रच्छन्नेनांतरात्म
ना ॥ ब्रूयान्निःश्रेयसंनामकथंकुर्यात्सतांमतम् १४ नमित्राण्यर्थकृच्छ्रेषुश्रेयसेचेतरायवा ॥ विधिपूर्वंहिसर्वस्यदुःखंवायदिवासुखम् १५ कृतप्रज्ञोऽकृतप्र
ज्ञोबालोवृद्धश्चमानवः ॥ ससहायोऽसहायश्चसर्वंसर्वत्रविंदति १६ श्रूयतेहिपुराकश्चिदंबुवीचइतीश्वरः ॥ आसीद्राजगृहेराजामागधानांमहीक्षिताम् १७
सहीनःकरणैःसर्वैरुच्छ्वासपरमोनृपः ॥ अमात्यसंस्थःसर्वेषुकार्येष्वेवाभवत्तदा १८ तस्यामात्योमहाकर्णिर्बभूवैकेश्वरस्तदा ॥ सलब्धबलमात्मानंमन्यमानो
ऽवमन्यते १९ सराज्ञउपभोग्यानिस्त्रियोरत्नधनानिच ॥ आददेसर्वशोमूढऐश्वर्यंचस्वयंतदा २० तदादायचलुब्धस्यलोभाल्लोभोऽप्यवर्धत ॥ तथाहिसर्व
मादायराज्यमस्यजिहीर्षति २१ हीनस्यकरणैःसर्वैरुच्छ्वासपरमस्यच ॥ यतमानोऽपितद्राज्यंनशशाकेतिनःश्रुतम् २२ किमन्यद्विहितान्नूनंतस्यसापु
रुषेंद्रता ॥ यदितेविहितंराज्यंभविष्यतिविशांपते २३ मिषतःसर्वलोकस्यस्थास्यतेत्वयितद्ध्रुवम् ॥ अतोऽन्यथाचेद्विहितंयतमानोनलप्स्यसे २४ एवंवि
द्वनुपादत्स्वमंत्रिणांसाध्वसाधुताम् ॥ दुष्टानांचैवबोद्धव्यमदुष्टानांचभाषितम् २५ ॥ द्रोणउवाच ॥ विद्मतेभावदोषेणयदर्थमिदमुच्यते ॥ दुष्टःपांडवहेतो
स्त्वंदोषमाख्यापयस्युत २६ हितंतुपरमंकर्णब्रवीमिकुलवर्धनम् ॥ अथत्वंमन्यसेदुष्टंब्रूहियत्परमंहितम् २७

स्माद्विधिपूर्वंपुण्यापुण्यैकहेतुकंसर्वंसुखादिकं १५ एतदेवस्पष्टयति कृतेति सर्वंदैवोपनीतं सर्वत्रदेशेकालेच १६ अत्राख्यायिकामाह श्रूयतइति । ईश्वरःसमर्थः राजगृहेतन्नामकेनगरे १७
करणैश्चक्षुरादिभिर्हीनोविकलः । उच्छ्वासएवपरमोभवतीतिज्ञानहेतुर्यस्यसः । अमात्यसंस्थःअमात्याधीनः १८ अवमन्यतेराजानमितिशेषः १९ । २० । २१ नशशाकहर्तुमितिशेषः
२२ आख्यायिकातात्पर्यमाह किमिति तस्यअंबुवीचस्यसापुरुषेंद्रतातन्नरेंद्रत्वंनूनंविहिताविधिमाप्तैवनतुयत्नसंपादिता । किमन्यदहष्टात्परायणमस्तिनकिमपीतिभावः प्रकृतेयोजयति
यदीति २३ । २४ । २५ तेतवमतंविद्म भावदोषेणचित्तगतद्वेषेण २६ । २७



अहंयद्ब्रवीमिअतोऽन्यथा २८ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपेचतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥ ॥ ७ ॥ ॥ राजन्निति १ । २ । ३ आभ्यांभीष्मद्रोणाभ्यां पंचम्यंतमिदं ४
५ अनवरौश्रेष्ठौ ६ अनयोःएताभ्यां कर्त्तरिषष्ठी ७ । ८ । ९ पक्षसंश्रितमन्यतरस्यैवहितं १० । ११ तेषुपांडवेषु १२ तेतवमंत्रिणस्तवांतरस्थंविशेषंविवृण्वानास्तेध्रुवंशाश्वतंहितंनकुर्युः । तववै

अतोऽन्यथाचेत्क्रियतेयद्ब्रवीमिपरंहितम् ॥ कुरवोवैविनंक्ष्यंतिनचिरेणैवमेमतिः २८ ॥ इतिश्रीमहाभारते आदिपर्वणि विदुरागमनराज्यलंभपर्वणि द्रोणवाक्ये
चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥ ॥ विदुरउवाच ॥ राजन्निःसंशयंश्रेयोवाच्यस्त्वमसिबांधवैः ॥ नत्वशुश्रूषमाणेवैवाक्यंसंप्रतितिष्ठति १ प्रियं
हितंचतद्वाक्यमुक्तवान्कुरुसत्तमः ॥ भीष्मःशांतनवोराजन्प्रतिगृह्णासितन्नच २ तथाद्रोणेनबहुधाभाषितंहितमुत्तमम् ॥ तच्चराधासुतःकर्णोमन्यतेनहितंतव ३
चिंतयंश्चनपश्यामिराजंस्तवसुहृत्तमम् ॥ आभ्यांपुरुषसिंहाभ्यांयोवास्यात्प्रज्ञयाऽधिकः ४ इमौहिवृद्धौवयसाप्रज्ञयाचश्रुतेनच ॥ समौचत्वयिराजेंद्रतथापां
डुसुतेषुच ५ धर्मेचानवरौराजन्सत्यतायांचभारत ॥ रामाद्दाशरथेश्चैवगयाच्चैवनसंशयः ६ नचोक्तवंतावश्रेयःपुरस्तादपिकिंचन ॥ नचाप्यपकृतंकिंचिदन
योर्लक्ष्यतेत्वयि ७ ताविमौपुरुषव्याघ्रावनागसिनृपेत्वयि ॥ नमंत्रयेतांत्वच्छ्रेयःकथंसत्यपराक्रमौ ८ प्रज्ञावंतौनरश्रेष्ठावस्मिँल्लोकेनराधिप ॥ त्वन्निमित्तमतो
नेमौकिंचिज्जिह्मंवदिष्यतः ९ इतिमेनैष्ठिकीबुद्धिर्वर्ततेकुरुनंदन ॥ नचार्थहेतोर्धर्मज्ञौवक्ष्यतःपक्षसंश्रितम् १० एतद्धिपरमंश्रेयोमन्येऽहंतवभारत ॥ दुर्योध
नप्रभृतयःपुत्राराजन्यथातव ११ तथैवपांडवेयास्तेपुत्राराजन्नसंशयः ॥ तेषुचेदहितंकिंचिन्मंत्रयेयुरतद्विदः १२ मंत्रिणस्तेनचश्रेयःप्रपश्यंतिविशेषतः ॥ अथ
तेहृदयेराजन्विशेषःस्वेषुवर्तते ॥ अंतरस्थंविवृण्वानाःश्रेयःकुर्युर्नतेध्रुवम् १३ एतदर्थमिमौराजन्महात्मानौमहाद्युती ॥ नोचतुर्विवृतंकिंचिन्नह्येषतवनिश्चयः १४
यच्चाप्यशक्यतांतेषामाहतुःपुरुषर्षभौ ॥ तत्तथापुरुषव्याघ्रतवतद्भद्रमस्तुते १५ कथंहिपांडवःश्रीमान्सव्यसाचीधनंजयः ॥ शक्योविजेतुंसंग्रामेराजन्मघवता
ऽपिहि १६ भीमसेनोमहाबाहुर्नागायुतबलोमहान् ॥ कथंस्मयुधिशक्येतविजेतुममरैरपि १७ तथैवकृतिनौयुद्धेयमौयमसुताविव ॥ कथंविजेतुंशक्यौतौरणे
जीवितुमिच्छता १८ यस्मिन्धृतिरनुक्रोशःक्षमासत्यंपराक्रमः ॥ नित्यानिपांडवेज्येष्ठेसजीयेतरणेकथम् १९ येषांपक्षधरोरामोयेषांमंत्रीजनार्दनः ॥ किंनुतै
रजितंसंख्येयेषांपक्षेचसात्यकिः २० द्रुपदःश्वशुरोयेषांयेषांस्यालाश्चपार्षताः ॥ धृष्टद्युम्नमुखावीराभ्रातरोद्रुपदात्मजाः २१ सोऽशक्यतांचविज्ञायतेषामग्रेचभारत ॥
दायाद्यतांचधर्मेणसम्यक्तेषुसमाचर २२ इदंनिर्दिष्टमयशःपुरोचनकृतंमहत् ॥ तेषामनुग्रहेणाद्यराजन्प्रक्षालयात्मनः २३

षम्यदोषमेवतेप्रकाशयिष्यंतिनतुकार्यंसाधयिष्यंतीत्यर्थः १३ एतदर्थंपांडवानांश्रेयोर्थं विवृतंविस्पष्टं । विकृतमितिपाठेपुरुषं । एषपांडवानांश्रेयोभवत्वित्येवंरूपः । हिशब्देनतत्रतस्यैवप्रतीतिंप्रमा
पयति १४ यच्चेति अशक्यतामजय्यतां तवपुरस्तात्यदाहतुरितिसंबंधः तद्भद्रमस्तुते तत्तेभ्यःपांडवेभ्यस्तवभद्रमस्तु । क्रुद्धाःपांडवास्तवसर्वान्पुत्रान्माहिंस्युरितिभावः १५ । १६ । १७
१८ । १९ । २० । २१ अग्रेतत्पितुरेवपांडोःराज्यभागित्वकाले दायाद्यतांपितृधनभोजनार्हतां २२ । २३

२४ । २५ । २६ । २७ बलवदत्यंतं २८ । २९ । ३० ॥ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे पंचाधिकद्विशततमोऽध्यायः ॥ २०५ ॥ ॥ भीष्मइति १ । २ । ३ । ४

तेषामनुग्रहश्चायंसर्वेषांचैवनःकुले ॥ जीवितंचपरंश्रेयःक्षत्रस्यचविवर्धनम् २४ द्रुपदोऽपिमहान्राजाकृतवैरश्चनःपुरा ॥ तस्यसंग्रहणंराजन्स्वपक्षस्यविवर्धनम्
॥१७४॥ २५ बलवंतश्चदाशार्हाबहवश्चविशांपते ॥ यतःकृष्णस्ततःसर्वेयतःकृष्णस्ततोजयः २६ यच्चसाम्नैवशक्येतकार्यंसाधयितुंनृप ॥ कोदैवशप्तस्तत्कार्यंविग्रहेणसमा अ०
चरेत् २७ श्रुत्वाचजीवतःपार्थान्पौरजानपदाजनाः ॥ बलवद्दर्शनेहृष्टास्तेषांराजन्प्रियंकुरु २८ दुर्योधनश्चकर्णश्चशकुनिश्चापिसौबलः ॥ अधर्मयुक्तादुष्प्रज्ञा ॥२०६॥
बालामैषांवचःकृथाः २९ उक्तमेतत्पुराराजन्मयागुणवतस्तव ॥ दुर्योधनापराधेनप्रजेयंवैविनंक्ष्यति ३० ॥ ॥ इति श्रीमहाभारते आदिपर्वणि विदुरागमन
राज्यलंभपर्वणि विदुरवाक्ये पंचाधिकशततमोऽध्यायः ॥ २०५ ॥ ॥ धृतराष्ट्रउवाच ॥ भीष्मःशांतनवोविद्वान्द्रोणश्चभगवानृषिः ॥ हितंचपरमंवा
क्यंत्वंचसत्यंब्रवीषिमाम् १ यथैवपांडोस्तेवीराःकुंतीपुत्रामहारथाः ॥ तथैवधर्मतःसर्वेममपुत्रानसंशयः २ यथैवममपुत्राणामिदंराज्यंविधीयते ॥ तथैवपांडुपुत्रा
णामिदंराज्यंनसंशयः ३ क्षत्तरानयगच्छैतान्सहमात्रासुसत्कृतान् ॥ तयाचदेवरूपिण्याकृष्णयासहभारत ४ दिष्ट्याजीवंतितेपार्थादिष्ट्याजीवतिसापृथा ॥ दि
ष्ट्याद्रुपदकन्यांचलब्धवंतोमहारथाः ५ दिष्ट्यावर्धामहेसर्वेदिष्ट्याशांतःपुरोचनः ॥ दिष्ट्याममपरंदुःखमपनीतंमहाद्युते ६ ॥ वैशंपायनउवाच ॥ ततोजगाम
विदुरोधृतराष्ट्रस्यशासनात् ॥ सकाशंयज्ञसेनस्यपांडवानांचभारत ७ समुपादायरत्नानिवसूनिविविधानिच ॥ द्रौपद्याःपांडवानांचयज्ञसेनस्यचैवह ८ तत्रगत्वा
सधर्मज्ञःसर्वशास्त्रविशारदः ॥ द्रुपदंन्यायतोराजन्संयुक्तमुपतस्थिवान् ९ सचापिप्रतिजग्राहधर्मेणविदुरंततः ॥ चक्रतुश्चयथान्यायंकुशलप्रश्नसंविदम् १० दद
र्शपांडवांस्तत्रवासुदेवंचभारत ॥ स्नेहात्परिष्वज्यसतान्पप्रच्छानामयंततः ११ तैश्चाप्यमितबुद्धिःसपूजितोहियथाक्रमम् ॥ वचनाद्धृतराष्ट्रस्यस्नेहयुक्तंपुनःपुनः
१२ पप्रच्छानामयंराजंस्ततस्तान्पांडुनंदनान् ॥ प्रददौचापिरत्नानिविविधानिवसूनिच १३ पांडवानांचकुंत्याश्चद्रौपद्याश्चविशांपते ॥ द्रुपदस्यचपुत्राणांय
थादत्तानिकौरवैः १४ प्रोवाचचामितमतिःप्रश्रितंविनयान्वितः ॥ द्रुपदंपांडुपुत्राणांसन्निधौकेशवस्यच १५ ॥ विदुरउवाच ॥ राजञ्छृणुसहामात्यःसपुत्रश्चवचो
मम ॥ धृतराष्ट्रःसपुत्रस्त्वांसहामात्यःसबांधवः १६ अब्रवीत्कुशलंराजन्प्रीयमाणःपुनःपुनः ॥ प्रीतिमांस्तेदृढंचापिसंबंधेननराधिप १७ तथाभीष्मःशांतनवःकौ
रवैःसहसर्वशः ॥ कुशलंत्वांमहाप्राज्ञःसर्वतःपरिपृच्छति १८ भारद्वाजोमहाप्राज्ञोद्रोणःप्रियसखस्तव ॥ समाश्लेषमुपेत्यत्वांकुशलंपरिपृच्छति १९ धृतराष्ट्रश्चपां ॥१७४॥
चाल्यत्वयासंबंधमीयिवान् ॥ कृतार्थंमन्यतेऽऽत्मानंतथासर्वेऽपिकौरवाः २०

५ । ६ । ७ । ८ न्यायतोज्येष्ठानुक्रमेण संयुक्तमालिंगननमस्कारादिनामिलितम् ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ मन्यतेत्मानंतेआत्मानमितिच्छेदः २०

२१ । २२ । २३ । २४ । २५ निसृष्टेष्वनुज्ञातेषु २६ ॥ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥ ॥ एवमिति १ । २ । ३ । ४ । ५

नतथाराज्यसंप्राप्तिस्तेषांप्रीतिकरीमता ॥ यथासंबंधकंप्राप्ययज्ञसेनत्वयासह २१ एतद्विदित्वातुभवान्प्रस्थापयतुपांडवान् ॥ द्रष्टुंहिपांडुपुत्रांश्चत्वरंतिकुरवो
भृशम् २२ विप्रोषितादीर्घकालमेतेचापिनरर्षभाः ॥ उत्सुकानगरंद्रष्टुंभविष्यंतितथापृथा २३ कृष्णामपिचपांचालींसर्वाःकुरुवरस्त्रियः ॥ द्रष्टुकामाःप्रतीक्षंतेपुरं
चविषयाश्चनः २४ सभवान्पांडुपुत्राणामाज्ञापयतुमाचिरम् ॥ गमनंसहदाराणामेतदत्रमतंमम २५ निसृष्टेषुत्वयाराजन्पांडवेषुमहात्मसु ॥ ततोऽहंप्रेषयि
ष्यामिधृतराष्ट्रस्यशीघ्रगान् ॥ आगमिष्यंतिकौंतेयाःकुंतीचसहकृष्णया २६ ॥ ॥ इतिश्रीमहाभारतेआदिपर्वणिविदुरागमनराज्यलंभपर्वणिविदुरद्रुपद
संवादेषडधिकद्विशततमोऽध्यायः ॥ २०६ ॥ ॥ ॥ द्रुपदउवाच ॥ एवमेतन्महाप्राज्ञयथाऽऽत्थविदुराद्यमाम् ॥ ममापिपरमोहर्षःसंबंधेऽस्मिन्कृ
तेप्रभो १ गमनंचापियुक्तंस्यादृढमेषांमहात्मनाम् ॥ नतुतावन्मयायुक्तमेतद्वक्तुंस्वयंगिरा २ यदातुमन्यतेवीरःकुंतीपुत्रोयुधिष्ठिरः ॥ भीमसेनार्जुनौचैवयमौच
पुरुषर्षभौ ३ रामकृष्णौचधर्मज्ञौतदागच्छंतुपांडवाः ॥ एतौहिपुरुषव्याघ्रावेषांप्रियहितेरतौ ४ ॥ ॥ युधिष्ठिरउवाच ॥ परवंतोवयंराजंस्त्वयिसर्वेसहा
नुगाः ॥ यथावक्ष्यसिनःप्रीत्यातत्करिष्यामहेवयम् ५ ॥ ॥ वैशंपायनउवाच ॥ ततोब्रवीद्वासुदेवोगमनंरोचतेमम ॥ यथावामन्यतेराजाद्रुपदःसर्वधर्मवित् ६
॥ ॥ द्रुपदउवाच ॥ ॥ यथैवमन्यतेवीरोदाशार्हःपुरुषोत्तमः ॥ प्राप्तकालंमहाबाहुःसाबुद्धिर्निश्चितामम ७ यथैवहिमहाभागाःकौंतेयाममसांप्रतम् ॥
तथैववासुदेवस्यपांडुपुत्रानसंशयः ८ नतद्ध्यायतिकौंतेयःपांडुपुत्रोयुधिष्ठिरः ॥ यथैषांपुरुषव्याघ्रःश्रेयोध्यायतिकेशवः ९ ॥ ॥ वैशंपायनउवाच ॥ ॥
ततस्तेसमनुज्ञाताद्रुपदेनमहात्मना ॥ पांडवाश्चैवकृष्णश्चविदुरश्चमहीपते १० आदायद्रौपदींकृष्णांकुंतींचैवयशस्विनीम् ॥ सविहारंसुखंजग्मुर्नगरं
नागसाह्वयम् ११ श्रुत्वाचाप्यागतान्वीरान्धृतराष्ट्रोजनेश्वरः ॥ प्रतिग्रहायपांडूनांप्रेषयामासकौरवान् १२ विकर्णंचमहेष्वासंचित्रसेनंचभारत ॥
द्रोणंचपरमेष्वासंगौतमंकृपमेवच १३ तैस्तेपरिवृतावीराःशोभमानामहाबलाः ॥ नगरंहास्तिनपुरंशनैःप्रविविशुस्तदा १४ कौतूहलेननगरंदी
प्यमानमिवाभवत् ॥ तत्रतेपुरुषव्याघ्राःशोकदुःखविनाशनाः १५ ततउच्चावचावाचःपौरैःप्रियचिकीर्षुभिः ॥ उदीरिताअशृण्वंस्तेपांडवाहृदयं
५९ गमाः १६ अयंसपुरुषव्याघ्रःपुनरायातिधर्मवित् ॥ योनःस्वानिवदायादान्धर्मेणपरिरक्षति १७ अद्यपांडुर्महाराजोवनादिवजनप्रियः ॥ आ
गतःप्रियमस्माकंचिकीर्षुर्नात्रसंशयः १८

६ । ७ । ८ । ९ । १० सविहारंसलीलम् ११ प्रतिग्रहायप्रत्युद्गमनाय १२ । १३ । १४ कौतूहलेनदर्शनेच्छया १५ । १६ । १७ । १८

किंनुनःप्रियंनकृतमपितुसर्वंकृतमेव किंत्वितिपाठेतुशब्दोवाक्यालंकारेपुनःशब्दार्थः किंपुनर्नकृतमपितुसर्वंकृतमेवेतिपूर्ववदेवार्थः १९ । २० । २१ नगरेणसहकुशलप्रश्नंकृत्वा नगरेणापि कृतकुशलप्रश्नाः २२ । २३ । २४ पार्थेनार्जुनेन २५ । २६ घोरंवनमितिभूमेरर्थसस्यशून्योदेशःपांडवेभ्योदत्तइतिज्ञायते २७ तद्वैतद्घोरंवनंसत्स्वर्गवन्मंडयांचक्रिरे २८ तदेवाह नगरं

किंतुनाचकृतंतातसर्वेषांनःपरंप्रियम् ॥ यन्नःकुंतीसुतावीरानगरंपुनरागताः १९ यदिदत्तंयदिहुतंविद्यतेयदिनस्तपः ॥ तेनतिष्ठंतुनगरेपांडवाःशरदांशतम् २० ततस्तेधृतराष्ट्रस्यभीष्मस्यचमहात्मनः ॥ अन्येषांचतदर्हाणांचक्रुःपादाभिवंदनम् २१ कृत्वातुकुशलप्रश्नंसर्वेणनगरेणच ॥ न्यविशंताथवेश्मानिधृतराष्ट्रस्य शासनात् २२ विश्रांतास्तेमहात्मानःकंचित्कालंमहाबलाः ॥ आहूताधृतराष्ट्रेणराज्ञाशांतनवेनच ॥ २३ ॥ धृतराष्ट्रउवाच ॥ भ्रातृभिःसहकौंतेयनिबोधगद तोमम ॥ पुनर्नोविग्रहोमाभूत्खांडवप्रस्थमाविश २४ नचवोवसतस्तत्रकश्चिच्छक्तःप्रबाधितुम् ॥ संरक्ष्यमाणान्पार्थेनत्रिदशानिववज्रिणा २५ अर्धंराज्यस्य संप्राप्यखांडवप्रस्थमाविश ॥ वैशंपायनउवाच ॥ प्रतिगृह्यतुतद्वाक्यंनृपंसर्वेप्रणम्यच २६ प्रतस्थिरेततोघोरंवनंतन्मनुजर्षभाः ॥ अर्द्धंराज्यस्यसंप्राप्यखां डवप्रस्थमाविशन् २७ ततस्तेपांडवास्तत्रगत्वाकृष्णपुरोगमाः ॥ मंडयांचक्रिरेतद्वैपरंस्वर्गवदच्युताः २८ ततःपुण्येशिवेदेशेशांतिंकृत्वामहारथाः॥ नगरंमाप यामासुर्द्वैपायनपुरोगमाः २९ सागरप्रतिरूपाभिःपरिखाभिरलंकृतम् ॥ प्राकारेणचसंपन्नंदिवमावृत्यतिष्ठता ३० पांडुराभ्रप्रकाशेनहिमरश्मिनिभेनच ॥ शुशु भेतत्पुरश्रेष्ठंनागैर्भोगवतीमिव ३१ द्विपक्षगरुडप्रख्यैर्द्वारैःसौधैश्चशोभितम् ॥ गुप्तमभ्रचयप्रख्यैर्गोपुरैर्मंदरोपमैः ३२ विविधैरपिनिर्विद्धैःशस्त्रोपेतैःसुसंवृतैः ॥ शक्तिभिश्चावृतंतद्धिद्विजिह्वैरिवपन्नगैः ३३ तल्पैश्चाभ्यासिकैर्युक्तंशुशुभेयोधरक्षितम् ॥ तीक्ष्णांकुशशतघ्नीभिर्यंत्रजालैश्चशोभितम् ३४ आयसैश्चमहाचक्रैःशुशु भेतत्पुरोत्तमम् ॥ सुविभक्तमहारथ्यंदेवताबाधवर्जितम् ३५ विरोचमानंविविधैःपांडुरैर्भवनोत्तमैः ॥ तत्त्रिविष्टपसंकाशमिंद्रप्रस्थंव्यरोचत ३६ मेघवृंदमिवाका शेविद्धंविद्युत्समावृतम् ॥ तत्ररम्येशिवेदेशेकौरव्यस्यनिवेशनम् ३७ शुशुभेधनसंपूर्णंधनाध्यक्षक्षयोपमम् ॥ तत्रागच्छन्द्विजाराजन्सर्ववेदविदांवराः ३८ निवा संरोचयंतिस्मसर्वभाषाविदस्तथा ॥ वणिजश्चाययुस्तत्रनानादिग्भ्योधनार्थिनः ३९ सर्वशिल्पविदस्तत्रवासायाभ्यागमंस्तदा ॥ उद्यानानिचरम्याणिनगरस्य समंततः ४० आम्रैराम्रातकैर्नीपैरशोकैश्चंपकैस्तथा ॥ पुन्नागैर्नागपुष्पैश्चलकुचैःपनसैस्तथा ४१ शालतालतमालैश्चबकुलैश्चसकेतकैः ॥ मनोहरैःसुपुष्पैश्चफ लभारावनामितैः ४२ प्राचीनामलकैर्लोध्रैरंकोलैश्चसुपुष्पितैः ॥ जंबूभिःपाटलाभिश्चकुब्जकैरतिमुक्तकैः ४३

मापयामासुरित्याविना २९ । ३० भोगवतीमिवेतिप्रथमार्थेद्वितीया । ईमितिनिपातमश्लेषोवा । भोगवतीयथेत्यपेक्षितेप्रमादपाठोवा ३१ । ३२ निर्विद्धैरच्छिद्रैरभेद्यैर्वा शक्तिभि र्हस्तक्षेप्याभिर्लोहमयीभिः ३३ तीक्ष्णाश्चतेऽकुशाश्चशतघ्न्यश्चताभिः आश्रेयौषधबलेनोत्क्षिप्तेनदृषत्पिंडेनयायुगपच्छतंसहस्रंवामनुष्यादीन्घ्नंतिताभिःशतघ्नीभिर्दुर्गारूढाभिः ३४ । ३५ । ३६ विद्धंमिथःश्लिष्टं ३७ क्षयोपमंगृहोपमं ३८ । ३९ । ४० । ४१ । ४२ । ४३ ॥१७५॥

४४ । ४५ अजगतिपर्वतैर्नृपलीलायात्रार्थैःकृत्रिमैःपर्वतैः । 'अजश्छागेहरिब्रह्मविल्वस्मरहरेनृपे । गतिःस्त्रीमार्गदशयोर्ज्ञानेयात्राभ्युपाययोः' इतिचमेदिनी ४६ । ४७ वनावृताःवनैःआरामैरावृताः जलपूर्णावा ४८ पुण्यैर्जनैरुपेतं ४९ राज्ञाधृतराष्ट्रेण धर्मस्ययुधिष्ठिरस्य प्रणयनेप्रापणे ५० । ५१ ५२ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपेसप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

करवीरैःपारिजातैरन्यैश्चविविधैर्द्रुमैः ॥ नित्यपुष्पफलोपेतैर्नानाद्विजगणायुतैः ४४ मत्तबर्हिणसंघुष्टकोकिलैश्चसदामदैः ॥ गृहैरादर्शविमलैर्विविधैश्चलतागृहैः ४५ मनोहरैश्चित्रगृहैस्तथाऽजगतिपर्वतैः ॥ वापीभिर्विविधाभिश्चपूर्णाभिःपरमांभसा ४६ सरोभिरतिरम्यैश्चपद्मोत्पलसुगंधिभिः ॥ हंसकारंडवयुतैश्चक्रवाकोपशोभि तैः ४७ रम्याश्चविविधास्तत्रपुष्करिण्योवनावृताः ॥ तडागानिचरम्याणिबृहंतिसुबहूनिच ४८ तेषांपुण्यजनोपेतंराष्ट्रमाविशतांमहत् ॥ पांडवानांमहाराजश श्वत्प्रीतिरवर्धत ४९ तत्रभीष्मेणराज्ञाचधर्मप्रणयनेकृते ॥ पांडवाःसमपद्यंतखांडवप्रस्थवासिनः ५० पंचभिस्तैर्महेष्वासैरिंद्रकल्पैःसमन्वितम् ॥ शुशुभेतत्पुर श्रेष्ठंनागैर्भोगवतीयथा ५१ तान्निवेश्यततोवीरोरामेणसहकेशवः ॥ ययौद्वारवतींराजन्पांडवानुमतेतदा ५२ ॥ इतिश्रीमहाभारतेआदिपर्वणिविदुरागमनराज्य लंभपर्वणिपुरनिर्माणेसप्ताधिकद्विशततमोऽध्यायः ॥२०७॥ जनमेजयउवाच ॥ एवंसंप्राप्यराज्यंतदिंद्रप्रस्थंतपोधन ॥ अतऊर्ध्वंमहात्मानःकिमकुर्वतपांडवाः १ सर्वएवमहासत्त्वाममपूर्वपितामहाः ॥ द्रौपदीधर्मपत्नीचकथंतानन्ववर्तत २ कथंचपंचकृष्णायामेकस्यांतेनराधिपाः ॥ वर्तमानामहाभागानाभिद्यंतपरस्परम् ३ श्रोतुमिच्छाम्यहंसर्वंविस्तरेणतपोधन ॥ तेषांचेष्टितमन्योन्यंयुक्तानांकृष्णयासह ४ ॥ वैशंपायनउवाच ॥ धृतराष्ट्राभ्यनुज्ञाताःकृष्णयासहपांडवाः ॥ रेमिरे खांडवप्रस्थेप्राप्तराज्याःपरंतपाः ५ प्राप्यराज्यंमहातेजाःसत्यसंधोयुधिष्ठिरः ॥ पालयामासधर्मेणपृथिवींभ्रातृभिःसह ६ जितारयोमहाप्राज्ञाःसत्यधर्मपरायणाः ॥ मुदंपरमिकांप्राप्तास्तत्रोषुःपांडुनंदनाः ७ कुर्वाणाःपौरकार्याणिसर्वाणिपुरुषर्षभाः ॥ आसांचक्रुर्महार्हेषुपार्थिवेष्वासनेषुच ८ अथतेषूपविष्टेषुसर्वेष्वेवमहात्मसु ॥ नारदस्त्वथदेवर्षिराजगामयदृच्छया ९ आसनंरुचिरंतस्मैप्रददौस्वंयुधिष्ठिरः ॥ देवर्षेरुपविष्टस्यस्वयमर्घ्यंयथाविधि १० प्रादाद्युधिष्ठिरोधीमान्राज्यंतस्मैन्यवेद यत् ॥ प्रतिगृह्यतुतांपूजामृषिःप्रीतमनास्तदा ११ आशीर्भिर्वर्धयित्वाचतमुवाचास्यतामिति ॥ निषसादाभ्यनुज्ञातस्ततोराजायुधिष्ठिरः १२ कथयामासकृष्णा यैभगवंतमुपस्थितम् ॥ श्रुत्वैतद्द्रौपदीचापिशुचिर्भूत्वासमाहिता १३ जगामतत्रयत्रास्तेनारदःपांडवैःसह ॥ तस्याभिवाद्यचरणौदेवर्षेर्धर्मचारिणी १४ कृतांजलिः सुसंवीतास्थिताऽथद्रुपदात्मजा ॥ तस्याश्चापिसधर्मात्मासत्यवागृषिसत्तमः १५ आशिषोविविधाःप्रोच्यराजपुत्र्यास्तुनारदः ॥ गम्यतामितिहोवाचभगवांस्ताम निंदितां १६ गतायामथकृष्णायांयुधिष्ठिरपुरोगमान् ॥ विविक्तेपांडवान्सर्वानुवाचभगवानृषिः १७ ॥ नारदउवाच ॥ पांचालीभवतामेकाधर्मपत्नीयशस्विनी ॥ यथावोनात्रभेदःस्यात्तथानीतिर्विधीयतां १८

एवमिति १ । २ । ३ । ४ । ५ । ६ तत्रोषुःतत्रइंद्रप्रस्थेऊषुर्वासंकृतवंतः ७ आसांचक्रुः स्थिरासनाबभूवुःपार्थिवेषुराजसंबंधिषु आसनेष्वधिकारविशेषेषु ८ । ९ । १० । ११ । १२ । १३ । १४ सुसंवीतासम्यकृतावगुंठना १५ । १६ । १७ । १८

१९।२० अन्योन्यप्रीतिभावकंपरस्परप्रीत्याभावोवृद्धिर्यस्यतत्तथा २१ अघ्नतांहतवंतौ २२ कस्यदेवस्यकन्या २३।२४ इति आदिपर्वणिनीलकंठीयेभारतभावदीपेअष्टाधिकद्विशततमोऽध्यायः॥२०८॥



सुंदोपसुंदौहिपुराभ्रातरौसहिताबुभौ ॥ आस्तामवध्यावन्येषांत्रिषुलोकेषुविश्रुतौ १९ एकराज्यावेकगृहावेकशय्यासनाशनौ ॥ तिलोत्तमायास्तौहेतोरन्योन्यमभि
जघ्नतुः २० रक्ष्यतांसौहृदंतस्मादन्योन्यप्रीतिभावकम् ॥ यथावोनात्रभेदःस्यात्तत्कुरुष्वयुधिष्ठिर २१ ॥ युधिष्ठिरउवाच ॥ सुंदोपसुंदावसुरौकस्यपुत्रौमहामुने ॥
उत्पन्नश्चकथंभेदःकथंचान्योऽन्यमघ्नताम् २२ अप्सरादेवकन्यावैकस्यचैषातिलोत्तमा ॥ यस्याःकामेनसंमत्तौजघ्नतुस्तौपरस्परम् २३ एतत्सर्वंयथावृत्तंविस्तरे
णतपोधन ॥ श्रोतुमिच्छामहेब्रह्मन्परंकौतूहलंहिमे २४ ॥ ॥ इतिश्रीमहाभारतेआदिपर्वणिविदुरागमनराज्यलंभपर्वणियुधिष्ठिरनारदसंवादेऽष्टाधिकद्विशत
तमोऽध्याय ॥ २०८ ॥ ॥ ७ ॥ ॥ नारदउवाच ॥ शृणुमेविस्तरेणेममितिहासंपुरातनम् ॥ भ्रातृभिःसहितःपार्थयथावृत्तंयुधिष्ठिर १ महासुरस्यान्ववाये
हिरण्यकशिपोःपुरा ॥ निकुंभोनामदैत्येंद्रस्तेजस्वीबलवानभूत् २ तस्यपुत्रौमहावीर्यौजातौभीमपराक्रमौ ॥ सुंदोपसुंदौदैत्येंद्रौदारुणौक्रूरमानसौ ३ तावेक
निश्चयौदैत्यावेककार्यार्थसंमतौ ॥ निरंतरमवर्तेतांसमदुःखसुखावुभौ ४ विनान्योन्यंनभुंजातेविनाऽन्योन्यंनजल्पतः ॥ अन्योन्यस्यप्रियकरावन्योऽन्यस्य
प्रियंवदौ ५ एकशीलसमाचारौद्विधैवैकोऽभवत्कृतः ॥ तौविवृद्धौमहावीर्यौकार्येष्वप्येकनिश्चयौ ६ त्रैलोक्यविजयार्थायसमाधायैकनिश्चयम् ॥ दीक्षांकृत्वागतौ
विंध्यंतावुग्रंतेपतुस्तपः ७ तौतुदीर्घेणकालेनतपोयुक्तौबभूवतुः ॥ क्षुत्पिपासापरिश्रांतौजटावल्कलधारिणौ ८ मलोपचितसर्वांगौवायुभक्षौबभूवतुः ॥ आत्ममां
सानिजुह्वंतौपादांगुष्ठाग्रधिष्ठितौ ॥ ऊर्ध्वबाहूचानिमिषौदीर्घकालंधृतव्रतौ ९ तयोस्तपःप्रभावेणदीर्घकालंप्रतापितः ॥ धूमंप्रमुमुचेविंध्यस्तदद्भुतमिवाभवत् ॥
१० ततोदेवाभयंजग्मुरुग्रंदृष्ट्वातयोस्तपः ॥ तपोविघातार्थमथोदेवाविघ्नानिचक्रिरे ११ रत्नैःप्रलोभयामासुःस्त्रीभिश्चोभौपुनःपुनः ॥ नचतौचक्रतुर्भंगंव्रतस्यसुम
हाव्रतौ १२ अथमायांपुनर्देवास्तयोश्चक्रुर्महात्मनोः ॥ भगिन्योमातरोभार्यास्तयोश्चात्मजनस्तथा १३ प्रपात्यमानाविस्रस्ताःशूलहस्तेनरक्षसा ॥ भ्रष्टाभरण
केशांताभ्रष्टाभरणवाससः १४ अभिभाष्यततःसर्वास्तौत्राहीतिविचुक्रुशुः ॥ नचतौचक्रतुर्भंगंव्रतस्यसुमहाव्रतौ १५ यदाक्षोभंनोपयातिनार्तिमन्यतरस्तयोः ॥
ततःस्त्रियस्ताभूतंचसर्वमंतरधीयत १६ ततःपितामहःसाक्षादभिगम्यमहासुरौ ॥ वरेणच्छंदयामाससर्वलोकहितःप्रभुः १७ ततःसुंदोपसुंदौतौभ्रातरौदृढविक्रमौ ॥
दृष्ट्वापितामहंदेवंतस्थतुःप्रांजलीतदा १८ ऊचतुश्चप्रभुंदेवंततस्तौसहितौतदा ॥ आवयोस्तपसाऽनेनयदिप्रीतःपितामहः १९ मायाविदावस्त्रविदौबलिनौकामरू ॥१७६॥
पिणौ ॥ उभावप्यमरौस्यावःप्रसन्नोयदिनौप्रभुः २० ॥ ब्रह्मोवाच ॥ ऋतेऽमरत्वंयुवयोःसर्वमुक्तंभविष्यति ॥ अन्यद्वृणीतंमृत्योश्चविधानममरैःसमम् २१

शृण्विति १।२।३ निरंतरंमतिभेदंविना ४।५।६।७।८।९।१०।११।१२।१३।१४।१५।१६।१७।१८।१९।२० येनामरतुल्यत्वंभवेत्तादृशंविधानंवृणीतंज्ञापयतं २१

प्रभविष्यावःप्रभुत्वमैश्वर्यंकरिष्यावः। यत्कामोयदारभेत्तत्समाप्नोतदेवलभतेनान्यदित्यर्थः २२ । २३ । २४ यथावद्यथायथवदेव २५ । २६ । २७ । २८ मौलिनौकिरीटवंतौ। 'मौलिःकि
रीटेधम्मिल्ले'इतिमेदिनी। श्रीत्यादित्वादिभिः २९ । ३० । ३१ तलनादितैःकरतलध्वनिभिः वाद्यघोषैर्वा ३२ समाःबहूनिवर्षाणिएकंदिनमिवाभूत् ३३ ॥ इतिआदिपर्वणिनीलकंठीये

प्रभविष्यावइतियन्महदभ्युद्यतंतपः॥ युवयोर्हेतुनाऽनेननामरत्वंविधीयते २२ त्रैलोक्यविजयार्थायभवद्भ्यामास्थितंतपः॥ हेतुनाऽनेनदैत्येंद्रौनवांकामंकरोम्यहम्
२३ ॥ सुंदोपसुंदावूचतुः ॥ त्रिषुलोकेषुयद्भूतंकिंचित्स्थावरजंगमम् ॥ सर्वस्मान्नोभयंनस्यादृतेऽन्योऽन्यंपितामह २४ ॥ पितामहउवाच ॥ यत्प्रार्थितं
यथोक्तंचकाममेतद्ददानिवाम् ॥ मृत्योर्विधानमेतच्चयथावद्वोभविष्यति २५ ॥ नारदउवाच ॥ ततःपितामहोदत्त्वावरमेतत्तदातयोः ॥ निवर्त्यतपसस्तौच
ब्रह्मलोकंजगामह २६ लब्ध्वावराणिदैत्येंद्रावथतौभ्रातराबुभौ ॥ अवध्यौसर्वलोकस्यस्वमेवभवनंगतौ २७ तौतुलब्धवरौदृष्ट्वाकृतकामौमनस्विनौ ॥ सर्वःसु
हृज्जनस्ताभ्यांप्रहर्षमुपजग्मिवान् २८ ततस्तौतुजटाभित्त्वामौलिनौसंबभूवतुः ॥ महार्हाभरणोपेतौविरजोंबरधारिणौ २९ अकालकौमुदींचैवचक्रतुःसार्वका
लिकीम् ॥ नित्यःप्रमुदितःसर्वस्तयोश्चैवसुहृज्जनः ३० भक्ष्यतांभुज्यतांनित्यंदीयतांरम्यतामिति॥ गीयतांपीयतांचेतिशब्दश्चासीद्गृहेगृहे ३१ तत्रतत्रमहानादैरु
त्कृष्टतलनादितैः॥ हृष्टंप्रमुदितंसर्वंदैत्यानामभवत्पुरम् ३२ तैस्तैर्विहारैर्बहुभिर्दैत्यानांकामरूपिणां॥ समाःसंक्रीडतांतेषामहरेकमिवाभवत् ३३ ॥ इति श्रीमहाभा
रते आदिपर्वणि विदुरागमनराज्यलंभपर्वणि सुंदोपसुंदोपाख्याने नवाधिकद्विशततमोऽध्यायः॥ २०९ ॥ नारदउवाच ॥ उत्सवेवृत्तमात्रेतुत्रैलोक्याकांक्षिणावु
भौ ॥ मंत्रयित्वाततःसेनांतावाज्ञापयतांतदा १ सुहृद्भिरभ्यनुज्ञातौदैत्येंद्रैर्वृद्धैश्चमंत्रिभिः ॥ कृत्वाप्रास्थानिकंरात्रौमघासुययतुस्तदा २ गदापट्टिशधारिण्याशूल
मुद्गरहस्तया ॥ प्रस्थितौसहधर्मिण्यामहत्यादैत्यसेनया ३ मंगलैःस्तुतिभिश्चापिविजयप्रतिसंहितैः ॥ चारणैःस्तूयमानौतौजग्मतुःपरयामुदा ४ तावंतरिक्षमु
त्प्लुत्यदैत्यौकामगमावुभौ ॥ देवानामेवभवनंजग्मतुर्युद्धदुर्मदौ ५ तयोरागमनंज्ञात्वावरदानंचतत्प्रभोः ॥ हित्वात्रिविष्टपंजग्मुर्ब्रह्मलोकंततःसुराः ६ ताविंद्रलो
कंनिर्जित्ययक्षरक्षोगणांस्तदा ॥ खेचराण्यपिभूतानिजघ्नतुस्तीव्रविक्रमौ ७ अंतर्भूमिगतान्नागान्जित्वातौचमहारथौ ॥ समुद्रवासिनीःसर्वाम्लेच्छजातीर्विजि
ग्यतुः ८ ततःसर्वांमहींजेतुमारब्धावुग्रशासनौ ॥ सैनिकांश्चसमाहूयसुतीक्ष्णंवाक्यमूचतुः ९ राजर्षयोमहायज्ञैर्हव्यकव्यैर्द्विजातयः ॥ तेजोबलंचदेवानांवर्ध
यंतिश्रियंतथा १० तेषामेवंप्रवृत्तानांसर्वेषामसुरद्विषाम् ॥ संभूयसर्वैरस्माभिःकार्यःसर्वात्मनावधः ११ एवंसर्वान्समादिश्यपूर्वतीरेमहोदधेः ॥ क्रूरांमतिंसमा
स्थायजग्मतुःसर्वतोमुखौ १२ यज्ञैर्यजंतियेकेचियाजयंतिचयेद्विजाः ॥ तान्सर्वान्प्रसभंहत्वाबलिनौजग्मतुस्ततः १३

भारतभावदीपेनवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥ ॥ ७ ॥ ॥ उत्सवेइति १ मघासुगमनार्थंनिषिद्धेऽपिनक्षत्रेअसुरत्वाद्ययतुः २ । ३ विजयप्रतिसंहितैर्विजयकथकैः ४
५ । ६ । ७ । ८ । ९ १० । ११ । १२ । १३

१४ नाक्रामंतनव्यासवंतः तयोस्तौ कर्मणिषष्ठी १५ । १६ । १७ । १८ अदृश्यद्भिरंतर्हितैःऋषिभिर्हेतुभूतैस्तेविकुर्वातिविविधानिसिंहव्याघ्रादीनिरूपाणिजगृहातेतिरोभावाय ततस्तद्रूपाज्ञाना
त्पकटान्मुनीन्गजादिरूपैर्निजघ्नतुरित्यर्थः १९ तदेवाह प्रभिन्नेति प्रभिन्नौमदेनक्लिन्नौकरटौगंडदेशौययोस्तौ संलीनमपिमुनिं २० । २१ उत्सवोयात्राविवाहादिः २२ निवृत्तविपणाःक्रयविक्रयादि



आश्रमेष्वग्निहोत्राणिमुनीनांभावितात्मनाम् ॥ गृहीत्वाप्रक्षिपंत्यप्सुविश्रब्धंसैनिकास्तयोः १४ तपोधनैश्चयेक्रुद्धैःशापाउक्तामहात्मभिः ॥ नाक्रामंततयोस्ते
ऽपिवरदाननिराकृताः १५ नाक्रामंतयदाशापाबाणामुक्ताःशिलास्विव ॥ नियमान्संपरित्यज्यव्यद्रवंतद्विजातयः १६ पृथिव्यांयेतपःसिद्धादांताःशमपराय
णाः ॥ तयोर्भयाद्दुद्रुवुस्तेवैनतेयादिवोरगाः १७ मथितैराश्रमैर्भग्नैर्विकीर्णकलशस्रुवैः ॥ शून्यमासीज्जगत्सर्वंकालेनेवहतंतदा १८ ततोराजन्नदृश्यद्भिर्ऋषिभिश्चमहा
सुरौ ॥ उभौविनिश्चयंकृत्वाविकुर्वातेवधैषिणौ १९ प्रभिन्नकरटौमत्तौभूत्वाकुंजररूपिणौ ॥ संलीनमपिदुर्गेषुनिन्यतुर्यमसादनम् २० सिंहौभूत्वापुनर्व्याघ्रौपु
नश्चांतर्हितावुभौ ॥ तैस्तैरुपायैस्तौक्रूरावृषीन्दृष्ट्वानिजघ्नतुः २१ निवृत्तयज्ञस्वाध्यायाप्रणष्टनृपतिद्विजा ॥ उत्सन्नोत्सवयज्ञाचबभूववसुधातदा २२ हाहाभू
ताभयार्त्ताचनिवृत्तविपणापणा ॥ निवृत्तदेवकार्याचपुण्योद्वाहविवर्जिता २३ निवृत्तकृषिगोरक्षाविध्वस्तनगराश्रमा ॥ अस्थिकंकालसंकीर्णाभूर्बभूवोग्रदर्शना २४
निवृत्तपितृकार्यंचनिर्वषट्कारमंगलम् ॥ जगत्प्रतिभयाकारंदुष्प्रेक्ष्यमभवत्तदा २५ चंद्रादित्यौग्रहास्तारानक्षत्राणिदिवौकसः ॥ जग्मुर्विषादंतत्कर्मदृष्ट्वासुंदो
पसुंदयोः २६ एवंसर्वादिशोदैत्योजित्वाक्रूरेणकर्मणा ॥ निःसपत्नौकुरुक्षेत्रेनिवेशमभिचक्रतुः २७ ॥ इति श्रीमहाभारते आदिपर्वणि विदुरागमनराज्यलंभ
पर्वणि सुंदोपसुंदोपाख्यानेदशाधिकद्विशततमोऽध्यायः ॥ २१० ॥ ॥ ४ ॥ ॥ नारदउवाच ॥ ततोदेवर्षयःसर्वेसिद्धाश्चपरमर्षयः ॥ जग्मुस्तदापरा
मार्तिंदृष्ट्वातत्कदनंमहत् १ तेऽभिजग्मुर्जितक्रोधाजितात्मानोजितेंद्रियाः ॥ पितामहस्यभवनंजगतःकृपयातदा २ ततोदृदृशुरासीनंसहदेवैःपितामहम् ॥ सिद्धै
र्ब्रह्मर्षिभिश्चैवसमंतात्परिवारितम् ३ तत्रदेवोमहादेवस्तत्राग्निर्वायुनासह ॥ चंद्रादित्यौचशक्रश्चपारमेष्ठ्यास्तथर्षयः ४ वैखानसावालखिल्यावानप्रस्थामरी
चिपाः ॥ अजाश्चैवाविमूढाश्चतेजोगर्भास्तपस्विनः ५ ऋषयःसर्वएवैतेपितामहमुपागमन् ॥ ततोऽभिगम्यतेदीनाःसर्वएवमहर्षयः ६ सुंदोपसुंदयोःकर्मसर्वमेवशशं
सिरे ॥ यथाहृतंयथाचैवकृतंयेनक्रमेणच ७ न्यवेदयंस्ततःसर्वमखिलेनपितामहे ॥ ततोदेवगणाःसर्वेतेचैवपरमर्षयः ८ तमेवार्थंपुरस्कृत्यपितामहमचोदयन् ॥
ततःपितामहःश्रुत्वासर्वेषांतद्वचस्तदा ९ मुहूर्तमिवसंचिंत्यकर्तव्यस्यचनिश्चयम् ॥ तयोर्वधंसमुद्दिश्यविश्वकर्माणमाह्वयत् १० दृष्ट्वाचविश्वकर्माणंव्यादिदेश
पितामहः ॥ सृज्यतांप्रार्थनीयेकाप्रमदेतिमहातपाः ११ पितामहंनमस्कृत्यतद्वाक्यमभिनंद्यच ॥ निर्ममेयोषितंदिव्यांचिंतयित्वापुनःपुनः १२ ॥१७७॥

व्यवहारशून्याआपणाहट्टायस्यां २३ अस्थीनिहस्तपादादिसंबंधीनि कंकालाःदेहमध्यास्थीनिपार्श्वादिसहितानि २४ । २५ ग्रहाःकुजादयः ताराःसप्तर्ष्यादयः नक्षत्राण्यश्विन्यादीनि २६ । २७
॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेदशाधिकद्विशततमोऽध्यायः ॥ २१० ॥ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

१३ । १४ । १५ तस्यागात्रेसूक्ष्ममपितद्वंगंनास्ति यच्छब्दस्तदर्थे रूपसंपदाहेतुभूतयायत्रनियुक्तानिरीक्षतांदृष्टिर्नसज्जतीतिसंबंधः १६ । १७ । १८ । १९ प्रलोभनमर्थोर्त्सुंदोपसुंदयोरेव २० ताभ्यां
तयोः २१ मंडलंसमुदायं २२ भगवान्विष्णुःप्राङ्मुखीभावादिनातेषामपित्रमोहोद्योतितः २३ । २४ द्रष्टुकामस्यस्थाणोः २५ । २६ । २७ । २८ देवनिकायानांदेवसंघानांयेनदेशेनमार्गेणसाया

त्रिषुलोकेषुयत्किंचिद्भूतंस्थावरजंगमम् ॥ समानयद्दर्शनीयंतत्तदत्रसविश्ववित् १३ कोटिशश्चैवरत्नानितस्यागात्रेन्यवेशयत् ॥ तांरत्नसंघातमयीमसृजद्देवरूपि
णीम् १४ साप्रयत्नेनमहतानिर्मिताविश्वकर्मणा ॥ त्रिषुलोकेषुनारीणांरूपेणाप्रतिमाऽभवत् १५ नतस्याःसूक्ष्ममप्यस्तियद्गात्रेरूपसंपदा ॥ नियुक्तायत्रवादृष्टिर्न
सज्जतिनिरीक्षताम् १६ साविग्रहवतीवश्रीःकामरूपावपुष्मती ॥ जहारसर्वभूतानांचक्षूंषिचमनांसिच १७ तिलंतिलंसमानीयरत्नानांयद्विनिर्मिता ॥ तिलो
त्तमेतिततस्यानामचक्रेपितामहः १८ ब्रह्माणंसानमस्कृत्यप्रांजलिर्वाक्यमब्रवीत् ॥ किंकार्यंमयिभूतेशयेनास्म्यद्येहनिर्मिता १९ ॥ पितामहउवाच ॥ गच्छ
सुंदोपसुंदाभ्यामसुराभ्यांतिलोत्तमे ॥ प्रार्थनीयेनरूपेणकुरुभद्रेप्रलोभनम् २० त्वत्कृतेदर्शनादेवरूपसंपत्कृतेनवै ॥ विरोधःस्याद्यथाताभ्यामन्योन्येनतथाकुरु
२१ ॥ ॥ नारदउवाच ॥ सातथेतिप्रतिज्ञायनमस्कृत्यपितामहम् ॥ चकारमंडलंतत्रविबुधानांप्रदक्षिणम् २२ प्राङ्मुखोभगवानास्तेदक्षिणेनमहेश्वरः ॥
देवाश्चैवोत्तरेणासन्सर्वतस्त्वृषयोऽभवन् २३ कुर्वत्यातुतदातत्रमंडलंतत्प्रदक्षिणम् ॥ इंद्रःस्थाणुश्चभगवान्धैर्येणप्रत्यवस्थितौ २४ द्रष्टुकामस्यचात्यर्थंगतयापा
र्श्वतस्तया ॥ अन्यदंचितपक्ष्माक्षंदक्षिणंनिःसृतंमुखम् २५ पृष्ठतःपरिवर्तंत्यापश्चिमंनिःसृतंमुखम् ॥ गतयाचोत्तरंपार्श्वमुत्तरंनिःसृतंमुखम् २६ महेंद्रस्यापि
नेत्राणांपृष्ठतःपार्श्वतोऽग्रतः ॥ रक्तांतानांविशालानांसहस्रंसर्वतोऽभवत् २७ एवंचतुर्मुखःस्थाणुर्महादेवोऽभवत्पुरा ॥ तथासहस्रनेत्रश्चबभूवबलसूदनः २८ त
थादेवनिकायानांमहर्षीणांचसर्वशः ॥ मुखानिचाभ्यवर्तंतयेनयातितिलोत्तमा २९ तस्यागात्रेनिपतितादृष्टिस्तेषांमहात्मनाम् ॥ सर्वेषामेवभूयिष्ठमृते देवंपिता
महम् ३० गच्छंत्यातुतयासर्वे देवाश्चपरमर्षयः ॥ कृतमित्येवतत्कार्यंमेनिरेरूपसंपदा ३१ तिलोत्तमायांतस्यांतुगतायांलोकभावनः ॥ सर्वान्विसर्जयामासदे
वानृषिगणांश्चतान् ३२ ॥ ॥ इतिश्रीमहाभारतेआदिपर्वणिविदुरागमनराज्यलंभपर्वणिसुंदोपसुंदोपाख्यानेतिलोत्तमाप्रस्थापनेएकादशाधिकद्विशततमो
ऽध्यायः ॥ २११ ॥ ॥ ४ ॥ नारदउवाच ॥ जित्वातुपृथिवीं दैत्यौनिःसपत्नौगतव्यथौ ॥ कृत्वात्रैलोक्यमव्यग्रंकृतकृत्यौबभूवतुः १ देवगंधर्वयक्षाणां
नागपार्थिवरक्षसाम् ॥ आदायसर्वरत्नानिपरांतुष्टिमुपागतौ २ यदानप्रतिषेद्धारस्तयोःसंतीहकेचन ॥ निरुद्योगौतदाभूत्वाविजह्रातेऽमराविव ३ स्त्रीभिर्मा
६० ल्यैश्चगंधैश्चभक्ष्यभोज्यैःसुपुष्कलैः ॥ पानैश्चविविधैर्हृद्यैःपरांप्रीतिमवाप्तुः ४ अंतःपुरवनोद्यानेपर्वतेषुवनेषुच ॥ यथेप्सितेषुदेशेषुविजह्रातेऽमराविव ५

तितथामुखान्यभ्यवर्तंत २९ । ३० । ३१ । ३२ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥ ॥ ४ ॥ ॥ ४ ॥ जित्वेति कृत्वास्वाधीनं
अव्यग्रंनिर्विशेषंयथास्यात्तथा १ । २ । ३ । ४ । ५

प्रस्थेशिखरे ६ । ७ । ८ वेषंश्रृंगारमाधायसाक्षिप्तमाक्षिप्तमाक्षेपोमनोवैकल्यंतेनसहयथास्यात्तथा । सूक्ष्मैकवाससोधारितत्वाद्विविक्तावयवत्वेजनैर्व्याकुलयंतीत्यर्थः ९ । १० व्यथितौकामेन ११

ततःकदाचिद्विंध्यस्यप्रस्थेसमशिलातले ॥ पुष्पिताग्रेषुशालेषुविहारमभिजग्मतुः ६ दिव्येषुसर्वकामेषुसमानीतेषुतावुभौ ॥ वरासनेषुसंहृष्टौसहस्त्रीभिर्निषीदतुः ७
ततोवादित्रनृत्याभ्यामुपातिष्ठंततौस्त्रियः ॥ गीतैश्चस्तुतिसंयुक्तैःप्रीत्यासमुपजग्मिरे ८ ततस्तिलोत्तमातत्रवनेपुष्पाणिचिन्वती ॥ वेषंसाक्षिप्तमाधायरक्तेनैकेन
वाससा ९ नदीतीरेषुजातान्साकर्णिकारान्प्रचिन्वती ॥ शनैर्जगामतंदेशंयत्रास्तांतौमहासुरौ ॥ तौतुपीत्वावरंपानंमदरक्तांतलोचनौ ॥ दृष्ट्वैवतांवरारोहांव्य
थितौसंबभूवतुः ११ तावुत्थायासनंहित्वाजग्मतुर्यत्रसास्थिता ॥ उभौचकामसंमत्तावुभौप्रार्थयतश्चताम् १२ दक्षिणेतांकरेसुभ्रूंसुंदोजग्राहपाणिना ॥ उपसुंदोपि
जग्राहवामेपाणौतिलोत्तमाम् १३ वरप्रदानमत्तौतावौरसेनबलेनच ॥ धनरत्नमदाभ्यांचसुरापानमदेनच १४ सर्वैरेतैर्मदैर्मत्तावन्योऽन्यंभ्रुकुटीकृतौ ॥ मदकामस
माविष्टौपरस्परमथोचतुः १५ ममभार्यातवगुरुरितिसुंदोऽभ्यभाषत ॥ ममभार्यातववधूरुपसुंदोऽभ्यभाषत १६ नैषातवममैषेतितितस्तौमन्युराविशत् ॥ तस्या
रूपेणसंमत्तौविगतस्नेहसौहृदौ १७ तस्याहेतोर्गदेभीमेसंगृह्णीतामुभौतदा ॥ प्रगृह्यचगदेभीमेतस्यांतौकाममोहितौ १८ अहंपूर्वमहंपूर्वमित्यन्योऽन्यंनिजघ्नतुः ॥
तौगदाभिहतौभीमौपेततुर्धरणीतले १९ रुधिरेणावसिक्तांगौद्वाविवार्कौनभश्च्युतौ ॥ ततस्ताविद्रुतानार्यःसचदैत्यगणस्तथा २० पातालमगमत्सर्वोविषादभय
कंपितः ॥ ततःपितामहस्तत्रसहदेवैर्महर्षिभिः २१ आजगामविशुद्धात्मापूजयंश्चतिलोत्तमाम् ॥ वरेणच्छंदयामासभगवान्प्रपितामहः २२ वरंदित्सुःसतत्रै
नांप्रीतःप्राहपितामहः ॥ आदित्यचरितांल्लोकान्विचरिष्यसिभाविनि २३ तेजसाचसुदृष्टांत्वांनकरिष्यतिकश्चन ॥ एवंतस्यैवरंदत्वासर्वलोकपितामहः २४ इं
द्रेत्रैलोक्यमाधायब्रह्मलोकंगतःप्रभुः ॥ नारदउवाच ॥ एवंतौसहितौभूत्वासर्वार्थेष्वेकनिश्चयौ २५ तिलोत्तमार्थंसंक्रुद्धावन्योऽन्यमभिजघ्नतुः ॥ तस्माद्ब्रवीमि
वःस्नेहात्सर्वान्भरतसत्तमाः २६ यथावोनात्रभेदःस्यात्सर्वेषांद्रौपदीकृते ॥ तथाकुरुतभद्रंवोममचेत्प्रियमिच्छथ २७ ॥ वैशंपायनउवाच ॥ एवमुक्तामहात्मानो
नारदेनमहर्षिणा ॥ समयंचक्रिरेराजंस्तेन्योऽन्यवशमागताः ॥ समक्षंतस्यदेवर्षेर्नारदस्यामितौजसः २८ द्रौपद्यानःसहासीनानन्योऽन्यंयोऽभिदर्शयेत् ॥ सनो
द्वादशवर्षाणिब्रह्मचारीवनेवसेत् २९ कृतेतुसमयेतस्मिन्पांडवैर्धर्मचारिभिः ॥ नारदोऽप्यगमत्प्रीतइष्टंदेशंमहामुनिः ३० एवंतैःसमयःपूर्वंकृतोनारदचोदितैः ॥
नचाभिद्यंततेसर्वेतदाऽन्योऽन्येनभारत ३१ ॥ ॥ इतिश्रीमहाभारतेआदिपर्वणिविदुरागमनराज्यलंभप०सुंदोपसुंदोपाख्यानेद्वादशाधिकद्विशततमोऽध्यायः
॥ २१२ ॥ ॥ ॥ समाप्तंचविदुरागमनराज्यलंभपर्व ॥ ॥ ॥१७९॥

१२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ तेजसाऽर्कवत्परदृष्टचभिभावकत्वात्सुदृष्टांसम्यग्दृष्टांनकरिष्यतिकश्चित् २४ । २५ । २६ । २७ । २८ । २९ । ३० ३१ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपे द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥ ॥ ७ ॥

एवमिति १ । २ नागैर्गजैः सरस्वतीबहुसरोयुक्तावनस्थली । साहिगजैर्युक्ताऽन्यैश्छेत्तुमशक्या तयाचगजाब्रलिनः । एवंतेमिथोवृद्धिहेतवइत्यर्थः ३ । ४ । ५ । ६ । ७ । ८ । ९ हस्त धारणाक्रियतामभयंदीयतामित्यर्थः १० । ११ । १२ । १३ । १४ । १५ उपक्षेपणजउपेक्षाजन्यः अधर्मइतिच्छेदः १६ अनास्तिक्यमास्तिक्याभावः रक्षणेविषये प्रतितिष्ठेतस्थिरःस्यात्

॥ अथार्जुनवनवासपर्व ॥ ॥ वैशंपायनउवाच ॥ ॥ एवंतेसमयंकृत्वान्यवसंस्तत्रपांडवाः ॥ वशेशस्त्रप्रतापेनकुर्वंतोन्यान्महीक्षितः १ तेषांमनुजसिंहानां
पंचानाममितौजसाम् ॥ बभूवकृष्णासर्वेषांपार्थानांवशवर्तिनी २ तेतयातैश्चसावीरैःपतिभिःसहपंचभिः ॥ बभूवपरमप्रीतानागैरिवसरस्वती ३ वर्तमानेषुधर्मेण
पांडवेषुमहात्मसु ॥ व्यवर्धन्कुरवःसर्वेहीनदोषाःसुखान्विताः ४ अथदीर्घेणकालेनब्राह्मणस्यविशांपते ॥ कस्यचित्तस्कराजह्नुःकेचिद्गान्नृपसत्तम ५ ह्रि
यमाणेधनेतस्मिन्ब्राह्मणःक्रोधमूर्च्छितः ॥ आगम्यखांडवप्रस्थमुदक्रोशत्सपांडवान् ६ ह्रियतेगोधनंक्षुद्रैर्नृशंसैरकृतात्मभिः ॥ प्रसह्यचास्मद्विषयादभ्यधा
वतपांडवाः ७ ब्राह्मणस्यप्रशांतस्यहविर्ध्वांक्षैःप्रलुप्यते ॥ शार्दूलस्यगुहांशून्यांनीचःक्रोष्टाऽभिमर्दति ८ अरक्षितारंराजानंबलिषड्भागहारिणम् ॥ तमाहुः
सर्वलोकस्यसमग्रंपापचारिणम् ९ ब्राह्मणस्वेहृतेचोरैर्धर्मार्थेचविलोपिते ॥ रोरूयमाणेचमयिक्रियतांहस्तधारणा १० ॥ वैशंपायनउवाच ॥ रोरूयमा
णस्याभ्याशेभृशंविप्रस्यपांडवः ॥ तानिवाक्यानिशुश्रावकुंतीपुत्रोधनंजयः ११ श्रुत्वैवचमहाबाहुर्माभैरित्याहतंद्विजम् ॥ आयुधानिचयत्रासन्पांडवानांमहा
त्मनाम् १२ कृष्णयासहतत्रास्तेधर्मराजोयुधिष्ठिरः ॥ संप्रवेशायचाशक्तोगमनायचपांडवः १३ तस्यचार्तस्यतैर्वाक्यैश्चोद्यमानःपुनःपुनः ॥ आक्रंदेतत्रकौंते
यश्चिंतयामासदुःखितः १४ ह्रियमाणेधनेतस्मिन्ब्राह्मणस्यतपस्विनः ॥ अश्रुप्रमार्जनंतस्यकर्तव्यमितिनिश्चयः १५ उपक्षेपणजोऽधर्मःसुमहान्स्यान्महीपतेः ॥
यद्यस्यरुदतोद्वारिनकरोम्यद्यरक्षणम् १६ अनास्तिक्यंचसर्वेषामस्माकमपिरक्षणे ॥ प्रतितिष्ठेतलोकेऽस्मिन्नधर्मश्चैवनोभवेत् १७ अनापृच्छ्यतुराजानंगतेमयि
नसंशयः ॥ अजातशत्रोर्नृपतेर्ममयिचैवानृतंभवेत् १८ अनुप्रवेशेराज्ञस्तुवनवासोभवेन्मम ॥ सर्वमन्यत्परिहृतंधर्षणात्तुमहीपतेः १९ अधर्मोवैमहानस्तुवनेवाम
रणंमम ॥ शरीरस्यविनाशेनधर्मएवविशिष्यते २० एवंविनिश्चित्यततःकुंतीपुत्रोधनंजयः ॥ अनुप्रविश्यराजानमापृच्छ्यचविशांपते २१ धनुरादायसंहृष्टो
ब्राह्मणंप्रत्यभाषत ॥ ब्राह्मणागम्यतांशीघ्रंयावत्परधनैषिणः २२ नदूरेतेगताःक्षुद्रास्तावद्गच्छावहेसह ॥ यावन्निवर्तयाम्यद्यचौरहस्ताद्धनंतव २३ सोऽनुसृत्य
महाबाहुर्धन्वीवर्मीरथीध्वजी ॥ शरैर्विध्वस्यतांश्चौरानवजित्यचतद्धनम् २४ ब्राह्मणंसमुपाकृत्ययशःप्राप्यचपांडवः ॥ ततस्तद्गोधनंपार्थोदत्वातस्मैद्विजातये ॥
२५ आजगामपुरंवीरःसव्यसाचीधनंजयः ॥ सोऽभिवाद्यगुरून्सर्वान्सर्वैश्चाप्यभिनंदितः २६

तेनचनोऽस्माकमधर्मश्चमहानभवेत् १७ राजानंसस्त्रीकमायुधागारस्थंप्रतिमयिगतेसति १८ अनुप्रवेशेएकस्मिन्स्त्रियासहरममाणेऽन्यस्यतत्रगमने । अन्यद्वनवासादिकं । परिहृतंतुच्छं । धर्षणात्त्वधर्मोमहानितिसंबंधः १९ वाशब्दश्चार्थे येनाधर्मेणममवनेमरणमिवस्यात्सएवास्तुयतोस्माद्ब्रह्मस्वरक्षणजोधर्मःश्रेष्ठः २० आपृच्छ्यधनुश्चादाय २१ । २२ । २३ । २४ समुपाकृत्यप्रसाद्यस्वपुरमाजगामेतिद्वितीयेनान्वयः २५ । २६

२७ समयोऽनुप्रवेशद्वादशवार्षिकोवनवासनियमः २८ सज्जमानयास्खलंत्या २९ । ३० अनुजानामिब्राह्मणार्थत्वेनगुणत्वेनैवांगीकरोमि व्यलीकमप्रियं ३१ उपघातोऽनिष्टः विधिलोपकोधर्मत्रः ३२ नचतेत्वया ३३ । ३४ । ३५ ॥ इति आ०नी०भा०त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥ तंप्रयांतमिति १ भैक्षाःभिक्षाजीविनोयतयोब्रह्मचारिणश्च चौक्षाइतिपाठेचोक्षाःशुचयस्तएवचौक्षाः

धर्मराजमुवाचेदंवतमादिशमेप्रभो ॥ समयःसमतिक्रांतोभवत्संदर्शनेमया २७ वनवासंगमिष्यामिसमयोह्येपनःकृतः ॥ इत्युक्तोधर्मराजस्तुसहसावाक्यमप्रियम् २८ कथमित्यब्रवीद्वाचाशोकार्त्तःसज्जमानया ॥ युधिष्ठिरोगुडाकेशंभ्राताभ्रातरमच्युतम् २९ उवाचदीनोराजाचधनंजयमिदंवचः ॥ प्रमाणमस्मियदितेमत्तः शृणुवचोऽनघ ३० अनुप्रवेशेयद्वीरकृतवांस्त्वंममाप्रियम् ॥ सर्वंतदनुजानामिव्यलीकंनचमेहृदि ३१ गुरोरनुप्रवेशोहिनोपघातोयवीयसः ॥ यवीयसोऽनुप्रवेशोज्येष्ठस्यविधिलोपकः ३२ निवर्तस्वमहाबाहोकुरुष्ववचनंमम ॥ नहितेधर्मलोपोऽस्तिनचतेधर्षणाकृता ३३ ॥ अर्जुनउवाच ॥ नव्याजेनचरेद्धर्ममितिमेभवतःश्रुतम् ॥ नसत्याद्विचलिष्यामिसत्येनायुधमालभे ३४ ॥ वैशंपायनउवाच ॥ सोऽभ्यनुज्ञायराजानंवनचर्यायदीक्षितः ॥ वनेद्वादशवर्षाणिवासायानुजगामह ३५ ॥ इति श्रीमहाभारते आदिपर्वणि अर्जुनवनवासपर्वणि अर्जुनतीर्थयात्रायांत्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥ ॥

॥ वैशंपायनउवाच ॥ तंप्रयांतंमहाबाहुंकौरवाणांयशस्करम् ॥ अनुजग्मुर्महात्मानोब्राह्मणावेदपारगाः १ वेदवेदांगविद्वांसस्तथैवाध्यात्मचिंतकाः ॥ भैक्षाश्चभगवद्भक्ताःसूताःपौराणिकाश्चये २ कथकाश्चापरेराजन्श्रमणाश्चवनौकसः ॥ दिव्याख्यानानियेचापिपठंतिमधुरंद्विजाः ३ एतैश्चान्यैश्चबहुभिःसहायैःपांडुनंदनः ॥ वृतःश्लक्ष्णकथैःप्रायान्मरुद्भिरिववासवः ४ रमणीयानिचित्राणिवनानिचसरांसिच ॥ सरितःसागरांश्चैवदेशानपिचभारत ५ पुण्यान्यपिचतीर्थानिददर्शभरतर्षभः ॥ सगंगाद्वारमाश्रित्यनिवेशमकरोत्प्रभुः ६ तत्रतस्याद्भुतंकर्मशृणुत्वंजनमेजय ॥ कृतवान्यद्विशुद्धात्मापांडूनांप्रवरोहिसः ७ निविष्टेतत्रकौंतेयेब्राह्मणेषुचभारत ॥ अग्निहोत्राणिविप्रास्तेप्रादुश्चक्रुरनेकशः ८ तेषुप्रबोध्यमानेषुज्वलितेषुहुतेषुच ॥ कृतपुष्पोपहारेषुतीरांतरगतेषुच ९ कृताभिषेकैर्विद्वद्भिर्नियतैःसत्पथिस्थितैः ॥ शुशुभेऽतीवतद्राजन्गंगाद्वारंमहात्मभिः १० तथापर्याकुलेतस्मिन्निवेशेपांडवर्षभः ॥ अभिषेकायकौंतेयोगंगामवततारह ११ तत्राभिषेकंकृत्वासतर्पयित्वापितामहान् ॥ उत्तितीर्षुर्जलाद्राजन्नग्निकार्यचिकीर्षया १२ अपकृष्टोमहाबाहुर्नागराजस्यकन्यया ॥ अंतर्जलेमहाराजउलूप्याकामयानया १३ ददर्शपांडवस्तत्रपावकंसुसमाहितः ॥ कौरव्यस्याथनागस्यभवनेपरमार्चिते १४ तत्राग्निकार्यंकृतवान्कुंतीपुत्रोधनंजयः ॥ अशंकमानेनहुतस्तेनातुष्यद्धुताशनः १५ अग्निकार्यंसकृत्वातुनागराजसुतांतदा ॥ प्रहसन्निवकौंतेयइदंवचनमब्रवीत् १६

'चोक्षोगीतेशुचौदक्षेतथातीक्ष्णमनोज्ञयोः'इतिमेदिनी चोक्षाइत्येवमुख्यःपाठः २ श्रमणाऊर्ध्वरेतसोयतयोब्रह्मचारिणश्च ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ अग्निकार्यचिकीर्षयेतिपत्नींसान्निध्याभावेऽपिमसवताऔपासनहोमःकर्त्तव्यइतिदर्शितं १२ अपकृष्टोऽपनीतः कामयानयातंपतिमिच्छंत्या १३ । १४ अशंकमानेनआपद्धर्मनिश्चयवताविस्मयरहितेन १५ । १६

१७ । १८ समुद्रगांगंगां १९ अनंगग्लपितांकामेनपीडितां २० । २१ । २२ । २३ जानाम्यहंपांडवेयेत्यादिनास्वस्यातींद्रियंज्ञानंदर्शयंतीद्रौपदीनिमित्तमेवतवब्रह्मचर्यनान्यत्रेत्याहअतएवाग्रेऽपि

किमिदंसाहसंभीरुकृतवत्यसिभाविनि ॥ कश्चायंसुभगेदेशःकाचत्वंकस्यवाऽऽत्मजा १७ ॥ उलूप्युवाच ॥ ऐरावतकुलेजातःकौरव्योनामपन्नगः ॥ तस्यास्मिदुहिताराजन्नुलूपीनामपन्नगी १८ साऽहंत्वामभिषेकार्थमवतीर्णंसमुद्रगाम् ॥ दृष्ट्वैवपुरुषव्याघ्रकंदर्पेणाभिमूर्च्छिता १९ तांमामनंगग्लपितांत्वत्कृतेकुरुनंदन ॥ अनन्यांनंदयस्वाद्यप्रदानेनात्मनोऽनघ २० ॥ अर्जुनउवाच ॥ ब्रह्मचर्यमिदंभद्रेममद्वादशवार्षिकम् ॥ धर्मराजेनचादिष्टंनाहमस्मिस्वयंवशः २१ तवचापिप्रियंकर्तुमिच्छामिजलचारिणि ॥ अनृतंनोक्तपूर्वंचमयार्किंचनकर्हिचित् २२ कथंचनानृतंमेस्यात्तवचापिप्रियंभवेत् ॥ नचपीड्येतमेधर्मस्तथाकुर्याभुजंगमे २३ ॥ उलूप्युवाच ॥ जानाम्यहंपांडवेययथाचरसिमेदिनीम् ॥ यथाचतेब्रह्मचर्यमिदमादिष्टवान्गुरुः २४ परस्परंवर्त्तमानान्द्रुपदस्यात्मजांप्रति ॥ योनोऽनुप्रविशेन्मोहात्सवैद्वादशवार्षिकम् २५ वनेचरेद्ब्रह्मचर्यमितिवःसमयःकृतः ॥ तदिदंद्रौपदीहेतोरन्योऽन्यस्यप्रवासनम् २६ कृतवांस्तत्रधर्मार्थमत्रधर्मोनदुष्यति ॥ परित्राणंचकर्त्तव्यमार्तानांपृथुलोचन २७ कृत्वाममपरित्राणंतवधर्मोनलुप्यते ॥ यदिवाप्यस्यधर्मस्यसूक्ष्मोऽपिस्याद्व्यतिक्रमः २८ सचतेधर्मएवस्याद्दत्वाप्राणान्ममार्जुन ॥ भक्तांचभजमांपार्थसतामेतन्मतंप्रभो २९ नकरिष्यसिचेदेवंमृतांमामुपधारय ॥ प्राणदानान्महाबाहोचरधर्ममनुत्तमम् ३० शरणंचप्रपन्नाऽस्मित्वामद्यपुरुषोत्तम ॥ दीनाननाथान्कौंतेयपरिरक्षसिनित्यशः ३१ साऽहंशरणमभ्येमिरोरवीमिचदुःखिता ॥ याचेत्वांचाभिकामाऽहंतस्मात्कुरुममप्रियम् ॥ सत्वमात्मप्रदानेनसकामांकर्तुमर्हसि ३२ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुकौंतेयःपन्नगेश्वरकन्यया ॥ कृतवांस्तत्तथासर्वंधर्ममुद्दिश्यकारणम् ३३ सनागभवनेरात्रिंतामुषित्वाप्रतापवान् ॥ उदितेऽभ्युत्थितःसूर्येकौरव्यस्यनिवेशनात् ३४ आगतस्तुपुनस्तत्रगंगाद्वारंतयासह ॥ परित्यज्यगतासाध्वीउलूपीनिजमंदिरम् ३५ दत्वावरमजेयत्वंजलेसर्वत्रभारत ॥ साध्याजलचराःसर्वेभविष्यंतिनसंशयः ३६ ॥ इति श्रीम०आ०अर्जुनवनवासपर्वणिउलूपीसंगेचतुर्दशाधिकद्विशततमोऽध्यायः॥ २१४॥ वैशंपायनउवाच ॥ कथयित्वाचतत्सर्वंब्राह्मणेभ्यःसभारत ॥ प्रययौहिमवत्पार्श्वंततोवज्रधरात्मजः १ अगस्त्यवटमासाद्यवसिष्ठस्यचपर्वतम् ॥ भृगुतुंगेचकौंतेयःकृतवान्शौचमात्मनः २ प्रददौगोसहस्राणिसुबहूनिचभारत ॥ निवेशांश्चद्विजातिभ्यःसोऽददत्कुरुसत्तमः ३ हिरण्यबिंदोस्तीर्थेचस्नात्वापुरुषसत्तमः ॥ दृष्टवान्पांडवश्रेष्ठःपुण्यान्यायतनानिच ४ अवतीर्यनरश्रेष्ठोब्राह्मणैःसहभारत ॥ प्राचींदिशमभिप्रेप्सुर्जगामभरतर्षभः ५

चित्रांगदासुभद्रयोःपाणिग्रहणंसंगच्छते २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ परित्यज्यमुनिसमाजेतंविसृज्य ३५ । ३६ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपेचतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥ ॥ ७ ॥ ॥ कथयित्वेति १ भृगुतुंगेतुंगनाथइतिप्रसिद्धे २ निवेशान्गृहाणि ३ । ४ । ५

६ महानदींगयास्थामेवनदीं ७ । ८ । ९ राष्ट्रद्वारेषुपर्वतसंधिमार्गेषु कलिंगस्थतीर्थानामनतिप्रशस्तत्वादुपावर्त्ततपरावृत्ताः १० । ११ । १२ । १३ । १४ । १५ चैत्रवाहनींचित्रवाहनस्यदुहि
तरं १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ हेतुविधिनापुत्रहेतोपुत्रिकायामपिपुत्रशद्वप्रयोगविधानात् लांगलंजीवनमितिवत् तथाचलिंगं । पुमांसएवमेपुत्राजायेरन्निति । तेन

आनुपूर्व्येणतीर्थानिदृष्टवान्कुरुसत्तमः ॥ नदींचोत्पलिनींरम्यामरण्यंनैमिषंप्रति ६ नंदामपरनंदांचकौशिकींचयशस्विनीम् ॥ महानदींगयांचैवगंगामपिच
भारत ७ एवंतीर्थानिसर्वाणिपश्यमानस्तथाऽऽश्रमान् ॥ आत्मनःपावनंकुर्वन्ब्राह्मणेभ्योददौचगाः ८ अंगवंगकलिंगेषुयानितीर्थानिकानिचित् ॥ जगामता
निसर्वाणिपुण्यान्यायतनानिच ९ दृष्ट्वाचविधिवत्तानिधनंचापिददौततः ॥ कलिंगराष्ट्रद्वारेषुब्राह्मणाःपांडवानुगाः ॥ अभ्यनुज्ञायकौंतेयमुपावर्त्ततभारत १०
सतुतैरभ्यनुज्ञातःकुंतीपुत्रोधनंजयः ॥ सहायैरल्पकैःशूरःप्रययौयत्रसागरः ११ सकलिंगानतिक्रम्यदेशानायतनानिच ॥ हर्म्याणिरमणीयानिप्रेक्षमाणोय
यौप्रभुः १२ महेंद्रपर्वतंदृष्ट्वातापसैरुपशोभितम् ॥ समुद्रतीरेणशनैर्मणिपूरंजगामह १३ तत्रसर्वाणितीर्थानिपुण्यान्यायतनानिच ॥ अभिगम्यमहाबाहुरभ्यग
च्छन्महीपतिम् १४ मणिपूरेश्वरंराजन्धर्मज्ञंचित्रवाहनम् ॥ तस्यचित्रांगदानामदुहिताचारुदर्शना १५ तांददर्शपुरेतस्मिन्विचरंतींयदृच्छया ॥ दृष्ट्वाचतां
वरारोहांचकमेचैत्रवाहनीम् १६ अभिगम्यचराजानमवदत्स्वंप्रयोजनम् ॥ देहिमेखल्विमांराजन्क्षत्रियायमहात्मने १७ तच्छ्रुत्वात्वब्रवीद्राजाकस्यपुत्रोऽसि
नामकिम् ॥ उवाचतंपांडवोऽहंकुंतीपुत्रोधनंजयः १८ तमुवाचाथराजाससांत्वपूर्वमिदंवचः ॥ राजाप्रभंजनोनामकुलेऽस्मिन्संबभूवह १९ अपुत्रःप्रसवेनार्थीतप
स्तेपेसउत्तमम् ॥ उग्रेणतपसातेनदेवदेवःपिनाकधृक् २० ईश्वरस्तोषितःपार्थदेवदेवउमापतिः ॥ सतस्मैभगवान्प्रादादेकैकंप्रसवंकुले २१ एकैकःप्रसवस्तस्मा
द्भवत्यस्मिन्कुलेसदा ॥ तेषांकुमाराःसर्वेषांपूर्वेषांममजज्ञिरे २२ एकाचममकन्येयंकुलस्योत्पादनीध्रुवम् ॥ पुत्रोममायमितिमेभावनापुरुषर्षभ २३ पुत्रिकाहेतु
विधिनासंज्ञिताभरतर्षभ ॥ तस्मादेकःसुतोयोऽस्यांजायतेभारतत्वया २४ एतच्छुल्कंभवत्वस्याःकुलकृज्जायतामिह ॥ एतेनसमयेनेमांप्रतिगृह्णीष्वपांडव २५
सतथेतिप्रतिज्ञायतांकन्यांप्रतिगृह्यच ॥ उवासनगरेतस्मिंस्तिस्रःकुंतीसुतःसमाः २६ तस्यांसुतेसमुत्पन्नेपरिष्वज्यवरांगनाम् ॥ आमंत्र्यनृपतिंतंतुजगाम
परिवर्तितुम् २७ ॥ इति श्रीमहाभारते आदिपर्वणि अर्जुनवनवासपर्वणि चित्रांगदासंगमे पंचदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥ ॥ ४ ॥
॥ वैशंपायनउवाच ॥ ततःसमुद्रेतीर्थानिदक्षिणेभरतर्षभः ॥ अभ्यगच्छत्सुपुण्यानिशोभितानितपस्विभिः १ वर्जयंतिस्मतीर्थानितत्रपंचस्मतापसाः ॥
अवकीर्णानियान्यासन्पुरस्तात्तुतपस्विभिः २ अगस्त्यतीर्थंसौभद्रंपौलोमंचसुपावनम् ॥ कारंधमंप्रसन्नंचहयमेधफलंचतत् ३

पुत्र्यपिपुत्रसंज्ञिता २४ शुल्कंमौल्यं अद्यापिपुत्रिकापुत्रस्यैवराज्यमितिदक्षिणकेरलेष्वाचारोदृश्यते २५ समाःवर्षाणि । हिमाइतिपाठेऽपिहेमंतत्रयेणसएवार्थोलक्ष्यः । पश्येमत्वाशतंहिमाइति
वेदेप्रयोगाच्च २६ । २७ ॥ इति आदि० नी० भा० पंचदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥ ॥ ततइति १ पंचतीर्थान्यागस्त्यसौभद्रपौलोमकारंधमभारद्वाजीयानिपंचतीर्थानि २ । ३



४ धर्मबुद्धिभिर्दुर्मरणजंदोषंतीर्थनाप्यविनाश्यंपश्यद्भिः ५ । ६ । ७ । ८ । ९ । १० । ११ उत्कृष्टएवउद्धृतमात्रः १२ । १३ । १४ । १५ । १६ । १७ । १८

भारद्वाजस्यतीर्थंतुपापप्रशमनंमहत् ॥ एतानिपंचतीर्थानिददर्शकुरुसत्तमः ४ विविक्तान्युपलक्ष्याथतानितीर्थानिपांडवः ॥ दृष्ट्वाचवर्ज्यमानानिमुनिभिर्धर्मबु
द्धिभिः ५ तपस्विनस्ततोऽपृच्छत्प्रांजलिःकुरुनंदनः ॥ तीर्थानीमानिवर्ज्यंतेकिमर्थंब्रह्मवादिभिः ६ ॥ तापसाऊचुः ॥ ग्राहाःपंचवसंत्येषुहरंतिचतपोधनान् ॥
ततएतानिवर्ज्यंतेतीर्थानिकुरुनंदन ७ ॥ वैशंपायनउवाच ॥ तेषांश्रुत्वामहाबाहुर्वार्यमाणस्तपोधनैः ॥ जगामतानितीर्थानिद्रष्टुंपुरुषसत्तमः ८ ततःसौभद्रमासा
द्यमहर्षेस्तीर्थमुत्तमम् ॥ विगाह्यसहसाशूरःस्नानंचक्रेपरंतपः ९ अथतंपुरुषव्याघ्रमंतर्जलचरोमहान् ॥ जग्राहचरणेग्राहःकुंतीपुत्रंधनंजयम् १० सतमादायकौं
तेयोविस्फुरंतंजलेचरम् ॥ उदतिष्ठन्महाबाहुर्बलेनबलिनांवरः ११ उत्कृष्टएवग्राहस्तुसोऽर्जुनेनयशस्विना ॥ बभूवनारीकल्याणीसर्वाभरणभूषिता १२ दी
प्यमानाश्रियाराजन्दिव्यरूपामनोरमा ॥ तदद्भुतंमहद्दृष्ट्वाकुंतीपुत्रोधनंजयः १३ तांस्त्रियंपरमप्रीतइदंवचनमब्रवीत् ॥ कावैत्वमसिकल्याणिकुतोवाऽसि
जलेचरी १४ किमर्थंचमहत्पापमिदंकृतवतीपुरा ॥ वर्गोवाच ॥ अप्सराऽस्मिमहाबाहोदेवारण्यविहारिणी १५ इष्टाधनपतेर्नित्यंवर्गानाममहाबल ॥ ममस
ख्यश्चतस्रोऽन्याःसर्वाःकामगमाःशुभाः १६ ताभिःसार्धंप्रयाताऽस्मिलोकपालनिवेशनम् ॥ ततःपश्यामहेसर्वाब्राह्मणंसंशितव्रतम् १७ रूपवंतमधीयानमे
कमेकांतचारिणम् ॥ तस्यैवतपसाराजंस्तद्वनंतेजसावृतम् १८ आदित्यइवतंदेशंकृत्स्नंसर्वंव्यकाशयत् ॥ तस्यदृष्ट्वातपस्तादृग्रूपंचाद्भुतमुत्तमम् १९ अवती
र्णाःस्मतंदेशंतपोविघ्नचिकीर्षया ॥ अहंचसौरभेयीचसमीचीबुद्बुदालता २० यौगपद्येनतंविप्रमभ्यगच्छामभारत ॥ गायंत्योऽथहसंत्यश्चलोभयित्वाचतंद्वि
जम् २१ सचनास्मासुकृतवान्मनोवीरकथंचन ॥ नाकंपतमहातेजाःस्थितस्तपसिनिर्मले २२ सोऽशपत्कुपितोऽस्मासुब्राह्मणःक्षत्रियर्षभ ॥ ग्राहभूताजलेयूयं
चरिष्यथशतंसमाः २३ ॥ इति श्रीमहाभारते आदिपर्वणि अर्जुनवनवासपर्वणि तीर्थग्राहविमोचने षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥ ॥ ४ ॥
॥ वर्गोवाच ॥ ततोवयंप्रव्यथिताःसर्वाभारतसत्तम ॥ अयामशरणंविप्रंतंतपोधनमच्युतम् १ रूपेणवयसाचैवकंदर्पेणचदर्पिताः ॥ अयुक्तंकृतवत्यःस्मक्षंतुमर्हसि
नोद्विज २ एषएववधोऽस्माकंसुपर्याप्तस्तपोधन ॥ यद्वयंसंशितात्मानंप्रलोब्धुंत्वामिहागताः ३ अवध्यास्तुस्त्रियःसृष्टामन्यंतेधर्मचारिणः ॥ तस्माद्धर्मेणवर्द्धं
त्वंनास्मान्हिंसितुमर्हसि ४ सर्वभूतेषुधर्मज्ञमैत्रोब्राह्मणउच्यते ॥ सत्योभवतुकल्याणएषवादोमनीषिणाम् ५ शरणंचप्रपन्नानांशिष्टाःकुर्वंतिपालनम् ॥ शरणं
त्वांप्रपन्नाःस्मतस्मात्त्वंक्षंतुमर्हसि ६ ॥ वैशंपायनउवाच ॥ एवमुक्तःसधर्मात्माब्राह्मणःशुभकर्मकृत् ॥ प्रसादंकृतवान्वीररविसोमसमप्रभः ७

१९ । २० । २१ । २२ । २३ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपे षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥ ॥ ४ ॥ ॥ ततोवयमिति अयामगतवत्यः १
२ प्रलोब्धुंप्रलोभयितुं ३ वर्धवर्धस्व ४ मैत्रःसर्वभूतसुहृत् एषवादोमैत्रोब्राह्मणइत्युद्घोषः ५ । ६ ७

शतसहस्रादयःशब्दाअनंतवाचकाः इहतुशतशब्दःशतमेववक्तीत्यर्थः ८ यदाचेति उत्कर्षणमेवावधिर्मेशतसंख्येतिभावः ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७

॥१८१॥ ॥ ब्राह्मणउवाच ॥ शतंशतसहस्रंतुसर्वमक्षय्यवाचकम् ॥ परिमाणंशतंत्वेतन्नेदमक्षय्यवाचकम् ८ यदाचवोग्राहभूताग्रह्णंतीःपुरुषान्जले ॥ उत्कर्षतिजलात्त अ०
स्मात्स्थलंपुरुषसत्तमः ९ तदायूयंपुनःसर्वाःस्वंरूपंप्रतिपत्स्यथ ॥ अनृतंनोक्तपूर्वंमेहसताऽपिकदाचन १० तानिसर्वाणितीर्थानिततःप्रभृतिचैवह ॥ नारीती ॥२१७॥
र्थानिनाम्नेहख्यातिंयास्यंतिसर्वशः ॥ पुण्यानिचभविष्यंतिपावनानिमनीषिणाम् ११ ॥ वर्गोवाच ॥ ततोऽभिवाद्यतंविप्रंकृत्वाचापिप्रदक्षिणम् ॥ आचिंतयामो
ऽपसृत्यतस्माद्देशात्सुदुःखिताः १२ क्वनुनामवयंसर्वाःकालेनाल्पेनतंनरम् ॥ समागच्छेमयोनस्तद्रूपमापादयेत्पुनः १३ तावयंचिंतयित्वैवमुहूर्तादिवभारत ॥
दृष्टवत्योमहाभागंदेवर्षिमुतनारदम् १४ संप्रहृष्टाःस्मतंदृष्ट्वादेवर्षिममितद्युतिम् ॥ अभिवाद्यचतंपार्थस्थिताःस्मव्रीडिताननाः १५ सनोऽपृच्छद्दुःखमूलमु
क्तवत्योवयंचतम् ॥ श्रुत्वातत्रयथावृत्तमिदंवचनमब्रवीत् १६ दक्षिणेसागरानूपेपंचतीर्थानिसंतिवै ॥ पुण्यानिरमणीयानितानिगच्छतमाचिरम् १७ तत्रा
शुपुरुषव्याघ्रःपांडवेयोधनंजयः ॥ मोक्षयिष्यतिशुद्धात्माद्दुःखादस्मान्नसंशयः १८ तस्यसर्वावयंवीरश्रुत्वावाक्यमितोगताः ॥ तदिदंसत्यमेवाद्यमोक्षिताऽहं
त्वयाऽनघ १९ एतास्तुममताःसख्यश्चतस्रोऽन्याजलेश्रिताः ॥ कुरुकर्मशुभंवीरएताःसर्वाविमोक्षय २० ॥ वैशंपायनउवाच ॥ ततस्ताःपांडवश्रेष्ठःसर्वा
एवविशांपते ॥ तस्माच्छापाद्दीनात्मामोक्षयामासवीर्यवान् २१ उत्थायचजलात्तस्मात्प्रतिलभ्यवपुःस्वकम् ॥ तास्तदाऽप्सरसोराजन्नदृश्यंतयथापुरा २२
तीर्थानिशोधयित्वातुतथाऽनुज्ञायताःप्रभुः ॥ चित्रांगदांपुनर्द्रष्टुंमणिपूरंपुनर्ययौ २३ तस्यामजनयत्पुत्रंराजानंबभ्रुवाहनम् ॥ तंदृष्ट्वापांडवोराजंश्चित्रवाहनम
ब्रवीत् २४ चित्रांगदायाःशुल्कंत्वंगृहाणबभ्रुवाहनम् ॥ अनेनचभविष्यामिऋणान्मुक्तोनराधिप २५ चित्रांगदांपुनर्वाक्यमब्रवीत्पांडुनंदनः ॥ इहवैभवभद्रंतेव
र्धेथाबभ्रुवाहनम् २६ इंद्रप्रस्थनिवासंमेत्वंतत्रागत्यरंस्यसि ॥ कुंतींयुधिष्ठिरंभीमंभ्रातरौमेकनीयसौ २७ आगत्यतत्रपश्येथाअन्यानपिचबांधवान् ॥ बांधवैः
सहितासर्वैर्नंदसेत्वमनिंदिते २८ धर्मेस्थितःसत्यधृतिःकौंतेयोऽथयुधिष्ठिरः ॥ जित्वातुपृथिवींसर्वांराजसूयंकरिष्यति २९ तत्रागच्छंतिराजानःपृथिव्यांनृपसंज्ञि
ताः ॥ बहूनिरत्नान्यादायआगमिष्यतितेपिता ३० एकसार्थंप्रयाताऽसिचित्रवाहनसेवया ॥ द्रक्ष्यामिराजसूयेत्वांपुत्रंपालयमाशुचः ३१ बभ्रुवाहननाम्नातु
ममप्राणोमहीचरः ॥ तस्माद्भरस्वपुत्रंवैपुरुषंवंशवर्धनम् ३२ चित्रवाहनदायादंधर्मात्पौरवनंदनम् ॥ पांडवानांप्रियंपुत्रंतस्मात्पालयसर्वदा ३३ विप्रयोगे ॥१८१॥
नसंतापंमाकृथास्त्वमनिंदिते ॥ चित्रांगदामेवमुक्त्वागोकर्णमभितोऽगमत् ३४

१८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४

३५ ॥ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥ सइति अपरांतेषुपश्चिमसमुद्रतीरेषु १ । २ । ३ । ४ । ५ । ६ । ७ । ८

आद्यंपशुपतेःस्थानंदर्शनादेवमुक्तिदम् ॥ यत्रपापोऽपिमनुजःप्राप्नोत्यभयदंपदं ३५ ॥ इतिश्रीमहाभारतेआदिपर्वणिअर्जुनवनवासपर्वण्यर्जुनतीर्थयात्रायांसप्तदशा
धिकद्विशततमोऽध्यायः ॥ २१७ ॥ वैशंपायनउवाच ॥ सोऽपरांतेषुतीर्थानिपुण्यान्यायतनानिच ॥ सर्वाण्येवानुपूर्व्येणजगामामितविक्रमः १ समुद्रेपश्चिमेया
नितीर्थान्यायतनानिच ॥ तानिसर्वाणिगत्वासप्रभासमुपजग्मिवान् २ प्रभासदेशंसंप्राप्तंबीभत्सुमपराजितम् ॥ सुपुण्यंरमणीयंचशुश्रावमधुसूदनः ३ ततोऽभ्य
गच्छत्कौंतेयंसखायंतत्रमाधवः ॥ ददृशातेतदाऽन्योऽन्यंप्रभासेकृष्णपांडवौ ४ तावन्योऽन्यंसमाश्लिष्यपृष्ट्वाचकुशलंवने ॥ आस्तांप्रियसखायौतौनरनारायणावृ
षी ५ ततोऽर्जुनंवासुदेवस्तांचर्यांपर्यपृच्छत ॥ किमर्थंपांडवैतानितीर्थान्यनुचरस्युत ६ ततोऽर्जुनोयथावृत्तंसर्वमाख्यातवांस्तदा ॥ श्रुत्वोवाचचवार्ष्णेयएवमेत
दितिप्रभुः ७ तौविहृत्ययथाकामंप्रभासेकृष्णपांडवौ ॥ महीधरंरैवतकंवासायैवाभिजग्मतुः ८ पूर्वमेवतुकृष्णस्यवचनात्तंमहीधरम् ॥ पुरुषामंडयांचक्रुरुपजह्रुश्च
भोजनम् ९ प्रतिगृह्यार्जुनःसर्वमुपभुज्यचपांडवः ॥ सहैववासुदेवेनदृष्टवान्नटनर्तकान् १० अभ्यनुज्ञायतान्सर्वानर्चयित्वाचपांडवः ॥ सत्कृतंशयनंदिव्यमभ्यग
च्छन्महामतिः ११ ततस्तत्रमहाबाहुःशयानःशयनेशुभे ॥ तीर्थानांपल्वलानांचपर्वतानांचदर्शनम् ॥ आपगानांवनानांचकथयामाससात्वते १२ एवंसकथयन्ने
वनिद्रयाजनमेजय ॥ कौंतेयोऽपिहृतस्तस्मिन्शयनेस्वर्गसन्निभे १३ मधुरेणैवगीतेनवीणाशब्देनचैवह ॥ प्रबोध्यमानोबुबुधेस्तुतिभिर्मंगलैस्तथा १४ सकृत्वा
ऽवश्यकार्याणिवार्ष्णेयेनाभिनंदितः ॥ रथेनकांचनांगेनद्वारकामभिजग्मिवान् १५ अलंकृताद्वारकातुबभूवजनमेजय ॥ कुंतीपुत्रस्यपूजार्थमपिनिष्कुटकेष्वपि १६
दिदृक्षंतश्चकौंतेयंद्वारकावासिनोजनाः ॥ नरेंद्रमार्गमाजग्मुस्तूर्णंशतसहस्रशः १७ अवलोकेषुनारीणांसहस्राणिशतानिच ॥ भोजवृष्ण्यंधकानांचसमवायोमहान
भूत् १८ सतथासत्कृतःसर्वैर्भोजवृष्ण्यंधकात्मजैः ॥ अभिवाद्याभिवाद्यांश्चसर्वैश्चप्रतिनंदितः १९ कुमारैःसर्वशोवीरःसत्कारेणाभिचोदितः ॥ समानवयसःसर्वाना
श्लिष्यसपुनःपुनः २० कृष्णस्यभवनेरम्येरत्नभोज्यसमावृते ॥ उवाससहकृष्णेनबहुलास्तत्रशर्वरीः २१ ॥ इतिश्रीमहाभारतेआदिपर्वण्यर्जुनवनवासपर्वण्यर्जुनद्वार
कागमनेऽष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥ ॥ समाप्तंचार्जुनवनवासपर्व ॥ अथसुभद्राहरणपर्व ॥ वैशंपायनउवाच ॥ ततःकतिपयाहस्यतस्मिन्रै
वतकेगिरौ ॥ वृष्ण्यंधकानामभवदुत्सवोनृपसत्तम १ तत्रदानंददुर्वीराब्राह्मणेभ्यःसहस्रशः ॥ भोजवृष्ण्यंधकाश्चैवमहेतस्यगिरेस्तदा २

९ । १० । ११ । १२ । १३ । १४ कांचनांगेनस्वर्णमयध्वजादिमता १५ निष्कुटेषुगृहारामेष्वप्यलंकृताकिमुतराजमार्गादिषु १६ । १७ । १८ । १९ । २० । २१
॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपेअष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥ ॥ ततइति ॥ १ गिरेर्महेपर्वतदेवस्येउत्सवे २

३ । ४ चंचूर्यंतेदेदीप्यंते ५ । ६ क्षीबोमधुमत्तः ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ ।१६।१७।१८।१९ वक्ष्यामिपितरंस्वयमितिकृष्णेनदापयिष्यामीतिसूचितेऽपिप्राप्तौतुकउपायइति

प्रासादैरत्नचित्रैश्चगिरेस्तस्यसमंततः ॥ सदेशःशोभितोराजन्कल्पवृक्षैश्चसर्वशः ३ वादित्राणिचतत्रान्येवादकाःसमवादयन् ॥ ननृतुर्नर्तकाश्चैवजगुर्गेयानिगायनाः ४ अलंकृताःकुमाराश्चवृष्णीनांसुमहौजसां ॥ यानैर्हाटकचित्रैश्चचंचूर्यंतेस्मसर्वशः ५ पौराश्चपादचारेणयानैरुच्चावचैस्तथा ॥ सदाराःसानुयात्राश्चशतशोथसहस्रशः ६ ततोहलधरःक्षीबोरेवतीसहितःप्रभुः ॥ अनुगम्यमानोगंधर्वैरचरत्तत्रभारत ७ तथैवराजावृष्णीनामुग्रसेनःप्रतापवान् ॥ अनुगीयमानोगंधर्वैःस्त्रीसहस्रसहायवान् ८ रौक्मिणेयश्चसांबश्चक्षीबौसमरदुर्मदौ ॥ दिव्यमाल्यांबरधरौविजह्रातेऽमराविव ९ अक्रूरःसारणश्चैवगदोबभ्रुर्विदूरथः ॥ निशठश्चारुदेष्णश्चपृथुर्विपृथुरेवच १० सत्यकःसात्यकिश्चैवभंगकारमहारवौ ॥ हार्दिक्यउद्धवश्चैवयेचान्येनानुकीर्तिताः ११ एतेपरिवृताःस्त्रीभिर्गंधर्वैश्चपृथक्पृथक् ॥ तमुत्सवंरैवतकेशोभयांचक्रिरेतदा १२ चित्रकौतूहलेतस्मिन्वर्तमानेमहाद्भुते ॥ वासुदेवश्चपार्थश्चसहितौपरिजग्मतुः १३ तत्रचंक्रममाणौतौवसुदेवसुतांशुभाम् ॥ अलंकृतांसखीमध्येभद्रांददृशतुस्तदा १४ दृष्ट्वैवतामर्जुनस्यकंदर्पःसमजायत ॥ तंतदैकाग्रमनसंकृष्णःपार्थमलक्षयत् १५ अब्रवीत्पुरुषव्याघ्रःप्रहसन्निवभारत ॥ वनेचरस्यकिमिदंकामेनालोडचतेमनः १६ ममैषाभगिनीपार्थसारणस्यसहोदरा ॥ सुभद्रानामभद्रंतेपितुर्मेदयितासुता ॥ यदितेवर्ततेबुद्धिर्वक्ष्यामिपितरंस्वयम् १७ ॥अर्जुनउवाच ॥ दुहितावसुदेवस्यवासुदेवस्यचस्वसा ॥ रूपेणचैषासंपन्नाकमिवैषानमोहयेत् १८ कृतमेवतुकल्याणंसर्वंममभवेद्ध्रुवम् ॥ यदिस्यान्ममवार्ष्णेयीमहिषीयंस्वसातव १९ प्राप्तौतुकउपायःस्यात्तंब्रवीहिजनार्दन ॥ आस्थास्यामितदासर्वंयदिशक्यंनरेणतत् २० वासुदेवउवाच ॥ स्वयंवरःक्षत्रियाणांविवाहःपुरुषर्षभ ॥ सचसंशयितःपार्थस्वभावस्यानिमित्ततः २१ प्रसह्यहरणंचापिक्षत्रियाणांप्रशस्यते ॥ विवाहहेतुःशूराणामितिधर्मविदोविदुः २२ सत्वमर्जुनकल्याणींप्रसह्यभगिनींमम ॥ हरस्वयंवरेह्यस्याःकोवैवेदचिकीर्षितम् २३ ततोऽर्जुनश्चकृष्णश्चविनिश्चित्येतिकृत्यताम् ॥ शीघ्रगान्पुरुषानन्यान्प्रेषयामासतुस्तदा २४ धर्मराजायतत्सर्वमिंद्रप्रस्थगतायवै ॥ श्रुत्वैवचमहाबाहुरनुजज्ञेसपांडवः २५ ॥ इतिश्रीमहाभारतेआदिपर्वणिसुभद्राहरणपर्वणियुधिष्ठिरानुज्ञायामूनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥ वैशंपायनउवाच ॥ ततःसंवादितेतस्मिन्ननुज्ञातोधनंजयः ॥ गतांरैवतकेकन्यांविदित्वाजनमेजय १ वासुदेवाभ्यनुज्ञातःकथयित्वेतिकृत्यताम् ॥ कृष्णस्यमतमादायप्रययौभरतर्षभः २ रथेनकांचनांगेनकल्पितेनयथाविधि ॥ शैब्यसुग्रीवयुक्तेनकिंकिणीजालमालिना ३

पृच्छन्नर्जुनःप्रतिग्रहंनानुमन्यतइतिगम्यते २० स्वभावस्यानिमित्ततःस्त्रीचित्तस्यशौर्यपांडित्याद्यनपेक्षत्वात् । स्त्रियोह्यपरीक्षितेऽपिपुंसिआपाततोरमणीयेसद्यःसकामाभवंतीतिभावः २१ २२।२३।२४ अनुजज्ञेअनुज्ञातवान् २५ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपे ऊनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥ ततइति तस्मिन्विवाहसंदेशे १ इतिकृत्यतामग्रेतनीमितिकर्तव्यताम् २ । ३



४ । ५ । ६ । ७ । ८ । ९ । १० भेरींदुंदुभिं सान्नाहिकींसन्नद्धाःसर्वेभवतेतिसूचयंतीं ११ । १२ । १३ । १४ सन्नयेसमुदाये १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ श्रुत्वापार्थस्य

सर्वशस्त्रोपपन्नेनजीमूतरवनादिना ॥ ज्वलिताग्निप्रकाशेनद्विषतांहर्षघातिना ४ सन्नद्धःकवचीखड्गीबद्धगोधांगुलित्रवान् ॥ मृगयाव्यपदेशेनप्रययौपुरुषर्षभः ५ सुभद्रात्वथशैलेंद्रमभ्यर्च्यैवहिरैवतम् ॥ दैवतानिचसर्वाणिब्राह्मणान्स्वस्तिवाच्यच ६ प्रदक्षिणंगिरेःकृत्वाप्रययौद्वारकांप्रति ॥ तामभिद्रुत्यकौंतेयःप्रसह्यारोपयद्रथम् ॥ सुभद्रांचारुसर्वांगींकामबाणप्रपीडितः ७ ततःसपुरुषव्याघ्रस्तामादायशुचिस्मिताम् ॥ रथेनकांचनांगेनप्रययौस्वपुरंप्रति ८ ह्रियमाणांतुतांदृष्ट्वासुभद्रांसैनिकाजनाः ॥ विक्रोशंतोऽद्रवन्सर्वेद्वारकामभितःपुरीम् ९ तेसमासाद्यसहिताःसुधर्मामभितःसभाम् ॥ सभापालस्यतत्सर्वमाचख्युःपार्थविक्रमम् १० तेषांश्रुत्वासभापालोभेरींसान्नाहिकींततः ॥ समाजघ्नेमहाघोषांजांबूनदपरिष्कृताम् ११ क्षुब्धास्तेनाथशब्देनभोजवृष्ण्यंधकास्तदा ॥ अन्नपानमपास्याथसमापेतुःसमंततः १२ तत्रजांबूनदांगानिस्पर्ध्यास्तरणवंतिच ॥ मणिविद्रुमचित्राणिज्वलिताग्निप्रभाणिच १३ भेजिरेपुरुषव्याघ्रावृष्ण्यंधकमहारथाः ॥ सिंहासनानिशतशोधिष्ण्यानीवहुताशनाः १४ तेषांसमुपविष्टानांदेवानामिवसन्नये ॥ आचख्यौचेष्टितंजिष्णोःसभापालःसहानुगः १५ तच्छ्रुत्वावृष्णिवीरास्तेमदसंरक्तलोचनाः ॥ अमृष्यमाणाःपार्थस्यसमुत्पेतुरहंकृताः १६ योजयध्वंरथानाशुप्रासानाहरतेतिच ॥ धनूंषिचमहार्हाणिकवचानिबृहंतिच १७ सूतानुच्चुकुशुःकेचिद्रथान्योजयतेतिच ॥ स्वयंचतुरगान्केचिदयुंजन्हेमभूषितान् १८ रथेष्वानीयमानेषुकवचेषुध्वजेषुच ॥ अभिक्रंदेनृवीराणांतदाऽऽसीत्तुमुलंमहत् १९ वनमालीततःक्षीबःकैलासशिखरोपमः ॥ नीलवासामदोत्सिक्तइदंवचनमब्रवीत् २० किमिदंकुरुथाप्रज्ञास्तूष्णींभूतेजनार्दने ॥ अस्यभावमविज्ञायसंक्रुद्धामोघमार्जिताः २१ एषतावदभिप्रायमाख्यातुस्वंमहामतिः ॥ यदस्यरुचिरंकर्तुंतत्कुरुध्वमतंद्रिताः २२ ततस्तेतद्वचःश्रुत्वाग्राह्यरूपंहलायुधात् ॥ तूष्णींभूतास्ततःसर्वेसाधुसाध्वितिचाब्रुवन् २३ समंवचोनिशम्यैवबलदेवस्यधीमतः ॥ पुनरेवसभामध्येसर्वेतेसमुपाविशन् २४ ततोऽब्रवीद्वासुदेवंवचोरामःपरंतपः ॥ किमवागुपविष्टोऽसिप्रेक्षमाणोजनार्दन २५ सत्कृतस्त्वत्कृतेपार्थःसर्वैरस्माभिरच्युत ॥ नचसोर्हतितांपूजांदुर्बुद्धिःकुलपांसनः २६ कोहितत्रैवभुक्त्वाऽन्नंभाजनंभेत्तुमर्हति ॥ मन्यमानःकुलेजातमात्मानंपुरुषःक्वचित् २७ इच्छन्नेवहिसंबंधंकृतंपूर्वंचमानयन् ॥ कोहिनामभवेनार्थीसाहसेनसमाचरेत् २८ सोऽवमन्यतथाऽस्माकमनादृत्यचकेशवम् ॥ प्रसह्यहृतवानद्यसुभद्रांमृत्युमात्मनः २९ कथंहिशिरसोमध्येकृतंतेनपदंमम ॥ मर्षयिष्यामिगोविंदपादस्पर्शमिवोरगः ३० अद्यनिष्कौरवामेकःकरिष्यामिवसुंधराम् ॥ नहिमेमर्षणीयोऽयमर्जुनस्यव्यतिक्रमः ३१

विक्रमंश्रुत्वा आह्यगृहीत्वा रूपमुपदेशात्मकमालोक्य २३ । २४ । २५ । २६ । २७ भवेनऐश्वर्येण २८ । २९ । ३० । ३१

अन्वपद्यंतअनुमोदितवंतः ३२ ॥ इतिश्रीआदिपर्वणिनीलकंठीये भारतभावदीपे विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥ उक्तवंतइति १ । २ अनाधृष्यंकन्यालाभानियमादनादेयं ३ प्रदानंमतिग्र
होनीचंकर्मेत्यर्थः ४ । । ५ । ६ बुभूषेतप्राप्तुमिच्छेत् ७ अथनिष्कौरवामित्युक्तंतत्राह नचेति अर्हतुभक्त्यैवतेनजितोऽस्मिपरिशेषात्तुहरएवतत्प्रतियोद्धानान्यइतिभावः ८ । ९ । १० । ११

तंतथागर्जमानंतुमेघदुंदुभिनिःस्वनम् ॥ अन्वपद्यंततेसर्वेभोजवृष्ण्यंधकास्तदा ३२ ॥ इतिश्रीमहाभारते आ०सुभद्राहरणपर्वणि बलदेवक्रोधेविंशत्यधिकद्विश
ततमोऽध्यायः ॥ २२० ॥ समाप्तंचसुभद्राहरणपर्व ॥ अथहरणाहरणपर्व ॥ वैशंपायनउवाच ॥ उक्तवंतोयथावीर्यमसकृत्सर्ववृष्णयः ॥ ततोऽब्रवीद्वासुदेवोवा
क्यंधर्मार्थसंयुतम् १ नावमानंकुलस्यास्यगुडाकेशःप्रयुक्तवान् ॥ संमानोऽभ्यधिकस्तेनप्रयुक्तोऽयंनसंशयः २ अर्थलुब्धान्नवःपार्थोमन्यतेसात्वतान्सदा ॥ स्वयं
वरमनाधृष्यंमन्यतेचापिपांडवः ३ प्रदानमपिकन्यायाःपशुवत्कोऽनुमन्यते ॥ विक्रयंचाप्यपत्यस्यकःकुर्यात्पुरुषोभुवि ४ एतान्दोषांस्तुकौंतेयोदृष्टवानितिमे
मतिः ॥ अतःप्रसह्यहृतवान्कन्यांधर्मेणपांडवः ५ उचितश्चैवसंबंधःसुभद्रांचयशस्विनीम् ॥ एषचापीदृशःपार्थःप्रसह्यहृतवानिति ६ भरतस्यान्वयेजातंशां
तनोश्चयशस्विनः ॥ कुंतिभोजात्मजापुत्रंकोबुभूषेतनार्जुनम् ७ नचपश्यामियःपार्थंविजयेतरणेबलात् ॥ वर्जयित्वाविरूपाक्षंभगनेत्रहरंहरम् ८ अपिसर्वेषुलो
केषुसेंद्ररुद्रेषुमारिष ॥ सचनामरथस्तादृङ्मदीयास्तेचवाजिनः ९ योद्धापार्थश्चशीघ्रास्त्रःकोनुतेनसमोभवेत् ॥ तमभिद्रुत्यसांत्वेनपरमेणधनंजयम् १० न्यव
र्तयतसंहृष्टामममैषापरमामतिः ॥ यदिनिर्जित्यवःपार्थोबलाद्गच्छेत्स्वकंपुरम् ११ प्रणश्येद्वोयशःसद्योनतुसांत्वेपराजयः ॥ तच्छ्रुत्वावासुदेवस्यतथाचक्रुर्जना
धिप १२ निवृत्तश्चार्जुनस्तत्रविवाहंकृतवान्प्रभुः ॥ उषित्वातत्रकौंतेयःसंवत्सरपराःक्षपाः १३ विहृत्यचयथाकामंपूजितोवृष्णिनंदनैः ॥ पुष्करेतुततःशेषंका
लंवर्तितवान्प्रभुः १४ पूर्णेतुद्वादशेवर्षेखांडवप्रस्थमागतः ॥ अभिगम्यचराजानंनियमेनसमाहितः १५ अभ्यर्च्यब्राह्मणान्पार्थोद्रौपदीमभिजग्मिवान् ॥ तंद्रौ
पदीप्रत्युवाचप्रणयात्कुरुनंदनम् १६ तत्रैवगच्छकौंतेययत्रसासात्वतात्मजा ॥ सुबद्धस्यापिभारस्यपूर्वबंधःश्लथायते १७ तथाबहुविधंकृष्णांविलपंतींधनंजयः ॥
सांत्वयामासभूयश्चक्षमयामासचासकृत् १८ सुभद्रांत्वरमाणश्चरक्तकौशेयवासिनीम् ॥ पार्थःप्रस्थापयामासकृत्वागोपालिकावपुः १९ साऽधिकंतेनरूपेणशोभमाना
यशस्विनी ॥ भवनंश्रेष्ठमासाद्यवीरपत्नीवरांगना २० ववंदेपृथुताम्राक्षीपृथांभद्रायशस्विनी ॥ तांकुंतीचारुसर्वांगीमुपाजिघ्रतमूर्धनि २१ प्रीत्यापरमयायुक्ताआ
शीर्भिर्युंजतातुलाम् ॥ ततोऽभिगम्यत्वरितापूर्णेंदुसदृशानना २२ ववंदेद्रौपदींभद्राप्रेष्याऽहमितिचाब्रवीत् ॥ प्रत्युत्थायतदाकृष्णास्वसारंमाधवस्यच २३ परिष्व
ज्यावदत्प्रीत्यानिःसपत्नोऽस्तुतेपतिः ॥ तथैवमुदिताभद्रातामुवाचैवमस्त्विति २४ ततस्तेहृष्टमनसःपांडवेयामहारथाः ॥ कुंतीचपरमप्रीताबभूवजनमेजय २५ ॥१८३॥

१२ संवत्सरपराःसंवत्सरादधिकाः १३ शेषंद्वादशवर्षपूरणं १४ । १५ । १६ श्लथायतेहृढतरेबंधांतरेसति १७ । १८ गोपालिकावपुःबल्लवीवेषं गोपालकृष्णसंबंधात् पट्टमहिषीवेषेणद्रौपद्याः
कोपोमाभूदिति १९ । २० भद्रासुभद्रा २१ युंजतअयुंक्त २२ । २३ । २४ । २५

२६ महामात्रैःश्रेष्ठैः २७ । २८ दानपतिरित्यक्रूरस्यैवकर्मनाम २९ । ३० । ३१ । ३२ हरणंप्रीतिदायं ३३ प्रतिग्रहार्थंसन्मानेनआनेतुं ३४ । ३५ । ३६ । ३७ प्रतिपेदेप्राप्तवान्
खांडवप्रस्थमितिसंबंधः ३८ । ३९ । ४० । ४१ । ४२ । ४३ जन्यार्थेजनीवधूस्तामर्हंतोजन्यावरपक्षीयास्तेपामर्थे ४४ चतुर्युजांवाहचतुष्कयुजां ४५ सहस्रंरथानां गवांदोग्ध्रीणां ४६ वडवा

श्रुत्वातुपुंडरीकाक्षःसंप्राप्तंस्वंपुरोत्तमम् ॥ अर्जुनंपांडवश्रेष्ठमिंद्रप्रस्थगतंतदा २६ आजगामविशुद्धात्मासहरामेणकेशवः ॥ वृष्ण्यंधकमहामात्रैःसहवीरैर्महारथैः
२७ भ्रातृभिश्चकुमारैश्चयोधैश्चबहुभिर्वृतः ॥ सैन्येनमहताशौरिरभिगुप्तःपरंतपः २८ तत्रदानपतिर्धीमानाजगाममहायशाः ॥ अक्रूरोवृष्णिवीराणांसेनाप
तिररिंदमः २९ अनाधृष्टिर्महातेजाउद्धवश्चमहायशाः ॥ साक्षाद्बृहस्पतेःशिष्योमहाबुद्धिर्महामनाः ३० सत्यकःसात्यकिश्चैवकृतवर्माचसात्वतः ॥ प्रद्युम्न
श्चैवसांबश्चनिशठःशंकुरेवच ३१ चारुदेष्णश्चविक्रांतोझिल्लीविपृथुरेवच ॥ सारणश्चमहाबाहुर्गदश्चविदुषांवरः ३२ एतेचान्येचबहवोवृष्णिभोजांधकास्तथा ॥
आजग्मुःखांडवप्रस्थमादायहरणंबहु ३३ ततोयुधिष्ठिरोराजाश्रुत्वामाधवमागतम् ॥ प्रतिग्रहार्थंकृष्णस्ययमौप्रास्थापयत्तदा ३४ ताभ्यांप्रतिगृहीतंतुवृष्णिचक्रं
महर्द्धिमत् ॥ विवेशखांडवप्रस्थंपताकाध्वजशोभितम् ३५ संमृष्टसिक्तपंथानंपुष्पप्रकरशोभितम् ॥ चंदनस्यरसैःशीतैःपुण्यगंधैर्निषेवितम् ३६ दह्यताऽगुरुणा
चैवदेशेदेशेसुगंधिना ॥ हृष्टपुष्टजनाकीर्णंवणिग्भिरुपशोभितम् ३७ प्रतिपेदेमहाबाहुःसहरामेणकेशवः ॥ वृष्ण्यंधकैस्तथाभोजैःसमेतःपुरुषोत्तमः ३८ सं
पूज्यमानःपौरैश्चब्राह्मणैश्चसहस्रशः ॥ विवेशभवनंराज्ञःपुरंदरगृहोपमम् ३९ युधिष्ठिरस्तुरामेणसमागच्छद्यथाविधि ॥ मूर्ध्निकेशवमाघ्रायबाहुभ्यांपरिषस्व
जे ४० तंप्रीयमाणोगोविंदोविनयेनाभिपूजयन् ॥ भीमंचपुरुषव्याघ्रंविधिवत्प्रत्यपूजयत् ४१ तांश्चवृष्ण्यंधकश्रेष्ठान्कुंतीपुत्रोयुधिष्ठिरः ॥ प्रतिजग्राहसत्कारैर्यथा
विधियथागतम् ४२ गुरुवत्पूजयामासकांश्चित्कांश्चिद्वयस्यवत् ॥ कांश्चिदभ्यवदत्प्रेम्णाकैश्चिदप्यभिवादितः ४३ तेषांददौहृषीकेशोजन्यार्थेधनमुत्तमम् ॥
हरणंवैसुभद्रायाज्ञातिदेयंमहायशाः ४४ रथानांकांचनांगानांकिंकिणीजालमालिनाम् ॥ चतुर्युजामुपेतानांसूतैःकुशलशिक्षितैः ४५ सहस्रंप्रददौकृष्णोगवामा
युतमेवच ॥ श्रीमान्माथुरदेश्यानांदोग्ध्रीणांपुण्यवर्चसाम् ४६ वडवानांचशुद्धानांचंद्रांशुसमवर्चसाम् ॥ ददौजनार्दनःप्रीत्यासहस्रंहेमभूषितम् ४७ तथैवा
श्वतरीणांचदांतानांवातरंहसाम् ॥ शतान्यंजनकेशीनांश्वेतानांपंचपंचच ४८ स्नानपानोत्सवेचैवप्रयुक्तंवयसान्वितम् ॥ स्त्रीणांसहस्रंगौरीणांसुवेषाणांसुव
र्चसाम् ४९ सुवर्णशतकंठीनामरोमाणांस्वलंकृताम् ॥ परिचर्यासुदक्षाणांप्रददौपुष्करेक्षणः ५० पृष्ठ्यानामपिचाश्वानांबाल्हिकानांजनार्दनः ॥ ददौशतसहस्रा
ख्यंकन्याधनमनुत्तमम् ५१ कृताकृतस्यमुख्यस्यकनकस्याग्निवर्चसः ॥ मनुष्यभारान्दाशार्होददौदशजनार्दनः ५२

नामश्वानां ४७ । ४८ गौरीणामदृष्टरजसां ४९ सुवर्णशतंसुवर्णमणिशतंकंठेयासांतासां । अरोमाणामनुद्भिन्नरोमावलीनां स्वलंकृतांसुतरामलंकृतानां ५० पृष्ठ्यानांपृष्ठवाहिनां बाल्हिकानां
बाल्हिकदेशजानां ५१ कृताकृतस्य कृतमाकरजंघमनादिनासाधितं । अकृतंजांबुनदंस्वतःसिद्धंतस्य ५२

प्रभिन्नानांमत्तानां त्रिधागंडगुह्यकर्णमूलैः ५३ । ५४ । ५५ सरत्नौघःपांडुसागरंप्रविवेशेतिसंबंधः ५६ आविद्धःसर्वतोविप्रकीर्णः महाधनोबहुमूल्यः ५७ । ५८ । ५९ तत्रेति तलस्तंत्रीनादः
गायंतोवारयंतश्चविजन्हुरित्यर्थः ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ अभीर्निर्भयः अभिरितिन्हस्वत्वमार्षं मन्युमान्क्रोधवानतिशूरइत्यर्थः ६७ शमीगर्भाच्छमीगर्भेजातादश्वत्थात् । निर्मं
थनेनाऽधरारण्यांसंघर्षणेन । अत्राश्वत्थवदर्जुनस्तस्याद्‌र्वोवाएषआत्मनोयत्पत्नीतिश्रुतेरयःस्थार्द्धदेहरूपत्वादधरारणीवत्सुभद्राअग्निवदभिमन्युरितिसाम्यं ६८ निष्कान्सुवर्णमणिमालाः ६९
७० क्रियाःलालनपालनालंकरणादिकाः ७१ चतुष्पादमिति । 'मंत्रमुक्तंपाणिमुक्तंमुक्तामुक्तंतथैवच । अमुक्तंचधनुर्वेदेचतुष्पाच्छस्त्रमीरितं '। यस्यप्रयोगएवास्तिनतूपसंहारस्तदाद्यं । बाणादि

गजानांतुप्रभिन्नानांत्रिधाप्रस्रवतांमदम् ॥ गिरिकूटनिकाशानांसमरेष्वनिवर्त्तिनाम् ५३ कृतानांपटुघंटानांचारूणांहेममालिनाम् ॥ हस्त्यारोहैरुपेतानांसहस्रं साहसप्रियः ५४ रामःपाणिग्रहणिकंददौपार्थायलांगली ॥ प्रीयमाणोहलधरःसंबंधंप्रतिमानयन् ५५ समहाधनरत्नौघोवस्त्रकंबलफेनवान् ॥ महागजमहाग्राहः पताकाशैवलाकुलः ५६ पांडुसागरमाविद्धःप्रविवेशमहाधनः ॥ पूर्णमापूरयंस्तेषांद्विषच्छोकावहोऽभवत् ५७ प्रतिजग्राहतत्सर्वंधर्मराजोयुधिष्ठिरः ॥ पूजयामासतांश्चैववृष्ण्यंधकमहारथान् ५८ तेसमेतामहात्मानःकुरुवृष्ण्यंधकोत्तमाः ॥ विजन्हुरमरावासेनराःसुकृतिनोयथा ५९ तत्रतत्रमहानादैरुत्कृष्टतलनादितैः ॥ यथायोगंयथाप्रीतिविजन्हुःकुरुवृष्णयः ६० एवमुत्तमवीर्यास्तेविहृत्यदिवसान्बहून् ॥ पूजिताःकुरुभिर्जग्मुःपुनर्द्वारवतींप्रति ६१ रामंपुरस्कृत्ययवुर्वृष्ण्यंधकमहारथाः ॥ रत्नान्यादायशुभ्राणिदत्तानिकुरुसत्तमैः ६२ वासुदेवस्तुपार्थेनतत्रैवसहभारत ॥ उवासनगरेरम्येशक्रप्रस्थेमहात्मना ६३ व्यचरद्यमुनातीरेमृगयांसमहायशाः ॥ मृगान्विध्यन्वराहांश्चरेमेसार्द्धंकिरीटिना ६४ ततःसुभद्रासौभद्रंकेशवस्यप्रियास्वसा ॥ जयंतमिवपौलोमीख्यातिमंतमजीजनत् ६५ दीर्घबाहुंमहोरस्कंवृषभाक्षमरिंदमम् ॥ सुभद्रासुषुवेवीरमभिमन्युंनरर्षभम् ६६ अभिश्चमन्युमांश्चैवततस्तमरिमर्दनम् ॥ अभिमन्युमितिप्राहुरार्जुनिंपुरुषर्षभम् ६७ ससात्वत्यामतिरथःसंबभूवधनंजयात् ॥ मखेनिर्मथनेनेवशमीगर्भाद्धुताशनः ६८ यस्मिन्जातेमहातेजाःकुंतीपुत्रोयुधिष्ठिरः ॥ अयुतंगाद्विजातिभ्यःप्रादान्निष्कांश्चभारत ६९ दयितोवासुदेवस्यबाल्यात्प्रभृतिचाभवत् ॥ पितॄणामिवसर्वेषांप्रजानामिवचंद्रमाः ७० जन्मप्रभृतिकृष्णश्चचक्रेतस्यक्रियाःशुभाः ॥ सचापिववृधेबालःशुक्लपक्षेयथाशशी ७१ चतुष्पादंदशविधंधनुर्वेदमरिंदमः ॥ अर्जुनाद्वेदवेदज्ञःसकलंदिव्यमानुषम् ७२

द्वितीयं । प्रयोगोपसंहाराभ्यांयुक्तंतृतीयं । चतुर्थंमंत्रसाधितंध्वजादिपदर्शनादेवशत्रवःपलायंते । यद्वासूत्रशिक्षाप्रयोगरहस्यानीतिचत्वारोग्रंथपादाः । दशविधंग्रंथार्थानुष्ठानंयथा । 'आदानमथ
संधानंमोक्षणंविनिवर्त्तनं । स्थानंमुष्टिःप्रयोगश्चप्रायश्चित्तानिमंडलं । रहस्यंचेतिदशधाधनुर्वेदांगमिष्यते '। आदानंबाणस्यनिषंगात् । संधानंमौर्व्यायोगः । मोक्षणंलक्ष्येनिपातनं । विनिव
र्त्तनंहीनशक्तौलक्ष्येपातितस्यास्त्रस्यप्रत्यावर्त्तनं । स्थानंमध्यमुपमध्यंवाधनुर्पोज्यायाश्चधारणेशरसंधानेच । मुष्टिस्त्र्यंगुलिश्चतुरंगुलिर्वा । प्रयोगस्तर्जनीमध्यमयोर्मध्यमांगुष्ठयोर्वामध्येनबाणसंयोजनं । ॥१८४॥
प्रायश्चित्तानिस्वतःपरतोवाप्राप्तस्यप्राप्स्यमानस्यवाज्याघातशरघातादेरभिघातार्थांस्तलत्राणप्रत्यस्त्रादिविषयः । मंडलानिचक्रवद्भ्रमतारथेनभ्राम्यमाणस्यलक्ष्यस्यवेधः । रहस्यंशब्दादिवेधोयु
गपदनेकेषुलक्ष्येषुशरपातइत्यादि । दिव्यंब्रह्मास्त्रादि । मानुषंखड्गादि ७२

अस्त्राणामकालेप्रयोगाणांविज्ञानेविशिष्टेज्ञाने । सौष्ठवेअन्येषांप्रयोगपटुत्वे क्रियासुशारीरिषुउत्सर्पणप्रसर्पणादिषु । विशेषान्आधिक्यानि । अभितःसाकल्येनाशिक्षयदर्जुनःपुत्रं ७३ आगमेशास्त्रे ।
प्रयोगेऽनुष्ठाने ७४ सर्वसंहननोपेतंसर्वैःसंहननैःपराभिभावकैर्गुणैरुपेतं ७५ । ७६ कृष्णस्येति नराणांमातुलक्रमइतिन्यायेनरेतःसेक्तुर्नित्यंकृष्णध्यायित्वेनवाकृष्णस्यसदृशं । तमर्जुनंप
श्यामघवान् ७७ । ७८ । ७९ । ८० परप्रहरणज्ञानेशत्रुकृतप्रहारवेदनायांविंध्यइवनिर्विज्ञानइतिमतिविंध्यः स्पष्टार्थमन्यत् ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८

विज्ञानेष्वपिचास्त्राणांसौष्ठवेचमहाबलः ॥ क्रियास्वपिचसर्वासुविशेषानभ्यशिक्षयत् ७३ आगमेचप्रयोगेचचक्रेतुल्यमिवात्मना ॥ तुतोषपुत्रंसौभद्रंप्रेक्षमाणो धनंजयः ७४ सर्वसंहननोपेतंसर्वलक्षणलक्षितम् ॥ दुर्धर्षमृषभस्कंधंव्यात्ताननमिवोरगम् ७५ सिंहदर्पंमहेष्वासंमत्तमातंगविक्रमम् ॥ मेघदुंदुभिनिर्घोषंपूर्णचंद्रनिभाननम् ७६ कृष्णस्यसदृशंशौर्येवीर्येरूपेतथाऽऽकृतौ ॥ ददर्शपुत्रंबीभत्सुर्मघवानिवतंयथा ७७ पांचाल्यपितुपंचभ्यःपतिभ्यःशुभलक्षणा ॥ लेभेपंचसुतान्वीरान्श्रेष्ठान्पंचाचलानिव ७८ युधिष्ठिरात्प्रतिविंध्यंसुतसोमंवृकोदरात् ॥ अर्जुनाच्छ्रुतकर्माणंशतानीकंचनाकुलिम् ७९ सहदेवाच्छ्रुतसेनमेतान्पंचमहारथान् ॥ पांचालीसुषुवेवीरानादित्यानदितिर्यथा ८० शास्त्रतःप्रतिविंध्यंतमूचुर्विप्रायुधिष्ठिरम् ॥ परप्रहरणज्ञानेप्रतिविंध्योभवत्वयम् ८१ सुतेसोमसहस्रेतुसोमार्कसमतेजसम् ॥ सुतसोमंमहेष्वासंसुषुवेभीमसेनतः ८२ श्रुतंकर्ममहत्कृत्वानिवृत्तेनकिरीटिना ॥ जातःपुत्रस्तथेत्येवंश्रुतकर्माततोऽभवत् ८३ शतानीकस्यराजर्षेःकौरव्यस्यमहात्मनः ॥ चक्रेपुत्रंसनामानंनकुलःकीर्त्तिवर्धनम् ८४ ततस्त्वजीजनत्कृष्णानक्षत्रेवह्निदैवते ॥ सहदेवात्सुतंतस्माच्छ्रुतसेनेतियंविदुः ८५ एकवर्षांतरास्त्वेतेद्रौपदेयायशस्विनः ॥ अन्वजायंतराजेंद्रपरस्परहितैषिणः ८६ जातकर्माण्यानुपूर्व्याच्चूडोपनयनानिच ॥ चकारविधिवद्धौम्यस्तेषांभरतसत्तम ८७ कृत्वाचवेदाध्ययनंततःसुचरितव्रताः ॥ जगृहुःसर्वमिष्वस्त्रमर्जुनाद्दिव्यमानुषम् ८८ दिव्यगर्भोपमैःपुत्रैर्व्यूढोरस्कैर्महारथैः ॥ अन्वितराजशार्दूलपांडवामुदमाप्नुवन् ८९ ॥ इति श्रीमहाभारते आदिपर्वणि हरणाहरणपर्वणि एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥ समाप्तंचहरणाहरणपर्व ॥ अथखांडवदाहपर्व ॥ वैशंपायनउवाच ॥ इंद्रप्रस्थेवसंतस्तेजघ्नुरन्यान्नराधिपान् ॥ शासनाद्धृतराष्ट्रस्यराज्ञःशांतनवस्यच १ आश्रित्यधर्मराजानंसर्वलोकोऽवसत्सुखम् ॥ पुण्यलक्षणकर्माणंस्वदेहमिवदेहिनः २ ससमंधर्मकामार्थान्सिषेवेभरतर्षभ ॥ त्रीनिवात्मसमान्बंधून्प्राप्तानिमानिवमानयन् ३ तेषांसमविभक्तानांक्षितौदेहवतामिव ॥ बभौधर्मार्थकामानांचतुर्थइवपार्थिवः ४ अध्येतारंपरंवेदान्प्रयोक्तारंमहाध्वरे ॥ रक्षितारंशुभाँल्लोकान्लेभिरेतंजनाधिपम् ५

८९ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥ ॥ इंद्रप्रस्थेवसंतस्तइति १ पुण्यानिलक्षणानिऊर्ध्वरेखादीनिगांभीर्यादीनिचकर्माणि
आरंभकाणिक्रियमाणानिचयस्यतं २ समंपरस्परापीडया ३ तेषामिति यथात्रयाणाममात्यानांचतुर्थोराजाआराध्यत्वेनभाति यथावाधर्मार्थकामानांत्रयाणांचतुर्थोमोक्षस्वरूपआत्मा
आराध्यत्वेनभातितथैनंधर्मादयःस्वयमुपतिष्ठंतीत्यर्थः ४ परमध्येतारंपरस्यब्रह्मणोऽधिगंतारं वेदान्वेदानां ब्रह्मकर्मनीतिनिष्ठमितिविशेषणत्रयार्थः ५

 अधिष्ठानेति यत्राधिलक्ष्मीर्देहास्पदाऽभूत् परायणंपराकाष्ठातद्वतीतांमतिरित्यर्थः ६ महान्अथर्ववेदोक्ततत्कर्मोपासनायुक्तः ऋग्यजुःसामसाध्योज्योतिष्टोमादिः ७ । ८ तुल्यंयुगपत् तुल्यमित्यत्रयुत्येतिपाठे युत्यानेत्राणिप्रीत्याहृदयानिचरेमिरेइत्यन्वयः ९ देवेनदेवोराजातत्कर्मणापालनेनकेवलंरेमिरेअपितुभावेनभक्त्या तत्रहेतुः यदिति मनःकांतंमनोरमंप्रजानां १० कर्म 

 अधिष्ठानवतीलक्ष्मीःपरायणवतीमतिः ॥ वर्धमानोऽखिलोधर्मस्तेनासीत्पृथिवीक्षिताम् ६ भ्रातृभिःसहितोराजाचतुर्भिरधिकंविभौ ॥ प्रयुज्यमानैर्विततैर्वेदैरिवमहाध्वरः ७ तंतुधौम्यादयोविप्राःपरिवार्योपतस्थिरे ॥ बृहस्पतिसमामुख्याःप्रजापतिमिवामराः ८ धर्मराजेह्यतिप्रीत्यापूर्णचंद्रइवामले ॥ प्रजानांरेमिरेतुल्यंनेत्राणिहृदयानिच ९ नतुकेवलदेवेनप्रजाभावेनरेमिरे ॥ यद्बभूवमनःकांतंकर्मणासचकारतत् १० नह्ययुक्तंनचासत्यंनासह्यंनचवाऽप्रियम् ॥ भाषितंचारुभाषस्यजज्ञेपार्थस्यधीमतः ११ सहिसर्वस्यलोकस्यहितमात्मनएवच ॥ चिकीर्षन्सुमहातेजारेमेभरतसत्तम १२ तथातुमुदिताःसर्वेपांडवाविगतज्वराः ॥ अवसन्पृथिवीपालांस्तापयंतःस्वतेजसा १३ ततःकतिपयाहस्यबीभत्सुःकृष्णमब्रवीत् ॥ उष्णानिकृष्णवर्तंतेगच्छावोयमुनांप्रति १४ सुहृज्जनवृतौतत्रविहृत्यमधुसूदन ॥ सायान्हेपुनरेष्यावोरोचतांतेजनार्दन १५ ॥ वासुदेवउवाच ॥ कुंतीमातर्ममाप्येतद्रोचतेयद्वयंजले ॥ सुहृज्जनवृताःपार्थविहरेमयथासुखम् १६ ॥ वैशंपायनउवाच ॥ आमंत्र्यतौधर्मराजमनुज्ञाप्यचभारत ॥ जग्मतुःपार्थगोविंदौसुहृज्जनवृतौततः १७ विहारदेशंसंप्राप्यनानाद्रुममनुत्तमम् ॥ गृहैरुच्चावचैर्युक्तंपुरंदरपुरोपमम् १८ भक्ष्यैर्भोज्यैश्चपेयैश्चरसवद्भिर्महाधनैः ॥ माल्यैश्चविविधैर्गंधैर्युक्तंवार्ष्णेयपार्थयोः १९ विविशातःपुरंतूर्णंरत्नैरुच्चावचैःशुभैः ॥ यथोपजोषंसर्वश्चजनश्चिक्रीडभारत २० स्त्रियश्चविपुलश्रोण्यश्चारुपीनपयोधराः ॥ मदस्खलितगामिन्यश्चिक्रीडुर्वामलोचनाः २१ वनेकाश्चिज्जलेकाश्चित्काश्चिद्वेश्मसुचांगनाः ॥ यथादेशंयथाप्रीतिचिक्रीडुःपार्थकृष्णयोः २२ द्रौपदीचसुभद्राचवासांस्याभरणानिच ॥ प्रायच्छतांमहाराजस्त्रीणांतेस्ममदोत्कटे २३ काश्चित्प्रहृष्टानन्नृतुश्चुक्रुशुश्चतथाऽपराः ॥ जहसुश्चपरानार्यःपपुश्चान्यावरासवम् २४ रुरुधुश्चापरास्तत्रप्रजघ्नुश्चपरस्परम् ॥ मंत्रयामासुरन्याश्चरहस्यानिपरस्परम् २५ वेणुवीणामृदंगानांमनोज्ञानांचसर्वशः ॥ शब्देनपूर्यतेहर्म्यंतद्वनंसुमहर्द्धिमत् २६ तस्मिंस्तदावर्तमानेकुरुदाशार्हनंदनौ ॥ समीपंजग्मतुःकंचिदुद्देशंसुमनोहरम् २७ तत्रगत्वामहात्मानौकृष्णौपरपुरंजयौ ॥ महार्हासनयोराजंस्ततस्तौसन्निषीदतुः २८ तत्रपूर्वव्यतीतानिविक्रांतानीतराणिच ॥ बहूनिकथयित्वातौरेमातेपार्थमाधवौ २९ तत्रोपविष्टौमुदितौनाकपृष्ठेऽश्विनाविव ॥ अभ्यागच्छत्तदाविप्रोवासुदेवधनंजयौ ३०

णामियकरत्वमुक्त्वावाङ्मनसाभ्यामपितदाहह्राभ्यां नहीति असह्यंदुःखदं अहितमितिपाठेऽपिसएवार्थः अप्रियंप्रीत्यनुत्पादकं भाषितंवचनं जज्ञेप्रादुर्बभूव ११ । १२ । १३ उष्णानिनिदाघदिनानि १४ । १५ कुंतीमातायस्येतिहेकुंतीमातर्हेऽर्जुन १६ । १७ गृहैःमध्येयमुनंनिर्मितैःक्रीडावाप्यादियुक्तैः १८ भक्ष्याद्यैर्युक्तंविहारस्थानंविविशातःपुरंकर्तृ रत्नैर्युक्तं १९ । २० २१ । २२ । २३ । २४ । २५ । २६ उद्देशंप्रदेशं २७ । २८ । २९ । ३० 

हरिपिंगःनीलपीताखिलांगः ज्वलश्मश्रुःज्वालावत्पीतश्मश्रुः ३१ । ३२ उपसृष्टंसमीपागतमुपलक्ष्यउत्पत्यआसनात् ३३ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपेद्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥ ७ ॥ सोऽब्रवीदिति १ वांभिक्षेयुवांदातुंसमर्थौप्रार्थये २ तस्यान्नस्यदाने ३ क्रियतामितिभाषमाणौतौप्रत्यब्रवीदित्यन्वयः ४ । ५ । ६ । ७ भूतानिबहिर्निर्गंतुकामानि



बृहच्छालप्रतीकाशःप्रतप्तकनकप्रभः ॥ हरिपिंगोज्वलश्मश्रुःप्रमाणायामतःसमः ३१ तरुणादित्यसंकाशश्चीरवासाजटाधरः ॥ पद्मपत्राननःपिंगस्तेजसाप्रज्वलन्निव ३२ उपसृष्टंतुतंकृष्णौभ्राजमानंद्विजोत्तमम् ॥ अर्जुनोवासुदेवश्चतूर्णमुत्पत्यतस्थतुः ३३ ॥ ॥ इतिश्रीमहाभारतेआदिपर्वणिखांडवदाहपर्वणिब्राह्मणरूप्यनलागमनेद्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥ ॥ वैशंपायनउवाच ॥ सोब्रवीदर्जुनंचैववासुदेवंचसात्वतम् ॥ लोकप्रवीरौतिष्ठंतौखांडवस्यसमीपतः १ ब्राह्मणोबहुभोक्ताऽस्मिभुंजेऽपरिमितंसदा ॥ भिक्षेवार्ष्णेयपार्थौवामेकांतृप्तिंप्रयच्छतम् २ एवमुक्तौतमब्रूतांततस्तौकृष्णपांडवौ ॥ केनान्नेनभवांस्तृप्येत्तस्यान्नस्ययतावहे ३ एवमुक्तःसभगवानब्रवीत्तावुभौततः ॥ भाषमाणौतदावीरौकिमन्नंक्रियतामिति ४ ॥ ब्राह्मणउवाच ॥ नाहमन्नंबुभुक्षेवैपावकंमांनिबोधतम् यदन्नमनुरूपंमेतद्युवांसंप्रयच्छतम् ५ इदमिंद्रःसदादावंखांडवंपरिरक्षति ॥ नचशक्नोम्यहंदग्धुंरक्ष्यमाणंमहात्मना ६ वसत्यत्रसखातस्यतक्षकःपन्नगःसदा ॥ सगणस्तत्कृतेदावंपरिरक्षतिवज्रभृत् ७ तत्रभूतान्यनेकानिरक्षतेऽस्यप्रसंगतः ॥ तंदिधक्षुर्नशक्नोमिदग्धुंशक्रस्यतेजसा ८ समांप्रज्वलितंदृष्ट्वामेघांभोभिःप्रवर्षति ॥ ततोदग्धुंनशक्नोमिदिधक्षुर्दावमीप्सितम् ९ सयुवाभ्यांसहायाभ्यामस्त्रविद्भ्यांसमागतः ॥ दहेयंखांडवंदावमेतदन्नंवृतंमया १० युवांह्युदकधारास्ताभूतानिचसमंततः ॥ उत्तमास्त्रविदौसम्यक्सर्वतोवारयिष्यथः ११ ॥ जनमेजयउवाच ॥ किमर्थंभगवानग्निःखांडवंदग्धुमिच्छति ॥ रक्ष्यमाणंमहेंद्रेणनानासत्त्वसमायुतम् १२ नह्येतत्कारणंब्रह्मन्नल्पंसंप्रतिभातिमे ॥ यद्ददाहसुसंक्रुद्धःखांडवंहव्यवाहनः १३ एतद्विस्तरशोब्रह्मन्श्रोतुमिच्छामितत्त्वतः ॥ खांडवस्यपुरादाहोयथासमभवन्मुने १४ ॥ वैशंपायनउवाच ॥ शृणुमेब्रुवतोराजन्सर्वमेतद्यथातथम् ॥ यन्निमित्तंददाहाग्निःखांडवंपृथिवीपते १५ हंततेकथयिष्यामिपौराणीमृषिसंस्तुताम् ॥ कथामिमांनरश्रेष्ठखांडवस्यविनाशिनीम् १६ पौराणःश्रूयतेराजन्राजाहरिहयोपमः ॥ श्वेतकिर्नामविख्यातोबलविक्रमसंयुतः १७ यज्वादानपतिर्धीमान्यथानान्योऽस्तिकश्चन ॥ ईजेचसमहायज्ञैःक्रतुभिश्चाप्तदक्षिणैः १८ तस्यनान्याऽभवद्बुद्धिर्दिवसेदिवसेनृप ॥ सत्रेक्रियासमारंभेदानेषुविविधेषुच १९ ऋत्विग्भिःसहितोधीमानेवमीजेसभूमिपः ॥ ततस्तुऋत्विजश्चास्यधूमव्याकुललोचनाः २० कालेनमहताखिन्नास्तत्यजुस्तेनराधिपम् ॥ ततःप्रचोदयामासऋत्विजस्तान्महीपतिः २१ चक्षुर्विकलतांप्राप्तानप्रपेदुश्चतेक्रतुम् ॥ ततस्तेषामनुमतेतद्विप्रैस्तुनराधिपः २२ सत्रंसमापयामासऋत्विग्भिरपरैःसह ॥ तस्यैववर्तमानस्यकदाचित्कालपर्यये २३

८ । ९ । १० । ११ । १२ । १३ । १४ । १५ १६ । १७ महायज्ञैःपंचभिर्देवयज्ञादिभिःस्मार्तैः । क्रतुभिःश्रौतैर्ज्योतिष्टोमादिभिः । महासत्रैरितिपाठेसत्रमन्नदानंलोकप्रसिद्धेः १८ सत्रेयज्ञे १९ । २० । २१ । २२ । २३

२४। २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ बुद्धिमोहंबुद्धिवैकल्यं त्वरासंभावितस्त्वरावशोऽस्मदीयश्रमाज्ञानादित्यर्थः ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१

सत्रमाहर्तुंकामस्यसंवत्सरशतंकिल ॥ ऋत्विजोनाभ्यपद्यंतसमाहर्तुंमहात्मनः २४ सचराजाऽकरोद्यत्नंमहांतंससुहृज्जनः ॥ प्रणिपातेनसांत्वेनदानेनचमहायशाः २५ ऋत्विजोऽनुनयामासभूयोभूयस्त्वतंद्रितः ॥ तेचास्यतमभिप्रायंनचक्रुरमितौजसः २६ सचाश्रमस्थान्राजर्षिस्तानुवाचरुषाऽन्वितः ॥ यद्यहंपतितोवि प्राःशुश्रूषायांनचस्थितः २७ आशुत्याज्योऽस्मियुष्माभिर्ब्राह्मणैश्चजुगुप्सितः ॥ तन्नार्हथक्रतुश्रद्धांव्याघातयितुमुद्यताम् २८ अस्थानेवापरित्यागंकर्तुंमेद्विज सत्तमाः ॥ प्रपन्नएववोविप्राःप्रसादंकर्तुमर्हथ २९ सांत्वदानादिभिर्वाक्यैस्तत्त्वतःकार्यवत्तया ॥ प्रसादयित्वावक्ष्यामियन्नःकार्यंद्विजोत्तमाः ३० अथवाऽहंपरित्य क्तोभवद्भिर्द्वेषकारणात् ॥ ऋत्विजोऽन्यान्गमिष्यामियाजनार्थंद्विजोत्तमाः ३१ एतावदुक्त्वावचनंविरराससपार्थिवः ॥ यदानशेकूराजानंयाजनार्थंपरंतप ३२ ततस्तेयाजकाःक्रुद्धास्तमूचुर्नृपसत्तमम् ॥ तवकर्माण्यजस्रंवैवर्ततेपार्थिवोत्तम ३३ ततोवयंपरिश्रांताःसततंकर्मवाहिनः ॥ श्रमादस्मात्परिश्रांतान्सत्वंनस्त्य क्तुमर्हसि ३४ बुद्धिमोहंसमास्थायत्वरासंभावितोऽनघ ॥ गच्छरुद्रसकाशंत्वंसहित्वांयाजयिष्यति ३५ साधिक्षेपंवचःश्रुत्वासंक्रुद्धःश्वेतकिर्नृपः ॥ कैलासंपर्वतंग त्वातपउग्रंसमास्थितः ३६ आराधयन्महादेवंनियतःसंशितव्रतः ॥ उपवासपरोराजन्दीर्घकालमतिष्ठत ३७ कदाचिद्द्वादशेकालेकदाचिदपिषोडशे ॥ आहार मकारोद्राजामूलानिचफलानिच ३८ ऊर्ध्वबाहुस्त्वनिमिषस्तिष्ठन्स्थाणुरिवाचलः ॥ षण्मासानभवद्राजाश्वेतकिःसुसमाहितः ३९ तंतथानृपशार्दूलंतप्यमानंम हत्तपः ॥ शंकरःपरमप्रीत्यादर्शयामासभारत ४० उवाचचैनंभगवान्स्निग्धगंभीरयागिरा ॥ प्रीतोऽस्मिनरशार्दूलतपसातेपरंतप ४१ वरंवृणीष्वभद्रंतेयंत्वमि च्छसिपार्थिव ॥ एतच्छ्रुत्वातुवचनंरुद्रस्यामिततेजसः ४२ प्रणिपत्यमहात्मानंराजर्षिःप्रत्यभाषत ॥ यदिमेभगवान्प्रीतःसर्वलोकनमस्कृतः ४३ स्वयंमांदेवदेवे शयाजयस्वसुरेश्वर ॥ एतच्छ्रुत्वातुवचनंराज्ञातेनप्रभाषितम् ४४ उवाचभगवान्प्रीतःस्मितपूर्वमिदंवचः ॥ नास्माकमेतद्विषयेवर्ततेयाजनंप्रति ४५ त्वयाचसु महत्तप्तंतपोराजन्वरार्थिना ॥ याजयिष्यामिराजंस्त्वांसमयेनपरंतप ४६ ॥ रुद्रउवाच ॥ समाद्वादशराजेंद्रब्रह्मचारीसमाहितः ॥ सततंत्वाज्यधाराभिर्यदितर्पय सेऽनलम् ४७ कामंप्रार्थयसेयंत्वंमत्तःप्राप्स्यसितंनृप ॥ एवमुक्तश्चरुद्रेणश्वेतकिर्मनुजाधिपः ४८ तथाचकारतत्सर्वंयथोक्तंशूलपाणिना ॥ पूर्णेतुद्वादशेवर्षेपुन रायान्महेश्वरः ४९ दृष्ट्वैवचसराजानंशंकरोलोकभावनः ॥ उवाचपरमप्रीतःश्वेतकिंनृपसत्तमम् ५० तोषितोऽहंनृपश्रेष्ठत्वयेहाद्येनकर्मणा ॥ याजनं ब्राह्मणानांतुविधिदृष्टंपरंतप ५१ ॥१८६॥

४२ । ४३ । ४४ याजनंप्रतियाजनमुद्दिश्यत्वयाचसुमहत्तपस्तप्तं एतद्याजनमस्माकंविषयेनवर्ततेइतिसंबंधः वयंतुनयाजनेऽधिकारिणइत्यर्थः ४५ सततंत्वाज्यधाराभिः अच्छिन्नयाआज्यधारया बहु त्वमवयवाभिप्रायं ४६ । ४७ । ४८ । ४९ । ५० आद्येनअनादिवेदबोधितेन विधिदृष्टंब्राह्मणानामिदंहविरितिचतुर्धाकरणमंत्रलिंगानुमितविधिदृष्टं ५१

अतइति स्वयंयज्ञभोक्ताभूत्वाऋत्विक्त्वमानभंगभयात्स्वयंनयाजयामीत्यर्थः ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० दीक्षिताःकर्मसुनिष्णाताः ६१ । ६२ । ६३ । ६४ । ६५ ६६ । ६७ । ६८ । ६९ । ७० प्रकृतिंस्वभावं ७१ वसोर्धारापात्रविशेषः । येनहूयमानंघृतद्रव्यंसंततधारारूपेणक्षरति । तेनहुतंहविरर्थाद्घृतमेव । वसोर्धारांजुहोतीत्युपक्रम्यघृतस्यवाएवमेवाधारेति

अतोऽहंत्वांस्वयंनाद्ययाजयामिपरंतप ॥ ममांशस्तुक्षितितलेमहाभागोद्विजोत्तमः ५२ दुर्वासाइतिविख्यातःसहित्वांयाजयिष्यति ॥ मन्नियोगान्महातेजाःसं भाराःसंभ्रियंतुते ५३ एतच्छ्रुत्वातुवचनंरुद्रेणसमुदाहृतम् ॥ स्वपुरंपुनरागम्यसंभारान्पुनराजयत् ५४ ततःसंभृतसंभारोभूयोरुद्रमुपागमत् ॥ संभृतामममसंभाराःसर्वोपकरणानिच ५५ त्वत्प्रसादान्महादेवश्वोमेदीक्षाभवेदिति ॥ एतच्छ्रुत्वातुवचनंतस्यराज्ञोमहात्मनः ५६ दुर्वाससंसमाहूयरु द्रोवचनमब्रवीत् ॥ एषराजामहाभागःश्वेतकिर्द्विजसत्तम ५७ एनंयाजयविप्रेंद्रमन्नियोगेनभूमिपम् ॥ बाढमित्येववचनंरुद्रंत्वृषिरुवाचह ५८ ततःसत्रंसम भवत्तस्यराज्ञोमहात्मनः ॥ यथाविधियथाकालंयथोक्तंबहुदक्षिणम् ५९ तस्मिन्परिसमाप्तेतुराज्ञःसत्रेमहात्मनः ॥ दुर्वाससाऽभ्यनुज्ञाताविप्रतस्थुःस्मयाजकाः ६० येतत्रदीक्षिताःसर्वेसदस्याश्चमहौजसः ॥ सोऽपिराजन्महाभागःस्वपुरंप्राविशत्तदा ६१ पूज्यमानोमहाभागैर्ब्राह्मणैर्वेदपारगैः ॥ वंदिभिःस्तूयमानश्चनागरै श्चाभिनंदितः ६२ एवंवृत्तःसराजर्षिःश्वेतकिर्नृपसत्तमः ॥ कालेनमहताचापिययौस्वर्गमभिष्टुतः ६३ ऋत्विग्भिःसहितःसर्वैःसदस्यैश्चसमन्वितः ॥ तस्यसत्रेप पौवह्निर्हविर्द्वादशवत्सरान् ६४ सततंचाज्यधाराभिरैकात्म्येतत्रकर्मणि ॥ हविषाचततोवह्निःपरांतृप्तिमगच्छत ६५ नचैच्छत्पुनरादातुंहविरन्यस्यकस्यचित् ॥ पांडुवर्णोविवर्णश्चनयथावत्प्रकाशते ६६ ततोभगवतोवह्नेर्विकारःसमजायत ॥ तेजसाविप्रहीणश्चग्लानिश्चैनंसमाविशत् ६७ सलक्षयित्वाचात्मानंतेजोहीनंहुता शनः ॥ जगामसदनंपुण्यंब्रह्मणोलोकपूजितम् ६८ तत्रब्रह्माणमासीनमिदंवचनमब्रवीत् ॥ भगवन्परमाप्रीतिःकृतामेश्वेतकेतुना ६९ अरुचिश्चाभवत्तीव्रातांन शक्नोम्यपोहितुम् ॥ तेजसाविप्रहीणोऽस्मिबलेनचजगत्पते ७० इच्छेयंत्वत्प्रसादेनस्वात्मनःप्रकृतिंस्थिराम् ॥ एतच्छ्रुत्वाहुतवहाद्भगवान्सर्वलोककृत् ७१ हव्य वाहमिदंवाक्यमुवाचप्रहसन्निव ॥ त्वयाद्वादशवर्षाणिवसोर्धाराहुतंहविः ७२ उपयुक्तंमहाभागतेनत्वांग्लानिराविशत् ॥ तेजसाविप्रहीणत्वात्सहसाहव्यवाहन ७३ मागमस्त्वंयथावह्नेप्रकृतिस्थोभविष्यसि ॥ अरुचिंनाशयिष्येऽहंसमयंप्रतिपद्यते ७४ पुरादेवनियोगेनयत्त्वयाभस्मसात्कृतम् ॥ आलयंदेवशत्रूणांसुघोरंखांडवं वनम् ७५ तत्रसर्वाणिसत्वानिनिवसंतिविभावसो ॥ तेषांत्वंमेदसातृप्तःप्रकृतिस्थोभविष्यसि ७६ गच्छशीघ्रंप्रदग्धुंत्वंततोमोक्ष्यसिकिल्बिषात् ॥ एतच्छ्रुत्वातु वचनंपरमेष्ठिमुखाच्च्युतम् ७७

वाक्यशेषात् ७२ उपयुक्तंभुक्तं ७३ मागमःग्लानिमितिविपरिणामेनानुषज्यते यथेत्यस्ययथापूर्वमित्यर्थः ७४ किंतत्खांडवमित्याकांक्षायांपुरावृत्तंस्मारयतिपुरेति ७५ । ७६ किल्बिषात्ग्लानिरूपात् ७७

७८ । ७९ । ८० । ८१ नानाप्रहरणोद्यमैः नानाविधैःप्रहरणैःपांसुप्रक्षेपवृक्षशाखाताडनादिभिः उद्यमैर्जलसेकादिभिश्च ८२ । ८३ ॥ इतिआदि पर्वणिनीलकंठीये भारतभावदीपे त्रयोविंशत्यधिक

उत्तमंजवमास्थायप्रदुद्रावहुताशनः ॥ आगम्यखांडवंदावमुत्तमंवीर्यमास्थितः ॥ सहसाप्राज्वलच्चाग्निःक्रुद्धोवायुसमीरितः ७८ प्रदीप्तंखांडवंदृष्ट्वायेस्युस्तत्र
निवासिनः ॥ परमंयत्नमातिष्ठन्पावकस्यप्रशांतये ७९ करैस्तुकरिणःशीघ्रंजलमादायसत्वराः ॥ सिषिचुःपावकंक्रुद्धाःशतशोऽथसहस्रशः ८० बहुशीर्षा
स्ततोनागाःशिरोभिर्जलसंततिम् ॥ मुमुचुःपावकाभ्याशेसत्वराःक्रोधमूर्च्छिताः ८१ तथैवान्यानिसत्वानिनानाप्रहरणोद्यमैः ॥ विलयंपावकंशीघ्रमनयन्
भरतर्षभ ८२ अनेनतुप्रकारेणभूयोभूयश्चप्रज्वलन् ॥ सप्तकृत्वःप्रशमितःखांडवेहव्यवाहनः ८३ ॥ इतिश्रीमहाभारते आदिपर्वणिखांडवदाहपर्वणिअग्निप
राभवेत्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥ ॥ ७ ॥ वैशंपायनउवाच ॥ सतुनैराश्यमापन्नःसदाग्लानिसमन्वितः ॥ पितामहमुपाग
च्छत्संक्रुद्धोहव्यवाहनः १ तच्चसर्वंयथान्यायंब्रह्मणेसंन्यवेदयत् ॥ उवाचचैनंभगवान्मुहूर्तंसविचिंत्यतु २ उपायःपरिदृष्टोमेयथात्वंधक्ष्यसेऽनघ ॥ कालंच
कंचित्क्षमतांततस्त्वांवक्ष्यतेऽनल ३ भविष्यतःसहायौतेनरनारायणौतदा ॥ ताभ्यांत्वंसहितोदावंधक्ष्यसेहव्यवाहन ४ एवमस्त्वितितंवह्निर्ब्रह्माणंप्रत्यभा
षत ॥ संभूतौतौविदित्वातुनरनारायणावृषी ५ कालस्यमहतोराजंस्तस्यवाक्यंस्वयंभुवः ॥ अनुस्मृत्यजगामाथपुनरेवपितामहम् ६ अब्रवीच्चतदाब्र
ह्मायथात्वंधक्ष्यसेऽनल ॥ खांडवंदावमद्यैवमिषतोऽस्यशचीपतेः ७ नरनारायणौयौतौपूर्वदेवौविभावसो ॥ संप्राप्तौमानुषेलोकेकार्यार्थंहिदिवौकसाम् ॥
८ अर्जुनंवासुदेवंचयौतौलोकोऽभिमन्यते ॥ तावेतौसहितावेहिखांडवस्यसमीपतः ९ तौत्वंयाचस्वसाहाय्येदाहार्थंखांडवस्यच ॥ ततोधक्ष्यसितंदावंरक्षि
तंत्रिदशैरपि १० तौतुसत्वानिसर्वाणियत्नतोवारयिष्यतः ॥ देवराजंचसहितौतत्रमेनास्तिसंशयः ११ एतच्छ्रुत्वातुवचनंत्वरितोहव्यवाहनः ॥ कृष्ण
पार्थावुपागम्ययमर्थंत्वभ्यभाषत १२ तंतेकथितवानस्मिपूर्वमेवनृपोत्तम ॥ तच्छ्रुत्वावचनंत्वग्नेर्बीभत्सुर्जातवेदसम् १३ अब्रवीन्नृपशार्दूलतत्कालसदृशंव
चः ॥ दिधक्षुंखांडवंदावमकामस्यशतक्रतोः १४ ॥ ॥ अर्जुनउवाच ॥ ॥ उत्तमास्त्राणिमेसंतिदिव्यानिचबहूनिच ॥ यैरहंशक्नुयांयोद्धुमपिव
ज्रधरान्बहून् १५ धनुर्मेनास्तिभगवन्बाहुवीर्येणसंमितम् ॥ कुर्वतःसमरेयत्नंवेगंयद्विषहेन्मम १६ शरैश्चमेऽर्थोबहुभिरक्षयैःक्षिप्रमस्यतः ॥ नहिवोढुं
रथःशक्तःशरान्ममयथेप्सितान् १७ अश्वांश्चदिव्यानिच्छेयंपांडुरान्वातरंहसः ॥ रथंचमेघनिर्घोषंसूर्यप्रतिमतेजसम् १८ ॥१८७॥

द्विशततमोऽध्यायः ॥ २२३ ॥ ॥ ७ ॥ ॥ ७ ॥ सत्विति १ । २ । ३ । ४ । ५ । ६ मिषतःपश्यतः ७ । ८ । ९ । १० । ११ । १२ । १३ शतक्रतोःसंबंधि १४ । १५ । १६ । १७ । १८

१९ । २० करणानियुद्धसाधनानिधनुरादीनि २१ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपे चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥ ॥ ७ ॥ एवमिति १ आदित्यमदितेःपुत्रं २
प्रतिगृह्यपूजादिनास्वायत्तीकृत्य ३ । ४ । ५ । ६ महामात्रमतिप्रमाणं समृद्धंप्रधानंवा ७ । ८ । ९ राजतैरजतवर्णैः १० । ११ भानुमंतंदीप्तिमंतं भौमनोवि

तथाकृष्णस्यवीर्येणनायुधंविद्यतेसमम् ॥ येननागान्पिशाचांश्चनिहन्यान्माधवोरणे १९ उपायंकर्मसिद्धौचभगवन्वक्तुमर्हसि ॥ निवारयेयंयेनेंद्रंवर्षमाणं
महावने २० पौरुषेणतुयत्कार्यंतत्कर्तारौस्वपावक ॥ करणानिसमर्थानिभगवन्दातुमर्हसि २१ ॥ ॥ इतिश्रीमहाभारते आदिपर्वणिखांडवदाहपर्वणि
अर्जुनाग्निसंवादेचतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥ ॥ वैशंपायनउवाच ॥ एवमुक्तःसभगवान्धूमकेतुर्हुताशनः ॥ चिंतयामासवरुणं
लोकपालंदिदृक्षया १ आदित्यमुदकेदेवंनिवसंतंजलेश्वरम् ॥ सचतच्चिंतितंज्ञात्वादर्शयामासपावकम् २ तमब्रवीद्धूमकेतुःप्रतिगृह्यजलेश्वरम् ॥ चतुर्थं
लोकपालानांदेवदेवंसनातनम् ३ सोमेनराज्ञायद्दत्तंधनुश्चैवेषुधीचते ॥ तत्प्रयच्छोभयंशीघ्रंरथंचकपिलक्षणम् ४ कार्यंचसुमहत्पार्थोगांडीवेनकरिष्य
ति ॥ चक्रेणवासुदेवश्चतन्ममाद्यप्रदीयताम् ५ ददानीत्येववरुणःपावकंप्रत्यभाषत ॥ तदद्भुतंमहावीर्यंयशःकीर्तिविवर्धनम् ६ सर्वशस्त्रैरनाधृष्यंसर्वश
स्त्रप्रमाथिच ॥ सर्वायुधमहामात्रंपरसैन्यप्रधर्षणम् ७ एकंशतसहस्रेणसंमितंराष्ट्रवर्धनम् ॥ चित्रमुच्चावचैर्वर्णैःशोभितंश्लक्ष्णमव्रणम् ८ देवदानवगंधर्वैः
पूजितंशाश्वतीःसमाः ॥ प्रादाच्चैवधनूरत्नमक्षय्यौचमहेषुधी ९ रथंचदिव्याश्वयुजंकपिप्रवरकेतनम् ॥ उपेतंराजतैरश्वैर्गांधर्वैर्हेममालिभिः १० पांडु
राभ्रप्रतीकाशैर्मनोवायुसमैर्जवे ॥ सर्वोपकरणैर्युक्तमजय्यंदेवदानवैः ११ भानुमंतंमहाघोषंसर्वरत्नमनोरमम् ॥ ससर्जयंसुतपसाभौमनोभुवनप्रभुः १२
प्रजापतिरनिर्देश्यंयस्यरूपंरवेरिव ॥ यंस्मसोमःसमारुह्यदानवानजयत्प्रभुः १३ नवमेघप्रतीकाशंज्वलंतमिवचश्रिया ॥ आश्रितौतंरथश्रेष्ठंशक्रायुधसमावुभौ
१४ तापनीयासुरुचिराध्वजयष्टिरनुत्तमा ॥ तस्यांतुवानरोदिव्यःसिंहशार्दूलकेतनः १५ दिधक्षन्निवतत्रस्मसंस्थितोमूर्ध्न्यशोभत ॥ ध्वजेभूतानितत्रासन्विवि
धानिमहांतिच १६ नादेनरिपुसैन्यानांयेषांसंज्ञाप्रणश्यति ॥ सतंनानापताकाभिःशोभितंरथसत्तमम् १७ प्रदक्षिणमुपावृत्यदैवतेभ्यःप्रणम्यच ॥ सन्नद्धःकवची
खड्गीबद्धगोधांगुलित्रकः १८ आरुरोहतदापार्थोविमानंसुकृतीयथा ॥ तच्चदिव्यंधनुःश्रेष्ठंब्रह्मणानिर्मितंपुरा १९ गांडीवमुपसंगृह्यबभूवमुदितोऽर्जुनः ॥ हुता
शनंपुरस्कृत्यततस्तदपिवीर्यवान् २० जग्राहबलमास्थायज्ययाचयुयुजेधनुः ॥ मौर्व्यांतुयोज्यमानायांबलिनापांडवेनह २१ येशृण्वन्कूजितंतत्रतेषांवैव्यथितं
मनः ॥ लब्ध्वारथंधनुश्चैवतथाऽक्षय्येमहेषुधी २२

श्वकर्मा १२ । १३ शक्रायुधसमौदेहवासश्छविभ्यांनीलपिशंगवर्णौ १४ तापनीयासौवर्णी सिंहशार्दूलवद्भयंकरःकेतनःकायोयस्यसः । केतनंलांछनेकायेइतिविश्वः १५ । १६ नादेनयेषां १७ । १८
१९ । २० ज्ययामौर्व्या २१ । २२

कल्यः समर्थः साह्यकर्मणि साहाय्यके वज्रं वरत्रासानाभौ यस्य तत् सूत्रबद्धस्रकुनिवत्पुनः प्रयोक्तुर्हस्तमायातीत्यर्थः । 'वज्रंत्रपुवरत्रयोः' इतिमेदिनी २३ अतएवाग्नेयमस्त्रमिवास्त्रं २४ । २५ । २६
तदेवाह क्षिप्तं क्षिप्तमिति २७ । २८ । २९ युयुत्सता योद्धुमिच्छता ३० । ३१ । ३२ । ३३ । ३४ सप्तार्चिः कालीकरालीप्रभृतिसप्तजिह्वावान् ३५ । ३६ दह्यतोदह्यमानस्य ३७ ॥ इति



बभूवकल्पःकौंतेयःप्रहृष्टःसाह्यकर्मणि ॥ वज्रनाभंततश्चक्रंददौकृष्णायपावकः २३ आग्नेयमस्त्रंदयितंसचकल्योऽभवत्तदा ॥ अब्रवीत्पावकश्चैवमेतेनमधुसूद
न २४ अमानुषानपिरणेजेष्यसित्वमसंशयं ॥ अनेनतुमनुष्याणांदेवानामपिचाहवे २५ रक्षःपिशाचदैत्यानांनागानांचाधिकस्तथा ॥ भविष्यसिनसंदेहःप्र
वरोऽपिनिवर्हणे २६ क्षिप्तंक्षिप्तंरणेचैतत्त्वयामाधवशत्रुषु ॥ हत्वाऽप्रतिहतंसंख्येपाणिमेष्यतितेपुनः २७ वरुणश्चददौतस्मैगदामशनिनिःस्वनाम् ॥ दैत्यां
तकरणींघोरांनाम्नाकौमोदकींप्रभुः २८ ततःपावकमब्रूतांप्रहृष्टावर्जुनाच्युतौ ॥ कृतास्त्रौशस्त्रसंपन्नौरथिनौध्वजिनावपि २९ कल्यौस्वोभगवन्योद्धुमपिसर्वैः
सुरासुरैः ॥ किंपुनर्वज्रिणैकेनपन्नगार्थेयुयुत्सता ३० ॥ अर्जुनउवाच ॥ चक्रपाणिर्हृषीकेशोविचरन्युधिवीर्यवान् ॥ चक्रेणभस्मसात्सर्वंविसृष्टेनतुवीर्यवान् ॥
त्रिषुलोकेषुतन्नास्तियन्नकुर्याज्जनार्दनः ३१ गांडीवंधनुरादायतथाऽक्षय्येमहेषुधी ॥ अहमप्युत्सहेलोकान्विजेतुंयुधिपावक ३२ सर्वतःपरिवार्यैवंदावमेतंमहा
प्रभो ॥ कामंसंप्रज्वलाद्यैवकल्यौस्वःसाह्यकर्मणि ३३ ॥ वैशंपायनउवाच ॥ एवमुक्तःसभगवान्दाशार्हेणार्जुनेनच ॥ तैजसंरूपमास्थायदावंदग्धुंप्रचक्रमे ३४
सर्वतःपरिवार्याथसप्तार्चिर्ज्वलनस्तथा ॥ ददाहखांडवंदावंयुगांतमिवदर्शयन् ३५ प्रतिगृह्यसमाविश्यतद्वनंभरतर्षभ ॥ मेघस्तनितनिर्घोषःसर्वभूतान्यकंपयत
३६ दह्यतस्तस्यचबभौरूपंदावस्यभारत ॥ मेरोरिवनगेंद्रस्यकीर्णस्यांशुमतोंऽशुभिः ३७ ॥ ॥ इतिश्रीमहाभारतेआदिपर्वणिखांडवदाहपर्वणि गांडीवादिदा
नेपंचविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥ ॥ वैशंपायनउवाच ॥ तौरथाभ्यांरथश्रेष्ठौदावस्योभयतःस्थितौ ॥ दिक्षुसर्वासुभूतानांचक्रा
तेकदनंमहत् १ यत्रयत्रचदृश्यंतेप्राणिनःखांडवालयाः ॥ पलायंतःप्रवीरौतौतत्रतत्राभ्यधावताम् २ छिद्रंनस्मप्रपश्यंतिरथयोराशुचारिणोः ॥ आवि
द्धाविवदृश्येतेरथिनौतौरथोत्तमौ ३ खांडवेदह्यमानेतुभूताःशतसहस्रशः ॥ उत्पेतुर्भैरवान्नादान्विनदंतःसमंततः ४ दग्धैकदेशाबहवोनिष्टप्ताश्चतथाऽ
परे ॥ स्फुटिताक्षाविशीर्णाश्चविप्लुताश्चतथापरे ५ समालिंग्यसुतानन्येपितॄन्भ्रातॄनथापरे ॥ त्यक्तुंनशेकुःस्नेहेनतत्रैवनिधनंगताः ६ संदष्टदशनाश्चान्ये
समुत्पेतुरनेकशः ॥ ततस्तेऽतीवघूर्णंतःपुनरग्नौप्रपेदिरे ७ ॥१८८॥

आदिपर्वणिनीलकंठीयेभारतभावदीपेपंचविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥ तौरथाभ्यामिति आश्रितौतंरथंश्रेष्ठमितिद्वयोरेकरथस्थत्वंप्रागुक्तंतच्छोभायात्रंभाव्युपयोगसूचनार्थं इहतुपृथग्रथ
स्थावेवेतिज्ञेयं १ । २ आविद्धाविवाऽलातचक्रवद्भ्रमिताविव ३ । ४ निष्टप्ताअतितप्ताः विशीर्णाःकर्कटीफलवद्विदीर्णाः विप्लुताः भयाद्विद्रुताः ५ । ६ । ७

८ । ९ शरीरैर्दीप्तैर्लोहप्रतिमावदत्यंततप्तैः १० वसुरेतासिवह्नौ ११ । १२ मथ्यतोमथ्यमानस्य १३ । १४ । १५ । १६ । १७ । १८ अक्षोरथचक्रद्वयसंधानकाष्ठंतत्प्रमाणाअक्षमात्राः

दग्धपक्षाक्षिचरणाविचेष्टंतोमहीतले ॥ तत्रतत्रस्मदृश्यंतेविनश्यंतःशरीरिणः ८ जलाशयेषुतप्तेषुक्वाथ्यमानेषुवह्निना ॥ गतसत्वाःस्मदृश्यंतेकूर्ममत्स्याःसमं
ततः ९ शरीरैरपरेदीप्तैर्देहवंतइवाग्नयः ॥ अदृश्यंतवनेतत्रप्राणिनःप्राणिसंक्षये १० कांश्चिदुत्पततःपार्थःशरैःसंछिद्यखंडशः ॥ पातयामासविहगान्प्रदीप्तेव
सुरेतसि ११ तेशराचितसर्वांगानिनदंतोमहारवान् ॥ ऊर्ध्वमुत्पत्यवेगेननिपेतुःखांडवेपुनः १२ शरैरभ्याहतानांचसंघशःस्मवनौकसाम् ॥ विरावःशुश्रुवेघोरः
समुद्रस्येवमथ्यतः १३ वन्हेश्चापिप्रदीप्तस्यखमुत्पेतुर्महार्चिषः ॥ जनयामासुरुद्वेगंसुमहांतंदिवौकसाम् १४ तेनार्चिषासुसंतप्तादेवाःसर्षिपुरोगमाः ॥ ततोज
ग्मुर्महात्मानःसर्वएवदिवौकसः ॥ शतक्रतुंसहस्राक्षंदेवेशमसुरार्दनम् १५ ॥ देवाऊचुः ॥ किंन्विमेमानवाःसर्वेदह्यंतेचित्रभानुना ॥ कच्चिन्नसंक्षयःप्राप्तोलोकाना
ममरेश्वर १६ ॥ वैशंपायनउवाच ॥ तच्छ्रुत्वावृत्रहातेभ्यःस्वयमेवान्ववेक्ष्यच ॥ खांडवस्यविमोक्षार्थंप्रययौहरिवाहनः १७ महतारथवृंदेननानारूपेणवासवः ॥
आकाशंसमवाकीर्यप्रववर्षसुरेश्वरः १८ ततोऽक्षमात्राव्यसृजन्धाराःशतसहस्रशः ॥ चोदितादेवराजेनजलदाःखांडवंप्रति १९ असंप्राप्तास्तुताधारास्ते
जसाजातवेदसः ॥ खएवसमशुष्यंतनकाश्चित्पावकंगताः २० ततोनमुचिहाक्रुद्धोभृशमर्चिष्मतस्तदा ॥ पुनरेवमहामेघैरंभांसिव्यसृजद्बहु २१ अर्चिर्धा
राभिसंबद्धंधूमविद्युत्समाकुलम् ॥ बभूवतद्वनंघोरंस्तनयित्नुसमाकुलम् २२ ॥ ॥ इतिश्रीमहाभारते आदिपर्वणि खांडवदाहपर्वणिइंद्रक्रोधेषड्विंशत्यधिकद्विश
ततमोऽध्यायः ॥ २२६ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ तस्याथवर्षतोवारिपांडवःप्रत्यवारयत् ॥ शरवर्षेणबीभत्सुरुत्तमास्त्राणिदर्शयन् १ खांडवंचव
नंसर्वंपांडवोबहुभिःशरैः ॥ प्राच्छादयदमेयात्मानीहारेणेवचंद्रमाः २ नचस्मकिंचिच्छक्नोतिभूतंनिश्चरितुंततः ॥ संछाद्यमानेखेबाणैरस्यतासव्यसाचिना
३ तक्षकस्तुनतत्रासीन्नागराजोमहाबलः ॥ दह्यमानेवनेतस्मिन्कुरुक्षेत्रंगतोऽहिसः ४ अश्वसेनोऽभवत्तत्रतक्षकस्यसुतोबली ॥ सयत्नमकरोत्तीव्रंमोक्षार्थंजा
तवेदसः ५ नशशाकसनिर्गंतुंनिरुद्धोऽर्जुनपत्रिभिः ॥ मोक्षयामासतंमातानिगीर्यभुजगात्मजा ६ तस्यपूर्वंशिरोग्रस्तंपुच्छमस्यनिगीर्यते ॥ निगीर्यमाणासा
क्रामत्सुतंनागीमुमुक्षया ७ तस्याःशरेणतीक्ष्णेनपृथुधारेणपांडवः ॥ शिरश्चिच्छेदगच्छंत्यास्तामपश्यच्छचीपतिः ८

१९ । २० । २१ । २२ ॥ इतिआदिपर्वणिनीलकंठीये भारतभावदीपेषड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥ ॥ ७ ॥ ॥ तस्याथेति १ । २ । ३ । ४ । ५ । ६ निगीर्यतेयावताकाले
नतावतैवनिगीर्यमाणाअर्जुनेनहन्यमानासतीआक्रामत्क्रांतवतीखमितिशेषः मुमुक्षयामोचनेच्छया ७ । ८

९ । १० अप्रतिष्ठोनिराश्रयः असंततिर्वा ११ । १२ । १३ । १४ । १५ । १६ । १७ निष्प्रतीकारंबलवदाश्रयात्भाविग्लानिहीनंहृष्टंहर्षोयस्यसः १८ । १९ । २० । २१ । २२ । २३ । २४ अयः
कणान्लोहगुलिकाःपिबतीतितथाविधमाग्नेयौषधबलेनगर्भेसंभृतालोहगुलिकास्तारकाइवविकीर्यंतेयेनतद्यंत्रमयःकणपंलोहमयं । तथाचक्राश्मसंज्ञंयस्यभ्रमिबलेनमहांतोऽपिपाषाणाअतिदूरेक्षिप्यंते

तंमुमोचयिषुर्वज्रीवातवर्षेणपांडवम् ॥ मोहयामासतत्कालमश्वसेनस्त्वमुच्यत ९ तांचमायांतदादृष्ट्वाघोरांनागेनवंचितः ॥ द्विधात्रिधाचखगतान्प्राणिनः
पांडवोऽच्छिनत् १० शशापतंचसंक्रुद्धोबीभत्सुर्जिह्मगामिनम् ॥ पावकोवासुदेवश्चाप्यप्रतिष्ठोभविष्यसि ११ ततोजिष्णुःसहस्राक्षंखंवितत्याशुगैःशरैः ॥
योधयामाससंक्रुद्धोवंचनांतामनुस्मरन् १२ देवराजोऽपितंदृष्ट्वासंरब्धंसमरेऽर्जुनम् ॥ स्वमस्त्रमसृजत्तीव्रंछादयित्वाऽखिलंनभः १३ ततोवायुर्महाघोषःक्षोभ
यन्सर्वसागरान् ॥ वियत्स्थोजनयन्मेघान्जलधारासमाकुलान् १४ ततोऽशनिमुचोघोरांस्तडित्स्तनितनिःस्वनान् ॥ तद्विघातार्थमसृजदर्जुनोऽप्यस्त्रमुत्तमम्
१५ वायव्यमभिमंत्र्याथप्रतिपत्तिविशारदः ॥ तेनेंद्राशनिमेघानांवीर्यौजस्तद्विनाशितम् १६ जलधाराश्चताःशोषंजग्मुर्नेशुश्चविद्युतः ॥ क्षणेनचाभवद्व्यो
मसंप्रशांतरजस्तमः १७ सुखशीतानिलवहंप्रकृतिस्थार्कमंडलम् ॥ निष्प्रतीकारहृष्टश्चहुतभुग्विविधाकृतिः १८ सिच्यमानोवसौघैस्तैःप्राणिनांदेहनिः
सृतैः ॥ प्रजज्वालाथसोऽर्चिष्मान्स्वनादैःपूरयन्जगत् १९ कृष्णाभ्यांरक्षितंदृष्ट्वातंचदावमहंकृताः ॥ खमुत्पेतुर्महाराजसुपर्णाद्याःपतत्रिणः २० गरु
त्मान्वज्रसदृशैःपक्षतुंडनखैस्तथा ॥ प्रहर्तुकामोन्यपतदाकाशात्कृष्णपांडवौ २१ तथैवोरगसंघाताःपांडवस्यसमीपतः ॥ उत्सृजंतोविषंघोरंनिपेतुर्ज्वलि
ताननाः २२ तांश्चकर्तशरैःपार्थःसरोषाग्निसमुक्षितैः ॥ विविशुश्चापितंदीप्तंदेहाभावायपावकम् २३ ततोऽसुराःसगंधर्वायक्षराक्षसपन्नगाः ॥ उत्पेतुर्ना
दमतुलमुत्सृजंतोरणार्थिनः २४ अयःकणपचक्राश्मभुशुंड्युद्यतबाहवः ॥ कृष्णपार्थौजिघांसंतःक्रोधसंमूर्छितौजसः २५ तेषामतिव्याहरतांशस्त्रवर्षं
प्रमुंचताम् ॥ प्रममाथोत्तमांगानिबीभत्सुर्निशितैःशरैः २६ कृष्णश्चसुमहातेजाश्चक्रेणारिविनाशनः ॥ दैत्यदानवसंघानांचकारकदनंमहत् २७ अथा
परेशरैर्विद्धाश्चक्रवेगेरितास्तथा ॥ वेलामिवसमासाद्यव्यतिष्ठन्नमितौजसः २८ ततःशक्रोऽतिसंक्रुद्धस्त्रिदशानांमहेश्वरः ॥ पांडुरंगजमास्थायतावुभौसमु
पाद्रवत् २९ वेगेनाशनिमादायवज्रमस्त्रंचसोऽसृजत् ॥ हतावेतावितिप्राहसुरानसुरसूदनः ३० ॥१८९॥

तत्काष्ठमयंयंत्रं । भुशुंडीचर्मरज्जुमयंयंत्रंपाषाणक्षेपणमेव तैरुद्यताःबाहवोयेषांतेअसुरादयःअयःकणपचक्राश्मभुशुंड्युद्यतबाहवः । क्रोधसंमूर्छितौजसःक्रोधेनसंवर्द्धिततेजसः २५ अतिव्याहरतां
कत्थमानानां २६ । २७ यथाचक्रवेगेनजलावर्त्तमवाहेणईरितास्तृणादयोवेलांप्राप्यविष्ठितत्वंस्तब्धत्वंप्राप्यतिष्ठंति एवंचक्रवेगेनअस्त्रबलजवेनईरिताअसुराद्याःकृष्णार्जुनौप्राप्यव्यतिष्ठन्नित्यर्थः ।
चक्रःकोकेइत्युपक्रम्य'कुंभकारोपकरणास्त्रयोः ॥ जलावर्त्तेऽपि'इतिमेदिनी २८ । २९ । ३०

३१ गदांचैवेत्यत्रशिविकामितिपाठेशिबिकागदेतिप्राञ्चः । शिबिकामितिसाम्प्रुस्वांरूपांतैतुतत्तद्दशमीषद्कमायुधमितितुतत्त्वं । तच्चद्रविडकेषुप्रसिद्धंदारुमयं लोहमयमपिवलवत्सुसंभाव्यतएव
३२ । ३३ । पर्वतंचापीत्यत्रविचक्रंपरीतिपाठेविचक्रंत्रिशूलं ३४ अर्यमाअपीत्यत्रसोविरविरक्षितः ३५ । ३६ । ३७ । ३८ निमित्तानिसूचकानिउल्कापातादीनि ३९ । ४० । ४१ । ४२

ततःसमुद्यतांदृष्ट्वादेवेंद्रेणमहाशनिम् ॥ जगृहुःसर्वशस्त्राणिस्वानिस्वानिसुरास्तथा ३१ कालदंडंयमोराजन्गदांचैवधनेश्वरः ॥ पाशांश्चतत्रवरुणोविचि
त्रांचतथाऽशनिम् ३२ स्कंदःशक्तिंसमादायतस्थौमेरुरिवाचलः ॥ ओषधीर्दीप्यमानाश्चजगृहातेऽश्विनावपि ३३ जगृहेचधनुर्धातामुसलंतुजयस्तथा ॥
पर्वतंचापिजग्राहक्रुद्धस्त्वष्टामहाबलः ३४ अंशस्तुशक्तिंजग्राहमृत्युर्देवःपरश्वधम् ॥ प्रगृह्यपरिघंघोरंविचचारार्यमाअपि ३५ मित्रश्चक्षुरपर्यंतंचक्रमादाय
तस्थिवान् ॥ पूषाभगश्चसंक्रुद्धःसविताचविशांपते ३६ आत्तकार्मुकनिस्त्रिंशाःकृष्णपार्थौप्रदुद्रुवुः ॥ रुद्राश्चवसवश्चैवमरुतश्चमहाबलाः ३७ विश्वेदेवा
स्तथासाध्यादीप्यमानाःस्वतेजसा ॥ एतेचान्येचबहवोदेवास्तौपुरुषोत्तमौ ३८ कृष्णपार्थौजिघांसंतःप्रतीयुर्विविधायुधाः ॥ तत्राद्भुतान्यदृश्यंतनिमित्ता
निमहाहवे ३९ युगांतसमरूपाणिभूतसंमोहनानिच ॥ तथादृष्ट्वासुसंरब्धंशक्रंदेवैःसहाच्युतौ ४० अभीतौयुधिदुर्धर्षौतस्थतुःसज्जकार्मुकौ ॥ आग
च्छतस्ततोदेवानुभौयुद्धविशारदौ ४१ व्यताडयेतांसंक्रुद्धौशरैर्वज्रोपमैस्तदा ॥ असकृद्भग्नसंकल्पाःसुराश्चबहुशःकृताः ४२ भयाद्रणंपरित्यज्यशक्रमेवाभिशि
श्रियुः ॥ दृष्ट्वानिवारितान्देवान्माधवेनार्जुनेनच ४३ आश्चर्यमगमंस्तत्रमुनयोनभसिस्थिताः ॥ शक्रश्चापितयोर्वीर्यमुपलभ्यासकृद्रणे ४४ बभूवपरमप्रीतोभूय
श्चैतावयोधयत् ॥ ततोऽश्मवर्षंसुमहद्व्यसृजत्पाकशासनः ४५ भूयएवतदावीर्यंजिज्ञासुःसव्यसाचिनः ॥ तच्छरैरर्जुनोवर्षंप्रतिजघ्नेऽत्यमर्षितः ४६ विफलं
क्रियमाणंतत्समवेक्ष्यशतक्रतुः ॥ भूयःसंवर्धयामासतद्वर्षंपाकशासनः ४७ सोऽश्मवर्षंमहावेगैरिषुभिःपाकशासनिः ॥ विलयंगमयामासहर्षयन्पितरंतथा ४८ ततउ
त्पाट्यपाणिभ्यांमंदराच्छिखरंमहत् ॥ सद्रुमंव्यसृजच्छक्रोजिघांसुःपांडुनंदनम् ४९ ततोऽर्जुनोवेगवद्भिर्ज्वलिताग्रैरजिह्मगैः ॥ शरैर्विध्वंसयामासगिरेःशृंगंसहस्रधा
५० गिरेर्विशीर्यमाणस्यतस्यरूपंतदाबभौ ॥ सार्कचंद्रग्रहस्येवनभसःपरिशीर्यतः ५१ तेनाभिपततादावंशैलेनमहताभृशम् ॥ शृंगेणनिहतास्तत्रप्राणिनःखांडवा
लयाः ५२ ॥ इतिश्रीमहाभारतेआदिपर्वणि खांडवदाहपर्वणि देवकृष्णार्जुनयुद्धे सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥ ॥ समाप्तंचखांडवदाहपर्व ॥
॥ अथमयदर्शनपर्व ॥ वैशंपायनउवाच ॥ तथाशैलनिपातेनभीषिताःखांडवालयाः ॥ दानवाराक्षसानागास्तरक्ष्वृक्षवनौकसः १

४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० गिरेर्गिरिशृंगस्य ५१ शैलेनशिलासमूहेनकरणेन शृंगेणकर्त्रा ५२ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपे सप्तविंशत्यधिक
द्विशततमोऽध्यायः ॥ २२७ ॥ ॥ ७ ॥ ॥ तथेति तरक्षवःस्वल्पव्याघ्राः ऋक्षाभल्लाः १

प्रभिन्नामदच्युताः केसरिणउत्पन्नकेसरायुवानइत्यर्थः २ दावंवनं ३ उत्पातनादानिर्घातादयस्तच्छब्देनसंत्रासितेवनेइतिशेषः संचारितेइतिपाठेऽपिसएवार्थः ४ । ५ ररासशब्दंकृतवान् ६

द्विपाःप्रभिन्नाःशार्दूलाःसिंहाःकेसरिणस्तथा ॥ मृगाश्चमहिषाश्चैवशतशःपक्षिणस्तथा २ समुद्विग्नाविससृपुस्तथान्याभूतजातयः ॥ तंदावंसमुदेक्षंतकृष्णौ
चाभ्युद्यतायुधौ ३ उत्पातनादशब्देनसंत्रासितइवस्थिताः ॥ तेवनंप्रसमीक्ष्याथदह्यमानमनेकधा ४ कृष्णमभ्युद्यतास्त्रंचनादंमुमुचुरुल्बणम् ॥ तेननादे
नरौद्रेणनादेनचविभावसोः ५ ररासगगनंकृत्स्नमुत्पातजलदैरिव ॥ ततःकृष्णोमहाबाहुःस्वतेजोभास्वरंमहत् ६ चक्रंव्यसृजदत्युग्रंतेषांनाशायकेशवः ॥ ते
नार्त्ताजातयःक्षुद्राःसदानवनिशाचराः ७ निकृत्ताःशतशःसर्वानिपेतुरनलंक्षणात् ॥ तत्रादृश्यंततेदैत्याःकृष्णचक्रविदारिताः ८ वसारुधिरसंपृक्ताःसंध्यायामि
वतोयदाः ॥ पिशाचान्पक्षिणोनागान्पशूंश्चैवसहस्रशः ९ निघ्नंश्चरतिवार्ष्णेयःकालवत्तत्रभारत ॥ क्षिप्तंक्षिप्तंपुनश्चक्रंकृष्णस्यामित्रघातिनः १० छित्त्वाने
कानिसत्वानिपाणिमेतिपुनःपुनः ॥ तथातुनिघ्नतस्तस्यपिशाचोरगराक्षसान् ११ बभूवरूपमत्युग्रंसर्वभूतात्मनस्तदा ॥ समेतानांचसर्वेषांदानवानांचसर्वशः
१२ विजेतानाभवत्कश्चित्कृष्णपांडवयोर्मृधे ॥ तयोर्बलात्परित्रातुंतंचदावंयदासुराः १३ नाशक्नुवन्शमयितुंतदाऽभूवन्पराङ्मुखाः ॥ शतक्रतुस्तुसंप्रेक्ष्यावि
मुखानमरांस्तथा १४ बभूवमुदितोराजन्प्रशंसन्केशवार्जुनौ ॥ निवृत्तेष्वथदेवेषुवागुवाचाशरीरिणी १५ शतक्रतुंसमाभाष्यमहागंभीरनिःस्वना ॥ नते
सखासन्निहितस्तक्षकोभुजगोत्तमः १६ दाहकालेखांडवस्यकुरुक्षेत्रंगतोह्यसौ ॥ नचशक्यौयुधाजेतुंकथंचिदपिवासव १७ वासुदेवार्जुनावेतौनिबोधवचना
न्मम ॥ नरनारायणावेतौपूर्वदेवौदिविश्रुतौ ॥ भवानप्यभिजानातियद्वीर्यौयत्पराक्रमौ ॥ नैतौशक्यौदुराधर्षौविजेतुमजितौयुधि १९ अपिसर्वेषुलोकेषुपु
राणावृषिसत्तमौ ॥ पूजनीयतमावेतावपिसर्वैःसुरासुरैः २० यक्षराक्षसगंधर्वनरकिन्नरपन्नगैः ॥ तस्मादितःसुरैःसार्धंगंतुमर्हसिवासव २१ दिष्टंचाप्यनुपश्ये
तत्खांडवस्यविनाशनम् ॥ इतिवाक्यमुपश्रुत्यतथ्यमित्यमरेश्वरः २२ क्रोधामर्षौसमुत्सृज्यसंप्रतस्थेदिवंतदा ॥ तंप्रस्थितंमहात्मानंसमवेक्ष्यदिवौकसः २३
सहिताःसेनयाराजन्ननुजग्मुःपुरंदरम् ॥ देवराजंतदायांतंसहदेवैरवेक्ष्यतु २४ वासुदेवार्जुनौवीरौसिंहनादंविनेदतुः ॥ देवराजेगतेराजन्प्रहृष्टौकेशवार्जुनौ २५
निर्विशंकंवनंवीरौदाहयामासतुस्तदा ॥ समारुतइवाभ्राणिनाशयित्वाऽर्जुनःसुरान् २६ व्यधमच्छरसंघातैर्देहिनःखांडवालयान् ॥ नचस्मकिंचिच्छक्नोतिभूतं
निश्चरितुंततः २७ संछिद्यमानमिषुभिरस्यतासव्यसाचिना ॥ नाशक्नुवंश्चभूतानिमहांत्यपिरणेऽर्जुनम् २८ निरीक्षितुममोघास्त्रंयोद्धुंचापिकुतोरणे ॥ ॥१९०॥
शतंचैकेनविव्याधशतेनैकंपतत्रिणाम् २९

७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

३० । ३१ गंगोदधिचराइतिअतिदूरस्थोपलक्षणं ३२ । ३३ एकायनगताःसंधीभूताः ३४ । ३५ । ३६ । ३७ कृतांदत्तां सुधांस्वभोजनं ३८ । ३९ । ४० । ४१

व्यसवस्तेऽपतन्नग्नौसाक्षात्कालहताइव ॥ नचालभंततेशर्मरोधःसुविषमेषुच ३० पितृदेवनिवासेषुसंतापश्चाप्यजायत ॥ भूतसंघाश्चबहवोदीनाश्चक्रुर्महास्वनम्
३१ रुरुदुर्वारणाश्चैवतथामृगतरक्षवः ॥ तेनशब्देनवित्रेसुर्गंगोदधिचराझषाः ३२ विद्याधरगणाश्चैवयेचतत्रवनौकसः ॥ नत्वर्जुनंमहाबाहोनापिकृष्णंजनार्द
नम् ३३ निरीक्षितुंवैशक्नोतिकश्चिद्योद्धुंकुतःपुनः ॥ एकायनगतायेऽपिनिष्पेतुस्तत्रकेचन ३४ राक्षसादानवानागाजघ्नेचक्रेणतान्हरिः ॥ तेतुभिन्नशिरोदे
हाश्चक्रवेगाद्गतासवः ३५ पेतुरन्येमहाकायाःप्रदीप्तेवसुरेतसि ॥ समांसरुधिरौघैश्चवसाभिश्चापितर्पितः ३६ उपर्याकाशगोभूत्वाविधूमःसमपद्यत ॥ दीप्ताक्षो
दीप्तजिह्वश्चसंप्रदीप्तमहाननः ३७ दीप्तोर्ध्वकेशःपिंगाक्षःपिबन्प्राणभृतांवसाम् ॥ तांसकृष्णार्जुनकृतांसुधांप्राप्यहुताशनः ३८ बभूवमुदितस्तृप्तःपरांनिर्वृ
तिमागतः ॥ तथाऽसुरंमयंनामतक्षकस्यनिवेशनात् ३९ विप्रद्रवंतंसहसाददर्शमधुसूदनः ॥ तमग्निःप्रार्थयामासदिधक्षुर्वातसारथिः ४० शरीरवान्
जटीभूत्वानदन्निवबलाहकः ॥ विज्ञायदानवेंद्राणांमयंवैशिल्पिनांवरम् ४१ जिघांसुर्वासुदेवस्तंचक्रमुद्यम्यधिष्ठितः ॥ सचक्रमुद्यतंदृष्ट्वादिधक्षंतंचपावकम् ४२ अभि
धावार्जुनेत्येवंमयस्त्राहीतिचाब्रवीत् ॥ तस्यभीतस्वनंश्रुत्वामाभैरितिधनंजयः ४३ प्रत्युवाचमयंपार्थोजीवयन्निवभारत ॥ तंनभेतव्यमित्याहमयंपार्थोदयापरः
४४ तंपार्थेनाभयेदत्तेनमुचेभ्रातरंमयम् ॥ नहंतुमैच्छद्दाशार्हःपावकोनददाहच ४५ ॥ वैशंपायनउवाच ॥ तद्वनंपावकोधीमान्दिनानिदशपंचच ॥ ददाह
कृष्णपार्थाभ्यांरक्षितःपाकशासनात् ४६ तस्मिन्वनेदह्यमानेषडग्निर्नददाहच ॥ अश्वसेनंमयंचैवचतुरःशार्ङ्गकांस्तथा ४७ ॥ इतिश्रीमहाभारते आदिपर्वणि
मयदर्शनपर्वणि मयदानवत्राणे अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥ ॥ ७ ॥ ॥ जनमेजयउवाच ॥ किमर्थंशार्ङ्ग
कानग्निर्नददाहतथागते ॥ तस्मिन्वनेदह्यमानेब्रह्मन्नेतत्प्रचक्ष्वमे १ अदाहेह्यश्वसेनस्यदानवस्यमयस्यच ॥ कारणंकीर्तितंब्रह्मन्शार्ङ्गकाणांनकीर्तितम् २
तदेतदद्भुतंब्रह्मन्शार्ङ्गकाणामनामयम् ॥ कीर्तयस्वाग्निसंमर्देकथंतेनविनाशिताः ३ ॥ वैशंपायनउवाच ॥ यदर्थंशार्ङ्गकानग्निर्नददाहतथागते ॥ तत्तेसर्वंप्र
वक्ष्यामियथाभूतमरिंदम ४ धर्मज्ञानांमुख्यतमस्तपस्वीसंशितव्रतः ॥ आसीन्महर्षिःश्रुतवान्मंदपालइतिश्रुतः ५ समार्गमाश्रितोराजन्नृषीणामूर्ध्वरेतसाम् ॥
स्वाध्यायवान्धर्मरतस्तपस्वीविजितेंद्रियः ६ सगत्वातमसःपारंदेहमुत्सृज्यभारत ॥ जगामपितृलोकायनलेभेतत्रतत्फलम् ७

४२ । ४३ । ४४ । ४५ । ४६ शार्ङ्गकान्पक्षिविशेषान् ४७ ॥ इतिआदिपर्वणिनैलकंठीये भारतभावदीपे अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥ ॥ ७ ॥ ॥
किमर्थमिति १ । २ । ३ । ४ । ५ । ६ । ७

८ आवृताःप्रतिविद्धभोगाः ९ । १० । ११ । १२ प्रजायस्वप्रजेच्छांकुरु १३ अपत्यसंतावेसंततेरविच्छेदे १४ । १५ जरितांनामभार्यां १६ लपितांनामापरांभार्यां १७ तान्वालानपा
स्येतिसंबंधः १८ । १९ । २० । २१ । २२ मुखमितिजिवरूपेणभोक्तृत्वं २३ गूढश्चतिब्रह्मरूपेणागोचरत्वं त्रिविधंदिव्यंभौममौदर्यंच २४ अष्टधापंचभूतात्मनासूर्यचंद्रयजमानरूपेणच यज्ञवाहं

सलोकानफलान्दृष्ट्वातपसानिर्जितानपि ॥ पप्रच्छधर्मराजस्यसमीपस्थान्दिवौकसः ८ ॥ मंदपालउवाच ॥ किमर्थमावृतालोकाममैतेतपसार्जिताः ॥
किंमयानकृतंतत्रयस्यैतत्कर्मणःफलम् ९ तत्राहंतत्करिष्यामियदर्थमिदमावृतम् ॥ फलमेतस्यतपसःकथयध्वंदिवौकसः १० ॥ देवाऊचुः ॥ ऋणि
नोमानवाब्रह्मन्जायंतेयेनतच्छृणु ॥ क्रियाभिर्ब्रह्मचर्येणप्रजयाचनसंशयः ११ तदपाक्रियतेसर्वंयज्ञेनतपसाश्रुतैः ॥ तपस्वीयज्ञकृच्चासिनचतेविद्यतेप्रजा
१२ तइमेप्रसवस्यार्थेतवलोकाःसमावृताः ॥ प्रजायस्वततोलोकानुपभोक्ष्यसिपुष्कलान् १३ पुन्नाम्नोनरकात्पुत्रस्त्रायतेपितरंश्रुतिः ॥ तस्मादपत्यसं
तानेयतस्वब्रह्मसत्तम १४ ॥ वैशंपायनउवाच ॥ तच्छ्रुत्वामंदपालस्तुवचस्तेषांदिवौकसाम् ॥ क्वनुशीघ्रमपत्यंस्याद्बहुलंचेत्यचिंतयत् १५ सचिंत
यन्नभ्यगच्छत्सुबहुप्रसवान्खगान् ॥ शार्ङ्गिकांशार्ङ्गकोभूत्वाजरितांसमुपेयिवान् १६ तस्यांपुत्रानजनयच्चतुरोब्रह्मवादिनः ॥ तानपास्यसतत्रैवजगाम
लपितांप्रति १७ बालान्सतानंडगतान्सहमात्रामुनिर्वने ॥ तस्मिन्गतेमहाभागेलपितांप्रतिभारत १८ अपत्यस्नेहसंयुक्ताजरिताबह्वचिंतयत् ॥ तेन
त्यक्तानसंत्याज्यानृषीनंडगतान्वने १९ नजहौपुत्रशोकार्ताजरिताखांडवेसुतान् ॥ बभारचैतान्संजातान्स्ववृत्त्यास्नेहविक्लवा २० ततोऽग्निंखांडवंदग्धु
मायांतंदृष्टवानृषिः ॥ मंदपालश्चरंस्तस्मिन्वनेलपितयासह २१ तंसंकल्पंविदित्वाऽग्नेर्ज्ञात्वापुत्रांश्चबालकान् ॥ सोऽभितुष्टावविप्रर्षिर्ब्राह्मणोजातवेदसम् २२
पुत्रान्प्रतिवदन्भीतोलोकपालंमहौजसम् ॥ मंदपालउवाच ॥ त्वमग्नेसर्वलोकानांमुखंत्वमसिहव्यवाट् २३ त्वमंतःसर्वभूतानांगूढश्चरसिपावक ॥ त्वामेकमाहुः
कवयस्त्वामाहुस्त्रिविधंपुनः २४ त्वामष्टधाकल्पयित्वायज्ञवाहमकल्पयन् ॥ त्वयाविश्वमिदंसृष्टंवदंतिपरमर्षयः २५ त्वदृतेहिजगत्कृत्स्नंसद्योनश्येद्धुताशन ॥
तुभ्यंकृत्वानमोविप्राःस्वकर्मविजितांगतिम् २६ गच्छंतिसहपत्नीभिःसुतैरपिचशाश्वतीम् ॥ त्वामग्नेजलदानाहुःखेविषक्तान्सविद्युतः २७ दहंतिसर्वभूतानि
त्वत्तोनिष्क्रम्यहेतयः ॥ जातवेदस्त्वयैवेदंविश्वंसृष्टंमहाद्युते २८ तवैवकर्मविहितंभूतंसर्वंचराचरम् ॥ त्वयाऽपोविहिताःपूर्वंत्वयिसर्वमिदंजगत् २९ त्वयिहव्यंच
कव्यंचयथावत्संप्रतिष्ठितम् ॥ त्वमेवदहनोदेवत्वंधातात्वंबृहस्पतिः ३०

यज्ञनिर्वाहकं २५ त्वयासद्रूपेणविमानश्येददर्शनंगच्छेत् निरधिष्ठानकभ्रमायोगादित्यर्थः कर्मिणांत्वमेवगतिरित्याह तुभ्यमिति २६ पालनंसंहारश्चत्वैवकर्मणेत्याह त्वामिति २७
हेतयोज्वालाःजगत्स्रष्टिस्त्वत्तएवेत्याहजातवेदइति २८ तवैवेति कर्मविधायकोवेदोऽपित्वैववाक्यं । 'निःश्वसितमेतदृग्वेदः'इत्यादिश्रुतेः आपइतिभूतांतरोपलक्षणं त्वयिअधिष्ठाने २९ हव्या
दिप्रतिष्ठाभोक्तृत्वेनफलदातृत्वेनचत्वमेवेत्याह त्वयीति ३०

३१ । ३२ । ३३ खांडवेवने तेनहेतुना कालेदाहवेलायांशार्ङ्गकाणांदिधक्षयानप्रजज्वाल ३४ ॥ ॥ इतिआदिपर्वणिनीलकंठीयेभारतभावदीपेऊनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥
ततइति परायणंत्रातारं १ निशम्यआलोच्य २ कक्षंवनं ३ कर्षयंतिपीडयंति अबर्हाअजातपक्षाः परायणास्त्रातारः ४ सरणेगमने ५ तरितुंवनंलंघितुं निःसारयितुमंततइतिपाठेऽर्थः

त्वमश्विनौयमौमित्रःसोमस्त्वमसिचानिलः ॥ ॥ वैशंपायनउवाच ॥ एवंस्तुतस्तदातेनमंदपालेनपावकः ३१ तुतोषतस्यनृपतेमुनेरमिततेजसः ॥
उवाचचैनंप्रीतात्माकिमिष्टंकरवाणिते ३२ तमब्रवीन्मंदपालःप्रांजलिर्हव्यवाहनम् ॥ प्रदहन्खांडवंदावंममपुत्रान्विसर्जय ३३ तथेतितत्प्रतिश्रुत्यभगवान्ह
व्यवाहनः ॥ खांडवेतेनकालेनप्रजज्वालदिधक्षया ३४ ॥ इतिश्रीमहाभारते आदिपर्वणि मयदर्शनपर्वणि शार्ङ्गकोपाख्याने ऊनत्रिंशदधिकद्विशततमो
ध्यायः ॥ २२९ ॥ ॥ ॥ वैशंपायनउवाच ॥ ततःप्रज्वलितेवह्नौशार्ङ्गकास्तेसुदुःखिताः ॥ व्यथिताःपरमोद्विग्नानाधिजग्मुःपरायणम् १ नि
शम्यपुत्रकान्बालान्मातातेषांतपस्विनी ॥ जरिताशोकदुःखार्ताविललापसुदुःखिता २ ॥ ॥ जरितोवाच ॥ अयमग्निर्दहन्कक्षमितआयातिभीषणः ॥
जगत्संदीपयन्भीमोममदुःखविवर्धनः ३ इमेचमांकर्षयंतिशिशवोमंदचेतसः ॥ अबर्हाश्चरणैर्हीनाःपूर्वेषांनःपरायणाः ४ त्रासयंश्चायमायातिलेलिहानोम
हीरुहान् ॥ अजातपक्षाश्चसुतानशक्ताःसरणेमम ५ आदायचनशक्नोमिपुत्रांस्तरितुमात्मना ॥ नचत्यक्तुमहंशक्ताहृदयंदूयतीवमे ६ कंतुजह्यामहंपुत्रं
कमादायव्रजाम्यहम् ॥ किंनुमेस्यात्कृतंकृत्वामन्यध्वंपुत्रकाःकथम् ७ चिंतयानाविमोक्षंवोनाधिगच्छामिकिंचन ॥ छादयिष्यामिवोगात्रैःकरिष्येमरणं
सह ८ जरितारौकुलंह्येतज्ज्येष्ठत्वेनप्रतिष्ठितम् ॥ सारिसृक्कःप्रजायेतपितॄणांकुलवर्धनः ९ स्तंबमित्रस्तपःकुर्याद्द्रोणोब्रह्मविदांवरः ॥ इत्येवमुक्त्वाप्रययौ
पितावोनिर्घृणःपुरा १० कमुपादायशक्येयंगंतुंकष्टाऽऽपदुत्तमा ॥ किंनुकृत्वाकृतंकार्यंभवेदितिचविह्वला ॥ नापश्यत्स्वधियामोक्षंस्वसुतानांतदानलात्
११ ॥ ॥ वैशंपायनउवाच ॥ ॥ एवंब्रुवाणांशार्ङ्गास्तेप्रत्यूचुरथमातरम् ॥ स्नेहमुत्सृज्यमातस्त्वंपतयत्रनहव्यवाट् १२ अस्मास्विहविनष्टेषु
भवितारःसुतास्तव ॥ त्वयिमातर्विनष्टायांननःस्यात्कुलसंततिः १३ अन्ववेक्ष्यैतदुभयंक्षेमंस्याद्यत्कुलस्यनः ॥ तद्वैकर्तुंपरःकालोमातरेषभवेत्तव १४
मात्वंसर्वविनाशायस्नेहंकार्षीःसुतेषुनः ॥ नहीदंकर्मभोघंस्याल्लोककामस्यनःपितुः १५

तोनिरग्निदेशे ६ किंन्विति किंकृत्वाकृतकृत्यास्यामित्यर्थः ७ । ८ प्रजायेतप्रजारूपेणोत्पद्येत ९ । १० गंतुंलंघितुं ११ पतगच्छ १२ । १३ । १४ नोऽस्माकंसर्वविनाशायस
र्वेषांविनाशायसुतेषुस्नेहंमाकार्षीरितिसंबंधः १५

१६ । १७ विहंतुंदूरीकर्तुं वादोवचनं १८ क्रव्यादाखुर्मांसादउँदुरुः पश्यमानाःपश्यंतः १९ मोघोनिष्फलःऽपत्योत्पत्तिः म्रियेतजीवेत २० । २१ शिष्टादिष्टःशिष्टैरादिष्टः २२ ॥ इति आदिपर्वणिनीलकंठीये भारतभावदीपे त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥ ॥ ७ ॥ अस्मादिति १ । २ वह्निरागच्छेदित्यत्रसंशयोयतोवायोःसकाशाद्वह्नेर्निवर्तनंदृष्टं ३ । ४ । ५ । ६

॥ जरितोवाच ॥ ॥ इदमाखोर्बिलंभूमौवृक्षस्यास्यसमीपतः ॥ तदाविशध्वंत्वरितावह्नेरत्रनवोभयम् १६ ततोऽहंपांसुनाछिद्रमपिधास्यामिपुत्रकाः ॥ एवंप्रतिकृतंमन्येज्वलतःकृष्णवर्त्मनः १७ ततएष्याम्यतीतेऽग्नौविहंतुंपांसुसंचयम् ॥ रोचतामेषवोवादोमोक्षार्थंचहुताशनात् १८ ॥ शार्ङ्गकाऊचुः ॥ अबर्हान्मांसभूतान्नःक्रव्यादाखुर्विनाशयेत् ॥ पश्यमानाभयमिदंप्रवेष्टुंनात्रशक्नुमः १९ कथमग्निर्ननोधक्ष्येत्कथमाखुर्ननाशयेत् ॥ कथंनस्यात्पितामोघःकथंमाताध्रियेतनः २० बिलआखोर्विनाशःस्यादग्नेराकाशचारिणाम् ॥ अन्ववेक्ष्यैतदुभयंश्रेयान्दाहोनभक्षणम् २१ गर्हितंमरणंनःस्यादाखुनाभक्षितेबिले ॥ शिष्टादिष्टःपरित्यागःशरीरस्यहुताशनात् २२ ॥ इतिश्रीमहाभारतेआदिपर्वणिमयदर्शनपर्वणिजरिताविलापेत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥ ॥ ॥ जरितोवाच ॥ ॥ अस्माद्बिलान्निष्पतितमाखुंश्येनोजहारतम् ॥ क्षुद्रंपद्भ्यांगृहीत्वाचयातोनात्रभयंहिवः १ ॥ ॥ शार्ङ्गकाऊचुः ॥ नहृतंतंवयंविद्मःश्येनेनाखुंकथंचन ॥ अन्येऽपिभवितारोऽत्रतेभ्योऽपिभयमेवनः २ संशयोवह्निरागच्छेद्दृष्टंवायोर्निवर्तनम् ॥ मृत्युर्नोबिलवासिभ्योबिलेस्यान्नात्रसंशयः ३ निःसंशयात्संशयितोमृत्युर्मातर्विशिष्यते ॥ चरखेत्वंयथान्यायंपुत्रानाप्स्यसिशोभनान् ४ ॥ ॥ जरितोवाच ॥ अहंवेगेनतंयांतमद्राक्षंपततांवरम् ॥ बिलादाखुंसमादायश्येनंपुत्रामहाबलम् ५ तंपतंतंमहावेगात्वरिताप्रष्ठतोऽन्वगाम् ॥ आशिषोऽस्यप्रयुंजानाहरतोमूषिकंबिलात् ६ योनोद्वेष्टारमादायश्येनराजप्रधावसि ॥ भवत्वंदिवमास्थायनिरमित्रोहिरण्मयः ७ सयदाभक्षितस्तेनश्येनेनाखुःपतत्रिणा ॥ तदाऽहंतमनुज्ञाप्यप्रत्युपायांपुनर्गृहम् ८ प्रविशध्वंबिलंपुत्राविश्रब्धानास्तिवोभयम् ॥ श्येनेनममपश्यंत्याहृतआखुर्महात्मना ९ ॥ शार्ङ्गकाऊचुः ॥ नविद्महेहृतंमातःश्येनेनाखुंकथंचन ॥ अविज्ञायनशक्यामःप्रवेष्टुंविवरंभुवः १० ॥ ॥ जरितोवाच ॥ अहंतमभिजानामिहृतंश्येनेनमूषिकम् ॥ नास्तिवोऽत्रभयंपुत्राःक्रियतांवचनंमम ११ ॥ शार्ङ्गकाऊचुः ॥ ॥ नत्वंमिथ्योपचारेणमोक्षयेथाभयाद्विनः ॥ समाकुलेषुज्ञानेषुनबुद्धिकृतमेवतत् १२ नचोपकृतमस्माभिर्नचास्मान्वेत्थयेवयम् ॥ पीड्यमानाबिभर्ष्यस्मान्कासतीकेवयंतव १३

दिवमास्थायनिरमित्रोऽशत्रुर्भव अक्षयःस्वर्गस्तेऽस्त्वितिभावः हिरण्मयोदिव्यदेहः ७ मत्युपायांप्रत्यागतवत्यस्मि ८ । ९ । १० । ११ नत्वमिति अस्मांस्त्यक्त्वागंतुमिच्छंत्यास्तवमिथ्यैवायमुपचारोनवास्तवइतिभावः समाकुलेषुसंदिग्धेषु ज्ञानेषुज्ञातव्यकार्येषु तद्बिलप्रवेशनं बुद्धिकृतंबुद्धिमदाचरितंनैव बिलेशत्रुसद्भावशंकायांसत्यांबलात्तत्रप्रवेशोनयुक्तइतिभावः १२ नचेति अस्मानग्रेवोपकर्तॄन्भूतभाव्युपकारशून्यान्किमितिबिभर्षि वयंतवकेनकेपीत्यर्थः त्वंवासतीअस्माकंकानकापि मातृसंबंधस्यभ्रांतिकल्पितत्वादित्यर्थः १३



१४ आयाःआगच्छेः नोऽस्मान् १५ । १६ ततइति अग्निदाहात्प्रागेवतक्षकवज्जरितापिगताऽतोदाहात्पडेवमुक्ताइतिपूर्वोक्तमविरुद्धं १७ । १८ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपे एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥ पुरतइति अत्रसंसाराख्यांमहामोहानलज्वालायांमाताऽपिनत्रातुंसमर्थाकिंतुसर्वेस्वार्थकामाएवेतिसंसूच्यअग्निरेवसर्वांस्त्रातुंसमर्थइत्यस्मिन्नध्यायेसूच्यते कथापक्षेतुस्पष्टएवार्थः । तत्रजरितारिर्नाशितकामादिशत्रुगणआह पुरतइति मरणात्प्रागेवज्ञानार्थंयतितव्यंततश्चमरणव्यथांज्ञानीनप्राप्नोति 'नतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंते'इतिश्रुतेरित्यायश्लोकतत्त्वं । कृच्छ्रकालोमरणकालः व्यथांप्राणोत्क्रमणपीडां १ एतदेवव्यतिरेकमुखेनाह यस्त्विति विचेताःअजितचित्तःव्यथितांदेहोत्तरेनिपात्यकर्मणावशीकृतःमहच्छ्रेयोमोक्षं २ उक्तव्यथानाशःसत्संगादेवभवतीत्यन्वयव्यतिरेकाभ्यामाहद्वाभ्यां धीरइति धीरोध्यानवान् मेधावीऊहापोहकुशलोऽतस्त्वमेवास्मान्पाहीतिभावः ३ त्वदनुग्रहंविनानास्तितरणोपायइत्याह ज्येष्ठइति ४ द्रोणवत्क्षयंगृहं । अध्यात्मंतु हरतीतिहिरण्यंविषयवासनासैवरेतोबीजंयस्यसमोहोमरणकालिकःक्षयंदेहगेहमेवेति सप्तजिह्वाः ' कालीमनोजवाचसुलोहिताकरालीलोहितातथा । स्फुलिंगिनीविश्वरुचिःसप्तजिह्वाविभावसोः' । पक्षेपंचेंद्रियाणिबुद्धिमनसीचतद्युक्तमाननं

तरुणीदर्शनीयाऽसिसमर्थाभर्तुरेषणे ॥ अनुगच्छपतिंमातःपुत्रानाप्स्यसिशोभनान् १४ वयमग्निंसमाविश्यलोकानाप्स्यामशोभनान् ॥ अथास्मान्नदहेदग्निरायास्त्वंपुनरेवनः १५ ॥ वैशंपायनउवाच ॥ एवमुक्तातत्शार्ङ्गीपुत्रानुत्सृज्यखांडवे ॥ जगामत्वरितादेशंक्षेममग्नेरनामयम् १६ ततस्तीक्ष्णार्चिरभ्यागात्त्वरितोहव्यवाहनः ॥ यत्रशार्ङ्गाबभूवुस्तेमंदपालस्यपुत्रकाः १७ ततस्तंज्वलितंदृष्ट्वाज्वलनंतेविहंगमाः ॥ जरितारिस्ततोवाक्यंश्रावयामासपावकम् १८ ॥ इति श्रीमहाभारते आदिपर्वणि मयदर्शनपर्वणि शार्ङ्गकोपाख्याने एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥ ॥ जरितारिरुवाच ॥ पुरतःकृच्छ्रकालस्यधीमान्जागर्तिपूरुषः ॥ सकृच्छ्रकालंसंप्राप्यव्यथांनैवेतिकर्हिचित् १ यस्तुकृच्छ्रमनुप्राप्तंविचेतानावबुध्यते ॥ सकृच्छ्रकालेव्यथितोनश्रेयोविंदतेमहत् २ ॥ सारिसृक्वउवाच ॥ धीरस्त्वमसिमेधावीप्राणकृच्छ्रमिदंचनः ॥ प्राज्ञःशूरोबहूनांहिभवत्येकोनसंशयः ३ ॥ स्तंबमित्रउवाच ॥ ज्येष्ठस्तातोभवतिवैज्येष्ठोमुंचतिकृच्छ्रतः ॥ ज्येष्ठश्चेन्नप्रजानातिकनीयान्किंकरिष्यति ४ ॥ द्रोणउवाच ॥ हिरण्यरेतास्त्वरितोज्वलन्नायातिनःक्षयम् ॥ सप्तजिह्वाननःक्रूरोलेलिहानोविसर्पति ५ ॥ वैशंपायनउवाच ॥ एवंसंभाष्यतेऽन्योन्यंमंदपालस्यपुत्रकाः ॥ तुष्टुवुःप्रयताभूत्वायथाऽग्निंशृणुपार्थिव ६ ॥ जरितारिरुवाच ॥ आत्माऽसिवायोर्ज्वलनशरीरमसिवीरुधाम् ॥ योनिरापश्चतेशुक्रंयोनिस्त्वमसिचांभसः ७

मुखंभोगसाधनंयस्यसः लेलिहानोग्रसिष्यन्विसर्पतिव्याप्नोति अतःस्वमोक्षायस्वयमेवयतितव्यमितिभावः ५ । ६ एवमधिकारिणमुत्थाप्यअग्निस्तुतिव्याजेनतत्त्वमुपदिशति । अग्नेर्तब्राह्मत्वंवपेत्युपसंहारेऽग्निवाक्यात् । तत्रमुख्यब्रह्मविद्याधिकारार्थंसमष्ट्युपासनाजरितारिराहात्मासीतिद्वाभ्यां । वायोःसूत्रात्मनः 'वायुर्वैगौतमतत्सूत्रंवायुरेवव्यष्टिर्वायुःसमष्टिः'इतिश्रुतेः । आत्मास्वरूपमसि । शरीरमसिवीरुधामिति विराडात्मत्वमुक्तं । वीरुधांयोनिःपृथ्वीआपश्चतेतवशुक्रंबीजंत्वदुत्पन्नं । ' अग्नेरापःअद्भ्यःपृथिवी'इतिचश्रुतेः । आपस्तेशुक्रमित्यस्यव्याख्यायोनिस्त्वमसिचांभसइति । यद्वावायोरात्माअंतरिक्षंमरीचिशब्दितं । वीरुधांयोनिःपृथ्वीमरशब्दिता अत्पृथिव्याअधस्तात्तदापोयद्दिवउपरिष्टात्तदंभः तथाचलोकसृष्टिरुक्ताभवति । 'अदोंभःपरेणदिवंद्यौःप्रतिष्ठांतरिक्षंमरीचयःपृथिवीमरोयाअधस्तात्ताआपः' इत्यैतरेयेश्रुतालोकसृष्टिरुक्ताभवति । सइमान्लोकानसृजतांभोमरीचिर्मरमापइत्युपक्रम्यात्रलोकात्मत्वेनस्तुतिर्नलोककर्तृत्वेनेत्यतःसमष्ट्युपासनायामेवतात्पर्यम् ७

८ अत्रानधिकारीसारिणीसुकेमृकिणीमलगर्भीयस्यससारिसृकोबाल्यभोगासक्तोव्यष्टिरूपमेवाग्निंप्रार्थयतेमानेति प्रणष्टाअदर्शनंगता ९ शिवंशांतंलीकहितं हेतयीज्वालाःपूर्वोक्ताः १० गोपुरविरश्मिपु रविरपित्वमेवेत्यर्थः । परेणास्मान्अस्मत्तोदूरेप्रेहि परेणेत्येनवंतं ११ एवंव्यष्टयुपासनासिद्धस्यसार्वात्म्योपासनं सर्वंखल्विदंब्रह्मेत्यादिशास्त्रप्रसिद्धांशांडिल्यविद्यादिरूपांस्तंबमित्राख्यःसर्व प्राणिसमुदायसखाआह सर्वमित्यादिना त्वयीदंकनकेकुंडलादिवत् १२ बहुधाकार्यरूपेण एकधाकारणरूपेण १३ त्रीन्लोकानितिब्रह्मांडोपलक्षणं पचसिसंहरसि समिद्धस्तमोगुणेनप्रवृद्धः अ त्रहेतुंश्रौतंदर्शयति त्वंसर्वस्येति प्रसूतिरुत्पत्तिस्थानं प्रतिष्ठालयस्थानं एतेन'एषयोनिःसर्वस्यप्रभवाप्ययौहिभूतानां' इतिश्रुतेरर्थोदर्शितः १४ यत्तुनांतःप्रज्ञमित्यादिश्रुतिप्रसिद्धंतुरीयंनिर्विशेषं तदेतद्द्रोणोब्रह्मविदांवरइत्युपक्रमाद्ब्रह्मैतद्व्याहृतंत्वयेत्यग्निनाऽपिद्रोणस्यैवस्तुतत्वाच्चद्रोणवाक्यस्यविषयइतिज्ञायते ॥ अत्रचनांतःप्रज्ञादिवाक्यार्थोनचदृश्यतेऽतःकष्टमेतत् श्रुतिबलेनैवस्पष्टीकुर्मः त्वमन्नमिति हेजगत्पतेत्वमन्नं । 'अद्यतेऽत्तिचभूतानितस्मादन्नंतदुच्यते'इतिश्रुतेर्विराडसि । किमसौनित्यः नेत्याह प्राणिभिर्भुक्तमिति प्राणःसूत्रात्मासउपास्यत्वेनास्तियेषांतेप्राणिनःसूत्रो

ऊर्ध्वंचाधश्चसर्पंतिपृष्ठतःपार्श्वतस्तथा ॥ अर्चिषस्तेमहावीर्यरश्मयःसवितुर्यथा ८ ॥ ॥ सारिसृक्कउवाच ॥ माताप्रणष्टापितरंनविद्मःपक्षाजातानैवनोधूम केतो ॥ ननस्त्राताविद्यतेवैत्वदन्यस्तस्मादस्मांस्त्राहिबालांस्त्वमग्ने ९ यदग्नेतेशिवंरूपंयेचतेसप्तहेतयः ॥ तेननःपरिपाहित्वमार्तान्नःशरणैषिणः १० त्वमेवैकस्तपसेजातवेदोनान्यस्तप्ताविद्यतेगोपुदेव ॥ ऋषीनस्मान्बालकान्पालयस्वपरेणास्मान्प्रेहिवैहव्यवाह ११ ॥ ॥ स्तंबमित्रउवाच ॥ सर्व मग्नेत्वमेवैकस्त्वयिसर्वमिदंजगत् ॥ त्वंधारयसिभूतानिभुवनंत्वंबिभर्षिच १२ त्वमग्निर्हव्यवाहस्त्वंत्वमेवपरमंहविः ॥ मनीषिणस्त्वांजानंतिबहुधाचैकधा ऽपिच १३ सृष्ट्वालोकांस्त्रीनिमान्हव्यवाहकालेप्राप्तेपचसिपुनःसमिद्धः ॥ त्वंसर्वस्यभुवनस्यप्रसूतिस्त्वमेवाग्नेभवसिपुनःप्रतिष्ठा १४ ॥ ॥ द्रोणउवाच ॥ त्वमन्नंप्राणिभिर्भुक्तमंतर्भूतोजगत्पते ॥ नित्यप्रवृद्धःपचसित्वयिसर्वंप्रतिष्ठितम् १५ सूर्योभूत्वारश्मिभिर्जातवेदोभूमेरंभोभूमिजातान्रसांश्च ॥ विश्वानादायपुन रुत्सृज्यकालेदृष्ट्वावृष्ट्याभावयसीहशुक्र १६

पासकास्तैर्भुक्तमुपसंहृतं । एतेनस्थूलस्यसूक्ष्मेलयउक्तः । तथाअंतर्मध्येभूतानिसूत्रशरीरारंभकाण्यपंचीकृतवियदादीनियस्यसोंऽतर्भूतोऽसि । भूतलयस्थानमप्यासि । एतेनसूक्ष्मस्यकारणेवि लापनमुक्तं । अतएवजगतःस्थूलसूक्ष्मकार्यस्यपतेःसृष्टिसंहारयोःस्वतंत्रत्वंनित्यंप्रवृद्धोसि । कार्यकारणब्रह्मणोःसोपाधिकयोरुपाधितिरोभावाविर्भावानुसारिप्रवृद्धत्वं । निरुपाधिकस्यतुनि त्यमेवतत् । त्वयिशुद्धेप्रतिष्ठितंसर्वंकार्यकारणात्मकंरज्ज्वामिवोरगादिकर्मीभूतंत्वंपचसिसंहरसि । एवंचनांतःप्रज्ञंनबहिःप्रज्ञंनोभयतःप्रज्ञमित्यादिश्रुतेरर्थःस्थूलसूक्ष्मकारणरूपातीतंनिष्कलंशिवश ब्दाभिधेयंप्रतिपादितम् १५ सूर्यइति हेशुक्रशुक्लसर्वोपाधिकालुष्यहीनत्वंसूर्योभूत्वारसानादायपुनरुत्सृज्यकालेवृष्ट्याभावयसीतिसंबंधः । त्वंभूम्यादीनांरसान्सत्वानिआदायसंहृत्यसूर्यःकारणा त्मामूत्वाबीजमात्ररूपेणस्थित्वापुनःप्रबोधकालेवृष्ट्याचित्तसत्ताप्रदानेनपृथिव्यादीनिजनयसीत्यर्थः १६ ॥१९३॥

एतारसस्यब्रह्मसत्तायाआश्रयत्वेनदृश्यमानाःसत्तदितिप्रत्ययविषयभूतावीरुदाद्योजडपदार्थाअपित्वत्तएवोत्पन्नाइत्यर्थः तेनप्रधानादेःकारणत्वंनिरस्तं । सुभद्रश्चेत्यत्रसमुद्रश्चेतिपाठेमहोदधिश ब्देनमहांतिब्रह्मांडाद्बहिःस्थितान्युदकानिधीयंतेऽस्मिन्निति व्युत्पत्त्याऽनेकब्रह्मांडशुक्तिसंपुटाश्रयभूतोजलावरणरूपःसमुद्रोग्राह्यः तच्चावरणांतराणामप्युपलक्षणं १७ एवंपरापरब्रह्मरूपेणाग्निंस्तु त्वाउपस्थितभयनिवृत्तिंप्रार्थयते इदमिति हेतिग्मांशोतीक्ष्णकरवह्ने सद्मैवसद्मशरीरं । वरुणस्यरसनेंद्रियाधिपतेः परायणमत्यंतालंबनं पक्षिदेहेनहिसर्वरसास्वादोलभ्यते अतस्त्वंशिवोऽतरात्मा

त्वत्तएताःपुनःशुक्रवीरुधोहरितच्छदाः ॥ जायंतेपुष्करिण्यश्चसुभद्रश्चमहोदधिः १७ इदंवैसद्मतिग्मांशोवरुणस्यपरायणम् ॥ शिवस्त्राताभवास्माकंमाऽस्मान द्यविनाशय १८ पिंगाक्षलोहितग्रीवकृष्णवर्त्मन्हुताशन ॥ परेणप्रेहिमुंचास्मान्सागरस्यगृहानिव १९ ॥ वैशंपायनउवाच ॥ एवमुक्तोजातवेदाद्रोणेनब्रह्मवा दिना ॥ द्रोणमाहप्रतीतात्मामंदपालप्रतिज्ञया २० ॥ अग्निरुवाच ॥ ऋषिर्द्रोणस्त्वमसिवैब्रह्मैतद्व्याहृतंत्वया ॥ ईप्सितंतेकरिष्यामिनचतेविद्यतेभयम् २१ मं दपालेनवैयूयंममपूर्वंनिवेदिताः ॥ वर्जयेःपुत्रकान्मह्यंदहन्दावमितिस्मह २२ तस्यतद्वचनंद्रोणत्वयायच्चेहभाषितम् ॥ उभयंमेगरीयस्तुब्रूहिकिंकरवाणिते ॥ भृशंप्रीतोऽस्मिभद्रंतेब्रह्मंस्तोत्रेणसत्तम २३ ॥ द्रोणउवाच ॥ इमेमार्जारकाःशुक्रनित्यमुद्वेजयंतिनः ॥ एतान्कुरुष्वदंष्ट्रांस्त्वंहुताशनसबांधवान् २४ ॥ वैशं पायनउवाच ॥ तथातत्कृतवानग्निरभ्यनुज्ञायशार्ङ्गकान् ॥ ददाहखांडवंदावंसमिद्धोजनमेजय २५ ॥ ॥ इतिश्रीमहाभारतेआदिपर्वणिमयदर्शनपर्वणिशार्ङ्ग कोपाख्यानेद्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥ ॥ वैशंपायनउवाच ॥ मंदपालोऽपिकौरव्यचिंतयामासपुत्रकान् ॥ उक्त्वाऽपिचसतिग्मांशुंनै वशर्माधिगच्छति १ सतप्यमानःपुत्रार्थेलपितामिदमब्रवीत् ॥ कथंनुशक्ताःशरणेलपितेममपुत्रकाः २ वर्धमानेहुतवहेवातेचाशुप्रवायति ॥ असमर्थाविमोक्षाय भविष्यंतिममात्मजाः ३ कथंत्वशक्तात्राणायमातातेषांतपस्विनी ॥ भविष्यतिहिशोकार्तापुत्रत्राणमपश्यती ४ कथमुड्डीयनेऽशक्तान्पतनेचममात्मजान् ॥ सं तप्यमानाबहुधावाशमानाप्रधावती ५ जरितारिःकथंपुत्रःसारिसृक्कःकथंचमे ॥ स्तंबमित्रःकथंद्रोणःकथंसाचतपस्विनी ६ लालप्यमानंतमृषिंमंदपालंतथावने ॥ लपिताप्रत्युवाचेदंसासूयमिवभारत ७ नतेपुत्रेष्ववेक्षाऽस्तियानृषीनुक्तवानसि ॥ तेजस्विनोवीर्यवंतोनतेषांज्वलनाद्भयम् ८ त्वयाऽग्नौतेपरीताश्चस्वयंहिममस न्निधौ ॥ प्रतिश्रुतंतथाचेतिज्वलनेनमहात्मना ९ लोकपालोनतांवाचमुक्त्वामिथ्याकरिष्यति ॥ समक्षंबंधुकृत्येनतेनतेस्वस्थमानसम् १०, तामेवतुममामित्रां चिंतयन्परितप्यसे ॥ ध्रुवंमयिनतेस्नेहोयथातस्यांपुराऽभवत् ११

६५ अस्माकंत्राताभव १८ सागरस्यगृहान्नदीप्रवाहानिवाऽनभिभाव्यान्स्वाभिभावकांश्चज्ञात्वामुंच १९ प्रतीतात्माहृष्टः २० । २१ मह्यंमम २२ । २३ । २४ । २५ ॥ इतिआदिपर्वणि नीलकंठीये भारतभावदीपेद्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥ ॥ मंदपालइति उक्त्वाममपुत्रान्मादहेतिप्रार्थ्यापि १ शरणेगृहेकथंनुनकथमपि २ । ३ । ४ उड्डीयनेऊर्ध्वपतने पतनेतिर्यग्गमने वाशमानारुदती ५ । ६ । ७ । ८ परीताःज्ञापिताः ९ समक्षमिति हेस्वस्थतेतवमानसंतेनहेतुनाबंधुकृत्यलक्षणेरक्षणेसमक्षमभिमुखंनकिंतुतामेवेत्यादिस्पष्टार्थं १० । ११

नहीति पक्षवतासहायवता सुहृज्जनेननिःस्नेहेननितरांस्नेहवताशक्तेनचपीड्यमानआत्मापुत्रदाररूपःकथंचनउपद्रष्टुमुपेक्षितुंनहिन्याय्यं १२ अतस्त्वंजरितामेवगच्छेत्यधिक्षिप्याह गच्छेति १३ एवंकामवृत्तोनाहंचरेनचरामि १४ भूतंजरितायामपत्यं । भाव्यर्थेत्वयिजनयितव्येअपत्ये १५ । १६ जरितानामतःजरासंजाताअस्याःसाजरितासर्वेंद्रियव्याकुला १७ । १८ । १९ २०

नहिपक्षवतान्याय्यंनिःस्नेहेनसुहृज्जने ॥ पीड्यमानउपद्रष्टुंशक्तेनात्माकथंचन १२ गच्छत्वंजरितामेवयदर्थंपरितप्यसे ॥ चरिष्याम्यहमप्येकायथाकुपुरुषा
श्रिता १३ ॥ मंदपालउवाच ॥ नाहमेवंचरेलोकेयथात्वमभिमन्यसे ॥ अपत्यहेतोर्विचरेतच्चकृच्छ्रगतंमम १४ भूतंहित्वाचभाव्यर्थेयोऽवलंबेत्ससमंदधीः ॥
अवमन्येततंलोकोयथेच्छसितथाकुरु १५ एषहिप्रज्वलन्नग्निर्लेलिहानोमहीरुहान् ॥ आविग्नेहृदिसंतापंजनयत्यशिवंमम १६ ॥ वैशंपायनउवाच ॥ तस्मा
द्देशादतिक्रांतेज्वलनेजरितापुनः ॥ जगामपुत्रकानेवजरितापुत्रगृद्धिनी १७ सातान्कुशलिनःसर्वान्विमुक्तान्जातवेदसः ॥ रोरूयमाणान्ददृशेवनेपुत्रान्निरा
मयान् १८ अश्रूणिमुमुचेतेषांदर्शनात्सापुनःपुनः ॥ एकैकश्येनतान्सर्वान्क्रोशमानाऽन्वपद्यत १९ ततोभ्यगच्छत्सहसामंदपालोऽपिभारत ॥ अथतेसर्व
एवैनंनाभ्यनंदंस्तदासुताः २० लालप्यमानमेकैकंजरितांचपुनःपुनः ॥ नचैवोचुस्तदाकिंचित्तमृषिंसाध्वसाधुवा २१ ॥ मंदपालउवाच ॥ ज्येष्ठःसुत
स्तेकतमःकतमस्तस्यचानुजः ॥ मध्यमःकतमश्चैवकनियान्कतमश्चते २२ एवंब्रुवंतंदुःखार्तंकिंमांनप्रतिभाषसे ॥ कृतवानपिहित्यागंनैवशांतिमितोल
भे २३ ॥ जरितोवाच ॥ किंनुज्येष्ठेनतेकार्यंकिमनंतरजेनते ॥ किंत्वामध्यमजातेनकिंकनिष्ठेनवापुनः २४ यांत्वंमांसर्वतोहीनामुत्सृज्यासिगतःपुरा ॥
तामेवलपितांगच्छतरुणींचारुहासिनीम् २५ ॥ मंदपालउवाच ॥ नस्त्रीणांविद्यतेकिंचिदमुत्रपुरुषांतरात् ॥ सापत्नकमृतेलोकेनान्यदर्थविनाशनम् २६
वैराग्निदीपनंचैवभृशमुद्वेगकारिच ॥ सुव्रताचापिकल्याणीसर्वभूतेषुविश्रुता २७ ॥ अरुंधतीमहात्मानंवसिष्ठंपर्यशंकत ॥ विशुद्धभावमत्यंतंसदाप्रियहिते
रतम् २८ सप्तर्षिमध्यगंवीरमवमेनेचतंमुनिं ॥ अपध्यानेनसातेनधूमारुणसमप्रभा ॥ लक्ष्यालक्ष्यानाभिरूपानिमित्तमिवपश्यति २९ अपत्यहेतोःसंप्राप्तं
तथात्वमपिमामिह ॥ इष्टमेवंगतेहित्वंसातथैवाद्यवर्तते ३० नहिभार्येतिविश्वासःकार्यःपुंसाकथंचन ॥ नहिकार्यमनुध्यातिनारीपुत्रवतीसती ३१

२१ । २२ । २३ । २४ । २५ स्त्रीणाममुत्रपरलोकेपुरुषांतरादृतेसापत्नकंचमृतेऽन्यत्तृतीयमर्थनाशनंपुरुषार्थघातकंनास्ति २६ तदुभयंनिंदति वैराग्नीति एतच्चापरिहार्यंसतीनामपीत्याह सुव्रतेति २७ । २८ निमित्तंभर्तुर्लक्षणमिवपश्यतिकपटेन । अतएवनाभिरूपाप्रच्छन्नवेषा । तेनहेतुनालक्ष्याऽलक्ष्याच २९ इष्टमार्तं तथाऽरुंधतीवशंकमानात्वमिवसाऽपितथैवमयिअपत्यहेतोर्व्यर्थोकुले सतिसालप्तिताऽपितथैववर्तते ३० अतःस्त्रीणामाप्तोनास्तीत्याह नहीति कार्यंभर्तृशुश्रूषादि अनुध्यातिमनसिकरोति ३१ ॥१९४॥

३२ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥ ॥ ७ ॥ ॥ युष्माकमिति १ मातुर्धर्मज्ञतांचवःमातुर्वोयुष्मत्संबंधितयाधर्मज्ञ

॥ वैशंपायनउवाच ॥ ततस्तेसर्वएवैनंपुत्राःसम्यगुपासते ॥ सचतानात्मजान्सर्वानाश्वासयितुमुद्यतः ३२ ॥ इति श्रीमहाभारते आदिपर्वणि मयदर्शन
पर्वणि शार्ङ्गकोपाख्याने त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥ ॥ ॥ मंदपालउवाच ॥ युष्माकमपवर्गार्थंविज्ञप्तोज्वलनोमया ॥ अग्निनाच
तथेत्येवंप्रतिज्ञातंमहात्मना १ अग्नेर्वचनमाज्ञायमातुर्धर्मज्ञतांचवः ॥ भवतांचपरंवीर्यंपूर्वंनाहमिहागतः २ नसंतापोहिवःकार्यःपुत्रकाहृदिमांप्रति ॥ ऋषी
न्वेदहुताशोऽपिब्रह्मतद्विदितंचवः ३ ॥ वैशंपायनउवाच ॥ एवमाश्वासितान्पुत्रान्भार्यामादायसद्विजः ॥ मंदपालस्ततोदेशादन्यंदेशंजगामह ४ भगवा
नपितिग्मांशुःसमिद्धःखांडवंततः ॥ ददाहसहकृष्णाभ्यांजनयन्जगतोहितम् ५ वसामेदोवहाःकुल्यास्तत्रपीत्वाचपावकः ॥ जगामपरमांतृप्तिंदर्शयामासचार्जु
नम् ६ ततोंऽतरिक्षाद्भगवानवतीर्यपुरंदरः ॥ मरुद्गणैर्वृतःपार्थंकेशवंचेदमब्रवीत् ७ कृतंयुवाभ्यांकर्मेदममरैरपिदुष्करम् ॥ वरंवृणीतंतुष्टोऽस्मिदुर्लभंपुरुषेष्वि
ह ८ पार्थस्तुवरयामासशक्रादस्त्राणिसर्वशः ॥ प्रदातुंतच्चशक्रस्तुकालंचक्रेमहाद्युतिः ९ यदाप्रसन्नोभगवान्महादेवोभविष्यति ॥ तदातुभ्यंप्रदास्यामिपांडवा
स्त्राणिसर्वशः १० अहमेवचतंकालंवेत्स्यामिकुरुनंदन ॥ तपसामहताचापिदास्यामिभवतोऽप्यहम् ११ आग्नेयानिचसर्वाणिवायव्यानिचसर्वशः ॥ मदीयानि
चसर्वाणिग्रहीष्यसिधनंजय १२ वासुदेवोऽपिजग्राहप्रीतिंपार्थेनशाश्वतीम् ॥ ददौसुरपतिश्चैववरंकृष्णायधीमते १३ एवंदत्वावरंताभ्यांसहदेवैर्मरुत्पतिः ॥
हुताशनमनुज्ञाप्यजगामत्रिदिवंप्रभुः १४ पावकश्चतदादावंदग्ध्वासमृगपक्षिणम् ॥ अहानिपंचचैकंचविररामसुतर्पितः १५ जग्ध्वामांसानिपीत्वाचमेदांसि
रुधिराणिच ॥ युक्तःपरमयाप्रीत्यातावुवाचाच्युतार्जुनौ १६ युवाभ्यांपुरुषाग्र्याभ्यांतर्पितोऽस्मियथासुखम् ॥ अनुजानामिवांवीरौचरतंयत्रवांछितम् १७ एवं
तौसमनुज्ञातौपावकेनमहात्मना ॥ अर्जुनोवासुदेवश्चदानवश्चमयस्तथा १८ परिक्रम्यततःसर्वेत्रयोपिभरतर्षभ ॥ रमणीयेनदीकूलेसहिताःसमुपाविशन् १९
॥ इतिश्रीमहाभारतेशतसाहस्र्यांसंहितायांवैयासक्यांआदिपर्वणिमयदर्शनपर्वणिवरप्रदानेचतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥ समाप्तंमयदर्शनपर्वादि
पर्वच ॥ इतःपरंसभापर्वभविष्यतितस्यायमाद्यःश्लोकः ॥ वैशंपायनउवाच ॥ ततोब्रवीन्मयःपार्थंवासुदेवस्यसंनिधौ ॥ प्रांजलिःश्लक्ष्णयावाचापूजयित्वापुनःपुनः १

तांयुष्मदीयंपरंधर्मज्ञानंमातुरस्तीतिविज्ञायेत्यर्थः २ ब्रह्मतद्वेदांतप्रसिद्धं ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ चरतंयत्रवांछितमित्यनेनाप्रतिहतगतित्वंद्वयोरपिदत्तंमयेत्यर्थः १७ । १८ । १९ ॥ इति आदिपर्वणि नीलकंठीये भारतभावदीपे चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥ ॥ ७ ॥ ॥

अस्मिन्पर्वणि श्रीवेदव्यासेनसप्तविंशत्यधिकद्विशताध्यायाःप्रतिज्ञाताः तथापि लेखकप्रमादाच्चतुस्त्रिंशदधिकद्विशताध्यायाः श्लोकवैषम्यंचदृश्यते
तत्कुत्राधिक्यंजातंतन्नज्ञायतेएवमग्रिमपर्वस्वपिन्यूनाधिकविषयेज्ञेयम् ।




॥ श्रीगणेशायनमः ॥ बीजांकुरद्रुमसमेश्वरसूत्रविश्वान्मोक्षाय चिंतयत पूयमभेदबुध्या ॥ दास्याय बीजगतगर्भफलाममेकं गोपालमेव कलयाम जगन्निदानम् ॥ १ ॥ जीवे भुजिः स्व परसृष्टवपुर्युजेव यन्नेशता परधिया निजमायया वा ॥ सृष्टेरुपाधिभिरसंगचितावपीष्टा तस्मिन्ममास्तु रतिरात्मनि लक्ष्मणार्ये॥२॥प्रणम्य नारायणतीर्थवर्यान् धीरेशमिश्रांश्च हमीरपु र्यान् ॥ प्राचां गुरूणां हृदयानुरूपं कुर्मः सभापर्वणि भावदीपं ॥३॥तत्र पूर्वस्मिन्पर्वण्यंते शार्ङ्गकाः ज्ञानबलादेव वन्हिमुखाद्विमुक्ता इत्युक्तं तच्च ज्ञानं भगवद्भक्तिबलादेव लभ्यत इति प्रतिपादनायेदं सभापर्व आरभ्यते । तत्र भक्तायापि रुच्युत्पादनार्थं भक्तिबलेनैव पांडवानां दिव्यसभालाभाद्यैश्वर्यं द्वेषेणापि भगवद्ध्यानं भगवत्सायुज्यप्रापकमिति शिशुपालनि र्याणेन ध्यानमाहात्म्यं निरपराधिष्वपि पांडवेष्वभक्ताना दुर्योधनादीनां द्वेषोत्पत्त्याऽभक्तदोषाः द्यूते द्रौपदीत्राणेन भगवतो भक्तपक्षपातित्वं समर्थानामपि पांडवानां सापराधेष्वपि

॥ श्रीवेदव्यासायनमः ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् १ ॥ वैशंपायनउवाच ॥ ततोऽब्रवीन्मयःपार्थं वासुदेवस्यसन्निधौ ॥ प्रांजलिःश्लक्ष्णयावाचापूजयित्वापुनःपुनः २ ॥ मयउवाच ॥ अस्मात्कृष्णात्सुसंरब्धात्पावकाच्चदिधक्षतः ॥ त्वयात्रातोऽस्मिकौं तेयब्रूहिकिंकरवाणिते ३ ॥ अर्जुनउवाच ॥ कृतमेवत्वयासर्वंस्वस्तिगच्छमहासुर ॥ प्रीतिमान्भवमेनित्यंप्रीतिमंतोवयंचते ४ ॥ मयउवाच ॥ युक्तमे तत्त्वयिविभोयथाऽऽत्थपुरुषर्षभ ॥ प्रीतिपूर्वमहंकिंचित्कर्तुमिच्छामिभारत ५ अहंहिविश्वकर्मावैदानवानांमहाकविः ॥ सोऽहंवैत्वत्कृतेकर्तुंकिंचिदिच्छामि पांडव ६ ॥ अर्जुनउवाच ॥ प्राणकृच्छ्राद्विमुक्तंत्वमात्मानंमन्यसेमया ॥ एवंगतेनशक्ष्यामिकिंचित्कारयितुंत्वया ७ नचापितवसंकल्पंमोघमिच्छामिदानव ॥ कृष्णस्यक्रियतांकिंचित्तथाप्रतिकृतंमयि ८ चोदितोवासुदेवस्तुमयेनभरतर्षभ ॥ मुहूर्तमिवसंदध्यौकिमयंचोद्यतामिति ९ ततोविचिंत्यमनसालोकना थःप्रजापतिः ॥ चोदयामासतंकृष्णःसभाक्रियतामिति १० यदित्वंकर्तुकामोऽसिप्रियंशिल्पवतांवर ॥ धर्मराजस्ययदैतेययादृशीमिहमन्यसे ११ यांकृ तांनानुकुर्वंतिमानवाःप्रेक्ष्यविष्ठिताः ॥ मनुष्यलोकेसकलेतादृशींकुरुवैसभाम् १२ यत्रदिव्यानभिप्रायान्पश्येमविहितांस्त्वया ॥ आसुरान्मानुषांश्चैव सभांतांकुरुवैमय १३ ॥ वैशंपायनउवाच ॥ प्रतिगृह्यतुतद्वाक्यंसंप्रहृष्टोमयस्तदा ॥ विमानप्रतिमांचक्रेपांडवस्यशुभांसभाम् १४ ततःकृष्णश्चपा र्थश्चधर्मराजेयुधिष्ठिरे ॥ सर्वमेतत्समावेद्यदर्शयामासतुर्मयम् १५

दुर्योधनादिष्वप्रकोपेन भक्तानां तितिक्षा चेति भक्तगुणाश्च दर्शिताः । तत्रोपकर्त्रे प्रत्युपकारोऽवश्यं कर्तव्य इत्येतद्दर्शयितुं पांडवार्थे मयेन वन्हितो मोचितेनाऽभूतपूर्वा सभा कृतेति तावद्वर्ण्यते । ततोऽब्रवीन्मयः पार्थमित्यादिना २ खांडवदाहे कृष्णाच्चक्रेण जिघांसतः ३।४।५ विश्वं कर्म कृतिसाध्यं यस्य स विश्वकर्मा महाकविः शिल्पपंडितः ६ एवंगते प्रत्युपका रार्थे प्राप्ते त्वयि सति ७।८ संदध्यौ विचारितवान् ९।१० हे दैतेय हे दानव ११।१२ आसुरान्मानुषानित्युपलक्षणं देवगंधर्वादीनामप्यभिप्रायान् लेपचित्रे लेख्यचित्रे च चतुर्दशभुवनांतर स्थतत्तज्जातीयस्वाभाविकनानाविधलीलाप्रदर्शनेन मनोवृत्तीः पश्येम । यद्दर्शनेन ब्रह्मांडांतरवर्ति सर्वं वस्तुजातं दृष्टप्रायं भवतीत्यर्थः १३ विमानप्रतिमेति नाम विमानसदृशीं ता १४।१५

१६ पूर्वदेवो वृषपर्वा दानवस्तस्य चरितं बिंदुसरसि यज्ञकरणादि १७ आश्वस्य स्वस्थचित्तो भूत्वा प्रचक्रमे आरब्धवान् १८। १९। २० किष्कुर्हस्तः। सर्वतश्चतुर्दिक्षु २१॥ इति सभापर्वणिनैलकंठीये भारतभावदीपे प्रथमोऽध्यायः॥ १॥ ॥ उषित्वेति १। २। ३। ४ अर्थ्यं अर्थादनपेतं तथ्यं सत्यं। लघु स्वल्पाक्षरं। युक्तं युक्तिमत्। अत एवानुत्तरं पूर्वपक्षवदप्रत्याख्येयं। तथ्यं पथ्यं हितं वाक्यं गुरु स्वल्पाक्षरं मृदु। इति पाठे पथ्यं सन्मार्गादनपेतं गुरु बह्वर्थं ५ स्वजनगामीनि मात्रादिषु स्वबांधवेषु कुशलसंदेशरूपाणि ६ भामिनीं दीप्तिमतीं भाविनीमिति पाठे सद्भावयुक्तां ७ववंदे चे ति। पुरुषसत्तमः पुरुषेष्वन्नमयप्राणमयमनोमयविज्ञानमयानंदमयेषु पंचस्वाद्यो व्यवहारतः सत्यः उत्तरोत्तरेषां तु पूर्वपूर्वाधिष्ठानत्वात्तत्तदपेक्षया सत्यतरत्वं पुच्छं ब्रह्म तु षष्ठं तेषामधिष्ठानभूतं मोक्षेऽप्यबाध्यत्वात्सत्तमः। ननु कथं सत्तमे 'अस्थूलमनणु निष्कलं निष्क्रियं शांतं' इत्यादिश्रुतेः

तस्मैयुधिष्ठिरःपूजांयथार्हमकरोत्तदा॥ सतुतांप्रतिजग्राहमयःसत्कृत्यभारत १६ सपूर्वदेवचरितंतदातत्रविशांपते ॥ कथयामासदैतेयःपांडुपुत्रेषुभारत
१७ सकालंकंचिदाश्वस्यविश्वकर्माविचिंत्यतु॥ सभांप्रचक्रमेकर्तुंपांडवानांमहात्मनाम् १८ अभिप्रायेणपार्थानांकृष्णस्यचमहात्मनः ॥ पुण्येऽह्निम
हातेजाःकृतकौतुकमंगलः १९ तर्पयित्वाद्विजश्रेष्ठान्पायसेनसहस्रशः ॥ धनंबहुविधंदत्वातेभ्यएवचवीर्यवान् २० सर्वर्तुगुणसंपन्नांदिव्यरूपांमनोरमा
म्॥ दशकिष्कुसहस्रांतांमापयामाससर्वतः २१॥ ॥ इतिश्रीमहाभारतेसभापर्वणिसभाक्रियापर्वणिसभास्थाननिर्णयेप्रथमोऽध्यायः॥ १॥ ॥ वैशं
पायनउवाच॥ उषित्वाखांडवप्रस्थेसुखवासंजनार्दनः॥ पार्थैःप्रीतिसमायुक्तैःपूजनार्होऽभिपूजितः १ गमनायमतिंचक्रेपितुर्दर्शनलालसः॥ धर्मराज
मथामंत्र्यपृथांचपृथुलोचनः २ ववंदेचरणौमूर्ध्नाजगद्वंद्यःपितृष्वसुः ॥ सतयामूर्ध्न्युपाघ्रातःपरिष्वक्तश्चकेशवः ३ ददर्शानंतरंकृष्णोभगिनींस्वांमहाय
शाः॥ तामुपेत्यहृषीकेशःप्रीत्याबाष्पसमन्वितः ४ अर्थ्यंतथ्यंहितंवाक्यंलघुयुक्तमनुत्तरम्॥ उवाचभगवान्भद्रांसुभद्रांभद्रभाषिणीम् ५ तयास्वजनगा
मीनिश्रावितोवचनानिसः॥ संपूजितश्चाप्यसकृत्शिरसाचाभिवादितः ६ तामनुज्ञाप्यवार्ष्णेयःप्रतिनंद्यचभामिनीम्॥ ददर्शानंतरंकृष्णांधौम्यंचापिज
नार्दनः ७ ववंदेचयथान्यायंधौम्यंपुरुषसत्तमः॥ द्रौपदींसांत्वयित्वाचआमंत्र्यचजनार्दनः ८

सर्वविशेषशून्ये नामरूपवंदनादिक्रियायोगो घटेतेति चेत् अत्रब्रूमः 'कौलिके प्रतिमाद्वारा चैत्रे भोग इवेशता। असंगे भूम्नि जीवौघकल्पितोपाधियोगतः'। अनादौ संसारे जीवेश्वरविभागस्याप्यनादित्वाद्रज्ज्वां भुजंग इव जीवौघस्याविद्यया शुद्धेऽपिचिदात्मनि ईशसूत्रादिकं कल्पितमिदमेव ब्रह्मणः शरीरमिति। यथा कौलिकः प्रतिमां कृत्वेदमेव चैत्रस्य शरीरमिति भावयति तद्वत्। यथा च प्रतिमाद्वारा चैत्रस्य भोगो भवत्येवं शुद्धायामपि चिति जीवौघकल्पितोपाधिद्वारा ईशनादिकं भवति। एतावांस्तु विशेषः जीवस्य स्वाविद्याकल्पितं शरीरांतरमस्तीति प्रतिमानिमित्तकोऽपि भोगः स्वदेहावच्छेदेनैवजायते न प्रतिमावच्छेदेन। चितेस्तु तदभावाद्विभुत्वाच्च परकल्पितोपाध्यवच्छेदेनैव नियंतृत्वादिकं भवति। तच्चाकर्मजत्वाच्चितौ न संसृज्यते यथा जीवे भोगः यथा वा कल्पितसर्पगतं भीषणत्वं रज्ज्वां। एवं च व्यवहारतः संसारस्याद्यंतशून्यत्वात्तत्कारणीभूतस्येशादेरपि तथात्वं-



वक्तव्यं किमुत ईशादिकारणीभूतायाः कृष्णमूर्तेः। तथा हि बीजांकुरतरूपमेष्वीशसूत्रविराट्सु अनंतबीजगर्भफलोपमः श्रीकृष्णोऽनंतकोटिब्रह्माण्डनायक इति प्रसिद्धं अयमेव श्रीमच्छंकरभगवत्पादैर्वेदांतसारे वनवृक्षदृष्टांतेन समष्टिव्यष्टिरूपेण स्थूलसूक्ष्मकारणानि प्रतिपाद्य समष्टि वनदृष्टांतेन प्रतिपादितः। 'शास्त्रेऽप्यंतस्तद्धर्मोपदेशात्' इत्यत्र 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्राणनखात् सर्व एव सुवर्णस्तस्य यथाकप्यासं पुंडरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति नामरूपवंतमादित्यमंडलांतर्वर्तिनं नारायणमुदाहृत्य तस्य ऋक् च साम च गेष्णाविति नाराणस्य कृत्स्नप्रपंचात्मके ऋक्सामे अंगुलिपर्वणी इत्युक्तं। ततोऽनंतकोटिब्रह्मांडाश्रयत्वं सूर्याकृतेर्ब्रह्मणो युज्यते। अयमेव नंदनंदनो महामायावी सुप्तिप्रलयकैवल्येषु कर्मोपरमेसति जगदिंद्रजालं स्वमूर्त्यासह तिरोधायापास्तसमस्तविशेषं

भ्रातॄनभ्यगमद्विद्वान्पार्थेनसहितोबली ॥ भ्रातृभिःपंचभिःकृष्णोवृतःशक्रइवामरैः ९ यात्राकालस्ययोग्यानिकर्माणिगरुडध्वजः॥ कर्तुकामःशुचिर्भूत्वा
स्नातवान्समलंकृतः १० अर्चयामासदेवांश्चद्विजांश्चयदुपुंगवः॥ माल्यजाप्यनमस्कारैर्गंधैरुच्चावचैरपि ११ सकृत्वासर्वकार्याणिप्रतस्थेतस्थुषांवरः॥
उपेत्यसयदुश्रेष्ठोबाह्यकक्षाद्विनिर्गतः १२ स्वस्तिवाच्यार्हतोविप्रान्दधिपात्रफलाक्षतैः॥ वसुप्रदायचततःप्रदक्षिणमथाकरोत् १३ कांचनंरथमास्थायता
र्क्ष्यकेतनमाशुगम्॥ गदाचक्रासिशार्ङ्गाद्यैरायुधैरावृतंशुभम् १४ तिथावप्यथनक्षत्रेमुहूर्तेचगुणान्विते॥ प्रययौपुंडरीकाक्षःशैब्यसुग्रीववाहनः १५ अन्वा
रुरोहचाप्येनंप्रेम्णाराजायुधिष्ठिरः॥ अपास्यचास्ययंतारंदारुकंयंतृसत्तमम् १६ अभीषून्संप्रजग्राहस्वयंकुरुपतिस्तदा ॥ उपारुह्यार्जुनश्चापिचामर
व्यजनंसितम् १७ रुक्मदंडंबृहद्वाहुर्विदुधावप्रदक्षिणम्॥ तथैवभीमसेनोऽपियमाभ्यांसहितोबली १८ पृष्ठतोऽनुययौकृष्णमृत्विक्पौरजनैःसह॥ सत
थाभ्रातृभिःसर्वैःकेशवःपरवीरहा १९ अन्वीयमानःशुशुभेशिष्यैरिवगुरुःप्रियैः॥ पार्थमामंत्र्यगोविंदःपरिष्वज्यसुपीडितम् २० युधिष्ठिरंपूजयित्वाभीम
सेनंयमौतथा॥ परिष्वक्तोभृशंताभ्यांयमाभ्यामभिवादितः २१ योजनार्धमथोगत्वाकृष्णःपरपुरंजयः॥ युधिष्ठिरंसमामंत्र्यनिवर्तस्वेतिभारत २२ त
तोऽभिवाद्यगोविंदःपादौजग्राहधर्मवित्॥ उत्थाप्यधर्मराजस्तुमूर्ध्न्युपाघ्रायकेशवम् २३ पांडवोयादवश्रेष्ठंकृष्णंकमललोचनम्॥ गम्यतामित्यनुज्ञाप्य
धर्मराजोयुधिष्ठिरः २४

ब्रह्मात्मानं प्रापयति कर्मशेषसत्वेपुनरुद्भावयति च। ततश्चास्य स्वाविद्याभावादसंगत्वं पराविद्याकल्पितोपाधिसंबंधात्प्रतिमाया भोजकत्ववन्नियंतृत्वमविद्यायाश्चाद्यंतशून्यत्वात् न्नित्यत्वं चेतिसिद्धं। ततश्चासंगत्वाद्युक्तमस्य पुरुषसत्तमत्वं जनगमयितृत्वरूपजनार्दनत्वेन नियंतृत्वं नियंतृत्वादेवच 'उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्' इति वक्ष्यमाणरीत्या जनशिक्षार्थं धौम्यवंदनेन वैदिकमर्यादापरिपालकत्वं द्रौपदीसांत्वनेन च सुहृदनुग्राहकत्वं चेत्यादि सर्वं समंजसं। अयमेवार्थो मंगलश्लोकाभ्यामस्माभिः संगृहीतो न विस्मर्तव्यः ८ भ्रातॄन् पितृष्वसुः पुत्रान् ९। १०। ११ तस्थुषां स्थितिमतां वरः सनातन इत्यर्थः १२। १३। १४। १५। १६ अभीषून् रथाश्वरश्मीन् १७। १८। १९ सुपीडितं गाढं यथा भवति तथा परिष्वज्य २०। २१। २२। २३। २४

संविदं पुनरेष्यामीति निश्चयं कृत्वा २५ लोचनैरिति सर्वेंद्रियाग्राह्यमपि परमात्मानं प्रथमं प्रतिमादिषु संचिंत्य । मनोभिरिति पश्चात्प्रतिमां त्यक्त्वा मनसैव चिंतयेदित्युक्तं २६ २७ मनसो लये शौरिर्मानसमूर्तिरूपोंऽतर्दधे । अत एव ते अकामा निर्विकल्पसमाधिस्थाः । 'यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म सम श्नुते' इति श्रुतेः । यतो गोविंदे निर्विकल्पे ब्रह्मणि गतं लीनं मानसं येषां ते तथाभूताः २८ निवृत्त्येति समाधिसुखानुभवानंतरं व्युत्थानं ध्वनितं २९ स गत्वेति पाठे गत्वा शीघ्र गमनशीलः । गमेरन्येभ्योऽपि दृश्यत इति क्वनिप् । अनुदात्तोपदेशेत्यनुनासिकलोपे ह्रस्वस्येति तुगागमः ३० । ३१ । ३२ । ३३ । ३४ । ३५ कल्पयामास एवमेवं करिष्यामीति

ततस्तैःसंविदंकृत्वायथावन्मधुसूदनः ॥ निवर्त्यचतथाकृच्छ्रात्पांडवान्सपदानुगान् २५ स्वांपुरींप्रययौहृष्टोयथाशक्रोऽमरावतीम् ॥ लोचनैरनुजग्मुस्ते तमादृष्टिपथात्तदा २६ मनोभिरनुजग्मुस्तेकृष्णंप्रीतिसमन्वयात् ॥ अतृप्तमनसामेवतेषांकेशवदर्शने २७ क्षिप्रमंतर्दधेशौरिश्चक्षुषांप्रियदर्शनः ॥ अका माएवपार्थास्तेगोविंदगतमानसाः २८ निवृत्त्योपययुस्तूर्णंस्वंपुरंपुरुषर्षभाः ॥ स्यंदनेनाथकृष्णोऽपित्वरितंद्वारकामगात् २९ सात्वतेनचवीरेणपृष्ठतोया यिनातदा ॥ दारुकेणचसूतेनसहितोदेवकीसुतः ॥ सगतोद्वारकांविष्णुर्गरुत्मानिववेगवान् ३० ॥ वैशंपायनउवाच ॥ निवृत्यधर्मराजस्तुसहभ्रातृभि रच्युतः ॥ सुहृत्परिवृतोराजाप्रविवेशपुरोत्तमम् ३१ विसृज्यसुहृदःसर्वान्भ्रातॄन्पुत्रांश्चधर्मराट् ॥ मुमोदपुरुषव्याघ्रोद्रौपद्यासहितोनृप ३२ केशवोऽपि मुदायुक्तःप्रविवेशपुरोत्तमम् ॥ पूज्यमानोयदुश्रेष्ठैरुग्रसेनमुखैस्तथा ३३ आहुकंपितरंवृद्धंमातरंचयशस्विनीम् ॥ अभिवाद्यबलंचैवस्थितःकमललोचनः ३४ प्रद्युम्नसांबनिशठांश्चारुदेष्णंगदंतथा ॥ अनिरुद्धंचभानुंचपरिष्वज्यजनार्दनः ३५ सवृद्धैरभ्यनुज्ञातोरुक्मिण्याभवनंययौ ॥ मयोऽपिसमहाभागः सर्वरत्नविभूषिताम् ॥ विधिवत्कल्पयामाससभांधर्मसुतायवै ३६ ॥ इतिश्रीमहाभारतेसभापर्वणिसभाक्रियापर्वणिभगवद्यानेद्वितीयोऽध्यायः ॥ २ ॥
॥ वैशंपायनउवाच ॥ अथाब्रवीन्मयःपार्थमर्जुनंजयतांवरम् ॥ आपृच्छेत्वांगमिष्यामिपुनरेष्यामिचाप्यहम् १ उत्तरेणतुकैलासंमैनाकंपर्वतंप्रति ॥ यियक्षमाणेषुपुरादानवेषुमयाकृतम् २ चित्रंमणिमयंभांडंरम्यंबिंदुसरःप्रति ॥ सभायांसत्यसंधस्ययदासीद्वृषपर्वणः ३ आगमिष्यामितद्गृह्य दितिष्ठतिभारत ॥ ततःसभांकरिष्यामिपांडवस्ययशस्विनीम् ४ मनःप्रल्हादिनींचित्रांसर्वरत्नविभूषिताम् ॥ अस्तिबिंदुसरस्युग्रागदाचकुरुनंदन ५ निहिताभावयाम्येवंराज्ञाहत्वारणेरिपून् ॥ सुवर्णबिंदुभिश्चित्रागुर्वीभारसहादृढा ६

मनसिविचारयामासेत्यर्थः ॥ ३६ ॥ ॥ इति सभा० नैलकंठीये भारतभा० द्वितीयोऽध्यायः ॥ २ ॥ ॥श्री॥ अथेति । १ । २ भांडमिव भांडं मूलधनं विचित्ररंगोपादानद्रव्यं कृतं हिंगुलादिवन्निर्मितं मणिमयं मणिप्रचुरं । येन कृत्रिममयूरादीनां चंद्रकलोचनादीनि क्रियंते ३ । ४ । ५ राज्ञा वृषपर्वणा निहिता सेदानीमप्यस्तीति भावयामीति योज्यं । ततोऽर्वाग्भीमसेनं विना तदुद्यमनयोग्यस्य पुंसोऽजातत्वादिति भावः । भारसहा गदांतरेण सन्निपाते सत्यविचाल्या यतो दृढा ६ ॥ २ ॥

सा वै शतसहस्रस्य लक्षस्य गदालक्षेण तुल्येत्यर्थः । स्वर्णभारसहस्रस्येति पाठे तु 'तुलां पलशतं प्राहुर्भारः स्याद्विंशतिस्तुला' इति शास्त्रोक्तमानेन गुर्वीत्यर्थः ७।८ प्रागुदीचीमैशा नीं उत्तरेणोत्तरतः ९ हिरण्यशृंगो मैनाकावयवभूतो गिरिः १० ईश्वरेण प्रजापतिना ११।१२ दृष्टांततः शास्त्रसिद्धांततः १३ भूतपतिर्महादेवः सृष्ट्वा सृष्टिकर्त्ता । अत्रापि गत्वेतिवत् क्वनिप् १४।१५ शिष्टसंप्रतिपत्तये इति पाठेऽपि शिष्टान् धर्मानुष्ठाने प्रवर्त्तयितुमित्यर्थः १६।१७ स्फाटिकं स्फटिक इत्युपलक्षणं नानारत्नमयं सितसारंगपिशंगादिवर्णानां महामणी नां चूर्णानि यथापेक्षितं मिश्राणि शुकपारावतमयूरजपादाडिमजंबूफलवर्णाद्यवांतरमिश्ररंगरचनार्थं वृषपर्वयागे सभार्थं संपादितं तत्रोपयुक्तावशिष्टमानीतवानित्यर्थः १८ किंकरैः

सविंशतसहस्रस्यसंमिताशत्रुघातिनी ॥ अनुरूपाचभीमस्यगांडीवंभवतोयथा ७ वारुणश्चमहाशंखोदेवदत्तःसुघोषवान् ॥ सर्वमेतत्प्रदास्यामिभवतेना त्रसंशयः ८ इत्युक्त्वासोऽसुरःपार्थंप्रागुदीचींदिशंगतः ॥ अथोत्तरेणकैलासान्मैनाकंपर्वतंप्रति ९ हिरण्यशृंगःसुमहान्महामणिमयोगिरिः ॥ रम्यंबिंदुस रोनामयत्रराजाभगीरथः १० दृष्ट्वाभागीरथींगंगामुवासबहुलाःसमाः ॥ यत्रेष्टंसर्वभूतानामीश्वरेणमहात्मना ११ आहृताःक्रतवोमुख्याःशतंभरतसत्तम ॥ यत्रयूपामणिमयाश्चैत्याश्चापिहिरण्मयाः १२ शोभार्थंविहितास्तत्रनतुदृष्टांततःकृताः ॥ यत्रेष्ट्वासगतःसिद्धिंसहस्राक्षःशचीपतिः १३ यत्रभूतपतिःसृ ष्ट्वासर्वांल्लोकान्सनातनः ॥ उपास्यतेतिग्मतेजाःस्थितोभूतैःसहस्रशः १४ नरनारायणौब्रह्मायमःस्थाणुश्चपंचमः ॥ उपासतेयत्रसत्रंसहस्रयुगपर्यये १५ यत्रेष्टंवासुदेवेनसत्रैर्वर्षगणान्बहून् ॥ श्रद्दधानेनसततंधर्मसंप्रतिपत्तये १६ सुवर्णमालिनोयूपाश्चैत्याश्चाप्यतिभास्वराः ॥ ददौयत्रसहस्राणिप्रयुतानि चकेशवः १७ तत्रगत्वासजग्राहगदांशंखंचभारत ॥ स्फाटिकंचसभाद्रव्यंयदासीद्वृषपर्वणः १८ किंकरैःसहरक्षोभिर्यदरक्षन्महद्धनम् ॥ तदगृह्णान्मयस्त त्रगत्वासर्वंमहासुरः १९ तदाहृत्यचतांचक्रेसोऽसुरोऽप्रतिमांसभाम् ॥ विश्रुतांत्रिषुलोकेषुदिव्यांमणिमयींशुभाम् २० गदांचभीमसेनायप्रवरांप्रददौतदा ॥ देवदत्तंचार्जुनायशंखप्रवरमुत्तमम् २१ यस्यशंखस्यनादेनभूतानिप्रचकंपिरे ॥ सभाचसामहाराजशातकुंभमयद्रुमा २२ दशकिष्कुसहस्राणिसमंता दायताऽभवत् ॥ यथावह्नेर्यथार्कस्यसोमस्यचयथासभा २३ भ्राजमानातथाऽत्यर्थंदधारपरमंवपुः ॥ अभिघ्नतीवप्रभयाप्रभामार्कस्यभास्वराम् २४ प्रबभौ ज्वलमानेवदिव्यादिव्येनवर्चसा ॥ नवमेघप्रतीकाशादिवमावृत्यविष्ठिता ॥ आयताविपुलारम्याविपाप्माविगतक्लमा २५ उत्तमद्रव्यसंपन्नारत्नप्राकार तोरणा ॥ बहुचित्राबहुधनासुकृताविश्वकर्मणा २६ नदाशार्हीसुधर्मावाब्रह्मणोवाऽथतादृशी ॥ सभारूपेणसंपन्नायांचक्रेमतिमान्मयः २७

रक्षसां जातिविशेषैः १९ । २० । २१ । २२ । २३ । २४ दिव्या दिव्येन वर्चसा अलौकिकेन च तेजसा नवमेघप्रतीकाशा नवमिर्मेघैरिव मेघैश्चित्तस्त्रेत्रे चमत्कारामृतवर्षिभिः शृंगारादिभीरसैस्तत्तच्चित्रेष्वभिनीय प्रदर्शितैः शोभमाना दिवमावृत्य व्याप्याभिभूयेति यावत् । विष्ठिता विशेषेण स्थिता । विपाप्मा पापघ्नी दिव्यतेजःसंपन्नत्वात् । विगतक्लमा श्रमच्छेदिनी । व्यूढास्त्वत्र विचित्रमणिवेदिकेति पाठं कल्पयंति २५ प्राकारः परिधिभित्तिः तोरणानि बहिर्द्वाराणि । प्राकारमालिनीत्यपि पाठः २६ दश अहिंसादीन् यम नियमानर्हंति वे दशार्हा भगवद्भक्ता बलिबाणप्रभृतयस्तेषामियं दाशार्ही । सात्वतीति पाठे सात्परमात्मा सोऽस्त्येषां ते सात्वंतस्तेषामियं सात्वतीति स एवार्थः २७

वहंतीति सभाया जंगमत्वमुक्तं अत एव विमानप्रतिमेति नाम तस्या युक्तं २८ २९ नलिनीं कमलवतीं सरसीं । वैदुर्यैरिंद्रनलिमणिमयैः पत्रैर्व्याप्तां मणिनालमयांबुजां मणिमयनालां कनकांबुजां च 'मयः शिल्पिनि दैत्यानां करभेऽश्वतरेपि च'इति विश्वः 'करभःकलभो वाऽष्टापदे'इति च विश्वः। मणिनालोज्वलांबुजामिति पाठे तु मणिमयानि नालेषु विकस्वराण्यंबुजानि यस्यां सा तथा । मणिमयनालेषु स्वच्छांबुजां वा ३० पद्मसौगंधिकवतीं पद्माकारैः सौगंधिकैः पद्मरागैर्युक्तां । पद्मरागमयपद्मामित्यर्थः । 'सौगंधिकं तु कल्हारेपद्मरागेच'इति मेदिनी । हैमसौगंधिकवतीमिति पाठे स्पष्टार्थः । पुष्पितैर्विकसितैः । निष्पंकेति विद्यमानमपि सलिलमतिस्वच्छत्वादाश्रयरूपेणेव प्रकाशते न स्वरूपेण स्फटिकजपाकुसुमवत् । अनेन तत्र स्थलभ्रमकारणमुक्तं ३१ मंदानिलेन समुद्धूतां समुच्छलितबिंदुं । अत एव सर्वतः प्रसृतनलिनीपत्रेषु मुक्तातुल्यैर्जलबिंदुभिराचितां व्याप्तां । महामणिमयाः

तांस्मतत्रमयेनोक्तारक्षंतिचवहंतिच ॥ सभामष्टौसहस्राणिकिंकरानामराक्षसाः २८ अंतरिक्षचराघोरामहाकायामहाबलाः ॥ रक्ताक्षाःपिंगलाक्षाश्चशुक्तिकर्णाःप्रहारिणः २९ तस्यांसभायांनलिनींचकाराप्रतिमांमयः ॥ वैदूर्यपत्रविततांमणिनालमयांबुजाम् ३० पद्मसौगंधिकवतींनानाद्विजगणायुताम् ॥ पुष्पितैःपंकजैश्चित्रांकूर्मैर्मत्स्यैश्चकांचनैः ॥ चित्रस्फटिकसोपानांनिष्पंकसलिलांशुभाम् ३१ मंदानिलसमुद्भूतांमुक्ताबिंदुभिराचिताम् ॥ महामणिशिलापट्टबद्धपर्यंतवेदिकाम् ३२ मणिरत्नाचितांतांतुकेचिदभ्येत्यपार्थिवाः ॥ दृष्ट्वाऽपिनाभ्यजानंततेऽज्ञानात्प्रपतंत्युत ३३ तांसभामभितोनित्यंपुष्पवंतोमहाद्रुमाः ॥ आसन्नानाविधालीलाःशीतच्छायामनोरमाः ३४ काननानिसुगंधीनिपुष्करिण्यश्चसर्वशः ॥ हंसकारंडवोपेताश्चक्रवाकोपशोभिताः ३५ जलजानांचपद्मानांस्थलजानांचसर्वशः ॥ मारुतोगंधमादायपाण्डवानस्मनिषेवते ३६ ईदृशींतांसभांकृत्वामासैःपरिचतुर्दशैः ॥ निष्ठितांधर्मराजायमयोराजन्यवेदयत् ३७ ॥ इतिश्रीमहाभारतेसभापर्वणिसभाक्रियापर्वणिसभानिर्माणेतृतीयोऽध्यायः ॥ ३ ॥ ॥ वैशंपायनउवाच ॥ ततःप्रवेशनंतस्यांचक्रेराजायुधिष्ठिरः ॥ अयुतंभोजयित्वातुब्राह्मणानांनराधिपः १ साज्येनपायसेनैवमधुनामिश्रितेनच ॥ भक्ष्यैर्मूलैःफलैश्चैवमांसैर्वाराहहारिणैः ॥ कृसरेणाथजीवंत्याहविष्येणचसर्वशः २ मांसप्रकारैर्विविधैःखाद्यैश्चापितथानृप ॥ चोष्यैश्चविविधैराजन्पेयैश्चबहुविस्तरैः ३

शिलापट्टा दीर्घचतुरस्रपाषाणास्तैर्बद्धाः पर्यंते समीपे चतुर्दिक्षु वेदिकाः यस्यास्तां ३२ मणिरत्नचितां तां नलिनीं त्वभ्येत्याधिगत्य ज्ञात्वा । अयं भावः अदृष्टपूर्वैरतिभास्वरैः पत्रनालपुष्पैराच्छन्नत्वात्सलिलस्य काचमय्यां वैदूर्यमणिमय्यां वा भुवि कृत्रिमाण्येव कमलादीनीति भ्रमान्मणिरत्नचिता भूमिरेवेयमिति तां नलिनीं ज्ञात्वा स्थलभ्रमाज्जले पतंतीति ३३ तां सभामभित इति कर्मप्रवचनीययोगात् द्वितीया तस्याः सभायाः समंतत इत्यर्थः ३४ पुष्करिण्यस्तटाकाः ३५ । ३६ परिचतुर्दशैश्चतुर्दशाधिकैः ॥ ३७ ॥ ॥ इति सभापर्वणि नैलकंठीये भारतभावदीपे तृतीयोऽध्यायः ॥ ३ ॥ तत इति १ कृसरेण तिलमिश्रौदनेन । 'ओदनस्तिलमिश्रस्तु कृसरः परिकीर्तितः । तिलकल्कान्विनिक्षिप्य श्रितो वा कृसरो भवेत्' इति सूद्यविदः । जीवंत्या पाकविशेषेण ओदनस्यैव यवनभाषया बिरिंजि इत्युच्यते । शाकविशेषेणेत्यन्ये २ । ३ ॥ ३ ॥

अहतैःअनुपभुक्तैः ४ । ५ दैवतानि द्वारादिषु स्थानेषु पितामहादीनि । 'द्वारे पितामहं विंद्यात्' इति ग्रह्यात् ६ मल्लाः बाहुयोधिनः झल्ला लकुटयोधिनः ७ । ८ । ९ । १०

अहतैश्चैववासोभिर्माल्यैरुच्चावचैरपि ॥ तर्पयामासविप्रेंद्रान्नानादिग्भ्यःसमागतान् ४ ददौतेभ्यःसहस्राणिगवांप्रत्येकशःपुनः ॥ पुण्याहघोषस्तत्रासीद्दिवस्पृगिवभारत ५ वादित्रैर्विविधैर्दिव्यैर्गंधैरुच्चावचैरपि ॥ पूजयित्वाकुरुश्रेष्ठोदैवतानिनिवेश्यच ६ तत्रमल्लानटाझल्लाःसूतावैतालिकास्तथा ॥ उपतस्थुर्महात्मानंधर्मपुत्रंयुधिष्ठिरम् ७ तथासकृत्वापूजांतांभ्रातृभिःसहपांडवः ॥ तस्यांसभायांरम्यायांरेमेशक्रोयथादिवि ८ सभायामृषयस्तस्यांपांडवैःसहआसते ॥ आसांचक्रुर्नरेंद्राश्चनानादेशसमागताः ९ असितोदेवलःसत्यःसर्पिर्मालीमहाशिराः ॥ अर्वावसुःसुमित्रश्चमैत्रेयःशुनकोबलिः १० बकोदाल्भ्यःस्थूलशिराःकृष्णद्वैपायनःशुकः ॥ सुमंतुर्जैमिनिःपैलोव्यासशिष्यास्तथावयम् ११ तित्तिरिर्याज्ञवल्क्यश्चससुतोलोमहर्षणः ॥ अप्सुहोम्यश्चधौम्यश्चअणीमांडव्यकौशिकौ १२ दामोष्णीषस्त्रैबलिश्चपर्णादोघटजानुकः ॥ मौंजायनोवायुभक्षःपाराशर्यश्चसारिकः १३ बलिवाकःसिनीवाकःसत्यपालःकृतश्रमः ॥ जातूकर्णःशिखावांश्चआलंबःपारिजातकः १४ पर्वतश्चमहाभागोमार्कंडेयोमहामुनिः ॥ पवित्रपाणिःसावर्णोभालुकिर्गालवस्तथा १५ जंघाबंधुश्चरैभ्यश्चकोपवेगस्तथाभृगुः ॥ हरिबभ्रुश्चकौंडिन्योबभ्रुमालीसनातनः १६ काक्षीवानौशिजश्चैवनाचिकेतोऽथगौतमः ॥ पैंग्योवराहःशुनकःशांडिल्यश्चमहातपाः १७ कुकुरोवेणुजंघोऽथकालापःकठएवच ॥ मुनयोधर्मविद्वांसोधृतात्मानोजितेंद्रियाः १८ एतेचान्येचबहवोवेदवेदांगपारगाः ॥ उपासतेमहात्मानंसभायामृषिसत्तमाः १९ कथयंतःकथाःपुण्याधर्मज्ञाःशुचयोऽमलाः ॥ तथैवक्षत्रियश्रेष्ठाधर्मराजमुपासते २० श्रीमान्महात्माधर्मात्मामुंजकेतुर्विवर्धनः ॥ संग्रामजिद्दुर्मुखश्चउग्रसेनश्चवीर्यवान् २१ कक्षसेनःक्षितिपतिःक्षेमकश्चापराजितः ॥ कंबोजराजःकमठःकंपनश्चमहाबलः २२ सततंकंपयामासयवनानेकएवयः ॥ बलपौरुषसंपन्नान्कृतास्त्रानमितौजसः ॥ यथासुरान्कालकेयान्देवोवज्रधरस्तथा २३ जटासुरोमद्रकानांचराजाकुंतिःपुलिंदश्चकिरातराजः ॥ तथांगवांगौसहपुंड्रकेणपांड्योड्रराजौचसहांध्रकेण २४ अंगोवंगःसुमित्रश्चशैब्यश्चामित्रकर्शनः ॥ किरातराजःसुमनायवनाधिपतिस्तथा २५ चाणूरोदेवरातश्चभोजोभीमरथश्चयः ॥ श्रुतायुधश्चकालिंगोजयसेनश्चमागधः २६ सुकर्माचेकितानश्चपुरुश्चामित्रकर्शनः ॥ केतुमान्वसुदानश्चवैदेहोऽथकृतक्षणः २७ सुधर्माचानिरुद्धश्चश्रुतायुश्चमहाबलः ॥ अनूपराजोदुर्धर्षःक्रमजिच्चसुदर्शनः २८ शिशुपालःसहसुतःकरूषाधिपतिस्तथा ॥ वृष्णीनांचैवदुर्धर्षाःकुमारादेवरूपिणः २९ आहुकोविपृथुश्चैवगदःसारणएवच ॥ अक्रूरःकृतवर्माचसत्यकश्चशिनेःसुतः ३०

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ कालकेयाः कालकाया अपत्यान्यसुराः २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३०

